सर्गे क' इति कर्तरि कः तत्श्चातोलोप इति च' इत्यालोपः । तद्वन्नीलाभाः कान्तिर्यस्य-तस्मै 'नीरक्षीरांबुशम्बरम्' इत्यमरः । कृष्णाया द्रौपद्याः रमणस्य भर्तुः भीमस्य प्रियस्तस्मै 'कृष्णातु द्रौपदीनीलीहारभूरासु कथ्यते' इति विश्वः । तस्मैप्रसिद्धाय, कृष्णाय वेद-व्यासाय नमः । 'कृष्णो नीले नले कलौ । शुद्रेकाकेपिकव्यासेव्यान्तपक्षेऽर्जुनेऽगा'-विति यादवः । यादवकृष्णपक्षे तु यत्पालितं येन श्रीकृष्णेन पालितं गोकुलं गवांसमूहः नन्दगोपावासस्थानं वा, 'व्रजन्यां गोकुलं गोष्ठं' इति हलः । नित्यं सर्वदा अनाकुलं शत्रुभ्योऽसम्भ्रान्तं सत् । अनाविलात्म, पूतनाकेश्यादिभ्योऽविनष्टस्वरूपम् सद्गुकुलाय सम्यग् शुशुभे । नीरदनीलभासे मेघश्यामकान्ताय, कृष्णारमणप्रियाय द्रौपदीपति-पाण्डवप्रियाय तस्मै कृष्णाय नम इति (केवलप्रकृतश्लेषः) ॥ २ ॥

अपि त्रिलोक्या बहिरुल्लसन्ती तमो हरन्ती मुहुरान्तरं च ।
दिश्याद्दृशं नो विशदां जयन्ती मध्वस्य कीर्तिर्दिननाथदीप्तिम् ॥ ३ ॥

श्रीमदाचार्याणां कीर्तिं वर्णयितुकामस्तां प्रति तद्वर्णनोपयुक्तज्ञानदृष्टिं याचते-अपीति त्रयाणां लोकानां समाहारस्त्रिलोकी तस्याः । 'अकारान्तोत्तरपदो द्विगुस्त्रियामिष्टः' इति-स्त्रीत्वा'द्विगो'रिति ङीप् । बहिरपि उल्लसन्ती शोभमाना । मुहुः पुनः पुनरपि । अन्तरे भवमांतरम् मानसमित्यर्थः, 'अन्तरं परिधानीयेबाह्येस्वीयेऽन्तरात्मनी'ति वैजयन्ती । तमोऽज्ञानम् हरन्ती । अतएव दिननाथदीप्तिं सूर्यप्रकाशं । जयन्ती अतिशयाना । मध्वस्य कीर्तिर्नोऽस्मभ्यम् । विशदां निर्मलां । दृशं ज्ञानदृष्टिं । दिश्यात् प्रदिशतु । दिश अतिसर्जने आशीर्लिङ् । सूर्यदीप्तिस्त्रिलोक्या बहिर्न भाति । नाप्यान्तरं तमो हरति । नैवं मध्वकीर्तिरिति दिननाथदीप्तिं जयंतीत्युक्तमिति भावः (व्यतिरेकः) ॥ ३ ॥

तमोनुदानन्दभवाप लोकस्तत्त्वप्रदीपाकृतिगोगणेन ।
यदास्यशीतांशुभुवा गुरूंस्तांस्त्रिविक्रमार्यान् प्रणमामि वर्यान् ॥ ४ ॥

स्वपितॄन् त्रिविक्रमपण्डिताचार्यान् प्रणमति-तमइति॥ लोको जनः । 'लोकस्तुभुवने-जने' इत्यमरः । येषां त्रिविक्रमाचार्याणामास्यं मुखं यदास्यं, तदेव शीतांशुः शीतकिरण-श्चन्द्रः । तस्माद्भवतीति तेन । तमोऽज्ञानं नुदतीति तमोनुत् । तेन, 'क्विप् च' इतिकर्तरि-

क्विप्। अज्ञाननाशकेनेत्यर्थः। तत्त्वं श्रीविष्ण्वादि चराचरतत्त्वं प्रदीपयति प्रकाशयतीति तत्त्वप्रदीपः। श्रीमदाचार्यकृतब्रह्मसूत्रभाष्यव्याख्या। न रूपतत्त्वप्रदीपिकाख्योग्रन्थः। स एवाकृतिः स्वरूपं यस्य स तत्त्वप्रदीपाकृतिः सचासौ गोगणो वाक्समूहश्च तेन। आनन्दः संतोषस्तम्। अत्राप आप्लृव्याप्तौ लिट्। वर्यानुत्तमान्॥ त्रिविक्रमाश्चते आर्याश्च त्रिविक्रमार्यास्तान्। त्रिविक्रमाख्यगुरूनित्यर्थः। प्रणमामि नमस्करोमि। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वं। अर्थान्तरेतु, शीतांशुभुवा चन्द्रादुत्पन्नेन, तमोनुदा अंधकारनाशकेन। तत्त्वमबाधिततत्तत्पदार्थस्वरूपं तस्मिन्, विषयसप्तमीयं। प्रदीपवत्प्रकृष्टदीपवदाकृतिर्यस्य स तत्त्वप्रदीपाकृतिः, सचासौ गोगणो रश्मिसमूहश्च तेन, लोकश्चराचरात्मकं विश्वं यथाऽनन्दमाप्नुयात्तद्वद्वन्मुखादुत्पन्नेन तत्त्वप्रदीपाख्यग्रन्थेन जन आनन्दमवाप। तान त्रिविक्रमपण्डिताचार्यान् नमामीत्यभिप्रायः (रूपकं)॥ ४॥

**मुकुन्दभक्त्यै गुरुभक्तिजायै सतां प्रसत्त्यै च निरंतरायै ।**
**गरीयसीं विश्वगुरोर्विशुद्धां वक्ष्यामि वायोरवतारलीलां ॥ ५ ॥**

एवमिष्टदेवतागुरुवंदनादिकं विधाय प्रयोजनाभिधानपूर्वकं चिकीर्षितं प्रतिजानीते— **मुकुन्देति**॥ गुरुषु भक्तिर्गुरुभक्तिस्तस्या जायत इति गुरुभक्तिजा तस्यै 'पञ्चम्यामजाता'विति डः। मुचं मोक्षं ददातीति मुकुंदस्तस्य या भक्तिस्तस्यै 'तादर्थ्ये चतुर्थी' गुरुभक्त्यर्थमित्यर्थः। हरिभक्तेर्गुरुभक्तिजत्वञ्च 'गुरुद्वारा प्रसादकृदहं' 'यस्यदेवेपराभक्तिर्यथादेवे तथा गुरौ' 'अगम्यत्वाद्धरिस्तस्मिन्नाविष्टो मुक्तिदो भवेदि'त्यादिप्रमाणसिद्धम्। प्रयोजनान्तरञ्चाह निरन्तरेति। निर्गतमंतरं व्यवधानं यस्याः सा निरन्तरा तस्यै। सतां सज्जनानां प्रसत्यै प्रसन्नतायै च। सकलसुरगुरुश्रीमुख्यप्राणस्यावतारलीलावर्णनेन सन्तोऽपि सन्तुष्टा भविष्यन्ति। तत्संतोषश्च श्रीमुख्यप्राणानुग्रहविशेषद्वारा श्रीहरिभक्तिविशेषहेतुः। साचापरोक्षज्ञानहेतुरित्यतः गुर्वादिसकलसत्प्रीत्यर्थञ्चेति भावः। विश्वगुरोस्सर्वजगद्गुरोः श्रीमुख्यवायोः। अतिशयेन गुर्वी गरीयसी तां। 'द्विवचनविभज्योपपदे तरबीयसुना'वितीयसुन्। 'प्रियस्थिर' इत्यादिना गुरुशब्दस्यगरित्यादेशः। उगित्वान्ङीप्। विशुद्धां निर्दोषामवतारलीलां हनुमदादिप्रादुर्भावानां लीलां वक्ष्यामि। वच परिभाषणे लृट ॥ ५ ॥

तां मंत्रवर्णैरनुवर्णनीयां शर्वेन्द्रपूर्वैरपि वक्तुकामे ।
संक्षिप्तवाक्ये मयि मन्दबुद्धौ सन्तो गुणाढ्याः करुणां क्रियासुः ॥ ६ ॥

शर्वेन्द्रादिदेवश्रेष्ठैः बळित्थेत्यादिवेदजातेन वर्णनीयामवतारलीलामयमल्पेन वाक्ये-नावर्णयदिति सन्तो न कुप्यन्तीत्याशयवान् तत्क्षमामर्थयते । तामिति ॥ शर्वेन्द्रौ रुद्रेन्द्रौ पूर्वौ आदी येषां तैः। कर्तरि तृतीया। मन्त्रवर्णैः बळित्थेत्यादि वेदैः। करणे तृतीया। 'कर्तृकरणयोस्तृतीये'त्यनुशासनात् ॥ अनुवर्णनीयां अनुवर्णयितुं योग्याम् अवतारलीलां वक्तुं काम इच्छा यस्य तस्मिन्। मन्दा अल्पा बुद्धिर्यस्य तस्मिन्। अत एव संक्षिप्तं संक्षेपशीलं वाक्यं तस्य तस्मिन् । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति सम् पूर्वात्क्षिपेस्ताच्छील्ये क्नुः प्रत्ययः। मयि गुणैः महत्त्वदयाळुत्वादिगुणैराढ्याः सम्पन्नाः सन्तो महान्तः करुणां दयां क्रियासुः कुर्वन्तु। डुकृञ् करणे लिङ् ॥ ६ ॥

उच्चावचा येन समस्तचेष्टाः किं तत्र चित्रं चरितं निवेद्यं ।
किंतूत्तमश्लोकशिखामणीनां मनोविशुद्ध्यै चरितानुवादः ॥ ७ ॥

सर्वचेष्टकस्य वायोरवतारलीलायाः साकल्येन वर्णयितुमशक्यत्वान्मनोविशुद्ध्यर्थ-त्वेन वेदगणप्रतिपादितचरित्राणामनुवादमात्रं लेशतः क्रियत इत्याह। उच्चेति॥ येन श्री मुख्यप्राणेन उच्चाः महापर्वतोद्धरणाद्याः ताश्च अवचाः अल्पतृणाद्युद्धरणाद्यास्ताश्च, उच्चावचाः मयूरव्यंसकादिवत्समासः । समस्तचेष्टाः समस्तप्राणिनां व्यापाराः स्युरिति शेषः। कारकाणां प्रयोगे तु 'क्रियाभावेऽस्ति तिष्ठती'ति वचनान्नाध्याहारो दोषः। सर्वेषां जीवानां देहेन्द्रियनियमनार्थं सर्वजीवान्तर्गतेन येन मुख्यप्राणेन सर्वचेष्टा भवन्तीत्यर्थः। तत्रैवं सर्वप्रवर्तकस्य चरितेषु किं चरितं किं कर्म चित्रं। इदं चित्र-मिति निवेद्यं निवेदयितुं शक्यं। वर्णयितुं शक्यमित्यर्थः । तत्कृतानां सर्वेषामपि चरितानां चित्रत्वादिदं चित्रमिति विशिष्य वर्णयितुमशक्यमिति भावः। तर्हि न वर्णनीयमित्याशयेन शङ्कते। किन्त्विति॥ उत्तरमाह उत्तमेत्यादिना, उत्तमः श्लोकः कीर्तिर्येषां, तेषु शिखामणय इव चूडायाः रत्नानीव तेषां। 'पद्ये यशसि च श्लोक' इत्यमरः। श्रीहरिभक्तानां मध्येऽत्युत्तमानामित्यर्थः । चरितानुवादः चरित्राणामनु-

वर्णनं 'भाव' इति सूत्रेण भावार्थे घञ्। मनोविशुद्धयै तादर्थ्ये चतुर्थी, चित्तशुद्धयर्थमित्यर्थः। स्यादिति योज्यम् ॥ ७ ॥

मालाकृतस्तच्चरिताख्यरत्नैरसूक्ष्मदृष्टेः सकुतूहलस्य ।
पूर्वापरीकारमथापरं वा क्षाम्यन्तु मे हन्तमुहुर्महान्तः ॥ ८ ॥

यथा कश्चिन्मालाकारोऽनर्घरत्नानि दृष्ट्वा सम्भ्रान्तः सन् तद्ग्रथने आनुपूर्वीं विहाय पूर्वापरीकारादिकं कुर्यात्, तद्वदहमपि स्वतो मन्दबुद्धिः सन्ननेकश्रुतिप्रतिपादितश्रीमुख्यप्राणस्य चरिताख्यरत्नानि दृष्ट्वा सम्भ्रान्तः सन् तद्वर्णनविषये यदि पूर्वापरीकारादिकं कुर्यां तदा महान्तोऽनुकम्पया तत्क्षाम्यन्त्वित्याशयवानाह मालेति ॥ महान्तः सज्जनाः तस्य वायोः यानि चरितानि कर्माणि, तानीति आख्या नाम येषान्तानि तथोक्तानि तानिच तानि रत्नानि च तैः। करोतीति कृत् मालायाः कृत् तस्य 'क्विप्च' इति कर्तरि क्विपि'ह्रस्वस्य पिति कृति तुक्' इति तुक्। दृष्टिर्दर्शनं 'स्त्रियां क्तिन्, इति भावे क्तिन्। सूक्ष्मा च सा दृष्टिश्च न विद्यते सूक्ष्मदृष्टिः साकल्येन सर्वार्थ विषयकज्ञानं यस्य तस्य। सकुतूहलस्य ससंभ्रमस्य मे मम। पूर्वस्य पूर्वं वर्णनीयस्य चरित्रस्य, अपरीकारः अपरीकरणं पश्चाद्वर्णनमित्यर्थः। तं–अथ–अथवा-अपरं वा पश्चाद्वर्णनीयस्यादितो वर्णनं वेत्यर्थः। मुहुः पुनः पुनः क्षाम्यन्तु 'क्षमूष् सहने' लोट्। हर्षद्योतकं हन्तेत्येतत् 'हन्त हर्षेऽनुकम्पायां' इत्यमरः। पूर्वापरीकारकरणादौ निमित्तमुक्तमसूक्ष्मदृष्टेरिति, असूक्ष्मदृष्टित्वेऽपि सम्यग् विमर्शेन पूर्वापरीकारादिकं परिहर्तुं शक्यत इत्यत उक्तं सकुतूहलस्येति। सकुतूहलस्य नविचारावसर इति भावः। (रूपकं) ॥ ८ ॥

श्रीवल्लभाज्ञां ससुरेन्द्रयाञ्चां सम्भाव्य सम्भाव्यतमां त्रिलोक्याम् ।
प्राणेश्वरः प्राणिगणप्रणेता गुरुः सतां केसरिणो गृहेऽभूत् ॥ ९ ॥

वायोरवतारलीलां वक्ष्यामीत्युक्तं तत्र हनुमदवतारस्य प्राथमिकत्वात्तत्प्रादुर्भावकथनपूर्वकं तल्लीलां वक्तुमारभते। श्रीवल्लभेत्यादिना ॥ प्राणिनां जीवानां गणः समूहस्तस्य प्रणेता प्रेरकः। प्राणिगणस्येति कर्मणः शेषत्वविवक्षायां तृजन्तेन प्रणेतृशब्देन

'षष्ठी'ति षष्ठीतत्पुरुषः । 'कर्तृकर्मणोः कृती'ति कृल्लक्षणषष्ठ्यास्तृजकाभ्यां कर्तरि-चे'ति षष्ठीसमासप्रतिषेधात् । सतां गुरुः हितोपदेष्टा प्राणेश्वरः सर्वजीवाधीश्वरः 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि' इति यादवः । सुरेन्द्राणां सुरश्रेष्ठानां रुद्रादीनां याच्ञा हे स्वामिन् ! मुख्यवतीर्य राक्षससंहारं कुर्विति प्रार्थना तया सहिता ससुरेन्द्रयाच्ञा तां । त्रिलोक्यां । अतिशयेन सम्भाव्या सम्भाव्यतमा तां 'अतिशायने-तमबिष्ठना'विति तमप् । श्रीवल्लभाज्ञां श्रीकान्ताज्ञां सम्भाव्य आदृत्य केसरिणः केसरिनाम्नो वानरस्य गृहे भार्यायाम् अञ्जनादेव्यां 'जाया च गृहिणी गृहम्' इति हलः । अभूत् मुख्यवायुना अनुग्रहपूर्वकमञ्जनायाः स्पर्शनमात्रात्प्रादुर्भूतः । 'तीर्थ-विघ्नकरं दुष्टं गजं हत्वा प्रतोषिताः । भारद्वाजादयो धन्यं पुत्रं केसरिणो ददुः' ॥ इति वचनान्मुनीनां वरादेव केसरिपुत्रत्वं प्राणो भेज इत्यतः केसरिपुत्रत्वमौप-चारिकम् ॥ ९ ॥

**ये ये गुणा नाम जगत्प्रसिद्धा यं तेषु तेषु स्म निदर्शयन्ति ।**
**साक्षान्महाभागवतप्रवर्हं श्रीमन्तमेनं हनुमन्तमाहुः ॥ १० ॥**

तस्य हनुमच्छब्दवाच्यत्वे निमित्तमाह । य इति ॥ ये ये गुणा नाम गुणशब्दवाच्याः जगत्प्रसिद्धाः लोकेषु प्रसिद्धाः । 'इन्द्रे शौर्यं बलं वायौ कान्तिश्चन्द्रमसि क्षमा पृथि-व्याम्' इत्यादिप्रकारेण तत्रतत्र प्रख्याता इत्यर्थः । यद्वा नामेत्यव्ययं प्रसिद्धार्थे वर्तते 'सिद्धिःस्यप्रसिद्धिर्वा' इत्युक्तेः प्रसिद्धशब्दः प्रमित इत्यर्थे वर्तते । तथाच जगत्प्र-सिद्धाः इन्द्रादिलोकेषु प्रमिताः ये ये गुणा नाम गुणा इति प्रसिद्धा इति वा । तेषु तेषु गुणत्वेन प्रसिद्धेषु यं केसरिपुत्रं कवयो निदर्शयन्ति स्म, दृष्टान्तमकुर्वन् 'लट् स्म' इति भूतार्थे लट्, 'दृशिर्प्रेक्षणे' लट् । साक्षात् निरुपचारेण महान्तो ये भागवता भगवद्भक्तास्तेषु प्रवर्हः श्रेष्ठस्तम् । 'मुख्यं पुरोगं प्रवरं प्रवर्हम्' इति हलः । श्रीमन्तं कान्तिमन्तमेनं केसरिपुत्रं हनुमन्तं हनुमच्छब्दवाच्यमाहुर्वदन्ति । ब्रूञ् व्यक्तायां वाचि लट् । 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्याहादेशः । 'हनुशब्दो ज्ञानवाची' इति वचनात् ज्ञानवाचिहनुशब्दोपलक्षित सकलगुणवत्त्वाद्धनुमानिति जगत्प्रसिद्धोऽ-भूदिति भावः (निरुक्तिः) ॥ १० ॥

कर्माणि कुर्वन्परमाद्भुतानि सभासु दैवीषु सभाजितानि ।
सुग्रीवमित्रं सजगत्पवित्रं रमापतिं रामतनुं ददर्श ॥ ११ ॥

तृतीयावतारलीलां सप्रसङ्गं विवक्षुराद्यावतारलीलां संक्षेपेण तावद्वक्तुमारभते — कर्माणीत्यादिना ॥ परमाणि च तानि अद्भुतानि च अत्याश्चर्याणीत्यर्थः । देवानां सम्बन्धिन्यो दैव्यस्तासु दैवीषु सभासु सभाजितानि मानितानि कर्माणि 'राहुनिग्रहः सूर्यरथेन सह महामेरुपरिवर्तनमित्यादि कर्माणि' कुर्वन् । सुग्रीवमेव सुग्रीवस्यानिमित्तोपकारी स हनुमान् जगत्पवित्रं जगति शुद्धं पूतः 'संज्ञाया'मिति करणेऽर्थे इत्रच् । निर्दोषमित्यर्थः । राम इति तनुः स्वरूपं यस्य तं रमापतिं श्रीरामं ददर्श सीतान्वेषणव्याजेन ऋष्यमूकगिरिं प्रत्यागतं श्रीरामं तत्र ददर्शेति भावः ॥ ११ ॥

पादारविन्दप्रणतो हरीन्द्रस्तदा महाभक्तिभराभिनुन्नः ।
अग्राहि पद्मोदरसुन्दराभ्यां दोर्भ्यां पुराणेन स पूरुषेण ॥ १२ ॥

दृष्ट्वा च प्रणतं हनुमन्तं श्रीराम उत्थापितवानित्याह पादेति ॥ तदा महती या भक्तिः सैव भरो भारस्तेनाभिनुन्नः अभितः प्रेरितः । महतीशब्दस्य 'पुंवत्कर्मधारये'ति पुंवद्भावे 'आन्महत' इति आत्वम् । 'भरोऽतिशयभारयो'रिति वैजयन्ती । अत एव पादावरविन्दे इव कमले इव तयोः । प्रणतः हरीन्द्रः कपीन्द्रः स हनुमान्, पुरा आदिकाले अनति चेष्टत इति पुराणस्तेन पूरुषेण श्रीरामेण 'पुरुषाः पूरुषा नराः' इत्यमरः । पद्मस्य यदुदरमन्तर्भागः तद्वत्सुन्दरौ रमणीयौ ताभ्यां दोर्भ्यां हस्ताभ्यां । अग्राहि गृहीत उत्थापित इति यावत् । यथा महाभारसमुद्वहनशक्तत्वात्पतन् कश्चित्केनचिदाशु गृह्यते तद्वदिति श्लेषाभिप्रायः (उपमा) ॥ १२ ॥

अदार्यसालावलिदारणेन व्यापादितेन्द्रप्रभवेन तेन ।
प्रद्योतनिप्रीतिकृता निकामं प्रयुक्तिपा संदिदिशे स वीरः ॥ १३ ॥

स्वबलपरीक्षार्थं सुग्रीवप्रदर्शितसप्तसालविदारकेण स्वमित्र सुग्रीवप्रीत्यर्थं वालिनिग्रहं कृतवता श्रीरामेण सीतान्वेषणार्थं हनुमान् प्रेषित इत्याह 'अदार्येति ॥ अदार्याणां श्रीरामेतरैर्दारयितुमनर्हाणां सालानां सालवृक्षाणां आवलेर्दारणं विदारणं येन तेन ।

इन्द्रात्प्रभव उत्पत्तिर्यस्येति इन्द्रप्रभवः प्रभवतीति प्रभवः पचाद्यच् । इन्द्रात्प्रभव इति वा । व्यापादितः संहृत इन्द्रप्रभवो वाली येन तेन । अत एव निकामं नितरां, प्रद्योतनस्य सूर्यस्यापत्यं पुमान् प्राद्योतनिः सुग्रीवस्तस्य प्रीतेः कृत् करोतीति कृत् तेन । द्वेष्टीति द्विट् 'सत्सूद्विष' इत्यादिना कर्तरि क्विप् । मधोः मधुनामकदैत्यस्य द्विट् शत्रुः तेन । 'शत्रुः सपत्नो भ्रातृव्यः प्रत्यनीको द्विषन्मत' इति हलः । तेन श्रीरामेण वीरः स हनुमान् सन्दिदिशे । सीतान्वेषणार्थं सम्प्रेषितः । दिश अतिसर्जने कर्मणि लिट् ॥ १३ ॥

कर्णान्तमानीय गुणग्रहीत्रा रामेण मुक्तो रणकोविदेन ।
स्फुरन्नसौ वैरिभयङ्करोऽभूत्सत्पक्षपाती प्रदरो यथाग्र्यः ॥ १४ ॥

सीतान्वेषणार्थं लङ्कां प्रतिगच्छन्तं हनूमन्तं श्रीरामशरसाम्येन वर्णयति—**कर्णान्तमिति** ॥ गुणान् पराक्रमादिशुभधर्मान् गृह्णाति तच्छील इति, तेन । गुणानां ग्रहीता तेनेति वा । घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इतिवच्छेषषष्ठ्याः समासः । 'पराक्रमे दक्षयशःप्रतापैः सौजन्यमाधुर्यनयानयैश्च । गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतः कोऽभ्यधिकस्त्रिलोक्यां ॥ प्रजां मिमङ्क्षोरिव सागरस्य लोकान् दिधक्षोरिव पावकस्य । सर्वं जिहीर्षोरिव चान्तकस्य हनूमतः स्थास्यति कः पुरस्तात् ॥ इत्याद्युत्तररामायणप्रसिद्धगुणान् जानता वदता वेति भावः । गुणो मौर्वी च । गुणग्रहीत्रा मौर्वीग्राहिणा रणे युद्धे कोविदेन चतुरेण, श्रीरामेण । कर्णस्यान्तः समीपं तं, 'अन्तोऽस्त्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिक' इति वैजयन्ती । आनीय मौर्वीकर्षको रामः यथा मौर्वीं कर्णान्तमाकृष्य बाणं मुञ्चति तद्वत् । सीतां प्रति रहसि वक्तव्यमभिज्ञारूपं प्रमेयमङ्गुलीयप्रदानपूर्वकं वक्तुं कर्णान्तिकमानीयेति भावः । रामेण मुक्तः प्रेषित इति भावः । स्फुरन् शोभमानः सत्सु पक्षपातः स्वीयताग्रहः सत्पक्षपातः सोऽस्यास्तीति तथोक्तः । शरोऽपि सत्पक्षेण शोभनपतत्रेण पातो गमनं तद्वान् । असौ हनुमान् । अग्र्यः आर्जवनिशितत्वादिगुणयुक्तत्वेन श्रेष्ठः । प्रदरः श्रीरामशरो यथा तद्वत् । वैरिभयङ्करः रावणादिशत्रुभयङ्करः । भयशब्दोपपदात् कृञः कर्तरि 'मेघ-

र्तिभयेषु कृञ' इति खशि 'अरुर्द्विषदजन्तस्य मुम्' इति मुम्। अभूत् (श्लिष्टविशेषणोपमा) ॥ १४ ॥

गोभिः समानन्दितरूपसीतः स्ववह्निनिर्दग्धपलाशिराशिः ।
अहो हनूमन्नववारिदोऽसौ तीर्णाम्बुधिर्विष्णुपदे ननाम ॥ १५ ॥

लङ्कां प्रविश्य रामान्तिकमागतं हनुमन्तं मेघसाम्येन वर्णयति । गोभिरिति ॥ गोभिः वाग्भिः, सीताया रूपं रूपसीता । 'राजदन्तादिषु परम्' इति पूर्वप्रयोगार्हस्यापि सीताशब्दस्य परनिपातः । समानन्दिता सन्तोषिता रूपसीता येन सः । यद्वा समानन्दितं रूपं यस्याः तादृशी सीता येन सः । अथवा । रूपेण शब्देन सीतारूप सीताशब्दमात्रेण सीतेत्यर्थः सीताप्रतिकृतिरिति यावत् । रूपं स्वभावे सौन्दर्ये नामके पशुशब्दयो'रिति विश्वः । समानन्दिता रूपसीता शब्दमात्रेण सीताशब्दवाच्या येन स इति वा । स्वस्य वह्निः स्ववह्निः स्वपुच्छवह्निरित्यर्थः । तेन निर्दग्धः पलाशिराशिः पलं मांसमश्नन्ति तच्छीला इति पलाशिनो राक्षसाः । तेषां राशिः समूहो येन सः 'पलं पिशितमामिष'मिति हलः । असौ हनूमान् नववारिद इव नूतनमेघ इव हनूमन्नववारिदः 'उपमितं व्याघ्रादिभिः सामान्याप्रयोग' इति उपमानोत्तरपदसमासः । तीर्णः उत्तीर्णः, अम्बुधिः समुद्रो येन सः । तथा सन् विष्णुपदं श्रीरामस्य पादस्तस्मिन् ननाम नमश्चकार ॥ यथा कश्चिन्मेघो गोभिर्जलैः समानन्दितं रूपं स्वरूपं यासां ताः सीताः सस्यानि येन सः । 'सीता सस्ये हलाध्वनि' इति वैजयन्ती । स्ववह्निः स्वीयविद्युद्वह्निस्तेन निर्दग्धः पलाशिराशिर्वृक्षसमूहो येन स तथा सन् 'अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः' इत्यमरः । तीर्णाम्बुधिर्वायुवशात्तीर्णसमुद्रः सन् । विष्णुपदे आकाशे 'वियद्विष्णुपदं वा तु' इत्यमरः । नमेत् तत्र लीनो भवेत्तद्वदिति श्लेषाभिप्रायः । अहो आश्चर्यं हनुमच्चरितमित्यर्थः (उपमा) ॥ १५ ॥

अपक्षपातो पुरुषस्त्रिलोक्यामभोगभोक्ता पतगाधिराजं ।
विश्वम्भरं विभ्रदसौ जिगाय त्वरापराक्रान्तिषु चित्रमेतत् ॥ १६ ॥

रावणनिग्रहार्थं श्रीराममुद्वह्य लङ्कां प्रतिगच्छन्तं हनुमन्तं वर्णयति । अपक्षेति ॥ पक्षाभ्यां पतत्राभ्यां पतति तच्छील इति पक्षपाती स न भवतीत्यपक्षपाती । पक्षपातो वात्सल्यमस्यास्तीति पक्षपाती सन्नु तत्तद्योग्यतानुसारेण वृत्तेः पक्षपाती न भवतीत्यपक्षपातीति वा । पुरुषः गरुडस्तु पक्षाभ्यां पतति तच्छील इति पक्षपाती। भोगानां स्त्रीसम्भोगादिजनितसौख्यानां भोक्ता अनुभविता भोगभोक्ता स न भवतीत्यभोगभोक्ता । हनुमतो नैष्ठिकब्रह्मचारित्वादिति भावः । गरुडस्तु भोगभोक्ता सर्पशरीराणां भोक्ता 'भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः । फणे देहे च सर्पाणां' इति वैजयन्ती । असौ हनुमान् विश्वं जगत् बिभर्तीति विश्वम्भरस्तं श्रीरामं ॥ 'संज्ञायां भृतॄ' इत्यादिना खचि 'अरुर्द्विषदि'त्यादिना मुम् । बिभ्रत् रावणनिग्रहार्थं लङ्कां प्रतिगमनसमये वहन् सन् 'नाभ्यस्ताच्छतुरिति नुमभावः । त्वरा वेगास्ताश्च पराक्रान्तयः पराक्रमाः, ताश्च तास्तु । अधिकश्चासौ राजा चाधिराजः । 'राजाहःसखिभ्यष्टच्' इति टच् । स्वतिभ्यामेवेति नियमान् 'नपूजना'दिति निषेधानवकाशः । पतगानां पक्षिणामधिराजोऽधिपतिस्तम् गरुडं जिगाय जितवान् । जि जये लिट् । एतद्धनूमतो गरुडपराभवनं त्रिलोकयां चित्रमाश्चर्यम् । विश्वम्भरभगवद्वाहकत्वं गरुडस्याप्यस्ति तथाप्यभोगभोक्तुरपक्षपातिनो हनुमतः भोगभोक्तुः पक्षपातिनो गरुडस्य जयः चित्रमिति भावः (विभावनाव्यतिरेकौ) ॥ १६ ॥

**निबध्य सेतुं रघुवंशकेतुभ्रूभङ्गसम्भ्रान्तपयोधिमध्ये ।**
**मुष्टिप्रहारं दशकाय सीतासन्तर्जनाग्योत्तरमेपकोऽदात् ॥ १७ ॥**

सेतुबन्धनपूर्वकं लङ्कां गतस्य युद्धं वर्णयति । निबध्येति ॥ एष एव एषकः स्वार्थे कः । यद्वा 'अव्ययसर्वनाम्नामकच् प्राक्टेः' । इत्यकचि त्यदाद्यत्वे पररूपत्वे च सति एषक इत्यकजन्तः । कप्रत्ययपक्षे त्यदाद्यत्वानुपपत्तिः । विभक्तेः कप्रत्ययेन व्यवधानात् । कप्रत्ययान्तानां सर्वनामसंज्ञाभावात । अकच्प्रत्ययस्य तु टेः प्राग्विधानाद्विभक्तेरव्यवधानेन त्यदाद्यत्वोपपत्तिरिति केचित् । तद्रीत्या अकजन्तो वा । हनूमान् रघोर्यो वंशस्तस्मिन्केतुरिव ध्वज इव रघुवंशकेतुः रघुकुलश्रेष्ठ इत्यर्थः । तस्य भ्रुवोर्भङ्गेन विक्षेपेण सम्भ्रान्तस्य पयोधेः समुद्रस्य मध्ये 'उत्पाते ध्वजे केतुः' इति

वैजयन्ती । सेतुं निबध्य दिनत्रयेऽप्यनुपगामिनं समुद्रं दृष्ट्वा श्रीरामो रक्तनयनान्तं समुद्रे युयोज । तेन प्रक्षुब्धेन समुद्रेण मयि सेतुं निबध्य याहीति प्रार्थितस्य श्रीरामस्याज्ञया दक्षिणसमुद्रे सेतुं निबध्य तेन च लङ्कां गत्वेति भावः । सीताया यत्सन्तर्जनं भार्या भवेत्यादिस्ववाक्याश्रवणनिमित्तकभर्त्सनं तस्य अग्र्योत्तरं उत्तरमिव-प्रतिवाक्यमिवाचरति उत्तरति उत्तरतीत्युत्तरः 'उपमानादाचारे' इत्यधिकृत्य 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य इति क्विपि 'सनाद्यन्ता धातव' इति धातुसंज्ञायां पचाद्यच् । अजन्तत्वाच्च 'घाजन्तश्च' इति पुल्लिङ्गता । अग्र्यः सीतासन्तर्जनस्योचितत्वेन श्रेष्ठः य उत्तरस्तं, मुष्टिना प्रहारस्तं, दश कानि शिरांसि यस्य तस्मै रावणाय अदात् । दा दाने लुङ् ॥ १७ ॥

**जाज्वल्यमानोज्ज्वलराघवाग्नौ चक्रे स सुग्रीवसुयायजूके ।**
**आध्वर्यवं युद्धमखे प्रतिप्रस्थात्रा सुमित्रातनयेन साकं ॥ १८ ॥**

यज्ञे ह्यध्वर्य्वादयो भवेयुः । अस्मिन् युद्धाख्ययज्ञे च हनूमदादयोऽध्वर्य्वादयो जाता इत्याह । **जाज्वल्येति** ॥ स हनुमान् पुनः पुनरतिशयेन वा ज्वलतीति जाज्वल्यमानः 'ज्वल दीप्ताविति धातोः 'धातोरेकाचः क्रियासमभिहारे यङ् इति पौनःपुन्ये-भृशार्थे वा यङि सन्यङोरिति द्वित्वे हलादिशेषे दीर्घोऽकित इत्यभ्यासदीर्घे धातुसंज्ञायां कर्तरि 'लटः शतृशानचा'विति शानचि 'आनेमु'गिति मुक् । तथा च अतिशयेन देदीप्यमान इत्यर्थः । उत्कृष्टतयाज्वलतीत्युज्ज्वलः सचासौ राघवाग्निश्च. जाज्वल्यमान उज्ज्वलराघवाग्निर्यस्मिन् तस्मिन् । सुग्रीवः सुयायजूकः शोभनयजमानो यस्मिन् तस्मिन् 'इज्याशीलो यायजूक' इत्यमरः । युद्धमेव मखो यज्ञस्तस्मिन् । प्रतिप्रस्थात्रा प्रतिप्रस्थातृव्यापारयुक्तेन सुमित्रातनयेन लक्ष्मणेन साकं साधम् अध्वर्योः सम्बन्धि आध्वर्यवं तद्व्यापारं चक्रे कृतवान् (रूपकम्) ॥ १८ ॥

**रामार्चने यो नयतः प्रसूनं द्वाभ्यां कराभ्यामभवत्प्रयत्नः ।**
**एकेन दोष्णा नयतो गिरीन्द्रं सञ्जीवनाद्याश्रयमस्य नाभूत् ॥ १९ ॥**

इन्द्रजिद्वृद्धकपीनामुज्जीवनार्थं लङ्कां प्रति गन्धमादनं गिरिं नयतोऽस्य रामार्चनार्थं पुष्पानयने यावान्प्रयासस्तावानपि नाभूदित्याह--**रामार्चन** इति ॥ रामस्यार्चनं पूजा

तस्मिन् । तादर्थ्ये सप्तमी । रामार्चनार्थमित्यर्थः । कराभ्यां हस्ताभ्यां प्रसूनं पुष्पं नयत आनयतः यः प्रयत्नोऽभवत् । एकेन दोष्णा हस्तेन सञ्जीवनं मृतसञ्जीवन्याख्य-मौषधमादिर्येषां तेषामाश्रय आधारस्तं । गिरीन्द्रं गन्धमादनं नयतः लङ्कां प्रत्यानयतः अस्य हनूमतः स प्रयत्नः नाभूत् न बभूव ॥ १९ ॥

स दारितारिं परमं पुमांसं समन्वयासीन्नरदेवपुत्र्या ।
वह्निप्रवेशाधिगतात्मशुद्ध्या विराजितं काञ्चनमालयेव ॥ २० ॥

रावणादीन् हत्वा सीतया सार्धमयोध्याभिमुखतया यान्तं श्रीराममनुजगामेत्याह—स इति ॥ स हनूमान् दारिताः संहृता अरयो रावणादिशत्रवो येन तं । वह्नौ यः प्रवेशस्तेनाधिगता जनैर्ज्ञाता आत्मनः स्वस्य शुद्धिः पातिव्रत्यशुद्धिर्यस्यास्तया । नरदेव पुत्र्या जनकपुत्र्या सीतया । काञ्चनस्य सुवर्णस्य विकारः काञ्चनी । सा च सा माला च । 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति पुंवद्भावः । तयेव । काञ्चनमालयेत्यादौ 'इवेन नित्यसमासो विभक्त्यलोपश्च' इत्यस्य 'कचाचितौ विष्वगिवागजौ गजौ' इत्यादि प्रयोगान्यथानुपपत्त्या 'मणीव रोदसी' इत्यादिवच्छन्दोविषयत्वेन व्याख्यातत्वाद्भिन्न-पदत्वं द्रष्टव्यम् ॥ विराजितं शोभमानं परमं सर्वोत्तमं पुमांसं पुरुषं श्रीरामं अन्वया-सीत् अनुययौ 'या प्रापणे' लुङ् (उपमा) ॥ २० ॥

श्यामं स्मितास्यं पृथुदीर्घहस्तं सरोजनेत्रं गजराजयात्रम् ।
वपुर्जगन्मङ्गलमेष दृग्भ्यां चिरादयोध्याधिपतेः सिषेवे ॥ २१ ॥

अयोध्यायां च 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इत्युक्तनवविधसेवां, श्रीराममनिमिषदृग्भ्यां सदा पश्यन् चका-रेत्याह—श्याममिति ॥ एष हनूमान् स्मितं मन्दहासोपेतमास्यं मुखं यस्य तत् । पृथू स्थूलौ पुष्टाविति यावत् दीर्घौ आयतौ हस्तौ यस्य तत् । सरसि जातं सरोजं 'सप्तम्यां जनेर्डः' इति डः । सरोजवत् पद्मवन्नेत्रे यस्य तत् । गजानां राजा गजराज ऐरावतस्तस्य यात्रेव यात्रा गमनं यस्य तत्, जगतो मङ्गलं यस्मात्तत् स्वविषयक श्रवणमननार्चनादिना जगतो मङ्गलप्रदमित्यर्थः जगति मङ्गलमिति वा । अयोध्याधि-

पतेः श्रीरामस्य वपुः शरीरं दृग्भ्यां दृष्टिभ्यां चिराद्दीर्घकाले 'दीर्घकाले चिराच्चिर' मिति वैजयन्ती । सिषेवे पेवृ सेवने लिट् ॥ अनिमिषदृग्भ्यां तद्दर्शनपूर्वकं नत्र विश्वसेवां चकारेति भावः ॥ २१ ॥

राज्याभिषेकेऽवसितेऽत्र सीता प्रेष्ठाय नस्त्वां भजतां दिशेति ।
रामस्य वाण्यामणिमञ्जुमालाव्याजेन दीर्घां करुणां बबन्ध ॥ २२ ॥

राज्याभिषेकानन्तरं सीतारामाभ्यां कृतानुग्रहातिशयं वर्णयति–राज्येति ॥ राज्ञो भावो राज्यं तस्मिन्, भावे यक् । राजन्शब्दोऽसमासे भावकर्मणोरर्थयोर्यकं लभते । राज्येऽभिषेकः अभिषेचनं तस्मिन् अवसिते समाप्ते सति नोऽस्मान् भजतां सेवमानानां मध्ये अतिशयेन प्रियः प्रेष्ठस्तस्मै 'अतिशायने तमबिष्ठना'विति इष्ठन् प्रत्यये, 'प्रियस्थिरे'त्यादिना प्रियशब्दस्य प्रादेशः । तां त्वद्गृहीतां मालां दिश प्रयच्छ । 'दिश अतिसर्जने लोट्' । इति रामस्य वाण्या वाचा । सीता । मणीनां रत्नानां या मञ्जुमाला मनोहरमाला सैव व्याजः छद्म तेन 'व्याजछद्मापदेशयो'रिति वैजयन्ती ॥ अत्र हनूमति दीर्घां विच्छेदरहितां करुणां दयां बबन्ध कृतवती । बधिर् बन्धने लिट् । राज्याभिषेकानन्तरं सीता मणिमञ्जुमालां गृहीत्वेमां कस्मा अस्मत्सेवकाय दद्यामिति श्रीरामं पृष्टवती । तदा श्रीरामोऽस्मत्सेवकानां मध्येऽतिशयेन प्रियाय प्रयच्छेत्यभ्यधात् । तदनुज्ञया तां मालां तादृशाय हनूमते ददाविति भावः (कैतवापन्हुतिः) ॥ २२ ॥

हृदोरुसौहार्दभृताधिमौलिन्यस्तेन हस्तेन दयार्द्रदृष्ट्या ।
सेवाप्रसन्नोऽमृतकल्पवाचा दिदेश देवः सहभोगमस्मै ॥ २३ ॥

सीतया मणिमञ्जुमाला प्रदानानन्तरं श्रीरामो भावित्रह्मत्वाख्यं सहभोगं ददावित्याह–हृदेति ॥ उरु उत्कृष्टं यत्सौहार्दं सुहृदो भावः सौहार्दमुर्वनुग्रहस्तस्य । बिभर्तीति भृत तेन । हृदा मनसा । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । मौलावधि अधिमौलि । 'अव्ययं विभक्ति' इत्यादिना विभक्त्यर्थेऽव्ययीभावः । मस्तक इत्यर्थः । न्यस्तो निक्षिप्तस्तेन हस्तेन । दययाऽर्द्राक्लिन्ना तादृशी या दृष्टिस्तया । दयापूर्णप्रसन्नदृष्ट्येत्यर्थः ।

अमृतादीषन्न्यूना अमृतकल्पा 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरौ' इति कल्पप् । सा च सा वाक् च तया । 'हनूमतो न प्रतिकर्तृता स्यात् स्वभावभक्तस्य निरौषधं मे. । मद्भक्तौ ज्ञानपूर्तौ निरवधिकबलप्रोन्नतिस्थैर्यधैर्यस्वाभाव्याधिक्यतेजःसुमतिशमदमेष्वस्य तुल्यो न कश्चित् । शेषो रुद्रः सुपर्णोऽप्युरुगुणसमितौ नो सहस्रांशतुल्याः' इत्यादि गुणकथनरूपामृतसदृशवाचेत्यर्थः ॥ अत्र सर्वत्र 'इत्थंभूतलक्षणे' इति सूत्रेण 'लता प्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचारदाव'मित्यत्रेव इत्थं भूतलक्षणे तृतीया । तथाचेत्थं भूतलक्षण इति सूत्रे इत्थं भूतलक्षणार्थस्यापि विवक्षितत्वेन वाच्यतावच्छेदक धर्मस्यापि इत्थं भूतलक्षणत्वात् । सौहार्दं हृत्त्वेन, अविमौलिन्यस्तहस्तत्वेन अमृतकल्पवाक्त्वेन च युक्त इत्यर्थः सिद्ध्यति । सेवाप्रसन्नः सीतान्वेषणादिसेवासन्तुष्टः श्रीरामः सह परमात्मरूपैः सार्धं भुज्यतेऽनुभूयते सुखमस्मिन्निति सहभोगस्तं सहभोगाख्यं पारमेष्ठ्यं दिदेश प्रददौ ॥ २३ ॥

प्रेष्ठो न रामस्य बभूव तस्मान्न रामराज्येऽसुलभं च किंचित् ।
तत्पादसेवारतिरेष नैच्छत्तथापि भोगान्ननु सा विरक्तिः ॥ २४ ॥

श्रीरामराज्ये सकलभोगानां प्राणिमात्रस्यातिसौलभ्येऽपि श्रीरामपादसेवारतत्वादेव हनूमान् भोगान्नैच्छदित्याह—प्रेष्ठ इति ॥ श्रीरामस्य तस्माद्धनूमतोऽन्यपुरुषः प्रेष्ठः अतिशयेन प्रियः न बभूव । किन्तु स एव प्रियतमो बभूवेति भावः । रामस्य यद्राज्यं तस्मिन् किञ्चिच्च किञ्चिद्वस्तु च सुलभं न भवतीत्यसुलभं दुर्लभमित्यर्थः । 'न सुदुर्भ्यां केवलाभ्यां' इत्युक्तेर्लभेश्चे'ति नुमभावः । न नभवति । तथाप्यस्य रामातिप्रियत्वेऽपि श्रीरामराज्ये सर्ववस्तूनां सौलभ्येऽपि तस्य यौ पादौ तयोर्या सेवा तस्यां रतिरासक्तिर्यस्य सः । हेतुगर्भं विशेषणमेतत् तत्पादसेवारतित्वादिति, एष हनूमान् भोगान्नैच्छत् । इषु इच्छायां लङ् । अनेन हनूमतोऽतिविरक्तत्वमुक्तं भवति । तदुपपादयति—नन्विति । सा विहितभोगसौलभ्येऽपि तेषु हेयतामतिः विरक्तिर्ननु विरक्तिर्हि ॥ २४ ॥

नमो नमो नाथ नमो नमस्ते नमो नमो राम नमो नमस्ते ।
पुनः पुनस्ते चरणारविंदं नमामि नाथेति नमन् स रेमे ॥ २५ ॥

हनुमतस्तत्पादसेवया रमणप्रकारं दर्शयति-नम इति ॥ स हनूमान् हे नाथ ते तुभ्यं नमः। 'नमः स्वस्ती'त्यादिना चतुर्थी नमः नमः नमः । हे राम ते तुभ्यं नमः नमः नमः नमः । पुनरुक्तिर्नमस्कारे तात्पर्यद्योतनार्था । हे नाथ ते तव चरणः अरविन्दमिव तत् पुनः पुनः नमामि, इति नमन् सन् रेमे, रमु क्रीडायां लिट् ॥

**किं वर्णयामः परमं प्रसादं सीतापतेस्तत्र हरिप्रबर्हे ।**
**मुञ्चन्महीं नित्यनिषेवणार्थं स्वात्मानमेवैष ददौ यदस्मै ॥ २६ ॥**

श्रीरामेण हनूमति कृतानुग्रहः केनापि वर्णयितुमशक्य इत्याह—किमिति ॥ यत् यस्मात् । एष रामो महीं मुञ्चन् स्वलोकगमनार्थं भुवं मुञ्चन् सन् । नित्यं यन्निषेवणं सेवा तस्मै इति तदर्थं । हनूमता नित्यमात्मानं दर्शनार्चनादिरूपसेवया सेवयितुमित्यर्थः । अस्मै हनूमते स्वात्मानमेव ददौ हरिप्रबर्हे वानरश्रेष्ठे 'मुख्यं पुरोगं प्रवरं प्रबर्ह'मिति हलः । तत्र हनूमति सीतापतेः परमं उत्तमं प्रसादमनुग्रहं किं? किमिति वर्णयामः । किमाक्षेपे । एतावानिति वर्णयितुमशक्ता इत्यर्थः । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' लट् ॥ २६ ॥

**स्वानन्दहेतौ भजतां जनानां मग्नः सदा रामकथासुधायाम् ।**
**असाविदानीं च निषेवमाणो रामं पतिं किम्पुरुषे किलास्ते ॥ २७ ॥**

स चाद्यापि श्रीरामं सेवमानो वर्तत इत्याह-स्वेति ॥ असौ हनूमान् इदानीं चाद्यापि भजतां सेवमानानां जनानां स्वरूपभूतानन्दः स्वानन्दः स्वरूपानन्दाविर्भावलक्षणमोक्ष इत्यर्थः । तस्य हेतुः कारणं तस्मिन् । 'हेतुर्नाकारणं बीजं' इत्यमरः । रामस्य या कथा सैव सुधा अमृतं तस्यां । सदा मग्नः सन् श्रीरामकथाश्रवणकीर्तनादावत्यासक्तः सन्नित्यर्थः । पतिं स्वामिनं श्रीरामं निषेवमाणः नितरां सेवमानः सन् किंपुरुषे किंपुरुषाख्यखण्डे आस्ते किल वर्तते किल किलेत्यैतिह्ये ॥ २७ ॥

**तस्यैव वायोरवतारमेनं सन्तो द्वितीयं प्रवदन्ति भीमम् ।**
**स्पृष्टेव यं प्रीतिमनानिलेन नरेन्द्रकान्ता सुषुवेऽत्र कुन्ती ॥ २८ ॥**

अथ द्वितीयावतारलीलां वक्तुमारभते—**तस्यैवेत्यादिना** ॥ प्रीतिरस्यास्तीति प्रीतिमान् तेन पूर्वार्जितसुकृतातिशयवत्यां कुन्त्यामनुग्रहविशेषवतेत्यर्थः । अनिलेन मुख्यप्राणेन स्पृष्टैव केवलं स्पृष्टा सती नरेन्द्रकान्ता पाण्डुभार्या 'कान्ता वधूर्वरा युवतिरिति' हलः । कुन्ती यं पुत्रं सुषुवे प्रसूतवती षूङ् प्रसवे लिट् । सन्तः बलिष्ठेत्यादि सूक्ताभिप्रायविदः । तत्रहि 'पृक्षो वपु'रिति पृक्षशब्देन भीम उच्यते 'पूतनाक्षयकारित्वात्पृक्षो भीम उदाहृतः' इति वचनात् । एतं भीमं तस्यैव हनूमद्रूपेणावतीर्णस्यैव वायोस्तदपेक्षयेत्यर्थः । द्वयोः पूरणं द्वितीयं 'द्वेस्तीय' इति पूरणार्थे तीय प्रत्ययः । अवतारं प्रादुर्भावं प्रवदन्ति 'वद व्यक्तायां वाचि' लट् । अत्र स्पृष्टैव यं सुषुव इति तात्कालिकोत्पत्तिकथनेन गर्भवासादिनिमित्तक्लेशाभावो भीमस्य दर्शितः । हनुमदवतारेऽप्येतदुपलक्षणं । तत्रापि रामायणे वायोः स्पर्शमात्रादञ्जनायामवतारोक्तेः । अत एवोत्तरत्र मध्वावतारे दशमासगर्भाभिवृद्धिनिमित्तमन्यजीवस्याधिष्ठितत्वोक्तिः ॥ २८ ॥

**इन्द्रायुधं हीन्द्रकराभिनुन्नं चिच्छेद पक्षान् क्षितिधारिणां प्राक् ।**
**बिभेद भूभृद्गुरुङ्गसङ्गाच्चित्रं स पन्नो जननीकराग्रात् ॥ २९ ॥**

तस्य बाललीलां वर्णयति—इन्द्रेति ॥ प्राक् पूर्वं कृतयुग इत्यर्थः । इन्द्रस्य यः करस्तेनाभिनुन्नं हि सम्यक् प्रेरितमेव 'हि हेतावधारणे' इत्यमरः । इन्द्रायुधं वज्रं क्षितिं भूमिं धरन्तीति क्षितिधारिणः पर्वतास्तेषां पक्षान् पतत्राणि चिच्छेद 'छिदिर् द्वैधीभावे' लिट् । स भीमः जनन्याः मातुः कुन्त्याः यत्कराग्रं हस्तयोरग्रं तस्मात् । तस्मात्पन्नः सन् पतितः सन् पद गतावित्यस्मात् 'गत्यर्थाकर्मके'ति कर्तरि क्तप्रत्यये 'रदाभ्यां निष्ठातोनः पूर्वस्य च दः' इति नत्वम् । अङ्गसङ्गः शरीरसङ्गस्तस्मात् । भूभृतः शतशृङ्गपर्वतस्य वपुः शरीरं तत् बिभेद 'भिदिर् विदारणे' लिट् । एतच्चित्रमाश्चर्यं हि ॥ २९ ॥

**पुरे कुमारानलसान्विहारान्निरीक्ष्य सर्वानपि मन्दलीलः ।**
**कैशोरलीलां हतसिंहसङ्घां वने प्रवृत्तां स्मरति स्म सूक्तः ॥ ३० ॥**

कौमारलीलां वर्णयति—पुरेति ॥ स भीमः पुरं हास्तिनपुरं तस्मिन् मन्दा स्वल्पा लीला क्रिया यस्य सः । तथापि । 'मन्दाः सरोगनिर्भाग्य स्वल्पाज्ञापटुसूर्यजाः' इति वैजयन्ती । विहार उत्प्लवनादिरूपक्रीडा तस्मात् । अलसान् श्रमोपेतान् सर्वान्

कुमारान् दुर्योधनादीन् निरीक्ष्य प्राक् कैशोरावस्थायां वने अरण्ये प्रवृत्तां । हताः सिंहसंघाः सिंहसमूहा यस्यां सा तथा तां 'अप्रथमाविभक्त्यर्थेऽव्ययं समास' इत्युक्तः सप्तम्यर्थे वहुव्रीहिः । किशोरस्य सम्बन्धिनी कैशोरी सा च सा लीला च तां किशोरावस्थायां सिंहैः सहकृतलीलामित्यर्थः । सु सम्यक् उत्कः उत्कण्ठायुक्तः सन् 'उत्क उत्कण्ठितः प्रोक्तः' इति हलः । स्मरति स्म अस्मरत् । 'लट्स्म' इति भूतार्थे लट् । अल्पवलैरेतैः सह विहाराच्छतशृङ्गपर्वतेऽवस्थानसमये कैशोरावस्थायां सिंहैः सह विहारः समीचीनस्तादृशो विहारः कदानु भवेदित्यभिलापवानभूदिति भावः ॥ ३० ॥

**भुक्तं च जीर्णं परिपन्थिदत्तं विषं विषण्णो विषभृद्गणोऽतः ।**
**प्रमाणकोटेः स हि हेलयागान्नेदं जगज्जीवनदेऽत्र चित्रम् ॥ ३१ ॥**

अपरश्चाद्भुतं चरित्रं वर्णयति–भुक्तञ्चेति ॥ परिपन्थिदत्तं परिपन्थिभिः शत्रुभिर्दुर्योधनाभिर्दत्तं सूदमुखेन भक्ष्यादिषु निक्षिप्य दापितमित्यर्थः । 'परिपन्थी परोऽसुहृत' इति हलः । विषं भुक्तञ्च भुक्तमपि जीर्णमभूत् । विहारादिसमये भीमवलं दृष्ट्वा भीतेन दुर्योधनेन येन केनापि प्रकारेण हन्तव्य इति स्वकीयैर्निश्चित्य सूदमुखेन दापितं विषं स्वयं विदित्वापि भुक्त्या जीर्णीचकारेति भावः । अतः भीमसकाशात् । विषं विभ्रतीति विषभृतः सर्पास्तेषां गणः समूहः । विषण्णः हस्ततलेन चूर्णीकृतः षद्लृ विशरणगत्यवसादनेष्विति धातोः क्तः । विषं जीर्णं दृष्ट्वा पुनश्चायं हन्तव्य इत्यभिप्रायेण दुर्योधनेन स्वसारथिद्वारा शयानस्य भीमस्य सर्वमर्मसु दंशनार्थं मोचितान् दंशनानन्तरमुद्बुद्धः स्वहस्ततलेन सर्पान् सारथिना सह चूर्णयामासेति भावः । स भीमः प्रमाणेन परिमित्या कोटिः कोटियोजनसंख्या यस्य तस्मात् 'प्रमाणं वोधनेयत्तामर्यादाशास्त्रहेतुष्विति' यादवः । कोटियोजनागाधत्वेन प्रमाणकोट्याख्यहृदादित्यर्थः । हेलया लीलया 'हेला लीला च कथ्यत' इति हलः । अगात् इण्गतौ लुङ् 'इणोगालुङि' इति गादेशः । हिशब्दः प्रसिद्धौ, अनन्तरश्चायं हन्तव्य एवेति निद्रितं दृढैः पाशैर्बध्वा प्रमाणकोट्याख्ये गङ्गायां विद्यमाने महाहृदे दुर्योधनेन स्थापितस्ततो-हृदात्तान् सर्वान् पाशाञ्छित्वा लीलया तीरमाजगामेति भावः । इदञ्चास्य चित्रं नेत्याह

नेदमिति जीवनमुज्जीवनं ददातीति तस्मिन् 'आतोऽनुपसर्गे कः' इति कः जगतः जीवनदे अत्र मुख्यप्राणात्मनारात्मके भीमे चित्रमाश्चर्यं न न भवति (काव्यलिङ्गम्) ॥ ३१ ॥

दग्ध्वा पुरं योगबलात्स निर्यन्धर्मानिव स्वान् सहजान्दधानः ।
अदारिभावेन जगत्सु पूज्यो योगीव नारायणमाससाद ॥ ३२ ॥

दुर्योधनकारितलाक्षागृहं दग्ध्वा युधिष्ठिरादीनुद्वहन् गच्छन्तं भीमं वर्णयति—दग्ध्वेति ॥ योग उपायः स एव बलं तस्मात् 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। पुरं लाक्षागृहं तत् दग्ध्वा तस्मात् 'पुरं शरीरे नगरे गृहपाटलिपुत्रयो'रिति हेमचन्द्रः निरेतीति निर्यन् निर्पूर्वादिण् गतावित्यस्मात्कर्तरि 'लटः शतृशानचा'विति शतृप्रत्ययः। बिलद्वारेण निस्सरन्नित्यर्थः। धर्मानिव अदृष्टविशेषानिव स्वान् स्वकीयान् सहजातान् भ्रातॄन् युधिष्ठिरादीन् दधानो वहन्। अरेर्भावोऽरिभावः शत्रुत्वं अत्तीत्यदः 'असाधारण्येन व्यपदेशा भवन्तीति' न्यायादत्रादशब्देन बहुतराहारवत्त्वाद्राक्षसो विवक्षितः। कृत्तविकृत शब्दोपपदादण् तस्य च पृषोदरादिपाठत् क्रव्यभावः कृत्तविकृतपक्वमांसभक्षः क्रव्याद उच्यते। आममांसभक्षः क्रव्यादिति काशिका। तदेतत् क्लिष्टत्वादुपेक्षितं अस्ति इत्यदः क्रव्यस्यादः इति शेषषष्ठीसमासेनोपपत्तेः। गंगाधर इत्यादौ एवमेव सर्वैरंगीकृतत्वात् इदमेव कृलकृत्सम्मतं। अन्यथापि आदेतिस्यात्। यद्वा नामैकदेशे नामग्रहणमिति न्यायेन वेदव्यास इति वक्तव्ये व्यास इतिवन् क्रव्याद इति वक्तव्येऽद इत्युक्तिः। तथा च अदस्य क्रव्यादस्य राक्षसस्यारिभावः शत्रुत्वं तेन हिडिम्बाख्यराक्षसहन्तृत्वेनेत्यर्थः। जगत्सुपूज्यो मान्यः स भीमः योग उपायोऽस्यास्तीति योगी स इव उपायविशेषवद्दृढपुरुष इवेत्यर्थः। स यथा कस्यचित्स्वस्वामिविद्विषः पुरं योगबलाद्दग्ध्वा निर्गच्छन् अदारिभावेन दारो विदारणं सोऽस्यास्तीति दारी 'अतइनिठनौ' इति इनिः। तस्य भावोऽदारिभावः विदारितत्वमित्यर्थः। नविद्यतेऽदारिभावो यस्य तेन स्वयं शत्रुभिरविदारितत्वेनेति भावः। जगत्सुपूज्यः सन् स्वस्वामिनं प्राप्नुयात्तद्वदित्यर्थः। नारायणं नारायणात्मकं व्यासं आससाद प्राप ददर्शेति यावत्। पट्लृ धातोर्लिट्। यद्वा योगः समाधिपरिपाकस्तद्वान् योगी स इव, सोऽपि जितपवनत्वात्पुरं शरीरं योग बलात्स्वसमाधिपरिपाकबलाद्दग्ध्वा स्वदेहगतवह्निना भस्मीकृत्य, निर्यन् ब्रह्मनाडीमार्गेण

देहादुत्क्रम्य गच्छन् अदारिभावेन शरीरपाटनराहित्येन, पवनाभ्यासं कुर्वतां योगिनां पवनस्यामार्गसञ्चारे सति देहपातं भवति तद्रहितत्वेनेत्यर्थः । जगत्सु स्वर्गाद्युत्तमलोकेषु पूज्यः सन् धर्मान् मोक्षे सुखाभिवृद्धिहेतूनदृष्टविशेषान् दधानः अमुञ्चन् नारायणं स्वबिम्बभूतं परमात्मानं प्राप्नुयात् तद्वत् ॥ हिडिम्बं निहत्यावस्थितं भीमं दृष्ट्वा नित्येन वरयन्तीं हिडिम्बीं ज्येष्ठस्याविवाहादनिच्छता भीमेन प्रार्थयितुमाविर्भूतं व्यासं ददर्शेति भावः (उपमा) ॥ ३२ ॥

समर्प्य कृत्यानि कृती कृतानि व्यासाय भूम्ने सुकृतानि तावत् ।
करिष्यमाणानि च तस्य पूजां सङ्कल्पयामास स शुद्धबुद्धिः ॥ ३३ ॥

व्यासं दृष्ट्वा किञ्चकारेत्यत आह–समर्प्येति ॥ कृती कुशलः सर्वकार्येषु निपुण इत्यर्थः, शुद्धा सर्वदा भगवत्प्रातिकूल्यरहिता बुद्धिर्यस्य स भीमः सुसुकृतानि सुकृतानि आत्मना भगवत्पूजात्वेन सम्यक्कृतानीत्यर्थः । कर्तुं योग्यानि कृत्यानि 'विभाषाकृञोः' इत्यर्हार्थे क्यप् । स्वेनावश्यं कर्तव्यानीत्यर्थः । कृतानि कर्माणि 'नपुंसके भावे क्तः' इति क्तः । भूम्ने पूर्णाय व्यासाय तावत् साकल्येन 'यावत्तावच्च साकल्ये' इत्युक्तेः । समर्प्य करिष्यमाणानि च स्वेनोत्तरत्रकरिष्यमाणानि बकनिग्रहादीनि च । तस्य श्रीव्यासस्य पूजां सङ्कल्पयामास 'कृञ्' सामर्थ्ये लिट् ॥ अवतारमारभ्य हिडिम्बवधान्तानि स्वकृतकर्माणि व्यासाय समर्प्याथ करिष्यमाणानि बकनिग्रहादीनि च भगवत्प्रीत्यर्थकपूजात्वेन करिष्यामीति सङ्कल्पयामासेति भावः । अत एव कृती शुद्धबुद्धिरितिविशेषणद्वयं हेतुगर्भम् ॥ ३३ ॥

विष्णोः पदश्रिद्बकसन्निरासी श्रितान्यपक्षिप्रकरः सुपक्षः ।
ससोदरोऽथादित राजहंसः स राजहंसीमिव राजकन्याम् ॥ ३४ ॥

द्रौपदीस्वयंवरं वर्णयति–विष्णोरिति ॥ विष्णोः श्रीहरेः श्रयत इति श्रित् पदस्य पादस्य श्रित् कर्मणि षष्ठ्याः समासः । पदमाश्रित इत्यर्थः । बकं बकासुरं सम् सम्यक् निरसि शीलमस्यास्तीति बकसन्निरासी, 'सुबुक्तिः प्रादिनिवृत्यर्थे'त्यस्य केवलप्रादिविषयत्वात् अत्र च बकपदसाहित्यात्समित्यस्य महाभाष्यविरुद्धत्वात्प्राद्युपपदत्वेऽपि णिनेरुपपत्तिः । प्रसिद्धश्च प्राद्युपपदत्वेऽपि णिनिः । 'स बभूवोपजीविनाम्' 'अनुयायिवर्गः'

'पतत्यधो धामविसारी'त्यादौ ॥ राजहंसोऽपि मारितवकान्यपक्षिविशेषः । पक्षः सहाय एषामस्तीति पक्षिणः अन्ये ते पक्षिणः अन्यपक्षिणः स्वशत्रुसहायिन इत्यर्थः । तेषां प्रकरः समूहः क्षिप्तः निराकृतः अन्यपक्षिप्रकरो येन तादृशः 'पक्षः पार्श्वगरुत्साध्य सहायबलभित्तिषु' इति वैजयन्ती । यद्वा क्षिप्तः निराकृतः स्वसिद्धान्तविरुद्धान्य-सिद्धान्तिनां समूहो येन सः । राजहंसोऽपि निराकृतस्वेतरकाकोलूकादिविहग-समूहः । शोभनपक्षः श्रीकृष्णाख्यसहायो यस्य सुपक्षः शोभनसिद्धान्त इति वा, राज-हंसस्तु शोभनपत्रः । समानमेकमुदरं येषान्ते सोदराः । 'समानस्य छन्दस्यमूर्धप्रभृ-त्युदर्केषु' इति सूत्रे समानस्येति योगो विभज्यते । तेन सपक्षः, साधर्म्यं, सजातीयः, इत्यादि सिद्धमिति वैयाकरणोक्तेः सोदर इत्यत्रापि समानशब्दस्य सादेशः । अथवा सहशब्दः सदृशवचनोऽस्ति 'सदृशः सख्या ससखीति' यथा, तेनायमस्वपदविग्रहो बहुव्रीहिः । तथा च सदृशमुदरं येषान्ते सोदराः 'वोपसर्जनस्येति' सहस्य सादेशः । सोदरैः सहितः ससोदरः 'तेन सहेति तुल्ययोग' इति समासे पूर्ववत्सादेशः । स-भ्रातृक इत्यर्थः । भीमः राजकन्यां द्रुपदकुमारीं 'कुमारी कथिता कन्या' इति हलः । द्रौपदीं राजहंसः राजहंसाख्यपक्षी राजहंसीमिव आदित लेभे । डुदाञ् दाने लुङ् । (उपमा) ॥ ३४ ॥

**इन्दीवरश्रीजयिसुन्दराभं स्मेराननेन्दुं दयितं मुकुन्दम् ।**
**स्वमातुलेयं कमलायताक्षं समभ्यनन्दत्सुचिराय भीमः ॥ ३५ ॥**

तत्र च समागतं श्रीकृष्णमानन्दयदित्याह—**इन्दीवरेति** ॥ इन्दीवरस्य नीलोत्पलस्य श्रीः कान्तिस्तां जेतुं शीलमस्या अस्तीति इन्दीवरश्रीजयिनी तादृशी सुन्दराभा मनो-हरकान्तिर्यस्य तं । स्मेरं स्मितयुक्तं यदाननं तदेवेन्दुर्यस्य स तथा तं । दयितं स्वस्यातिप्रियं स्वस्य मातुलो वसुदेवस्तस्यापत्यं पुमान् स्वमातुलेयस्तं कमलवदायते विशाले अक्षिणी यस्य तं 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षच् । मुकुन्दं श्रीकृष्णं सुचिराय बहुकाले समभ्यनन्दत् । टुनदि समृद्धौ लङ् । द्रौपदीस्वयंवरे समागतं श्रीकृष्णं दृष्ट्वा सन्तुष्टोऽभूत् । यद्वा समभ्यनन्ददित्यन्तर्भूतण्यर्थः । तथा च

द्रौपदीस्वयंवरे युद्धार्थमागतस्य राजन्यकूटस्य पराजयकर्मणा भूभारहरणार्थमवतीर्णं श्रीकृष्णं सन्तोषयामासेति भावः ॥ ३५ ॥

**महागदं चण्डरणं पृथिव्यां बार्हद्रथं मङ्क्षु निरस्य वीरः ।**
**राजानमत्युज्ज्वलराजसूयं चकार गोविन्दसुरेन्द्रजाभ्याम् ॥ ३६ ॥**

रुद्रादिवरैः सर्वैरजेयस्य जरासन्धादिराजनिकरस्य वधपूर्वकं राजसूययागश्च युधिष्ठिरेण कारित इत्याह—**महागदमिति** ॥ स भीमः महती गदा यस्य तं पृथिव्यां भूमौ चण्डः क्रूरो रणो युद्धं यस्य तं बृहद्रथस्यापत्यं पुमान् तं 'तस्यापत्यम्' इत्यणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धिः । जरासन्धमित्यर्थः । सुरेन्द्राज्जातः सुरेन्द्रजोऽर्जुनः गोविन्दश्च सुरेन्द्रजश्च ताभ्यां सह मंक्षु सद्यः 'सद्योद्राङ् मंक्षु च द्रुतम्' इत्यमरः । निरस्य हत्वा । यद्वा महान्तो ये अगाः पर्वता वृक्षा वा 'शैलवृक्षौ नगावगा'वित्यमरः । महागान् द्यति खण्डयतीति महागदः 'दो अवखण्डन' इति धातोः अतिमहाबलोपेतत्वेन महापर्वतादिविदारकमिति भावः । बृहन्तो रथा यस्मिन्रणे स बृहद्रथः स एव बार्हद्रथस्तं महारथगजादिचतुरङ्गसैन्ययुक्तमिति भावः । चण्डानां क्रूराणां कीचकादिभूपानां रणो युद्धं तं मंक्षु द्राक् निरस्य सकलभूपान् विजित्येति भावः राजानं धर्मजं अत्युज्वलः शास्त्रोक्ताङ्गसाकल्येनात्यन्तं शोभमानः राजसूयः राजसूयाख्ययागो यस्य तं चकार ॥ ३६ ॥

**दुःशासनेनाकुलितान प्रियायाः सूक्ष्मानरालानसितांश्च केशान ।**
**जिघांसया वैरिजनस्य तीक्ष्णः स कृष्णसर्पानिव सञ्चिकाय ॥ ३७ ॥**

दुःशासनेनाकृष्टाया द्रौपद्या विकीर्णान् केशान् तद्वधप्रतिज्ञापूर्वकं बबन्धेत्याह—**दुःशासनेनेति** ॥ भीमः दुष्टं यथा भवति तथा शास्तीति दुःशासनः 'शासि युधिधृषिमृषिभ्यो युजवाच्य' इति कर्तरियुचि 'युवोरनाकौ' इत्यनादेशः । तेन दुःशासनेन दुर्योधनानुजेन आकुलितान् केशेषु गृहीत्वाकर्षणेन विकीर्णान् सूक्ष्मान् अराळान् वक्रान् 'भुग्नमराळं कुटिलमाकुञ्चितमूर्मिमत्कथितं' इति हलः । असितान् नीलान् प्रियाया भार्याया द्रौपद्याः केशान् वैरमस्यास्तीति वैरी सचासौ जनश्च तस्य जिघांसया हननेच्छया दुर्योधनादिवधेच्छयेत्यर्थः । तीक्ष्णः क्रूरः कश्चित् गरुडमन्त्रचतुरः

कृष्णसर्पानिव सञ्चिकाय एकीचकार बबन्धेत्यर्थः । चिञ् चयने लिट् । यथा केन-चिद्दुःशासनेन सर्पविषये दुष्टं क्रूरं शाम्यतेऽनेनेति शासनं मन्त्रौषधादिरूपं यस्य तेन आकुलितान् पञ्जरादिस्थानाद्विद्रावितान् सूक्ष्मत्वादिविशेषणयुक्तान् कृष्णसर्पान् अन्यः कश्चित् गारुडचक्रः वैरिजनस्य जिघांसया स्वकीयपञ्जरादिस्थानेष्वेकीकुर्या-त्तद्वदिति भावः । (उपमा) ॥ ३७ ॥

**जाज्वल्यमानस्य वने वनेऽलं दिधक्षतः पार्थिवसार्थमुग्रम् ।**
**सत्त्वानि पुंसां भयदानि नाशं वृकोदराग्नेर्गुरुतेजसापुः ॥ ३८ ॥**

वनवासे च भीमेन किर्मीरादयो दुष्टा निहता इत्याह—जाज्वल्येति ॥ वनेवने प्रतिवनं 'नित्यवीप्सयो'रिति द्विर्भावः । सर्वेषु वनेष्वित्यर्थः । अलं सम्यक् पुनः पुनर्ज्वलतीति जाज्वल्यमानस्तस्य उग्रं क्रूरं पार्थिवानां राज्ञां सार्थं समूहं 'सार्थनिकु-रम्बकदम्बपूगराशयः' इति हलः । दग्धुमिच्छतीति दिधक्षंस्तस्य दग्धुमिच्छत इत्यर्थः । भविष्यद्भारतयुद्धे दुर्योधनादिपार्थिवदिधक्षया तद्युद्धं प्रतीक्षमाणस्येति भावः । वृकोदर एव भीम एवाग्निस्तस्य उरु उत्कृष्टं यत्तेजः पराक्रमस्तेन 'तेजो बले प्रभावेऽग्नौ ज्योतिष्यर्चिषि रेतसि' इति यादवः । पुंसां पुरुषाणां भयं ददतीति भय-दानि सत्त्वानि प्राणिनः 'सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे' इति वैजयन्ती । किर्मीरादयः सिंहव्याघ्रादयश्च नाशं आपुः 'आप्लृव्याप्तौ लिट् । वनेवने अलं जाज्वल्य-मानस्य उग्रं कण्टकादिना दुरवगाहं पार्थिवसार्थं वृक्षसमूहं दग्धुमिच्छतो दवाग्नेः उरुतेजसा पुंसां भयङ्कराणि सिंहव्याघ्रादीनि यथा नश्येयुस्तद्वदिति श्लेषाभिप्रायः । (प्रकृताप्रकृतश्लेषः । शब्दशक्तिमूलध्वनिर्वा) ॥ ३८ ॥

**भोगाधिकान् भोगवतोऽरुणाक्षानितस्ततः सञ्चलतो धरेन्द्रे ।**
**वहन्द्विजिह्वान्मणिमत्पुरोगानसौ कटून् क्रोधवशाञ्जघान ॥ ३९ ॥**

सौगन्धिकाहरणसमये क्रोधवशाख्यदैत्याश्च निहता इत्याह—भोगाधिकेति ॥ असौ भीमः भोगा अभीष्टविषयभोगास्तैरधिका, आभोगो बलादिपूर्णता एषामस्तीत्या-भोगवन्तः भोगाधिकाश्चते आभोगवन्तश्च तान् 'आभोगो यत्नपूर्णता' इति वैजयन्ती । अरुणानि अक्षीणि येषां तान् स्वभावतः कोपेन वा लोहितलोचनानित्यर्थः । धरेन्द्रे

गन्धमादनगिरिवरे इतस्ततः सञ्चलतः सञ्चरतः द्विजिह्वान् मत्सरिणः 'द्विजिह्वो मत्सरी मतः' इति हलः । अनृतवादिन इति वा । कद्रून् मनोवाक्कर्मभिर्निष्ठुरान् 'रसे कटुः कट्वकार्ये त्रिषुमत्सरतीक्ष्णयोः' इत्यमरः । मणिमन्नामकासुरः पुरोगः श्रेष्ठो येषां तान् मणिमत्पुरोगान् बहून् क्रोधवशान् क्रोधवशाख्यासुरान् जघान हन हिंसागत्योर्लिट् ॥ असौ दवाग्निरपि बहून् क्रोधाधीनान् द्वे जिह्वे येषां तान् सर्पान् भोगैः शरीरैरधिकास्ते च ते आभोगवन्तश्च बलादिना पूर्णाश्च तान् अरुणाक्षान् धरेन्द्रे कस्मिंश्चित्पर्वते इतस्ततः सञ्चलतः मणयो येषां सन्तीति मणिमन्तः फणाग्रेषु रत्नवन्तः सर्पविशेषास्ते पुरोगाः प्रधाना येषां तान् कद्रून् विषदंष्ट्रादिनातिक्रूरान् एवं भूतान् द्विजिह्वान् सर्पान् यथा नाशयेत्तद्वद्भीमोऽसुरान् जघानेति भावः (प्रकृताप्रकृतश्लेषः) ॥ ३९ ॥

अथैष वेषान्तरभस्मलीनः क्रमेण वायुप्रभवः सुतेजाः ।
रुद्धाखिलाशं मुखरं प्रचण्डं भस्मीचकाराखिलकीचकौघम् ॥ ४० ॥

भीमेनाज्ञातवासे विराटपुर्यां कीचकाश्च निहता इत्याह—अथेति ॥ प्रभवतीति प्रभवः वायोः प्रभवो वायुप्रभवः, वायुतनय इत्यर्थः । यद्वा प्रभवनं प्रभवः वायोः प्रभव उत्पत्तिर्यस्य सः एष भीमः अथ वनवाससमाप्त्यनन्तरं । अन्यो वेषो वेषांतरं सूद-वेषस्तदेव भस्म तेन लीनो निगूढः भीम इति केनाप्यविदित इति भावः । क्रमः कीचकेन सह युद्धक्रमस्तेन । सुष्ठुतेजः पराक्रमो यस्य तादृशः सन् रुद्धाः प्रतिरुद्धा अखिलाशा अखिलजनानां जयाशा येन तं पञ्चुत्तरशतानां कीचकाख्यानां क्षत्रियवंशो-त्पन्नानां विराटस्यालानां भूपानामतिप्रबलत्वात्तद्विषय जयाशा कस्यापि नाभूदिति भावः । मुखमस्यास्तीति मुखरः 'खमुखकुञ्जेभ्यश्च' इति मत्वर्थे रप्रत्ययः । तं मुखरं अविचा-रितभाषणमित्यर्थः । प्रचण्डमतिक्रूरं अखिलाः समस्ता ये कीचकाः कीचकाख्य नृपास्तेषामोघः समूहस्तं भस्मीचकार ददाह डुकृञ् करणे लिट् । अग्निरपि भस्मलीनः सन् क्रमेण वायुप्रभवः वायुनोद्बोधितः सन् अत एव सुतेजाः रुद्धा आखिलाशाः समस्तदिशो येन तं मुखरं वायुवशात्सशब्दं प्रचण्डं कण्टकात्मकत्वात्क्रूरं अखिलवेणु-समूहं यथा भस्मीकुर्यात्तद्वदिति भावः (प्रकृताप्रकृतश्लेषः) ॥ ४० ॥

**स कृष्णवर्त्मा विजयेन युक्तो मुहुर्महाहेतिधरोऽप्रधृष्यः ।**
**भीष्मद्विजाद्यैरतिभीषणाभं विपक्षकक्षं क्षपयन् विरेजे ॥ ४१ ॥**

भीमकृतं भारतयुद्धं वर्णयति—स इति ॥ कृष्णप्रेरितं वर्त्म मार्गो यस्य स विजयोऽर्जुनस्तेन युक्तः सहितः धरतीति धरः महती या हेतिरायुधं तस्या धरः महाहेतिधरः । गङ्गाधरः, भूधरः, इत्यादिवत् कर्मणः शेषत्वविवक्षायां शेषषष्ठ्या समासः । प्रधृष्यः शत्रुभिर्विनाश्यः स न भवतीत्यप्रधृष्यः स भीमः, भीष्मश्च द्विजो ब्राह्मणो द्रोणः स च तावाद्यौ येषां तैः । अतिभीषणा अतिभयङ्करा आभा कान्तिर्यस्य तं, विपक्षा एव दुर्योधनादिशत्रव एव कक्षो वनं तं 'कक्षो वीरुधि दोर्मूले कच्छे शुष्के वने तृण' इति हेमचन्द्रः । क्षपयन् नाशयन् विरेजे राजृ दीप्तौ लिट् ॥ श्लेषार्थे तु विजयो विशेषजयस्तेन युक्तः महाहेतिधरः महाज्वालाधरः, 'हेतिर्ज्वालांशुरायुधं' इति वैजयन्ती । अप्रधृष्यः असह्यः । भीष्मा भयङ्करा ये द्विजाः पक्षिणः त आद्या येषां तैः । अतिभीषणाभं कक्षं वनं क्षपयन् कृष्णः नीलवर्णः वर्त्म स्वगतमार्गो यस्येति कृष्णवर्त्मा वह्निः यथा विरेजे तद्वदिति भावः (श्लेषः) ॥ ४१ ॥

**तरस्विनः प्रोच्चलितानधीरान्निर्दग्धपक्षानतितीक्ष्णकोपान् ।**
**स धार्तराष्ट्रान् बहुहेतिलीलो विनाश्य विश्वान्परया श्रियाभात् ॥४२॥**

दुर्योधनादीन्निहत्य साम्राज्यश्रिया विरेज इत्याह—तरस्विन इति ॥ बह्व्यो या हेतयः गदाद्यायुधानि ताभिर्लीला यस्य स भीमः तरः वेगो बलं वा येषामस्तीति तरस्विनः 'तरसी बलरंहसी' इति वैजयन्ती । प्रोच्चलितान् स्वधर्ममार्गादुच्चलितान् धीरा न भवन्तीत्यधीरास्तान् युद्धे धैर्यरहितानित्यर्थः । निर्दग्धो विनाशितः पक्षः सहायो येषां तान् । अतितीक्ष्णः कोपो येषां तान् धृतराष्ट्रस्यापत्यानि पुमांसो धार्तराष्ट्रास्तान् दुर्योधनादीन् विश्वान् सर्वान् विनाश्य परया उत्तमया श्रिया जयश्रिया राज्यश्रिया च अभादशोभत भा दीप्तौ लङ् । श्लेषार्थे तु दवाग्निरपि तरस्विनः प्रोच्चलितान् स्वनीडाच्चलितान् अधीरान् अग्निमप्रदेशमतिलङ्घ्य गन्तुमधीरान् अत एव निर्दग्धपक्षान् निर्दग्धपतत्रान् अतितीक्ष्णकोपान् धार्तराष्ट्रान् लोहितचञ्चूचरणान् पक्षिविशे-

षान् 'धार्तराष्ट्रास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः तान् विश्वान् बहुहेतिलीलः बहुज्वालालीलः सन् विनाश्य यथा परया श्रिया कान्त्या शोभते तद्वदित्यभिप्रायः (श्लेषः) ॥ ४२ ॥

कृष्णांघ्रिपङ्केरुहभृङ्गराजः कृष्णामुखाम्भोरुहहंसराजः ।
प्रजासरोजावलिरश्मिराजः ससोदरोऽराजत वीरराजः ॥ ४३ ॥

साम्राज्यमधिरूढो भीमः कथमराजत इत्यत आह-कृष्णेति ॥ कृष्णस्यांघ्री पादौ तावेव पङ्के रुहत इति पङ्केरुहे कमले 'हलदन्तादिति' सप्तम्या अलुक् । तयोर्भृङ्गराज इव भ्रमरश्रेष्ठ इव कृष्णांघ्रिपङ्केरुहभृङ्गराजः श्रीकृष्णपादपद्मार्चनस्मरणादौ सदात्यासक्तिमानित्यर्थः । कृष्णाया द्रौपद्या यन्मुखं तदेवाम्भोरुहं पद्मं तस्मिन् हंसराज इव हंसश्रेष्ठ इव कृष्णामुखाम्भोरुहहंसराजः द्रौपद्या लालनपोषणप्रीणनादिना तस्यामभिरत इत्यर्थः । प्रजा एव सरोजानि कमलानि तेषामावलयः पंक्तयः तासु रश्मिराजः रश्म्यधीशो रविरिव प्रजासरोजावलिरश्मिराजः । प्रजानां धर्मतः परिपालनेनानुरञ्जक इत्यर्थः । वीराणां राजा वीरराजः 'राजाहः सखिभ्यष्टच्' इति टच् । ससोदरः युधिष्ठिरार्जुनादिभिः सहितः स भीमोऽराजत शुशुभे । राजृ दीप्तौ लङ् (मालोपमा) ॥ ४३ ॥

पौत्रे पवित्राह्वयजामिपौत्रे धरां निधायासुरधीषु तापम् ।
कीर्तिं त्रिलोक्यां हृदये मुकुन्दं भेजे पदं स्वं सहजैः स भीमः ॥४४॥

एवं राज्यपरिपालनं कृत्वा भीमः स्वपदं भेज इत्याह—पौत्र इति ॥ स भीमः पवित्र इत्याह्वयो नाम यस्य तस्य श्रीकृष्णस्य जामिः स्वसा सुभद्रा 'जामिः स्वसृकुलीनयो'(लस्त्रियोः)रिति वैजयन्ती तस्याः पौत्रः पुत्रपुत्रस्तस्मिन् 'पवित्रोऽनौहरौपूत' इति वैजयन्ती । पौत्रे स्वपुत्रपुत्रे, अभिमन्युपुत्रे परीक्षितीत्यर्थः । धरां भूमिं निधाय धरापरिपालनार्थं तमभिषिच्येत्यर्थः । असुरधीषु असुराणां मनस्सु तापं बत वयमनेनैवं नाशिता इति सन्तापं निधाय त्रिलोक्यां कीर्तिं निधाय हृदयं मनः मुकुन्दे निधाय सहजैर्युधिष्ठिरादिभिः सह स्वपदं स्वस्वरूपं स्वलोकं वा भेजे । भज सेवायां लिट् । (दीपकम्) ॥ ४४ ॥

विष्णोः पदान्तं भजतानिलेन घोरप्रघातैरिति नाशितास्ते ।
रसोज्झिताश्चञ्चलवृत्तयोऽलं शोभां न भेजुः सुरवैरिमेघाः ॥ ४५ ॥

अथ श्रीमुख्यप्राणस्य तृतीयावतारकथां सप्रपञ्चं वक्तुमुपोद्घातसङ्गत्या पूर्वं भीमनिहतानां मणिमदादिदैत्यानामवस्थामाह—विष्णोरिति ॥ विष्णोः श्रीकृष्णस्य पदस्य अन्तः सन्निधिस्तं भजता सदा तत्र वर्तमानेन अनिलेन भीमरूपेण वायुना घोरा ये प्रघाताः संग्रामास्तैः 'प्रघातश्च समाह्वयः । जन्यं स्यादभिसम्पातः' इति हलः । इति प्रागुक्तप्रकारेण । नाशिता रसोज्झिता वीर्येण रहिताः 'रसः स्यादं जले वीर्ये' इति हेमचन्द्रः । अत एव अलं सम्यक् चञ्चला वृत्तिर्वर्तनं येषां ते । भीमहताः सुरवैरिणो मेघा इव सुरवैरिमेघाः शोभां कान्तिं न भेजुः । भज सेवायां लिट् ॥ श्लेषार्थेन—मेघा वायुना घोरप्रघातैः घोरताडनैर्नाशिताः शकलीकृताः रसोज्झिता निर्जला अत एव लघुत्वादलं चञ्चलवृत्तयः सन्तो यथा शोभां न भजेयुस्तद्वत् (उपमा) ॥ ४५ ॥

एतत्प्रतीपं किल कर्तुकामा नष्टौजसः सङ्कटमेवमाप्य ।
मुकुन्दवैगुण्यकथां स्वयोग्यां काले कलावाकलयन्त तेऽलम् ॥ ४६ ॥

एवं भूतास्ते किं चक्रुरित्यत आह—एतदिति ॥ नष्टमोजः सामर्थ्यं येषां ते मणिमदादिदैत्याः एवं सङ्कटं भीमनिमित्तक्लेशमाप्य एतस्य भीमकृतापराधस्य प्रतीपं प्रतीकारं स्ववधप्रतीकारमित्यर्थः । कर्तुं काम इच्छा येषां ते तथा सन्तः 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इत्युक्तेस्तुमोऽन्तलोपः । किलेत्यपरमार्थे । वस्तुतोऽपकर्तुमसमर्था इति भावः । कलौ कलियुगाख्ये 'कलहेऽन्त्ययुगे कलि'रिति वैजयन्ती । काले उत्पन्ना इति भावः स्वयोग्यां दैत्ययोग्यां । विगतो गुणो यस्मात्स विगुणस्तस्य भावो वैगुण्यं मुकुन्दस्य वैगुण्यं निर्गुणत्वं तस्य कथां तत्समर्थनपरवाग्जालमित्यर्थः कथ वाक्यप्रबन्ध इति धातोः । अलं सम्यक् आकलयन्त चक्रुः 'कल कामधेनु'रिति धातोर्लङ् ॥ ४६ ॥

योऽभूरिवैरो मणिमान् मृतः प्राग्वाग्मी बुभूषुः परितोऽपि नेशः ।
स सङ्कराख्योऽग्रितलेषु जज्ञे स्पृधापरेऽप्यासुरिहासुरेन्द्राः ॥ ४७ ॥

भीमहतास्ते वैगुण्यकथां कथं चक्रुः कथञ्चासंभावितार्थप्रतिपादने सामर्थ्यञ्च तेषामित्याशङ्कां परिहरन् पुनर्भुवि जाताः सन्तः बरबलात्तां चक्रुरिति भावेन तेषामुत्पत्तिमाह—**य इति** ॥ प्राक् सौगन्धिकवने मृतो भीमेन हतः यो मणिमान्। भूरि बहु भीम इति शेषः। वैरं यस्य स्पृधा स्पर्धया वाचोऽस्यसन्तीति वाग्मी 'वाचो ग्मिनि'रिति मत्वर्थे-ग्मिनिः। चतुरवचन इत्यर्थः। भवितुमिच्छुर्बुभूषुः सन् परितोषितस्तपसा सन्तोषित ईशो रुद्रो येन सः तादृशः सन्। इह भुवि। सर्वभेदनिराकरणात्सर्वसाङ्कर्यप्रतिपादनेन संकर इत्याख्या अन्वर्थसंज्ञा यस्य तादृशः सन् अंघ्रितलेषु (तल्ल अंघ्रितलाख्यविप्रा-लेषु) तदाख्य विप्रेषु * जज्ञे उत्पन्नः 'जनी प्रादुर्भावे' लिट्। अपरे मणिमद्व्यतिरिक्ता असुरेन्द्रा अपि इह भुवि आसुः उत्पन्नाः धातूनामनेकार्थत्वात् 'अस गतिहिंसादानेषु लिट्। अंघ्रितल इत्यस्य कारडि, इत्यपभ्रष्टसंज्ञा। तौळवानां भाषयांघ्रेः 'कार्' इति तलस्य 'अडि' इति च प्रसिद्धेः * ॥ ४७ ॥

**सान्नाय्यमव्यक्तहृदाखुभुग्वा श्वा वा पुरोडाशमशारकामः।**
**मणिस्रजं वा प्लवगोऽव्यवस्थो जग्राह वेदादिकमेष पापः ॥ ४८ ॥**

स च स्वेनात्यन्तमपरिग्राह्यवेदादिकं जग्राहेत्येतत्सदृष्टान्तमाह—**सान्नाय्यमिति**॥ अव्यक्तमप्रकटितं हृत् अभिप्रायो यस्य स तथा आखून् मूषिकान् भुङ्क्त इति आखु-भुक् मार्जारः 'ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्' इत्यमरः। सान्नाय्यं वा क्षीराख्यं यज्ञियं हविर्विशेषमिव 'सान्नायं हविरुच्यत' इति हलः। 'वा विकल्पोपमा-नयोः' इत्यमरः। अशारे अपवित्रे पुरीषे काम इच्छा यस्य स श्वा शुनकः। पुरोडा-शमिव चरुमिव न विद्यते व्यवस्थावस्थितिर्यस्य स अतिचञ्चल इत्यर्थः। प्लवगः कपिः मणिस्रजं वा अनर्घ्यरत्नमालामिव पापः एष संकराख्यः वेदादिकं जग्राह अध्ययनादिकं चक्रे। अयमत्रदृष्टान्तत्रयाभिप्रायः। सान्नाय्यं पिपासुरपि मार्जारोऽव्यक्तहृदयो निमीलि-ताक्षः साधुरिव वर्तमानो यथावसरे प्राप्ते तत्पिबेत्। एवमव्यक्तहृदयो ब्रह्मणोऽवाच्य-त्वान्निर्विषयत्वेन वेदाप्रामाण्यं, ब्रह्मणश्च निर्विशेषत्वादन्ततः शून्यत्वमित्यादि स्वाभिप्रा-यानभिव्यञ्जकः। श्वा अशारं जुगुप्सितं मलं कामयते तद्वदयमपि जीवब्रह्मैक्यं, ब्रह्मणो

* 'कारडि' इति केरलेषु प्रसिद्धो ग्रामोऽत्र अभिप्रेतः।

निर्गुणत्वं, तस्यैव जीवरूपेण संसारित्वं, जगन्मिथ्यात्वमित्यादिकं सर्वमप्रामाणिकं सर्वप्रमाणविरुद्धञ्च कामयते ॥ प्लवगोऽपि यथा नानारत्नमयीं मालां लब्ध्वापीयं मणिमाला, अत्रत्यमणीनामर्घादि तारतम्यं इत्यादिविवेकरहितस्तथायमपि वज्रमुक्तादि-व्यवस्थां, जीवब्रह्मव्यवस्थां, अज्ञानस्यायमाश्रयो विषयश्चायमित्यादिव्यवस्थां न समर्थ-यितुं समर्थ इत्यव्यवस्थ इति (उपमा) ॥ ४८ ॥

**जनो नमेन्नापरथेति मत्वा शठश्चतुर्थाश्रममेष भेजे ।**
**पद्माकरं वा कलुषीचिकीर्षुः सुदुर्दमो दुष्टगजो विशुद्धम् ॥ ४९ ॥**

स च यत्याश्रमं जग्राह किमर्थमित्यत आह—**जनेति** ॥ शठः गूढद्वेषः वेदादि-प्रमाणेषु तत्प्रतिपाद्ये ब्रह्मणि च निगूढद्वेषः एष संकरः अपरथा सन्यासाश्रमापरिग्रहे सति जनो न नमेत् न प्रह्वीभवेत् 'णमु प्रह्वत्वे शब्दे' लिङ् । इति मत्वा न तु विरक्त्येति भावः । सुष्ठु दुर्दमः सर्वथा निग्रहीतुमशक्त इत्यर्थः । दुष्टगजो विशुद्धं पूर्वमकलुषं । अकलुषं कलुषं कर्तुमि(च्छति कलुषीचिकीर्षति कलुषीचिकीर्षतीति) च्छुः कलुषीचिकीर्षुः सन् पद्माकरं वा तटाकमिव 'पद्माकरस्तटाकोऽस्त्री' इत्यमरः । चतुर्णां पूरणश्चतुर्थः । 'तस्य पूरणे डट्' इति डटि 'षट् कतिकतिपयचतुरां थुक्' । चतुर्थश्चासावाश्रमश्च तं यत्याश्रममित्यर्थः । भेजे प्राप ॥ ४९ ॥

**अवैदिकं माध्यमिकं निरस्तं निरीक्ष्य तत्पक्षसुपक्षपाती ।**
**तमेव पक्षं प्रतिपादुकोऽसौ न्यरूरुपन्मार्गमिहानुरूपम् ॥ ५० ॥**

एवं सन्यासाश्रमं गृहीत्वाऽसन्मतप्रवर्तनं चकारेत्याह इत उत्तरेण ग्रन्थेन । असौ संकरः वेदसम्बन्धि वैदिकं तन्न भवतीत्यवैदिकं वेदविरुद्धार्थप्रतिपादकमित्यर्थः । माध्यमिकानां सम्बन्धिनं माध्यमिकं बौद्धसम्बन्धिनं पक्षं सिद्धान्तं निरस्तं वैदिकैर्नि-राकृतं निरीक्ष्य तत्पक्षे माध्यमिकपक्षे सुपक्षपातः सुतरां वात्सल्यमस्यास्तीति तादृशः । अत एव तं पक्षमेव बौद्धसिद्धान्तमेव प्रतिपादुकः प्रतिपादनशीलः । 'लषपतपदेति' पदधातोस्ताच्छील्यार्थे उकञ् । सङ्करः इह तत्पक्षसमर्थनविषये अनुरूपं स्वस्य वेदान्ति-त्वप्रसिद्धिमनुपमृद्यैव बौद्धमतसमर्थनानुगुणं मार्गमुपायभूतग्रन्थमित्यर्थः । न्यरूरुपत् निरूपितवान् चकारेत्यर्थः ॥ रूप रूपक्रियायां लुङ् ॥ ५० ॥

असत्पदेऽसन्सदसद्विविक्तं मायाख्यया संवृतिमभ्यधत्त ।
ब्रह्माप्यखण्डं बत शून्यसिद्ध्यै प्रच्छन्नबौद्धोऽयमतः प्रसिद्धः ॥५१॥

एतदेव विशदयति—**असदिति** ॥ सन् सज्जनो न भवतीत्यसन् दुष्ट इत्यर्थ । असतः पदे स्थाने असदिति वक्तव्ये इति भावः । सच्चासच्चसदसती ताभ्यां विविक्तं विलक्षणं अभ्यधत्त प्रोवाच । डुधाञ् धारणपोषणयोर्लङ् । बौद्धमतानुसारेण विश्वमसदितिवक्तव्ये तथानुक्त्वा सदसद्विलक्षणमित्युवाचेति भावः । शून्यवादिनः शून्याख्यं परतत्त्वम् अखण्डं निर्विशेषमाहुः । अयमपि परतत्त्वं ब्रह्म, शून्यस्य सिध्यै शून्यसाधर्म्येण प्रतिपादितस्य ब्रह्मणः शून्यत्वसिद्धय इत्यर्थः । 'खडि भेद' इति धातोः खण्ड्यते भिद्यते व्यावर्त्यते वस्त्वनेनेति खण्डोऽसाधारणधर्मापरनामा विशेषः । न विद्यते खण्डो विशेषो यस्य तदखण्डं निर्विशेषं निर्धर्मकमिति यावत् । अभ्यधत्त प्रोक्तवान् । बतेत्यव्ययं खेदे । अनन्तगुणमपि ब्रह्मायं निर्गुणमुक्तवानिति खेदः । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । अतः प्रच्छन्नश्चासौ बौद्धश्च वेषान्तरापन्नबौद्ध इत्यर्थः । इति प्रसिद्धः सज्जनसभासु ख्यातोऽभवत् ॥ ५१ ॥

यद्ब्रह्मसूत्रोत्करभास्करं च प्रकाशयन्तं सकलं स्वगोभिः ।
अचूचुरद्वेदसमूहवाहं ततो महातस्करमेनमाहुः ॥ ५२ ॥

परापरसकलतत्त्वप्रकाशकत्वादिना भास्करसदृशानि सूत्राणि यतोऽन्यथाव्याख्यानेनान्यथाज्ञानजनकानि चकार । अतो भास्करतस्करसमान इत्यतो महातस्कर इति प्रसिद्धोऽभूदित्याह—**यदिति** ॥ अयं संकरः स्वस्य गावो वाचस्ताभिः सकलं जीवेश्वरस्वरूपादिकं प्रकाशयन्तं प्रकटयन्तं । वहतीति वाहः वेदानां यः समूहस्तस्य वाहस्तं । विचार्यत्वेन वा स्वोक्तार्थे प्रमाणत्वेन वा सकलवेदान् वहन्तमित्यर्थः । ब्रह्मणो वेदस्य सूत्राणि अनन्तवेदार्थनिर्णायकसूत्राणीत्यर्थः । तेषामुत्करः समूहः स एव भास्करस्तञ्च । अचूचुरत् चुचोर 'चुर स्तेये' लुङ् यद्यस्मात् तस्मात् । एनं संकरं जना महातस्करमाहुः 'ब्रूञ् व्यक्तायां वाचि' लट् । भास्करोऽपि स्वरश्मिभिः सकलप्रकाशकः, वेदसमूहा वाहा अश्वा यस्य स तथोक्तः । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः ।

सूर्यरथे निबद्धाश्वानां सकलवेदाभिमानिदेवतात्मकत्वादिति भावः । तथा च भास्कर-मदृशब्रह्मसूत्रतस्करस्यास्य भास्करतस्करस्येव महातस्करत्वं युक्तमिति भावः । (उपमा) ॥ ५२ ॥

**स्वसूत्रजातस्य विरुद्धभाषी तद्भाष्यकारोऽर्हमिति ब्रुवन्यः ।**
**तं तत्क्षणान्नो न दिधक्षति स्म स व्यासरूपो भगवान् क्षमाब्धिः॥५३॥**

एतादृशं संकरं व्यासः कुतो न भस्मीचकारेत्यत आह—**स्वेति** ॥ यः संकरः स्वस्य यानि सूत्राणि तेषां जातस्य समूहस्य 'जातं जात्योधजनिषु' इति हेमचन्द्रः । विरुद्धं जगन्मिथ्यात्वादिकं भाषत इति तादृशः । तथाप्यहं तेषां ब्रह्मसूत्राणां यद्भाष्यं तत्करोतीति तथोक्तः । 'कर्मण्यण्' इत्यण् । इति ब्रुवन् वर्तते । तमेतादृशं संकरं यो व्यास इति रूपं स्वरूपं यस्य सः । भगोऽस्यास्तीति भगवान् षड्गुणपूर्णः श्रीव्यासः। स चासौ क्षणश्च तस्मात् न दिधक्षति स्म न दग्धुमैच्छत् । 'दह भस्मीकरणे' लट् । स व्यासः क्षमाब्धिः क्षमासमुद्रः क्षमाब्धित्वात्स्वयं न भस्मीचकारेति भावः । (काव्यलिङ्गम् ) ॥ ५३ ॥

**निगमसन्मणिदीपगणोऽभवत्तदुरुवागणपङ्कनिगूढभाः ।**
**अविदुषामिति सङ्करताकरः स किल सङ्कर इत्यभिशुश्रुवे ॥ ५४ ॥**

तस्य संकर इति शब्दवाच्यत्वे निमित्तमाह—**निगमेति** ॥ निगमा वेदा एव सन्मणय उत्तमरत्नानि त एव दीपाः प्रदीपाः तेषां गणः समूहः । तस्य संकरस्य उरवः उत्कृष्टा या वाचः व्याख्यानरूपवाचस्तासां गणः समूहः स एव पङ्कः कर्दम-स्तेन निगूढा प्रच्छन्ना भाः कान्तिर्यस्य सोऽभवत् । रत्नप्रदीपवत् भगवत्स्वरूपादिकं सम्यक् प्रकाशयन्नपि निगमः संकरकृतापव्याख्यानेन तिरोहितोऽभवदिति भावः । इति तस्मात् 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । श्रुत्यादेरन्यथाव्याख्या-नादित्यर्थः । विद्वांसो न भवन्तीत्यविद्वांसस्तेषां स्वतो वेदार्थमजानतां नराणामि-त्यर्थः । संकरस्य भावः संकरता तां करोतीति तथोक्तः । संकरतायाः कर इति वा । सर्वभेदाभाववुद्धिजनक इत्यर्थः । स संकर इत्यभिशुश्रुवे किल विद्वत्सभासु प्रसि-

द्वोऽभूत्किल । श्रु श्रवणे लिट् । द्रुतविलम्बितवृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इत्युक्तेः । (रूपकम्) ॥ ५४ ॥

विश्वं मिथ्या विगुरगुणमात्मनां नास्ति भेदो ।
दैत्या इत्थं व्यदधत गिरां दिक्षु भूयः प्रसिद्धिम् ।
आनन्दाद्यैर्गुरुगुणगणैः पूरितो वासुदेवो
मन्दं मन्दं मनसि च सतां हन्त नूनं तिरोऽभूत् ॥ ५५ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीसुमध्वविजये महाकाव्ये आनन्दाङ्के प्रथमः सर्गः ।

वेदादिभ्यः सामान्यतो विष्णुमनन्तगुणं जानतामपि सतां मायिप्रणीतदुर्भाष्यादिरूपवाग्भिस्तत्त्वविषये इदमदो वेति संशयोऽन्यदेवेति विपरीतज्ञानं वाभूदितिभावेनाह— विश्वमिति ॥ दैत्याः संकरादिनाम्ना भुव्युत्पन्ना मणिमदादयो विश्वं प्रपञ्चो मिथ्या, सदसद्विलक्षणम् । अव्ययमेतत् । विगुर्व्याप्तो भगवान् विष्णुः । गुणा अस्य सन्तीति गुणवान् स न भवतीत्यगुणवान् निर्गुण इत्यर्थः । गुणविरुद्धा अगुणा दोषास्तद्वानिति वा । ब्रह्मैव जीवरूपेण सकलदोषभाजनमिति हि मायिमतम् । आत्मनां चेतनानां भेदो नास्ति । इत्थं दिक्षु नानादेशेषु गिरां वाचां भूयो बाहुल्येन प्रसिद्धिं व्यदधत चक्रुः । डुधाञ् धारणपोषणयोर्लङ् । तया प्रसिद्ध्या किमभूदित्यत आह—आनन्दाद्यैरिति । आनन्द आद्यो येषां तैः । गुरवो महान्तो ये गुणास्तेषां गणाः समूहास्तैः । 'गुरुर्महत्यांगिरसे पित्रादौ धर्मदेशिके' इति हेमचन्द्रः । पूरितः पूर्णो वासुदेवः श्रीहरिः सतां सम्यग् ज्ञानयोग्यानां पुरुषाणां मनसि च तिरोऽभून्नूनं तिरोहितोऽभूदेव 'नूनंतर्केऽवधारणे' इत्यमरः । आनन्दतीर्थनामास्मिन्काव्ये प्रतिपाद्यत्वात्सर्गान्त-श्लोके आनन्दपदाङ्कितमिदं काव्यं । मन्दाक्रान्तावृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इत्युक्तेः ॥ ५५ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीमध्वविजयटीकाविवृतौ विश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां प्रथमः सर्गः ।

**विज्ञानभानुमति कालबलेन लीने दुर्भाष्यसन्तमससन्ततिता जनेऽन्धे ।**
**मार्गात्सतां स्खलति खिन्नहृदो मुकुन्दं देवाश्चतुर्मुखमुखाः शरणं प्रजग्मुः ॥१॥**

अस्मिन्काले सज्जनानुकम्पापरवशा ब्रह्मादिदेवास्तदुद्धारार्थं श्रीहरिं शरणं जग्मुरित्याह—

**विज्ञानेति ॥** भानवः किरणा अस्य सन्तीति भानुमान् सूर्यः विज्ञानमेव विशिष्टज्ञानमेव भानुमान् तस्मिन् 'भानू रश्मौ रवौ दिन' इति हेमचन्द्रः । कालस्य कलिकालस्य बलेन सामर्थ्येन लीने तिरोहिते सति । दुष्टानि च तानि भाष्याणि च संकरादिप्रणीतैकविंशतिभाष्याणि तान्येव संतमसान्यन्धकारास्तेषां सन्ततिः समूहस्तस्या इति ततः । अंधे अज्ञे भगवत्स्वरूपादिकमविदुपीत्यर्थः । जने तत्त्वज्ञानयोग्ये जने । सतां सज्जनानां मार्गादध्वनः 'मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि' इति हेमचन्द्रः । सद्भिराचरिताद्धर्ममार्गादित्यर्थः । स्खलति सति स्खलनं गच्छति सति सन्मार्गे सम्यगवर्तमाने सतीति भावः । खिन्नं खेदयुक्तं हृत् मनो येषां ते तथोक्ताः । चतुर्मुखो मुखं प्रधानं येषां ते देवाः । 'मणिर्मुखं प्रधानं चेत्युत्तमस्य वचो भवेत्' इति वचनात् । मुकुन्दं श्रीहरिं शरणं अरणं प्रजग्मुः । गम्लृ गतौ लिट् । अस्मिन् सर्गे प्रायः वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ गः' इत्युक्तेः । (रूपकम्) ॥ १ ॥

**नाथः कलौ त्रियुगहूतिरनुक्षुभूपुर्ब्रह्मागमप्यनवतारमनादिदिक्षुः ।**
**सर्वज्ञमन्यमनवेक्ष्य स कार्यवीर्यं स्मेराननो भुवनजीवनमात्रभाषे ॥ २ ॥**

ब्रह्मादिभिरवतारार्थमर्थितो भगवान् मुख्यप्राणमवतर्तुं सन्दिदेशेति निमित्तकथनपूर्वकमाह—

**नाथ इति ॥** त्रीणि युगान्यवतारार्थत्वेन यस्य स त्रियुगः । 'युगं हस्तचतुष्के स्याद्रथाद्यङ्गे कृतादिक' इति हेमचन्द्रः । स इति हूतिर्नाम यस्य सः 'युगत्रयावतारत्वात्त्रियुगो विष्णुरुच्यते' इति वचनात् । हेतुगर्भं विशेषणमेतत् त्रियुगहूतित्वादिति ।

कलौ कलियुगे उद्भवितुमवतर्तुमिच्छुरुद्बुभूपुः । स न भवतीत्यनुद्बुभूपुः । 'सना शंस भिक्ष उः' इत्युप्रत्ययः । अवतर्तुमनिच्छुरित्यर्थः । नाथः स्वामी भगवान् न विद्यतेऽवतारो यस्य तं भूमौ कदाप्यवताररहितमित्यर्थः । ब्रह्माणं चतुर्मुखं आदेष्टुमाज्ञप्तुमिच्छुः स न भवतीत्यनादिदिक्षुः । भूम्यवतारार्थमादेष्टुमनिच्छन् सन् । कार्यस्य वीर्यं कार्यसाधनसामर्थ्यं तेन सहितं स कार्यवीर्यं सर्वज्ञम् अन्यं विष्णुचतुर्मुखव्यतिरिक्तं अनवेक्ष्यादृष्ट्वा जीवयतीति जीवनः नन्द्यादित्वाल्ल्युः । भुवनस्य जीवनस्तं मुख्यप्राणं । स्मेरं मन्दहासशीलम् आननं मुखं यस्य तथा सन् । 'स्मिङ् ईषद्धसन' इति धातोर्नमिकम्पि' इत्यादिना ताच्छील्ये रः । आबभाषे आज्ञप्तवान् भाष व्यक्तायां वाचि लिट् । ननु बुद्धावतारस्य कलियुगे जातत्वात्कथं त्रियुगहूतित्वमिति चेत्सत्यम् द्वापरकल्योः संधिकालेऽवतीर्णत्वात्तस्य । न चायमपि संधिकाल इत्यवतारोपपत्तिरिति वाच्यं, दैत्यविमोहकावतारस्य संधिकालेऽवतीर्णत्वेऽपि तत्त्वबोधकावताराभावाभिप्रायेण त्रियुगहूतित्वं भगवत इत्यभिप्रेतत्वेनानवतारे त्रियुगहूतित्वस्य हेतुत्वोपपत्तेरिति ॥२॥

**वेदान्तमार्गपरिमार्गणदीनदूना दैवीः प्रजा विशरणाः करुणापदं नः ।**
**आनन्दयेः सुमुख भूषितभूमिभागो रूपान्तरेण मम सद्गुणनिर्णयेन ॥ ३ ॥**

निरूपणप्रकारमेव दर्शयति—

**वेदेति** ॥ शोभनं मुखं यस्य तत्सम्बुद्धिः । हे सुमुख! वायो त्वं । मम, सन्तो निर्दोषा ये गुणास्तेषां निर्णयो यस्मात्तेन । अन्यद्रूपं रूपान्तरं तेन, मध्वनाम्ना भूषितोऽलङ्कृतः भूमिभागो भूप्रदेशो येन सः । वेदान्तानामुपनिषदां मार्गः उपनिषदुपलक्षितसकलवेदार्थनिर्णयात्मकब्रह्मसूत्रादिरूपमार्ग इत्यर्थः । तस्य परिमार्गणं विचारस्तेन दीना रहिता 'दीङ् क्षय' इति धातोः तादृशाश्चताः । अत एव दूना दुःखिताश्च ताः 'धातूनामनेकार्थत्वात्' । दु गतावित्यस्माद्धातोः कर्मणि क्तप्रत्यये 'ल्वादिभ्य' इति निष्ठातस्य नत्वे दीर्घः । वेदार्थनिर्णायकब्रह्मसूत्रेषु सत्स्वपि तद्व्याख्यानरूपसद्ग्राप्याभावेन तैर्वेदार्थविचाराशक्त्या तत्त्वज्ञानाभावाद्दुःखयुक्ता इति भावः । विगतं शरणमसद्व्यतिरिक्ताश्रयः रक्षको वा यासां ता विशरणाः । 'शरणं रक्षणे गेहे वधरक्षक्रयोरपि' इति हेमचन्द्रः । अत एव नोऽस्माकं करुणापदं कृपाया आस्पदं । देवस्य

क्रीडादिगुणविशिष्टस्य श्रीहरेः संबन्धिन्यो दैव्यस्ताः स्वरूपतो हरिभक्तत्वेन-मोक्षयोग्या इत्यर्थः । प्रजाः आनन्दयेः सुखय । नदि हर्षेण्यंत लिङ् । मध्वाग्व्यावनास्य भगवद्गुणनिर्णायकत्वञ्च—'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः । निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसाक्रन्त सूरयः । यदीमनु प्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा मथायति' इति श्रुतिसिद्धम् ॥ तदर्थश्च 'योषणः योषित् आदराद्बहुवचनम् । वृषभस्य समर्थस्यास्य वायोस्तृतीयं रूपमिति शेषः । दोहसे ज्ञानामृतदोहाय । जनयन्त अजनयत् । दशप्रमतिं यतित्वे पूर्णप्रज्ञनामकं । ईशानासः समर्थाः सूरयो ज्ञानिनः देवमुनिपूर्वकाः बुध्नात् बुध्यतीति बुध्नो ज्ञानी तस्मात् । यदीं यस्मादेव महिषस्य महितषड्गुणस्य विष्णोः रमणीयत्वाद्वर्पसः गुणान् । शवसा सुखेन । निः नितरां । आक्रन्त व्यज्ञासिषुः । 'क्रमु पादविक्षेप' इति धातुः । गत्यर्थकाश्च ज्ञानार्थकाः । यदीं य एव प्रदिवः प्रकृष्टक्रीडादिगुणः मध्वः मध्वनामा आनन्दतीर्थ इत्यर्थः 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् । मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनु'रिति वचनात् । एवञ्च मध्वनामा आनन्दतीर्थाख्यो मातरिश्वा वायुः गुहासन्तं मायिनां निर्गुणोक्तिभिर्गृहितं सन्तं आ धवे आ समन्ताद्धवत्वेऽपि विष्णोर्निरुपचरितस्वामित्वे । निमित्ते चेयं सप्तमी । तत्सिद्ध्यर्थं मथायति मथ्नाति वेदादिकमालोडयति तत्त्वज्ञानामृतसिद्ध्यर्थमिति भावः ॥ ३ ॥

**आदेशमौलिमणिमुज्ज्वलवर्णमेनं बद्धाञ्जलिर्मरुदनर्घ्यमधत्त मूर्ध्ना ।**
**हारावलीमिव हृदा विबुधेन्द्रयाच्ञां बिभ्रन्निजाननुजिघृक्षुरवार्तितार्पेन् ॥ ४ ॥**

भगवदाज्ञां सबहुमानमङ्गीकृत्य सदनुजिघृक्षयावतर्तुमैच्छदित्याह—

**आदेशेति** ॥ मरुत् मुख्यवायुः उज्ज्वलाः शोभमाना वर्णा अक्षराणि यस्मिन् तं । न विद्यतेऽर्घो मूल्यं यस्य तं । अत्युत्तममित्यर्थः । 'मूल्ये पूजाविधावर्घ' इत्यमरः । एनं प्राक् प्रदर्शितरूपं आदेश एव भगवदाज्ञैव मौलिमणिः किरीटरत्नं तं । चूडा किरीटं केशाश्च संहृता (संयताः केशा इति) मौल्यस्त्रयः' इत्यमरः । आदेशाख्य-किरीटश्रेष्ठमित्यर्थः । 'मणिर्मुखं प्रधानञ्चे'त्यभिधानात् । बद्धोऽञ्जलिर्येन तथा सन् ।

मूर्ध्ना अधत्त दधार । डुधाञ् धारणपोषणयोर्लङ् । शिरसि बद्धाञ्जलिर्भूत्वा भगवदाज्ञां सबहुमानं तथाऽस्त्वित्यङ्गीचकारेति भावः । यथा कश्चित् स्वस्वामिना ध्रियमाणं रत्नखचितत्वेन शोभनवर्णं अनर्घ्यमकुटश्रेष्ठं बद्धाञ्जलिः सन् गृह्णीयात्तद्वदिति श्लेषाभिप्रायः ॥ हृदा मनसा विबुधेन्द्रयाच्ञां सुरेन्द्रप्रार्थनां भवता भुव्यवतीर्य सत्स्वनुग्रहः कार्य इत्यादिरूपां हारावलीमिव हाराणां पङ्क्तिमिव बिभ्रत् दधानः । 'नाभ्यस्ताच्छतु' रिति नुमभावः । निजान् स्वभक्तजनान् । 'निजमात्मीयनित्ययोः' इति वैजयन्ती । अनुग्रहीतुमिच्छुः अनुजिघृक्षुः । वायुः अवातितीर्षत् । अवतर्तुमैच्छत् । 'तॄ प्लवन तरणयोः सन्नन्ताल्लङ् । (उपमा) ॥ ४ ॥

**कालः स एव समवर्तत नाम यावच्चिन्ताकुलं विविधसाधुकुलं बभूव ।**
**वेदान्तसन्ततकृतान्तरसं न विद्मः श्रेयो लभेमहि कथं नु वयं बतेति ॥ ५ ॥**

भगवदाज्ञां गृहीत्वावतर्तुमिच्छन् मुख्यप्राणो रजतपीठाधीशश्रीमदनन्तासनपरमभक्तस्य रजतपीठपुरे पुराणवक्तुर्मध्यगेहाख्यस्य विप्रशिखामणेर्भार्यायामवतीर्ण इति वक्तुं तत्रत्यजनानां विशेषाकारेण तत्त्वज्ञानाभावनिमित्तकाकुलीभावमुपोद्घातसङ्गत्या दर्शयति—

**काल इति** ॥ यावदेव यदैव स सज्जनकृपालुभिर्ब्रह्मरुद्रादिभिर्भगवत्प्रार्थनाकालः । समवर्तत नाम प्रवृत्तः । 'वृतु वर्तने' लङ् । तदैव विविधा वर्णाश्रमभेदेन नानाविधा ये साधवः सज्जनास्तेषां कुलं समूहः । वेदानामन्तो निर्णयो यस्मात्तद्वेदान्तं ब्रह्मसूत्रसन्दर्भात्मकं ब्रह्ममीमांसाशास्त्रं तस्य सम्यक् तनोति वर्तत इति संततः । 'तनु विस्तारे' इत्यस्माद्धातोः कर्तरि क्तप्रत्यये 'अनुदात्तोपदेशवनतितनोत्यादिनां' इत्यादिनानुनासिकलोपः । अनादितः सत्संप्रदायप्राप्त इत्यर्थः । तादृशो यः कृतान्तरसः सिद्धान्तरहस्यमिति यावत् तं । 'कृतान्तोयमसिद्धान्तदैवाकुशलकर्मसु' इत्यमरः । वयं न विद्मः न विजानीमः । 'विद ज्ञाने' लट् । श्रेयो मोक्षलक्षणं पुरुषार्थं कथं नु कथमेव लभेमहि प्राप्स्यामः । 'डु लभष्' प्राप्तौ लिट् । बत खेदे । इति चिंताकुलं चिन्तासम्भ्रान्तं बभूव ॥ ५ ॥

**तत्प्रीतये रजतपीठपुराधिवासी देवो विवेश पुरुषं शुभसूचनाय ।**
**प्राप्ते महाय महिताय महाजनौघे कोलाहलेन सकुतूहलिनि प्रवृत्ते ॥ ६ ॥**

तदानीं च तच्चिन्तापनोदेन तत्प्रीत्यर्थं तद्ग्रामीणजनानां कुलदेवः श्रीमदनन्तासनो विष्णुरस्मिन् क्षेत्रे सन्मतं प्रवर्तयितुं भाविनं मुख्यप्राणावतारं सूचयितुं कश्चित् पुरुषमाविष्टवानित्याह—

**तदिति** ॥ रजतस्य पीठं तच्च तत्पुरञ्च रजतपीठाख्यपुरमित्यर्थः । तस्मिन्नधिवासः निवासोऽस्यास्तीति तादृशो देवः अनन्तासनः तेषां । चिन्ताकुलजनानां प्रीतिस्तस्यै । तादर्थ्ये चतुर्थी । शुभस्य मुख्यप्राणावतारात्मकस्य सूचनं तस्मै पुरुषं कञ्चिदप्रौढं । महिताय सर्वैः पूजिताय बहुमानितायेत्यर्थः । महाय उत्सवाय 'मह उद्धव उत्सवः' इत्यमरः । कोलाहलेन संभ्रमेण प्राप्ते समागते महति जनौघे जनसमूहे कुतूहलमस्यास्तीति कुतूहली तेन सहितं सकुतूहलि तस्मिन् रजतपीठपुरे प्रवृत्ते सति वर्तमाने सति । विवेश 'विश प्रवेशने' लिट् । सुकुतूहलिनीति पाठे शोभनकुतूहलवति महाजनौघे इत्यस्य विशेषणम् ॥ ६ ॥

**आविष्टवानकुशलं पुरुषं प्रकृत्या प्रत्याययन्निजजनान्नितरामनृत्यत् ।**
**उत्तुङ्गकेतुशिखरे स कृताङ्गहारो रङ्गान्तरे नट इवाखिलविस्मयात्मा ॥ ७ ॥**

पुरुषं प्रविश्य किं चकारेत्याह—

**आविष्टवानिति** ॥ प्रकृत्या स्वभावेन 'प्रकृत्यादिभ्य उपसंख्यानं' इति तृतीया । अकुशलमचतुरं पुरुषं आविष्टवान् । अखिलानां समस्तजनानां विस्मय आश्चर्यं येन तादृश आत्मास्वरूपं यस्य स देवः इह रजतपीठपुरे निजान् स्वकीयान् जनान् स्वभक्तानित्यर्थः । प्रत्याययतीति प्रत्याययन् । स्वसामर्थ्यप्रकटनेन स्ववक्ष्यमाणवचसि विश्वासमुपजनयन् सन्, उत्तुङ्गस्योन्नतस्य केतोर्ध्वजस्य शिखरेऽग्रे नितरामत्यन्तं कृतोऽङ्गहारोऽवयवविक्षेपो येन तथा सन् । 'अङ्गहारोऽङ्गविक्षेप' इति हलः । रङ्गस्य नर्तनस्थानस्यान्तरे मध्ये नट इव नर्तक इव अनृत्यत् नर्तनं चकार । 'नृती गात्रविक्षेपे' लङ् । (उपमा) ॥ ७ ॥

**आभाष्य सोऽत्र जनतां शपथानुविद्धमुच्चैरिदं वचनमुद्धृतदोर्बभाषे ।**
**उत्पत्स्यते जगति विश्वजनीनवृत्तिर्विश्वज्ञ एव भगवानचिरादिहेति ॥ ८ ॥**

नर्तनं कुर्वन् किमवददित्यत आह—

**आभाष्येति** ॥ सः पुरुषे आविष्टवान् देवः । अत्र रूप्यपीठपुरे जनानां समूहो जनता तां 'ग्रामजनबन्धु' इत्यादिना समूहार्थे तल् । आभाष्य श्रूयतामिति संबोध्य उद्धृतौ दोषौ हस्तौ येन स उद्धृतदोः सन् शपथेन त्रिवारं कथनादिरूपशपथेन अनुविद्धं युक्तं यथाभवति तथा । उच्चैः इह जगति विश्वजनीनवृत्तिः 'तस्मैहित'मित्यनुवर्तमाने 'आत्मन्विश्वजने'त्यादिना तस्मै हितमित्यर्थे खप्रत्यये खस्येनादेशे 'यस्येति चे'त्यकारलोपः । एवं च विश्वः समस्तश्चासौ जनश्च विश्वजनः । तस्मै हिता विश्वजनीना वृत्तिर्वर्तनं यस्य सः । सर्वलोकोपकारकवृत्तिरिति भावः । विश्वज्ञः सर्वज्ञः । भगोऽस्यास्तीति भगवान् षड्गुणैश्वर्यसम्पन्नः एवंभूतः कश्चन अचिरादेवोत्पत्स्यते जनिष्यते पद निष्पत्तौ लृट् । इतीदं वचनं आबभाषे भाषृ व्यक्तायां वाचि लिट् । अत्र विश्वजनीनवृत्तिरित्यादिविशेषणत्रयेण मुख्यप्राण इति सूच्यते ॥ ८ ॥

**सद्वीपवारिनिधिसप्तकभूतधात्र्या मध्येऽपि कर्मभुवि भारतनामखण्डे ।**
**काले कलौ सुविमलान्वयलब्धजन्मा सन्मध्यगेहकुलमौलिमणिर्द्विजोऽभूत् ॥९॥**

अथेदानीं वायोरवतारादिकं वक्तुं तत्पित्रादिस्वरूपमाह—

**सद्वीपेत्यादिना** ॥ कलौ कलियुगे काले । वारीणि निधीयन्ते एष्विति वारिनिधयः समुद्राः । द्वीपाश्च ते च, तेषां सप्तकं तेन सहिता या भूतधात्री भूमिस्तस्याः । द्वन्द्वान्ते श्रूयमाणस्य सप्तकपदस्य प्रत्येकं सम्बन्धः । द्वीपसप्तकेन वारिनिधिसप्तकेन च सहितभूमेरित्यर्थः । मध्ये मध्यप्रदेशे जम्बुद्वीप इति यावत् । अपि तत्रापि कर्मणः भूस्तस्यां । यत्र कृतानि शुभाशुभकर्माणि स्वर्गादिसाधनानि भवन्ति सा कर्मभूमिरित्युच्यते । भारतमिति नाम यस्य स चासौ खण्डः भुव एकदेशस्तस्मिन् । सुष्ठु विमलः सुविमलः । स चासावन्वयो वंशस्तस्मिन् । लब्धं जन्म उत्पत्तिर्यस्य तादृशः । सत् विहिताचरणेन समीचीनं यन्मध्यगेहाख्यं कुलं तस्मिन् ।

मौलिमणिरिव शिरोरत्नमिव मध्यगेहाख्यकुलवत्सु द्विजेषु श्रेष्ठ इत्यर्थः । कश्चिद्द्विजोऽभूत् । (उपमा) ॥ ९ ॥

**वेदाद्रिसद्रजतपीठपुरेश्वराभ्यां ग्रामो विभूषिततरः शिवरूप्यनाम्ना ।**
**हेमाद्रिराजविभुराजदिलावृताभस्तस्याभवद्गुरुगुणः खलु मूलभूमिः ॥ १० ॥**

तस्य जन्मभूमिमाह—

**वेदेति** ॥ वेदाख्योऽद्रिः वेदाद्रिः सन् यो रजतपीठपुरेश्वरः श्रीमदनन्तेश्वरः ताभ्यामतिशयेन विभूषितः अतिशयेनालङ्कृतः । गुरवो गुणा यस्य वेदशास्त्राभिज्ञसज्जनाधिष्ठितत्वादिमहागुणयुक्त इत्यर्थः । 'गुरुर्महत्याङ्गिरस' इति हेमचन्द्रः । शिवरूप्यमिति नाम यस्य शिवबेळ्ळीत्यपभ्रष्टनामेत्यर्थः । अद्रीणां राजा अद्रिराजः हेम्नो हिरण्यस्याद्रिराजः सुवर्णात्मकमेरुपर्वतः । विभुः शिवस्ताभ्यां राजन् शोभमानो य इळावृतः तन्नामकखण्डस्तद्वदाभा कान्तिर्यस्य सः । 'विभुः प्रभौ व्यापके शङ्करे नित्य' इति हेमचन्द्रः । इळावृतखण्डस्य मेरुं परितः स्थितत्वाच्छिवस्य च तत्खण्डस्थत्वात्ताभ्यामिळावृतखण्डो यथा शोभते तद्वद्वेदाद्रिरजतपीठपुरेश्वराभ्यां शोभमान इत्यर्थः । तस्य पूर्वोक्तद्विजस्य मूलभूता भूमिर्मूलभूमिर्जन्मभूमिरित्यर्थः । अभूत् । खलु प्रसिद्धौ । (उपमा) ॥ १० ॥

**रामाधिवेशितहरिस्वसृमौलिमालाराजद्विमानगिरिशोभितमध्युवास ।**
**क्षेत्रं स पाजकपदं त्रिकुलैककेतुः कं यद्दधाति सततं खलु विश्वपाजात् ॥११॥**

एवं तस्य जन्मभूमिमुक्त्वाथनिवासस्थानमाह—

**रामेति** ॥ त्रीणि च तानि कुलानि च 'वडिप्पे, पार्पदाने, कवेकोडे' इत्यपभ्रष्टनामानि त्रिकुलानि तेषामेककेतुरिव मुख्यध्वज इव अतिश्रेष्ठ इत्यर्थः । स द्विजः, रामेण श्रीपरशुरामेण अधिवेशिता प्रतिष्ठापिता या हरिस्वसा कृष्णभगिनी दुर्गा सैव मौलिमाला शिरोमाला तया राजन् शोभमानो यो विमानगिरिः विमानाकारो गिरिस्तेन, शोभितं यत् क्षेत्रं । विश्वं पातीति विश्वपाः स चासावजश्च उत्पत्तिरहितो

हरिः तस्मात् सर्वजगद्रक्षकपरशुरामादित्यर्थः । कम् उदकं सततं सदा दधाति धृ धारणे लट् । पाजकमिति पदं नाम यस्य तत्क्षेत्रमध्युवास वसनिवासे लिट् । 'अधिशीङ्स्थासा'मिति कर्मसंज्ञा । परशुरामेण विमानगिरिं परितश्चतुर्दिक्षु परश्वध-धनुर्बाणगदाभिः शिलाभुवं विदार्य निर्मिततीर्थवत्त्वात्पाजकाख्यं क्षेत्रमध्युवासेति भावः ॥ ११ ॥

**अर्थं कमप्यनवमं पुरुषार्थहेतुं पुंसां प्रदातुमुचितामुचितस्वरूपाम् ।**
**कन्यां सुवर्णललितामिव वेदविद्यां जग्राह विप्रवृषभप्रतिपादितां सः ॥ १२॥**

**अर्थमिति** ॥ स द्विजः पुरुषार्थानां ज्ञानैश्वर्यादिपुरुषार्थानां हेतुः निमित्तम् अवमो नीचो न भवतीत्यनवमस्तम् उत्तममिति यावत् । कमप्यर्थं मध्वाख्यं वस्त्वित्यर्थः । सतां सत्पुरुषाणां प्रदातुं प्रसवेन दातुं, उचितां योग्यां उचितं स्वरूपं यस्यास्तां कुलवयोरूपशीलैः आत्मन उद्वोढुमुचितामित्यर्थः । सुवर्णेन हेम्ना तन्मयाभरणेनेति यावत् । ललितां शोभिताम् । विप्रेषु वृषभः श्रेष्ठस्तेन 'वृषभः स्यादादिजिने वृषपुङ्गवयोरपि' इत्यभिधानात् । ऋषभ इति पाठे 'ऋत्यक' इति प्रकृतिभावः । प्रतिपादितां दत्तां कन्यां वेदात्मिका विद्या तामिव जग्राह उपयेमे । ग्रह उपादाने लिट् । वेदविद्याऽपि पुंसां पुरुषार्थहेतुं अनवमं कमप्यर्थं परब्रह्माख्यं वस्तु प्रदातुं प्रतिपादयितुं उचिता, ब्राह्मणेनाध्येतुमुचितस्वरूपा च शोभमानाक्षरललिता च, विप्रर्षभेण उपाध्यायेन दत्ता च । वेदविद्यामध्यगीष्टानन्तरमुपयेमे चेति भावः । (उपमा) ॥१२॥

**रेमेऽच्छयोपनिषदेव महाविवेको भक्त्येव शुद्धकरणः परमाश्रिताऽलम् ।**
**मिथ्याभिमानरहितः परयेव मुक्त्या स्वानन्दसन्ततिकृता स तया द्विजेन्द्रः ॥**

**रेमे इति** ॥ स द्विजेन्द्रः तया भार्यया महान् विवेकः मोक्षादिर्नित्यः स्वर्गादिरनित्य इत्यादिरूपो यस्य तादृशः, कश्चित् अच्छया अपौरुषेयत्वादप्रामाण्यकारणदोषरहितया उपनिषदेव । अयं द्विजश्च महाविवेकः । भार्यापि रूपचरित्रैरच्छा। शुद्धं करणमन्तःकरणं यस्य तादृशः । कश्चित्परममुत्तमं हरिं विषयतया श्रयत इति परमाश्रित् तया भक्त्येव, अयं द्विजः शुद्धान्तःकरणः साच श्रीहरिमाश्रिता । मिथ्याभूतोऽभि-

मानोऽस्वकीये क्षेत्रापत्यकलत्रादौ स्वकीयत्वादिरूपः तेन रहितः तत्त्वज्ञानीति यावत् मुक्त इति वा। स्वरूपभूत आनन्दः स्वानन्दः निर्दुःखपरमानन्द इत्यर्थः। तस्य सन्ततिं परम्परां करोतीति तथा 'सन्ततिस्तु तनये दुहितर्यपि। परम्पराभवे पङ्क्तौ गोत्रविस्तारयोरपि' इति हेमचन्द्रः। मुक्तयेव अयं द्विजः मिथ्याभिमानरहितः स्वानन्दसन्ततिकृत् शोभनानन्दाख्यसन्ततिकृत्। शोभनानन्दाख्या संततिरपत्यं मध्वः तां करोतीति तथोक्ता। मध्वाख्यमन्तर्निकृदित्यर्थः। रेमे रमु क्रीडायां लिट्। (मालोपमा) ॥ १३ ॥

**तस्य प्रभोश्चरणयोः कुलदेवताया भक्तिं बबन्ध निजधर्मरतः स धीरः।**
**विज्ञातभारतपुराणमहारहस्यं यं भट्ट इत्यभिवदन्ति जना विनीतम् ॥ १४ ॥**

तस्येति॥ जना महाजना भारतञ्च पुराणानि च तेषां महारहस्यमतिगूढार्थं विज्ञातं सम्यग्ज्ञातं येन तं। अत एव विनीतं निर्जितेन्द्रियं 'विनीतस्तु निभृते निर्जितेन्द्रिय' इति हेमचन्द्रः। यं भट्ट इति अभिवदन्ति व्यवहरन्ति। वद व्यक्तायां वाचि लट्। निजे स्ववर्णाश्रमसंबन्धिनि धर्मे रतः आसक्तः। धीरः स्थिरबुद्धिः स द्विजः कुलदेवतायास्तस्य प्रभोः रजतपीठपुरादिवासिनो भगवतोऽनन्तासनस्य चरणयोः पादयोर्भक्तिं बबन्ध चकार। बन्धिर् बन्धने लिट् ॥ १४ ॥

**गोविन्दसुन्दरकथासुधया स नृणामानन्दयन्न किल केवलमिन्द्रियाणि।**
**किन्तु प्रभो रजतपीठपुरे पदाब्जं श्रीवल्लभस्य भजतामपि दैवतानाम् ॥१५॥**

गोविन्देति॥ स भट्टः गोविन्दस्य श्रीहरेः सुंदरकथैव (सुंदरीकथा) सुधा अमृतं तया। केवलं नृणां मनुष्याणां इन्द्रियाणि श्रोत्रादीनि नानन्दयत् नातोषयत् 'नदि हर्षे' लङ्। किन्तु रजतपीठपुरे श्रीमदनन्तासनं परितः क्रोशमानेन रजतात्मकं पीठं भूम्यन्तर्गतमस्तीति पुराणप्रसिद्धेस्तत्पीठोपरिस्थग्रामो रजतपीठपुरमित्युच्यते। प्रभोः श्रीवल्लभस्य श्रीपतेः पदाब्जं भजतां दैवतानां। देवानां 'वृंदारका दैवतानि' इत्यमरः। इन्द्रियाण्यप्यानन्दयत्किल। लिङ्गाकारस्यापि तस्य श्रीहरित्वन्तु-

'स्वदर्शनोत्स्वतिने निशीथे प्राताय भोगीन्द्रगतं हरिः प्रभुः । स्वं दर्शयित्वा खलु कुञ्जमाधवद्विजाय तद्वत्प्रतिमां व्यधापयत्' ॥ इति श्लोकसिद्धम् । (उपमा) ॥१५॥

**इत्थं हरेर्गुणकथासुधया सुतृप्तो नैर्गुण्यवादिषु जनेष्वपि साग्रहेषु ।**
**तत्त्वे स कालचलधीरतिसंशयालुर्धीमान् धिया श्रवणशोधितया प्रदध्यौ ॥१६॥**

**इत्थमिति** ॥ स भट्टः इत्थं हरेर्गुणानां या कथा सैव सुधा तया सुतृप्तः अन्यत्रालं बुद्धिमान् सन् निर्गता गुणा यस्मात्तस्य भावो नैर्गुण्यं तद्वक्तुं शीलमेषामस्तीति तेषु जनेषु मायिजनेष्वपि । आग्रहेणाभियोगेन सहिताः साग्रहास्तेषु सत्सु । सगुणत्वप्रमाणान्यनादृत्य निर्गुण एव हरिरित्याग्रहयुक्तेषु सत्स्वित्यर्थः । तत्त्वे परापरतत्त्वविषये । कालात्कालबलात् चला चञ्चला धीर्बुद्धिर्यस्य तादृशः सन् । न स्वत इति भावः । तस्मादतिसंशयालुः अत्यन्तसंशयशीलः । माय्युक्तप्रकारेण हरिर्निर्गुणो वा 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इत्यादिप्रमाणानुसारेण सगुणो वेति संशयशीलः सन्नित्यर्थः । धीमान् विवेकी स्वयमेव श्रवणेन भारतादिसच्छास्त्रश्रवणेन शोधितया निर्मलीकृतया धिया बुद्ध्या प्रदध्यौ । किमत्र मयानुष्ठेयमिति चिन्तितवान् । ध्यै चिन्तायां लिट् ॥ १६ ॥

**त्राता य एव नरकात्स हि पुत्रनामा मुख्यावनं न सुलभं पुरुषादपूर्णात् ।**
**तस्मात्समस्तविदपत्यमवद्यहीनं विद्याकराकृति लभेमहि कैरुपायैः ॥ १७ ॥**

**त्रातेति** ॥ य एव नरकाद्दुर्गतेस्त्राता रक्षकः । स हि स एव पुन्नाम्नो नरकात्त्रायत इति पुत्रः । पुत्र इति नाम यस्य सः । 'पुन्नाम्नो नरकात्त्राता पुत्र इत्यभिधीयत' इति वचनात् अपूर्णात्सार्वज्ञ्यादिगुणैरपूर्णात् पुरुषान्मुख्यावनं सम्यग्रक्षणं सुष्ठु लभ्यत इति सुलभं न भवति । अत्रावनं नाम मोक्षसाधनसम्यग्ज्ञानदानमेव । तच्च अल्पपुरुषान्नसुलभमिति भावः । तस्मादल्पपुरुषान्मुख्यावनस्यासुलभत्वात् । समस्तं वेत्तीति समस्तवित् । अवद्येन अज्ञानविप्रलम्भादिदोषेण रहितमनवद्यं, विद्यानामाकरः समूहो तादृशी आकृतिः स्वरूपं यस्य तादृशं यस्यां 'आकरो निकरे खना'विति वैजयन्ती । विद्यानामाकरभूता उत्पत्तिस्थानभूता आकृतिः स्वरूपं यस्य तदिति वा । अपत्यं पुत्रं

'तनयश्च नन्दन इति प्राज्ञैरपत्यं स्मृतं' इति हलः । कैरुपायैः साधनैः लभेमहि डुलभष् प्राप्तौ लिङ् ॥ १७ ॥

**पूर्वेऽपि कर्दमपराशरपाण्डुमुख्या यत्सेवया गुणगणाढ्यमपत्यमापुः ।**
**तं पूर्णसद्गुणतनुं करुणामृताब्धि नारायणं कुलपतिं शरणं व्रजेम ॥ १८ ॥**

**पूर्वेऽपीति** ॥ पूर्वे पुरातनाः कर्दमः कर्दमाख्यः प्रजापतिः । पराशरः पराशराख्य मुनिः । पाण्डुः पाण्डुभूपः । ते मुख्या येषां ते । यस्य श्रीहरेः सेवया परिचर्यया गुणानां गणैः समूहैराढ्यं सम्पन्नम् अपत्यं सुतं कपिलव्यासधर्मजभीमार्जुनादि-पुत्रानित्यर्थः । आपुः प्रापुः । पूर्णाः प्रत्येकं परिपूर्णाः सन्तो निर्दोषा ये गुणा आनन्दादयस्त एव तनुः शरीरं यस्य तं । करुणैव दयैवामृतं तेनाब्धिरिवाब्धिस्तं कुलपतिं असत्कुलस्वामिनं तं कर्दमादीनामपत्यप्रदातारं नारायणं शरणं व्रजेम । व्रज गतौ लिङ् । (उपमा) ॥ १८ ॥

**इत्थं विचिन्त्य स विचिन्त्यमनन्यबन्धुः प्रेष्ठप्रदं रजतपीठपुराधिवासम् ।**
**भक्त्या भवाब्धिभयभङ्गदया शुभात्मा भेजे भुजङ्गशयनं द्विषडब्दकालम् ॥१९॥**

**इत्थमिति** ॥ अन्यश्चासौ बन्धुश्च नविद्यतेऽन्यबन्धुर्यस्य सः । शुभः निर्मलः आत्मा मनो यस्य स द्विजः । विचिन्त्य विचार्य । अतिशयेन प्रियं प्रेष्ठं तत् प्रददातीति तं । यस्य यस्य यद्यत्प्रेष्ठं तस्मै तस्मै तत्तत्प्रदमित्यर्थः । रजतपीठपुरमधिवास आवासस्थानं यस्य तं । भुजङ्गः शेषः शयनं शय्या यस्य तं । 'पर्यङ्कः शयनं शय्या' इति हलः । भवः संसार एवाब्धिस्तस्माद्भयं तस्य भङ्गो नाशस्तं ददातीति तया भक्त्या द्वौ च तौ षट् च द्विषट् द्वादश इत्यर्थः । द्विषट् अब्दाः संवत्सरा यस्य स चासौ कालश्च तं । निर्व्यवधानं द्वादशाब्दकालसमाप्तिपर्यन्तमित्यर्थः । 'कालाध्व-नोरत्यन्तसंयोगे' इति द्वितीया । भेजे सिषेवे । भज सेवायां लिट् ॥ १९ ॥

**पत्न्या समं भगवतः स भजन् पदाब्जं भोगान् लघूनपि पुनर्लघयाञ्चकार ।**
**दान्तं स्वयं च हृदयं दमयाञ्चकार स्वच्छं च देहमधिकं विमलीचकार ॥२०॥**

पत्न्येति ॥ पत्न्या भार्यया रामं सार्कं भगवतः अनन्तासनस्य पदाब्जं भजन् सन् द्विजेन्द्रः लवून् स्वतोऽल्पानपि भोगान् स्रक्चन्दनादीन् पुनः भगवद्भजनोपक्रमानन्तरं लघयाञ्चकार लघूचकार । लघि भाषायां आमन्ताल्लिट् । स्वयञ्च स्वत एव अप्रयत्नेनेति भावः । दान्तं निगृहीतेन्द्रियं वशीकृतचक्षुरादीन्द्रियकमित्यर्थः । हृदयं मनः दमयाञ्चकार दान्तमकरोत् । स्वच्छं निर्मलञ्च शौचाचमनप्राणायामादिभिर्बाह्याभ्यन्तरशुद्धियुक्तमित्यर्थः । देहं अधिकं यथा भवति तथा विमलीचकार । पञ्चगव्यप्राशनादिना पुनर्निर्मलमकरोत् ॥ २० ॥

**तीव्रैः पयोव्रतमुखैर्विविधैर्व्रताग्र्यैर्जायापती गुणगणार्णवपुत्रकामौ ।**
**सम्पूर्णपूरुषमतोषयतां नितान्तं देवेरिताविव पुरादितिकश्यपौ तौ ॥ २१ ॥**

तीव्रैरिति ॥ गुणानां ज्ञानादिगुणानां गणास्तैरर्णव इवार्णवस्तादृशो यः पुत्रस्तस्मिन् काम इच्छा ययोस्तौ । देवेनान्तर्यामिणा हरिणेरितौ प्रेरितौ जायापती भार्याभर्तारौ तीव्रैः दुष्करैः पयोव्रतं मुखं मुख्यं येषां तैः । 'मुखं तु वदने मुख्य' इति वैजयन्ती । क्षीराहारमात्रपुरःसरैरित्यर्थः । विविधानि यानि व्रताग्र्याणि व्रतश्रेष्ठानि तैः । संपूर्णः अनन्तगुणपूर्णो यः पुरुषः श्रीनारायणास्तं नितान्तं अत्यन्तं पुरा देवेन चतुर्मुखेनेरितौ वामनावतारार्थं तपः कार्यमित्युक्तौ तावदितिकश्यपाविव अतोषयतां तुष तुष्टौ लङ् । 'फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः । अर्चयेदरविन्दाक्षं भक्त्या परमयान्वितः' इत्यादिभागवतोक्तप्रकारकपयोव्रतपूर्वकव्रतैरदितिकश्यपौ वामनप्रादुर्भावार्थं यथा श्रीहरिमतोषयतां तद्वच्छ्रीमन्मध्वावतारार्थमिमावपि दम्पती पयोव्रतपूर्वकव्रतैः श्रीमदनन्तासनमतोषयतामिति भावः ॥ २१ ॥

**नाथस्य भूरिकरुणासुधयाभिषिक्तौ श्रीश्रीधरप्रततिशारशरीरयष्टी ।**
**भूरिव्रतप्रभवदिव्यसुकान्तिमन्तौ तौ देहशुद्धिमतिमात्रमथालभेताम् ॥ २२ ॥**

नाथस्येति ॥ नाथस्य स्वामिनः दम्पतिभ्यां समाराधितस्य हरेः भूरिर्बहुला या करुणा दया सैव सुधा तया अभिषिक्तौ अभिवृष्टौ अत्यन्तं दयाविषयाविति भावः । श्रीश्च श्रीधरश्च तयोः प्रततिर्व्याप्तिः विशेषसन्निधानमित्यर्थः । तया शारे मिश्रे शरीरे

यष्टी इव शरीरयष्टी शरीरदण्डौ ययोस्तौ । यद्वा श्रीश्रीधरप्रतत्या शारे शबले शरीरयष्टी ययोस्ताविति । 'शबले मारुते शार' इति वैजयन्ती । भूरि बहु यद्व्रतं तस्मात्प्रभव उत्पत्तिर्यस्याः सा च सा दिव्या देवतानुग्रहसंबन्धिनी अलौकिकी वा, या सुकान्तिः सा अनयोरस्तीति तादृशौ तौ जायापती अथ, अनन्तरं देहशुद्धिं, अतिमात्रमत्यन्तमलभेताम् प्राप्तौ ॥ २२ ॥

**कान्तादृतौ समुचितेऽथ बभार गर्भं सा भूसुरेन्द्रदुहिता जगतां सुखाय । अच्छाम्बरेव रजनी परिपूरिताशा भाविन्यपास्ततमसं विधुमाद्यपक्षात् ॥ २३ ॥**

**कान्तादिति** ॥ अथ भगवत्सेवया देहशुद्ध्यनन्तरं अच्छं निर्मलमम्बरं वस्त्रं यस्याः सा । परिपूरिता सत्पुत्रो भविष्यतीति देवतासूचनादिना परिपूर्णा आशाः कामा यस्याः सा । भाविनी भवित्री भूसुरेन्द्रदुहिता द्विजेन्द्रसुता जगतां हिताय शुभाय आद्ये सर्वस्यादिभूते हरौ पक्षः पक्षपातो यस्य तस्मात् श्रीहरिभक्तादिति यावत् । स्वकान्तात्स्वपतेः समुचिते गर्भाधानयोग्ये ऋतौ ऋतुदर्शनाङ्गस्नानानन्तरमिति भावः । अपास्तं निरस्तं तमोऽज्ञानं यस्य तं गर्भं । अच्छाम्बरा निर्मलाकाशा परिपूरिताशा चन्द्रिकया सम्पूरितदिक् भाविनी क्रमेण भविष्यन्ती रजनी रात्रिः समुचिते चन्द्रविकासयोग्ये ऋतौ शरदृतौ आद्यपक्षात् शुक्लपक्षात् अपास्ततमसं निरस्तांधकारं विधुमिव चन्द्रमिव बभार । डुभृञ् भरणे लिट् ॥ २३ ॥

**तं पूर्वपक्षसितबिम्बमिव प्रवृद्धं यावद्द्विजेन्द्रवनिता सुषुवेऽत्र तावत् । अंशेन वायुरवतीर्य स रूप्यपीठे विष्णुं प्रणम्य भवनं प्रययौ तदीयम् ॥२४॥**

**तमिति** ॥ द्विजेन्द्रवनिता मध्यगेहभट्टस्य भार्या पूर्वपक्षे शुक्लपक्षे सितं श्वेतं यद्बिम्बं मण्डलं चन्द्रमण्डलमित्यर्थः । तदिव प्रवृद्धं तं गर्भं यावत् यदा अत्र भूतले सुषुवे प्रसूतवती । षूङ् प्राणिप्रसवे लिट् । तावत्तदा सः मुख्यवताराय भगवदादिष्टो वायुः मुख्यप्राणः अंशेनैकदेशेन अवतीर्य भुवमागत्य रूप्यपीठे रजतपीठे वसन्तमिति शेषः । विष्णुं प्रणम्य तस्य सम्बन्धि तदीयं मध्यगेहभट्टसम्बन्धीत्यर्थः भवनं गृहं प्रययौ ॥ २४ ॥

**सम्पूर्णलक्षणचणं नवराजमानद्वारान्तरं परमसुन्दरमन्दिरं तत् ।
राजेव सत्पुरवरं भुवनाधिराजो निष्कासयन् परमसौ भगवान्विवेश ॥ २५ ॥**

**सम्पूर्णेति** ॥ भुवनानां लोकानां अधिकश्चासौ राजा चाधिराजोऽधिपतिः 'राजाहःसखिभ्यष्टच्' इति टच् । भुवनाधिराजो भगवान् षड्गुणसम्पन्नः असौ वायुः सम्पूर्णानि यानि लक्षणानि द्वात्रिंशदङ्गसम्पदस्तैः प्रसिद्धं सम्पूर्णलक्षणचणं 'तेन वित्तश्चुञ्चुप् चणपौ' इति सूत्रेण तेन प्रसिद्ध इत्यस्मिन्नर्थे चणप् प्रत्ययः । नव नवसंख्याकानि राजमानानि शोभमानानि द्वारान्तराणि द्वारविशेषा यस्मिन् तत् । 'अंतरं परिधानीये बाह्ये स्वीयेन्तरात्मनि । मध्येऽवकाशतादर्थ्यविशेषविवरेष्वपि' इति वैजयन्ती । परमस्य सर्वोत्तमस्य श्रीहरेः परमं सुन्दरं यन्मन्दिरं तत् तदानीं विप्रपत्न्युदरसम्भूतं सत् निर्दुष्टं सत्पुरवरं शरीरश्रेष्ठं 'वर्ष्म पुरं च पिण्डं, क्षेत्रं च गात्रं च' इति हलः । परं अन्यं प्रसूतिपर्यन्तं गर्भे स्थितं जीवमित्यर्थः । निष्कासयन् निर्यापयन् सन् । परं शत्रुं विजित्य तं नगरान्निष्कासयन् राजा सम्पूर्णलक्षणचणं सम्पूर्णनगरलक्षणप्रसिद्धं नवानि लेपनधवळीकरणादिना नूतनानि राजमानानि शोभमानानि द्वारान्तराणि द्वारविशेषा यस्मिन् तत् । परमसुन्दराणि अतिसुन्दराणि मन्दिराणि यस्मिन् तादृशं सत्पुरमिव निर्दुष्टनगरमिव विवेश । विश प्रवेशने लिट् । मुख्यवायुः गर्भवासरहितः सन् गर्भवासदुःखं जन्मदुःखञ्चानुभूय कर्मवशात्तावता चरितार्थं जीवं तस्माद्देहान्निष्कास्य स्वसङ्कल्पादेव सम्पूर्णलक्षणचणं तं देहं सहसा परमानन्देन राजा नगरमिव विवेशेति भावः ॥ २५ ॥

**सन्तुष्यतां सकलसन्निकरैरसद्भिः खिद्येत वायुरयमाविरभूत्पृथिव्याम् ।
आख्यान्तितीव सुरदुन्दुभिमन्द्रनादः प्राश्रावि कौतुकवशैरिह मानवैश्च ॥२६॥**

**सन्तुष्यतामिति** ॥ इह भुवि कौतुकवशैः संभ्रमपरवशैः मानुषैश्च मनुष्यैरपि सुरदुन्दुभिमन्द्रनादः सुरदुन्दुभीनां गंभीरध्वनिः । 'मन्द्रो गंभीर उच्यते' इत्यमरः । यस्मादयं वायुः पृथिव्यामाविरभूत्तस्मात्सकलाः समस्ता ये सन्निकराः सज्जनसमूहास्तैः सन्तुष्यतां सन्तोष्टव्यं । तुष तुष्टौ कर्मणि लोट् । असद्भिर्दुर्जनैः खिद्येत खेदः प्राप्यतां ।

खिद् दैन्ये कर्मणि लिङ् । इति आख्यन्निव वदन्निव । ख्या प्रकथन इति धातोः शतृ । प्राश्रावि विश्रुतः । श्रु श्रवणे कर्मणि लुङ् । तदवतारसमये समद्भूतं सुरदुन्दुभिमन्द्रनादं श्रुत्वा सतां सन्तोषोऽभूत् । असतां मनसि खेदोऽभूदिति वस्तुगतिः । तत्र सद्भिः सन्तुप्यतां असद्भिः खिद्येतेत्याख्यातमित्युत्प्रेक्षते ॥ २६ ॥

**नाथं निषेव्य भवनानतिदूरमाप्तः प्राज्ञो महप्रक्रुतदुन्दुभिनादपूर्वात् ।**
**पुत्रोद्भवश्रवणतो महदाप्य सौख्यं ज्ञानं परोक्षपदमप्यमतेष्टहेतुम् ॥ २७ ॥**

**नाथमिति** ॥ नाथं स्वकुलस्वामिनं रजतपीठपुराधिवासं श्रीहरिं निषेव्य सेवां कृत्वा अत्यन्तदूरमतिदूरं । अतिदूरं न भवतीत्यनतिदूरं भवनात् स्वगृहादनतिदूरं समीपं आप्तः प्राप्तः प्रकर्षेण जानातीति प्रज्ञः । प्रज्ञ एव प्राज्ञः । 'प्रज्ञादिभ्यश्चे'ति स्वार्थे अण् । स द्विजेन्द्रः महाय उत्सवाय प्रकृत उपक्रान्तः यो दुन्दुभिनादः सः पूर्वो यस्य तस्मात् कैश्चनपुरुषैरुत्सवायोपक्रान्त दुन्दुभिनादश्रवणपूर्वादित्यर्थः । पुत्रस्योद्भवस्य जन्मनः श्रवणात् महत् सुखमेव सौख्यं आप्य प्राप्य परोक्षः परोक्षार्थः पदं विषयो यस्य तत् ज्ञानं इष्टस्य सुखस्य हेतुं कारणं अमत ज्ञानवान् । मनु अवबोधने लुङ् । स्वेष्टपदार्थस्यापरोक्षज्ञानमेव सुखसाधनमित्ययं नियमो नः किं तु तस्य परोक्षज्ञानमपि सुखसाधनं भवत्येव अनुभवसिद्धत्वादिति निश्चितवानिति भावः । तथा चोक्तं भगवत्पादैः-'अपरोक्षं परोक्षं वा ज्ञातमिष्टस्य साधनम्' इति ॥ २७ ॥

**आविश्य वेश्म निजनन्दनमिन्दुवक्त्रं भूयोऽभिनन्द्य स मुकुन्ददयां प्रवन्द्य ।**
**जातस्य तस्य गुणजातवहस्य जातकर्मादिकर्मनिवहं विदधे सुकर्मा ॥ २८ ॥**

**आविश्येति** ॥ शोभनानि कर्माणि यस्य स सुकर्मा द्विजो वेश्म गृहं आविश्य इन्दुवद्वक्त्रं यस्य तं सद्योजातमपीन्दुवदनं निजनन्दनमात्मपुत्रं भूयः अतितरां अभिनन्द्य, मुकुन्ददयां मुकुन्दकृपां प्रवन्द्य नमस्कृत्य स्तुत्वा वा । 'वदि अभिवादनस्तुत्योः' । जातस्योत्पन्नस्य गुणानां जातस्य समूहस्य वहतीति वहस्तस्य । तस्य स्वनन्दनस्य । जातस्य कर्म जातकर्म तदादि येषां तानि च तानि कर्माणि च तेषां

निवहं समूहम् । 'निकरनिकायनिवहविसरव्रजपुञ्जसङ्घसञ्चया' इति हलः । विदधे चक्रे । डुधाञ् धारणपोषणयोः लिट् ॥ २८ ॥

**ज्ञानार्थमेव यदभूदसुदेव एष यद्वासुदेव पदभक्तिरतः सदासौ ।**
**तद्वासुदेवपदमन्ववदन्सुरेन्द्रास्तातेन यन्निगदितं सुतनामकर्त्रा ॥ २९ ॥**

**ज्ञानार्थमिति** ॥ सुतनाम्नः कर्त्रा पुत्रनाम कृतवतेत्यर्थः । तातेन पित्रा उक्तं यद्वासुदेव इति पदं नाम सुरेन्द्रा देवश्रेष्ठा यत् यस्मात् एष असुदेवः प्राणदेवः श्रीमुख्यवायुः ज्ञानार्थमभूत् तस्मात् वासुदेव इत्यत्र वा इत्येतत्पदं भावे विच्प्रत्ययान्तं सत् ज्ञानवाचकं । 'वा गतिगन्धनयो'रिति धातोः गत्यर्थकानां च ज्ञानार्थकत्वात् । एवञ्च वार्थं ज्ञानार्थं जातः असुदेव वासुदेव इति मध्यमपदलोपी समासः । यद्यस्मात् असौ मुख्यप्राणः सदा वासुदेवस्य श्रीकृष्णस्य ये पदे पादौ तयोर्या भक्तिस्तस्यां रत आसक्तस्तस्माद्वासुदेवः । अस्मिंश्चपक्षे वासुदेवशब्दात् 'तस्येद'मित्यर्थेऽण्प्रत्ययः । वासुदेवसम्बन्धित्वाद्वासुदेव इत्यर्थः । वासुदेवसम्बन्धित्वं च तद्भक्तत्वमेव एवमर्थद्वयपरतयान्वर्थकमस्य वासुदेवनामेति भावः । वासुदेवपदमन्ववदन् अस्य पुत्रस्य वासुदेवनाम उक्तरीत्यान्वर्थत्वात्साध्वित्यन्ववदन्निति भावः । तथाचैवमन्वयः यद्यस्मादेष असुदेवः ज्ञानार्थमेवाभूत् यद्यस्मादसौ वासुदेवपदभक्तिरतः तत्तस्मात्सुतनामकर्त्रा तातेन निगदितं यद्वासुदेवपदं तत्सुरेन्द्रा अन्ववदन्निति ॥ २९ ॥

**पातुं पयांसि शिशवे किल गोप्रदोऽस्मै पूर्वालयः स्वसुतसूनुतया प्रजातः ।**
**निर्वाणहेतुमलभिष्ट परात्मविद्यां दानं ध्रुवं फलति पात्रगुणानुकूल्यात् ॥ ३० ॥**

**पातुमिति** ॥ पयांसि पातुं अस्मै शिशवे गां धेनुं प्रददातीति गोप्रदः । पूर्व आलयो यस्य सः । 'मूडिल्लाय' इत्यपभ्रष्टसंज्ञा । स्वसुतसूनुतया जन्मान्तरे स्वपुत्रस्य सूनुत्वेन प्रजातः सन् श्रीमध्वाचार्यान्निर्वाणहेतुं मोक्षहेतुं । 'हेतुर्ना कारणं बीजं' इत्यमरः । परात्मनः परमात्मनो विद्यां ज्ञानं अलभिष्ट लेभे । एतदुपपन्नमित्याह दानमिति दानं पात्रगुणानुकूल्यात् प्रतिग्रहीतृगुणानुसारात् फलति । फल निष्पत्तौ लट् । ध्रुवं निश्चितं प्रमाणसिद्धमित्यर्थः । गोप्रदानेऽस्य शिशोरुत्तमपात्रत्वाद्गोप्रदः पूर्वालयः क्षिप्रं

स्वसुतसूनुत्वेनेह प्रजातः श्रीमध्वशिष्यो भूत्वा परमात्मतत्वं ज्ञात्वा क्रमेण मुक्तोऽभूदिति भावः । अत्रार्थान्तरन्यासालंकारः ॥ ३० ॥

**अत्रस्तमेव सततं परिफुल्लचक्षुः कान्त्या विडम्बितनवेन्दु जगत्यनर्घ्यम् ।**
**तत्पुत्ररत्नमुपगृह्य कदाचिदाप्तः स्वस्वामिने बुध उपायनमार्पयत्सः ॥ ३१ ॥**

**अत्रस्तमिति** ॥ बुधो ज्ञानी स द्विजेन्द्रः सततं त्रस्तो न भवतीत्यत्रस्तम्तं, परिफुल्ले विकसिते चक्षुषी यस्य तत् कान्त्या प्रतिदिनं वर्धमानया स्वरूपकान्त्या विडम्बितोऽनुकृतः नवेन्दुः शुक्लपक्षोदितचन्द्रो येन तत् । जगति न विद्यते अर्घो मूल्यं यस्य तत् असदृशमिति भावः । एवं भूतं पुत्ररत्नं उपगृह्य आदाय कदाचित् आप्तः रजतपीठवासं स्वनाथं प्राप्तः तस्मै स्वस्वामिने तत् पुत्ररत्नं उपायनं आर्पयत् समर्पयामास । ऋगतौ लङ् । 'अर्तिह्री' इत्यादिना णिजन्तात् पुगागमः । यथा कश्चित् अत्रस्तं त्रासाख्यमणिदोषरहितं 'मणिदोषे भये त्रास' इति वैजयन्ती । परिफुल्लचक्षुः मलापनयनादिना संस्कारेण परिफुल्लच्छिद्रं जगति मूल्यरहितं कान्त्या विडम्बितचन्द्रं रत्नं स्वस्वामिने समर्पयेत् तद्वदिति श्लेषाभिप्रायः ॥ ३१ ॥

**नत्वा हरिं रजतपीठपुराधिवासं बालस्य सम्पदमनापदमर्थयित्वा ।**
**साकं सुतेन परिवारजनान्वितोऽसौ प्रायान्निशीथसमये निजमेव धाम ॥ ३२ ॥**

**नत्वेति** ॥ असौ द्विजेन्द्रः रजतपीठपुरं आलय आवासो यस्य तं, तं पतिं नाथं नत्वा बालस्य स्वशिशोः न विद्यते आपत् अनिष्टं यस्यास्तां सम्पदं श्रेयः अर्थयित्वा सम्प्रार्थ्य सुतेन साकं परिवारा ये जना शिष्यजनास्तैरन्वितो युक्तः सन् निशीथश्चासौ समयश्च तस्मिन् अर्धरात्रकाल एवेत्यर्थः । निज स्वकीयं धाम गृहं प्रायात् । या प्रापणे लङ् ॥ ३२ ॥

**दोषेयुषां सममनेन वनेऽतिभीमे तत्क्रीडितग्रह इहैकतमं तुनोद ।**
**उद्वान्तरक्तमवलोक्य तमभ्यधायि केनाप्यहो न शिशुतुल्कथमेष इत्थम् ॥३३॥**

**दोषेति** ॥ अनेन बालेन समं दोषा रात्रौ 'दोषा' इति रात्रिवाचकमव्ययम् । अतिभीमेऽत्यन्तभयङ्करे वने ईयुषां गच्छतां सतां क्रीडां कर्तुमुपक्रान्तः क्रीडितः । 'कर्तरि

च' इति कर्तरि क्तः । तस्मिन् वने क्रीडितस्तत्क्रीडितः स चासौ ग्रहो भूतविशेषः इह एषां मध्ये एकतमं तुतोद बबाधे । तुद व्यथने लिट् । केनापि केनचित्पुरुषेण उद्वान्तं छर्दितं रक्तं येन तं, तं ग्रहपीडितं पुरुषं अवलोक्य एष ग्रहः कथं केन प्रकारेण तुदति बाधत इति तुत् शिशोस्तुत् शिशुबाधक इत्यर्थः । नाभूत् अहो आश्चर्ये इत्थं अभ्यधायि प्रोक्तं । डुधाञ् धारणपोषणयोर्लुङ् ॥ ३३ ॥

**आविश्य पूरुषमुवाच महाग्रहोऽसावस्मद्विहारसमयोपगतान्समस्तान् ।**
**यच्छक्तिगुप्तिरहितानलमस्मि हन्तुं लोकेश्वरः स बत बालतमः किलेति ॥३४॥**

**आविश्येति** ॥ असौ महाग्रहः पूरुषमुद्वमद्रक्तं तमेव आविश्य, अस्माकं विहारः क्रीडा तस्याः समये काले उपगतान् अस्मत्समीपमागतान् यस्य श्रीमुख्यवायोः शक्तिः सामर्थ्यं तया गुप्ती रक्षा तया रहितान् समस्तान् हन्तुमलं समर्थोऽस्मि । 'अलं भूषण-पर्याप्तिशक्तिवारणवाचकं' इत्यमरः । स लोकेश्वरो वायुः बालतमः किल शिशुतमः किल । बत विस्मये: अहो एनं लोकेशमयं बालतम इत्याहेति विस्मयः इत्युवाच ॥

**स्तन्येन बालमनुतोष्य मुहुः स्वधाम्नो माता कदाचन ययौ विरहासहापि ।**
**विश्वस्य विश्वपरिपालकपालनाय कन्यां निजामनुगुणां किल भीरुरेषा ॥३५॥**

**स्तन्येनेति** ॥ भीरुर्भयशीलैषा माता कदाचन बालं स्तन्येन स्तनक्षीरेण मुहुः अनुतोष्य सन्तोष्य विरहं वियोगं न सहत इति विरहासहापि स्वस्य धाम्नो गृहात् विश्वस्य जगतः परिपालकस्य रक्षकस्य स्वशिशोः परिपालनाय रक्षणाय अनुगुणां वशवर्तिनीं निजां स्वकीयां कन्यां । विश्वस्य रक्षणे विश्वासं कृत्वा । अन्यत्र ययौ किल । किल ऐतिह्ये । इयमिमं बालकं रक्षितुं समर्थेति स्वमनसा विश्वासं कृत्वा बालं परिपालयेत्युक्त्वा कार्यविशेषवशात्स्वमन्दिरादन्यत्र जगामेति भावः ॥ ३५ ॥

**सा बालकं प्ररुदितं परिसान्त्वयन्ती मुग्धाक्षरेण वचसानुनिनाय मुग्धा ।**
**मा तात तात सुमुखेति पुनः प्ररोदीर्माता तनोति रुचितं त्वरितं तवेति॥३६॥**

**सेति** ॥ मुग्धा रम्या सा कन्या 'मुग्धो मूढे च रम्ये च' इति हेमचन्द्रः । प्ररुदितं प्रकर्षेण सञ्जातो रोदोऽस्येति तं, बालकं परिसान्त्वयन्ती बहुभिरुपायैः

नामवचनैश्च रोदं शमयन्ती सती हे तात! तात! जनक! 'तातोऽनुकम्प्ये पितरि' इति हेमचन्द्रः। सुशोभनं मुखं यस्य तत्सम्बुद्धिः। पुत्र पुनर्मा रोदीः रुदिर् अश्रुविमोचने लुङ्। माता त्वरितं क्षिप्रं यथाभवति तथा तव रुचितं आकाङ्क्षितं स्तन्यदानं, कदलीफलदानं वा, तनोति करोति इति मुग्धानि मनोहराणि अक्षराणि यस्मिन् तेन वचसा वाक्येन अव्यक्तमधुराक्षरेण वचसेत्यर्थः। अनुनिनाय अनुनिन्ये नीञ् प्रापणे लिट् ॥ ३६ ॥

**रोदे क्रियासमभिहारत एव वृत्ते पोतस्य मातरि चिरादपि नागतायाम्।**
**जग्राह बालमथ चैक्षत मातृमार्गं सापि क्रियासमभिहारत एव बाला ॥ ३७॥**

**रोद इति** ॥ पोतस्य बालकस्य रोदे रोदने क्रियासमभिहारत आवृत्ते, पुनःपुनरेवेत्यर्थः। वृत्ते प्रवृत्ते सति मातर्यपि जनन्यामपि चिराद्दीर्घकालात् 'दीर्घकाले चिराच्चिरं' इति वैजयन्ती। न आगता नागता तस्यां नैकधेत्यादिवन्नसमासोऽयम् अनागतायां सत्यामित्यर्थः। बाला सा कन्यापि रुदन्तं बालं जग्राह इतस्ततः लोठनं यथा न कुर्यात्तथा गृहीतवती अथ च तदनन्तरं च मातृमार्गं मातुरागमनमार्गं क्रियासमभिहारत एव पुनःपुनरेव कदानु आयास्यतीत्यैक्षत। ईक्ष दर्शने लङ् ॥

**कर्तव्यमौढ्यमभिपद्य निरूप्य सा तं प्राभोजयत्खलु कुलित्थकुलं प्रपक्वम्।**
**शीतं पयोऽपि सततं परिपाययन्ती यस्योष्णरोगमतिवेलमशङ्कताम्बा ॥ ३८ ॥**

**कर्तव्येति** ॥ सा कन्या कर्तुं योग्यं कर्तव्यं तस्मिन् मौढ्यमज्ञत्वं कर्तव्यकर्मविषये मूढत्वमित्यर्थः। अभिपद्य प्राप्य, तथापि क्रमेण निरूप्य किमत्रकार्यमिति विचार्य, पयोऽपि क्षीरमपि सततं शीतं शीतलं परिपाययन्ती अम्बा बालस्य माता यस्य बालस्य अतिवेलमतितरां उष्णरोगं उष्णनिमित्तकरोगं अशङ्कत। शकि शङ्कायां लङ्। तं बालं प्रपक्वं सम्यक् पक्वम् कुलित्थकुलं कुलित्थाख्यधान्यसमूहं प्राभोजयत् भोजयामास। भुज पालनाभ्यवहारयोर्लङ्। खल्विति वाक्यालङ्कारे 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः। माता यस्योष्णरोगशङ्कया क्षीरमपि शीतलं पाययति तस्मै शिशवेत्युष्णं कुलित्थं भक्षितुमदादिति भावः ॥ ३८ ॥

नूनं पिपासुरतिरोदिति हन्त बालो धिङ् मां दयाविरहितां परकृत्यसक्ताम् ।
इत्याकुला गृहमुपेत्य तदा प्रसन्नं पूर्णोदरं सुतमवैक्षत विप्रपत्नी ॥ ३९ ॥

नूनमिति ॥ तदा विप्रपत्नी ब्राह्मणभार्या बालः पिपासुः स्तनक्षीरं पातुमिच्छन् अतिरोदिति अतितरां रोदिति नूनम् हन्त हन्तेत्येतदनुकम्पायां, विषादे वा, दयाविरहितां बालके दयारहितां परं बालपोषणादन्यद्यत्कृत्यं कार्यं तस्मिन् सक्तां असक्तां मां धिक् इत्याकुला सम्भ्रान्ता सती गृहं सद्म उपेत्य प्रसन्नं रोदनादिकं परित्यज्य प्रसन्नमुखं पूर्णं कुलित्थधान्यभक्षणेन परिपूर्णमुदरं यस्य तं सुतं अवैक्षत ददर्श। ईक्ष दर्शनाङ्कनयोर्लङ् ॥ ३९ ॥

पृष्ट्वावगम्य सकलं च ततः प्रवृत्तं यूनां च दुस्सहमिदं शिशुनोपभुक्तम् ।
इत्थं विचिन्त्य तनयां बहु भर्त्सयन्त्या भीतं तयात कुपितं मनसानुतप्तम्॥४०॥

पृष्ट्वेति ॥ ततः स्वमन्दिरगमनानन्तरं पृष्ट्वा, किमित्ययं बालः पूर्णोदरो वर्तते किं त्वया दत्तमिति विचार्य, तद्वचनात्प्रवृत्तं सकलमवगम्य कुलित्थधान्यभक्षणेनोदरपूर्तिं ज्ञात्वा शिशुनोपभुक्तं भक्षितमिदं यूनाञ्च यौवनवयस्कानामपि दुःसहं सोढुमशक्यं जीर्णीकर्तुमशक्यमित्यर्थः । इत्थं इति विचिन्त्य तनयां स्वपुत्रीं बहु अतितरां भर्त्सयन्त्या तया मात्रा भीतं तनयस्य क्षेमापायभयं प्राप्तं कुपितमुत तनयां प्रति कोपश्च कृतः मनसानुतप्तम् मदुपेक्षया खल्वेवमभूदिति पश्चात्तापश्च कृतः ॥ ४० ॥

आरोग्यशालिनि तदापि पुरेव पुत्रे विस्मेरतामुपजगाम जनन्यमुष्य ।
यस्य त्रिलोकजननी जननी त्रिवेऽपि पते न विस्मयमवाप समस्तशक्तेः॥४१॥

आरोग्येति ॥ पुत्रे तदापि कुलित्थकुले भक्षितेऽपि पुरेव कुलित्थभक्षणात्प्रागिव आरोग्येण शालते शोभत इति तादृशस्तस्मिन् शरीरारोग्यवति सतीत्यर्थः । अमुष्य बालकस्य जननी माता विस्मेरतां विस्मययुक्ततां उपजगाम अस्य महिमानमविदित्वा विस्मयं जगाम । बालस्य तु नैतच्चित्रमिति भावः । तथा हि त्र्यवयवो लोकस्त्रिलोकस्तस्य जननी माता सती समस्ता सर्वविषयिणी शक्तिः सामर्थ्यं यस्य तस्य, यस्य

मुख्ययोः जननी माता महालक्ष्मीः । विषे देवासुरैरमृतमथनकालोत्पन्नकालकूटविषे वायुना पीतेऽपि विस्मयमाश्चर्यं । 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः । नावाप न प्राप्तवती पूर्वं वायुना विषे पीतेऽपि मुख्यवायोः माता श्रीदेवी विस्मयं नावाप । एवं विषं पीतवतस्तस्य कुलित्थभक्षणेन विमनिष्टं भवेत् ? न विमपि । तद्विदित्वा मध्यगेह-भट्टभार्या विस्मेरनामवापेति भावः । ननु त्रिलोकेत्यत्र न तावद्विशेषणसमासः । 'दिक् संख्ये संज्ञायाम्' इति नियमात् त्रिलोकशब्दस्य सप्तर्ष्यादिशब्दवदसंज्ञात्वात् । नापि तद्धितार्थद्विगुः 'द्विगो'रिति ङीप् प्रसङ्गात् । न च पात्रादित्वं कल्प्यं त्रिलोक्या बहिरुल्लसन्तीत्यादिविरोधात् । नचोत्तरपदसमासः त्रिपदतत्पुरुषस्येह दुर्लभत्वादिति चेन्न; लोकशब्दोऽत्र लोकसमुदायपरः त्र्यवयवो लोकस्त्रिलोकः शाकपार्थिवादित्वादुत्तर-पदलोपः । त्रिलोकस्य जननी त्रिलोकजननीत्युपपन्नत्वात् ॥ ४१ ॥

**स्तन्यं मुहुः किल ददौ जननी गृहीत्वा क्षेमाय तं किल दधज्जनको जजाप ।**
**अन्यो जनोऽपि किल लालयति स्म किन्तु सर्वोऽपि तन्मुखसुहासरसायनोत्कः॥**

**स्तन्यमिति** ॥ जननी गृहीत्वा मुहुः स्तन्यं स्तनक्षीरं । 'दुग्धं स्तन्यं पयश्च पीयूष'-मिति हलः । ददौ किल । जनकः पिता तं बालं दधत् दधानः सन् क्षेमाय शुभाय । 'कुशलं क्षेममस्त्रियाम्' इत्यमरः । जजाप धन्वन्तर्यादिमन्त्रान् शान्तिसूक्तादीनि च जपितवान् किल । जपव्यक्तायां वाचि लिट् । अन्यः मातापितृभ्यामन्योजनोऽपि लालयतिस्म अलालयत्किल । स्म अतीते । लल ईप्सायाम् लट् । मात्रादीनां स्तन्यदाना-दिकं सर्वं मोहेनेति वक्तुं वाक्यत्रयेऽपि किलशब्दः । तर्हि कुत्र तात्पर्यमिति पृच्छति । किन्त्विति उत्तरमाह । सर्वोपीत्यादिना सर्वोऽपि जनस्तस्य बालस्य यन्मुखं यस्मिन् यः सुहासः सुन्दरमन्दस्मितं स एव रसायनममृतं सर्वजनाह्लादकत्वात् तस्मिन् उत्कः उत्कण्ठावान मात्रादिसर्वजनस्तन्मुखसुहासरसायनोत्कत्वादेव स्तनक्षीरदानादिकं चका-रेति भावः ॥ ४२ ॥

**देवादिभिर्द्धिरनुपालितयादरेण देव्यात्मनेव विलसत्पदया नितान्तम् ।**
**अव्यक्तया प्रथमतो वदनेऽस्य वाण्या शालीनयेव भुवनार्चितया विजह्रे॥४३॥**

देवादीति ॥ अस्य बालस्य वदने देवादिसद्भिः, आदरो भक्तिस्तेन, अनुपालितया कदा वायं वदिष्यतीति प्रतीक्षितया, विलसन्ति पदानि यस्यास्तया प्रथमत आदौ अव्यक्ततया अत एव शालीनयेव स्वशालां स्वगृहमेव प्रवेष्टुमर्हतीति शालीना, तया अधृष्टतयेव 'प्रगल्भः प्रतिभान्विते । स्यादधृष्टेतु शालीनं' इत्यमरः । भुवनार्चितया भुवनमान्यया देव्या वाग्देव्या वाण्या सरस्वत्या आत्मनेव मूर्तिमत्त्येव नितान्तं विजह्रे । अस्य वदनरङ्गे वाग्देव्या क्रीडा कृता । हृञ् हरणे लिट् । अयं बालोऽतिमधुरं वक्तुमुपचक्रम इति भावः । श्लेषार्थे तु सरस्वती स्वयं देवादिसद्भिरनुपालिता ब्रह्मसदसि क्रीडार्थं कदाऽऽगमिष्यतीति प्रतीक्षिता सती विलसत्पदविन्यासा सती प्रथमतोऽव्यक्ता यवनिकाच्छन्ना सती, लज्जयाऽधृष्टा ब्रह्मसदसि तत्पुरतः यथा विहारं कुर्यात्तद्वदिति भावः ॥ ४३ ॥

प्राग्रिङ्गणं स्वयमथ स्थितिमेष चक्रे पश्चाद्गतिं परिचयेन किल क्रमेण ।
विश्वस्य चेष्टितमहो यदनुग्रहेण सर्वं तदस्य पवनस्य विडम्बनं हि ॥ ४४ ॥

प्रागिति ॥ एष प्रागादौ रिङ्गणं जानुभ्यां हस्ताभ्यां च गमनं चक्रे । अथ स्वयं स्थितिं मातृहस्तस्तम्भमित्याद्यालम्बनं विना स्थितिं चक्रे । पश्चाद्गतिं गमनं क्रमेण परिचयस्तत्तन्मार्गपरिचयस्तेन तत्पूर्वं गमनं चक्र इति भावः । किलेत्यपरमार्थे । कुत इत्यत आह । विश्वस्येति विश्वस्य जगतः चेष्टितं स्पन्दनादिचेष्टा यदनुग्रहेण वाय्वनुग्रहेण वर्तते । अस्य वायोः तत्सर्वं रिङ्गणादिकं विडम्बनं हि मूढजनानुकरणमेव अहो आश्चर्यम् ॥ ४४ ॥

पुच्छान्तमच्छमवलम्ब्य कदाचिदेष प्रातर्व्रजाद्व्रजत एव निजर्षभस्य ।
प्रायात्प्रियस्य सहसा स्वजनैरदृष्टो नानावनेषु चरतश्चरतस्तृणानि ॥ ४५ ॥

पुच्छान्तमिति ॥ स्वाः ज्ञातयो ये पित्रादिजनास्तैः 'स्वमज्ञातिधनाख्यायाम्' इत्यसर्वनामता । अदृष्ट एष बालः कदाचित्प्रातः व्रजाद्गोष्ठात् । 'गोष्ठाध्वनिवहाव्रजा' इत्यमरः । व्रजतः गच्छत एव प्रियस्यात्मनः प्रियस्य नानावनानि नानाविधारण्यानि तेषु चरतोऽटतः तृणानि चरतः भक्षयतः । चरगतिभक्षणयोरिति धातुः । निजर्षभस्य स्वकीयानडुह

अच्छं निर्मलं पुच्छान्तं अवलम्ब्य गृहीत्वा सहसा अतर्कितं । 'अतर्कितेतु सहसा' इत्यमरः । प्रायाद्वनं ययौ ॥ ४५ ॥

**उत्तुङ्गशृङ्गलसितस्य महिष्ठमूर्तेः पादावृतावनितलस्य सुरन्ध्रकस्य ।**
**आश्रित्य तस्य शुशुभेऽवयवैकदेशं बालो दिवाकर इवोदयपर्वतस्य ॥ ४६ ॥**

**उत्तुङ्गेति** ॥ बालः उत्तुङ्गाभ्यामुन्नताभ्यां शृङ्गाभ्यां लसितस्य राजितस्य महिष्ठा अतिस्थूला मूर्तिः शरीरं यस्य तस्य । 'मूर्तिः काठिन्यदेहयोः' इति वैजयन्ती । पादैश्चरणैः आवृतं यथासम्भवमाच्छादितमवनितलं भूतलं यस्य तस्य । शोभनानि रन्ध्राणि नवद्वाराणि यस्य तस्य । अनडुहः अवयवैकदेशं पुच्छरूपं आश्रित्यैव शुशुभे रेजे । शुभदीप्तौ लिट् । उन्नतशिखरविराजितस्य बहुयोजनविस्तीर्णस्य पादैः प्रत्यन्तपर्वतैरावृतभूतलस्य । 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । सुरन्ध्रकस्य शोभनगुहायुक्तस्य उदयपर्वतस्यावयवैकदेशमाश्रित्य बालसूर्यो यथा राजते तद्वदित्यभिप्रायः ॥ ४६ ॥

**लीलां करोति नु गृहान्तरगो नु बालः कूपान्तरे नु पतितः प्रकृतिस्वतन्त्रः ।**
**इत्थं विचिन्त्य स मुहुः स्वजनो विमृश्य हन्तानवेक्ष्य तनयं हृदि तापमाप ॥**

**लीलामिति** ॥ स स्वश्चासौ जनश्च स्वजनः पित्रादिः स्वीयजनः प्रकृत्या स्वभावेन स्वतन्त्रः स्वेच्छाधीनप्रवृत्तिः बालः लीलां करोतिनु? क्रीडते वा । 'नु वितर्केऽनुपृच्छायाम्' इत्यमरः । गृहस्यान्तरं मध्यं गच्छतीति तादृशः तथा नु? कूपान्तरं कूपान्ते पतितो नु? पतितो वा, इत्थं मुहुर्विचिन्त्य तनयं पुत्रं विमृश्यान्विष्य अनवेक्ष्य कूपादिष्वदृष्ट्वा हृदि मनसि तापं खेदमाप । हन्तेत्येतद्विषादे । 'हन्तहर्षेऽनुकम्पायाम् वाक्यारम्भविषादयोः' इत्यमरः ॥ ४७ ॥

**बालस्य बालपरिलम्बनगोचरं तद्व्यश्वस्यतापि वचनं वनगोचरोक्तम् ।**
**यत्सायमैक्षत जनः शिशुमाव्रजन्तमेकाब्दकं वृषभवालकृतावलम्बम् ॥ ४८ ॥**

**बालस्येति** ॥ जनः पित्रादिजनः सायं सायङ्काले एकोऽब्दो वत्सरो यस्य तं वृषभस्य वालेन कृतोऽवलम्ब आश्रयो येन तं आव्रजन्तं शिशुं यत्सात् ऐक्षत

अपश्यन् तस्मात्कारणात् बालस्य शिशोः बालस्य वृषभपुच्छस्य परिलम्बनमवलम्बनं । गोचरो विषयो यस्य तं वनगोचरोक्तं वनं गोचरो विषयो यस्य तेनोक्तं । वृषभबाल-मवलम्ब्य गच्छन् बालः प्रातर्मया दृष्ट इति केनचिद्वनचारिणोक्तमित्यर्थः । वचनमपि प्रश्रम्यन विश्रम्तम् । श्वस प्राणने कर्मणि लङ् । वृषभबालं गृहीत्वा वनाद्गृहं प्रत्या-व्रजन्तं बालं सायंकाले दृष्ट्वा पश्चाद्वनगोचरोक्तवचने विश्वासोऽभूदिति भावः ॥४८॥

**चिन्तामणीन्द्रमिव चिन्तितदं दरिद्रो विज्ञानमार्गमिव विष्णुपरं मुमुक्षुः ।**
**नष्टं च नन्दनमिति स्वजनोऽस्य लब्ध्वा नाथस्य तस्य तदनुग्रहमेव मेने॥४९॥**

**चिन्तेति** ॥ दरिद्रो निर्धनः चिन्तितं प्रार्थितमखिलं ददातीति चिन्तितदस्तं. चिन्तामणिनामको मणीन्द्रो मणिश्रेष्ठस्तं चिन्तामणिश्चेन्द्रः श्रेष्ठस्तमिवेति वा । मुमुक्षुः संसारान्मोक्षमिच्छुः पुमान् विष्णुः परः उत्कृष्टः विषयतया यस्मिन् तं विज्ञानमेव विशिष्टतत्त्वज्ञानमेव मार्गस्तमिव, अस्य बालस्य स्वजनः पित्रादिस्वीयजन इत्येवमन्विष्यापि नष्टमदृष्टं । 'नश अदर्शने' इति धातोः नचात्र नाशोविवक्षितः तथात्वे पुनर्लाभायोगात्, चिन्तितदं विष्णुपरं विष्णुनिष्ठं नन्दनं लब्ध्वा तं पुत्रदर्शनारूपं लाभं तस्य नाथस्य कृष्णपीठवासिनो हरेरनुग्रहमेव मेने । मन ज्ञाने लिट् । पुत्रदर्शनं तस्यानुग्रहं मेन इति भाव. ॥ ४९ ॥

**लीलावसानसमये सहसा कदाचिदायोऽधुनाभ्यवहर्तिं प्रति चाद्यमानः ।**
**रोद्धेव नोऽस्ति धनिको व्रषविक्रयीति प्रोवाच नन्दनमुखेन्दुमवेक्ष्य मन्दम् ॥**

**लीलेति** ॥ कदाचित् लीलावसानस्य क्रीडावसानस्य समये काले सहसा अतर्कितं आगत्य अधुना बालेन अभ्यवहृतिं प्रति भोजनं प्रति चोद्यमानः । प्रेर्यमाण आर्यः सज्जनः पिता । 'आर्यो सज्जन संविदा'विति हेमचन्द्रः । नन्दनमुखमेवेन्दु श्चन्द्रस्तं अवेक्ष्य नः अस्माकं व्रषं विक्रीतुं शीलमस्यास्तीति वृषविक्रयी । द्रव्यं पश्चा देहीयुक्ता मूल्यार्थे वृषद इत्यर्थः । एष धनिकः रोद्धा निषेद्धा मह्ममदत्वा न भोक्त व्यमित्युक्त्वा, स्वयद्धानद्वानमुपविष्टोऽस्मन भोजनविघ्नकारी अस्ति वर्तते तस्मान्नाहमि

दानीं भोक्ष्ये त्वमेव भुंक्ष्व इति मन्दं यथा भवति तथा शनैरित्यर्थः प्रोवाच । शनैरित्यनेन लालनमवगम्यते कुद्धश्चेदुच्चैर्ब्रूयादिति ॥ ५० ॥

**लीलाकरेण स करेण सुकोमलेन वीजान्तराणि किल कानिचिदाशु तस्मै ।**
**स्मित्वार्भकोऽभिमतनिष्कपदे यदादादादत्त तानि धनिको बहुमानपूर्वम् ॥५१॥**

लीलेति ॥ स अर्भकः लीलानामाकर आश्रयस्तेन सुकोमलेन सुकुमारेण करेण हस्तेन आशु अभिमतं धनिकेन भट्टेन च संख्याविषये सम्प्रतिपन्नं यन्निष्कपदं निष्कस्थानं तस्मिन् कानिचिद्वीजान्तराणि वीजविशेषान् । तिन्त्रिणीवीजानीत्यैतिह्यम् । स्मित्वा मन्दस्मितं कृत्वा तस्मै धनिकाय यदाऽदात् तदा धनिकस्तानि बहुमान आदरः पूर्वः पुरस्सरो यथा भवति तथा आदत्त किल जग्राह किल । दाञ् दाने लङ् । किलेत्यैतिह्ये मम द्रव्यमागतमित्युक्त्वा जगाम च ॥ ५१ ॥

**लब्धं सुतादिति वदन् द्विजपुङ्गवेन कालान्तरे निजधने प्रतिदित्सितेऽपि ।**
**साक्षादमानवनवाकृतितः स लेभे वीजच्छलेन पुरुषार्थमहो विशिष्टम् ॥ ५२ ॥**

लब्धमिति ॥ द्विजेषु पुङ्गवः श्रेष्ठस्तेन । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभ कुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरः । भट्टेन अन्यः कालः कालान्तरं तस्मिन् निजमात्मीयं यद्धनं तस्मिन् स्वदत्तवृषभस्य मूल्यभूतधन इत्यर्थः । प्रतिदातुमिष्टं प्रतिदित्सितं तस्मिन्नपि सुतात्तव पुत्राल्लब्धमिति वदन् । स धनिकः मानवो मनुष्यो न भवतीत्यमानवो देवः । श्रीमुख्यवायुस्तस्य नवा नूतना अवताररूपेत्यर्थः । या आकृतिः स्वरूपं तस्या इति ततः । वीजमितिच्छलं । मिषं तेन । 'व्याजच्छद्म छलं मिषं' इति हलः । साक्षान्मुख्यतः विशिष्टमुत्तमं पुरुषार्थं मोक्षं लेभे । डुलभष् प्राप्तौ लिट् । अहो आश्चर्यम् । अस्य महिमेति । विशिष्टपुरुषार्थश्च मोक्ष एव । 'मोक्षो हि सर्वपुरुषार्थोत्तम' इति श्रीविष्णुतत्वनिर्णये श्रीमदाचार्याणां वचनम् ॥

**वासुदेवमिह वासुदेवतासत्कलामभिननन्द तं जनः ।**
**वासुदेवमिति वासुदेवसन्नामकं विविधलीलमर्भकम् ॥ ५३ ॥**

**वासुदेवेति** ॥ जनः सुजन इह भुवि विद्यमानमसूनां प्राणानां देवता देव श्रीमुख्यप्राणस्तस्याः सती निर्दुष्टा या कला अंशस्तां । 'चन्द्रांशे कलने कला । महाभूतेष्विन्द्रियेषु ज्ञानावयवयोरपि' इति वैजयन्ती । कलाशब्दोनित्यस्त्रीलिङ्गः । मुख्यवाय्ववतारभूतमित्यर्थः । इति उक्तरीत्या विविधा नानाविधा लीला बालक्रीडा यस्य तं । वासुदेव इति सन्नामान्वर्थनाम यस्य तं । 'शेषाद्विभाषे'ति कः । तं अर्भकं बालं वसुदेवस्यापत्यं पुमान् वासुदेवस्तं वसुदेवपुत्रमित्यर्थः । वासुदेवं वा श्रीकृष्ण-नामानं भगवन्तमिव । 'वा विकल्पोपमानयोः' इत्यमरः । अभिननन्द श्रुत्वा दृष्ट्वा च सन्तुतोष । नदि हर्षे लिट् । रथोद्धतावृत्तम् । 'रात्परैर्नरलगैरथोद्धता' इत्युक्तेः ॥५३॥

**इति विहरति मह्यां विष्णुदासेऽपि गूढे समजनि सुजनानां चित्तमानन्दपूर्णम् ।**
**उदयति घनमालालीनभानौ च भानौ ननु जननयनाब्जैर्लभ्यतेऽलं विकासः॥**

**इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्य-विरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के द्वितीयः सर्गः ॥**

**इतीति** ॥ विष्णुदासे श्रीमुख्यवायौ गूढेऽपि मानुषेष्ववतीर्णत्वेन तज्जात्यनुसारि-त्वेनानाविष्कृतस्वसामर्थ्येऽपि । मह्यां भूमौ इति इत्थं विहरति क्रीडमाने सति सुजनानां सज्जनानां चित्तं मन आनन्दपूर्णं समजनि जातं । जनी प्रादुर्भावे लुङ् । तथा हि । घनानां मेघानां मालाः पङ्क्तयः तासु लीनाश्छन्ना भानवः किरणा यस्य तस्मिन् । 'भानुः करो मरीचिस्त्री पुंसयोः' इत्यमरः । भानौ सूर्ये च उदयति सति जनानां यानि नयनानि तानि च अब्जानि च तैः अलं सम्यक् विकास उन्मीलनं लभ्यते ननु । डुलभष् प्राप्तौ लट् ॥ ५४ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां द्वितीयः सर्गः ॥

**अथ कदाचन सुन्दरनन्दनस्मितमुखेन्दुदृशां दयितौ नृणाम् ।
महमितो निजबन्धुमुदे मुदा प्रययतुः स्वजनैः सह दम्पती ॥ १ ॥**

कथान्तराणि विशेषाकारेण वक्तुमुपक्रमते—

**अथेति** ॥ कथान्तरद्योतकोऽथशब्दः । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । कदाचन कस्मिंश्चित्काले सुन्दरस्य नन्दनस्य स्मितं मन्दहासोपेतं यन्मुखं तदेवेन्दुरिव तं पश्यन्तीति तथोक्तास्तेषां नृणां दयितौ प्रियौ जाया च पतिश्च दम्पती । 'जायाया दम्भावजम्भावौ वा निपात्यौ' इत्युक्तेर्जायापदस्य दम्भावः । निजानामात्मीयबन्धूनां मुदे सन्तोषाय । स्वजनैः स्वकीयजनैःसह महमुत्सवमुद्दिश्य अतः स्वमन्दिरात् मुदा प्रीत्या प्रययतुः । अस्मिन् सर्गे द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह 'नभौ भरौ' इति तल्लक्षणम् ॥ १ ॥

**स्वजनतापगमागमसङ्गमप्रतिसभाजितपूर्वकसम्भ्रमे ।
अविदुषी जननीति स बालकः शरणतो रणतो निरगान्नृभिः ॥ २ ॥**

**स्वेति** ॥ स बालः नृभिर्नरैः रणतो ध्वनिं कुर्वतः । रण शब्द इति धातुः । शरणतो गृहात् । जनानां समूहो जनता स्वस्यात्मनो जनता स्वबन्धुजनसमूह इत्यर्थः । तस्या उपगम उत्सवमन्दिरान्निर्गमः स च आगमः प्रवेशः स च सङ्गमः संमेलनं स च सभाजितं परस्परसम्भावनं तच्च तानि पूर्वाण्येव पूर्वकाणि यस्य तादृशश्चासौ सम्भ्रमश्च तस्मिन् । जननी विदुषी न भवतीति अविदुषी । मम निर्गमनं न जानातीति मत्वा निरगात् निर्जगाम । इण् गतौ लुङ् ॥ २ ॥

**क्व नु यियाससि तात न साम्प्रतं स्वजनसन्त्यजनं तव साम्प्रतम् ।
इति विभुः पथिकैरुदितो व्रजन् स्मितमनाकुलमुत्तरमातनोत् ॥ ३ ॥**

**क्वेति** ॥ तात! वत्स! क्व नु यियाससि यातुमिच्छसि । साम्प्रतमिदानीं । 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः । तव स्वजनस्य बन्धुजनस्य सन्त्यजनं

त्यागः साम्प्रतं युक्तं न । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । इति पथिभवाः पथिकास्तैः पान्थजनैरित्यर्थः । उदितः व्रजन् गच्छन् । विभुः समर्थः । स बालः आकुलं न भातीत्यनाकुलं सम्भ्रमरहितमित्यर्थः । स्मितं मन्दहासमुत्तरं पथिकवचनानां प्रत्युत्तरमातनोत् अकरोत् । तनु करणे लङ् । पथिकवचनं श्रुत्वा मन्दहासं चकारेति भावः ॥ ३ ॥

त्वरितमेत्य स काननदेवतासदनमत्र ननाम रमापतिम् ।
अपि ततः प्रगतो लघुनारिकेल्युपपदान्तरसद्मगतं च तम् ॥ ४ ॥

त्वरितमिति ॥ सः त्वरितं शीघ्रं यथा भवति तथा काननेऽधिष्ठिता देवता तस्याः सदनं मन्दिरं । काननस्य 'कुडऊरकान' इत्यपभ्रष्टसंज्ञा । आ सम्यग् इत्वा गत्वा एत्य, अत्र काननदेवतासदने रमापतिं तत्र सन्निहितं श्रीहरिं ननाम । ततोऽपि काननदेवतासदनादपि लघु शीघ्रं यथा भवति तथा । 'लघुक्षिप्रमरं द्रुतम्' इत्यमरः । प्रगतो यातःसन् नाळिकेर एव नाळिकेरी । स उपपदं यस्य तन्नाळिकेर्युपपदं च तदन्तरश्चेति नाळिकेर्युपपदान्तरं । तत्रचोपपदस्य नाळिकेरीशब्दस्य संस्कृते नाळिकेरवृक्षवाचिनस्तौळवानां 'ताळे' इत्यपभ्रष्टसंज्ञा । अन्तरशब्दस्य अन्तरमवटं छिद्रमित्यभिधानात्संस्कृते छिद्रवाचिनस्तौळवानां 'कुडे' इति । तथा च नाळिकेर्यन्तरशब्दस्य 'ताळेकुडे' इत्यपभ्रष्टभाषायां समुदायार्थः । 'ताळेकुडे' इति शिवळ्ळिग्रामे कस्यचिद्देशविशेषस्य संज्ञा तस्मिन् यत्सद्म तस्मिन् गतः सन्निहितस्तं च शिवान्तर्गतं हरिं च ननाम ॥ ४ ॥

नलिननाभनिभालनसम्पदागमविकस्वरभास्वरलोचनः ।
जनमनोनयनाम्बुजभास्करो रजतपीठपुरं प्रययावसौ ॥ ५ ॥

नलिनेति ॥ नलिनं नाभौ यस्य तस्य श्रीहरेः । निभालनं दर्शनं । 'निशामनं, निभालनं निध्यानमवलोकनं' इति हलः । तेन सम्मदः सन्तोषः । 'प्रमोदामोदसम्मदाः' इत्यमरः । तस्यागमः प्राप्तिः । तेन विकस्वरे विकासं प्राप्ते भास्वरलोचने शोभमानलोचने यस्य तादृशः । जनानां मनांसि च नयनानि च मनोनयनानि । तानि

अम्बुजानीव तेषां भास्कर इव भास्करः । सन्तोषकारी असौ रजतपीठाख्यं पुरं प्रययौ ॥ ५ ॥

**सुहयमेधगणातिशयाल्वो हरिनमस्कृतयः सुकृता इमाः ।**
**इति सुरैरपि भूसुरमण्डलैः समनमत्स सविस्मयमीक्षितः ॥ ६ ॥**

सुहयेति ॥ सु सम्यक् कृताः सुकृताः । 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः' इत्यष्टाङ्गविशिष्टतया कृता इत्यर्थः । इमा हरिनमस्कृतयः हरये कृतनमस्कारा इत्यर्थः । सु शोभना ये हयमेधा अश्वमेधयागास्तेषां गणाः समूहास्तानतिशयितुं शीलमासामस्तीत्यतिशयाल्वः । इति अनेनाभिप्रायेण । 'एकोऽपि कृष्णस्य कृतप्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाये'त्युक्तेः । सुरैर्देवैः भूसुरमण्डलैर्ब्राह्मणसमूहैरपि सविस्मयं विस्मयेन सहितं यथा भवति तथा । ईक्षितो दृष्टः । स समनमत् नमश्चकार ॥ ६ ॥

**न हि हरिं सततं न नमत्यसौ न च न पश्यति नापि न वन्दते ।**
**अपि तथेति विधाय विशेषतः स ननु साधुजनान्समशिक्षयत् ॥ ७ ॥**

समनमदित्युक्त्या श्रीमदाचार्याणां हरिवन्दनादिकं कादाचित्कमिति न मन्तव्यमित्याशयेनाह—

नहीति ॥ असौ हरिं सततं न नमतीति न हि । किन्तु सर्वदा नमत्येव । हरिं न पश्यतीति च न । दृशिर् प्रेक्षणे लट् । हरिं न वन्दते न स्तुवत इत्यपि न । तथापि सदा हरिवन्दनादिकं कुर्वन्नपि स इति विशेषतो विशेषात् विधाय नमस्कारादिकं कृत्वा साधुजनान्समशिक्षयन्ननु शिक्षितवान् हि । शिक्ष विद्योपादने लङ् ॥

**अनवलोक्य सुतं सुतवत्सला मृगयति स्म महीसुरपुङ्गवः ।**
**मुहुरपृच्छदमुष्य गतिं नरानथ पथि मगतोऽनुपदं द्रुतम् ॥ ८ ॥**

अनवलोक्येति ॥ पदं पुत्रपादचिह्नमनुसृत्यानुपदं । 'पदं स्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्कवस्तुनोः । त्राणे पादे पादचिह्ने व्यवसायापदेशयो'रिति हेमचन्द्रः ।

द्रुतं प्रगतोऽन्विष्य गतः । अनुपदं निरन्तरं पुत्रनिर्गमनानन्तरमेव प्रगत इति वा । सुते वत्सलः स्निग्धः पुत्रस्नेहयुक्त इत्यर्थः । महीसुरेषु भूसुरेषु पुङ्गवः श्रेष्ठः । स तु मध्यगेहभट्टः सुतमनवलोक्य अदृष्ट्वा मृगयते स मार्गयामास । मृग अन्वेषणे लट् । अमुष्य गतिं गमनं गच्छतो नरान् प्रति पथि पथि मार्गे मार्गे मुहुरपृच्छन् विचारितवान् । पृच्छ ज्ञीप्सायाम् लङ् । दुह्याद् इति द्विकर्मकोऽयं धातुः ॥ ८ ॥

**जनसदागतिसूचितवर्त्मना प्रतिपदं व्रजता परया तृषा ।**
**द्विजमहामधुपेन मनोहरं स्मितमलम्भि सुताननवारिजम् ॥ ९ ॥**

**जनेति** ॥ पदं पदं प्रति प्रतिपदं प्रतिपादप्रक्षेपमित्यर्थः । प्रतिक्षणमिति यावत् जनोऽभिमुखमाव्रजन् जनः स एव सदागतिर्वायुस्तेन सूचितं यद्वर्त्म मार्गस्तेन । 'श्वसनस्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरः । परया तृषा तृष्णया व्रजता पुत्रमन्विष्य गच्छता द्विजमहामधुपेन द्विजरूपमहाभ्रमरेण । मनोहरं स्मितं विकसितं मार्गश्रमाभावादम्लानमिति भावः । ('मनोहरस्मित'मितिवा पाठः) सुताननवारिजं अलम्भि प्राप्तम् । कमलपरिमळमादाय व्रजन्तं वायुमभिगच्छता कमलमन्विष्य गच्छता भ्रमरेण विकसितं वारिजमिवेति श्लेषाभिप्रायः ॥ ९ ॥

**विरहदूनतयोद्गमनोन्मुखं न्यरुणदश्रु पुरा स ययोर्दृशोः ।**
**अथ तयोः प्रमदोत्थितमप्यदः प्रतिनिरुध्य गिरं गुरुरब्रवीत् ॥ १० ॥**

**विरहेति** ॥ स गुरुः पिता । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके' इति हेमचन्द्रः । पुरा सुतान्वेषणकाले विरहेण सुतवियोगेन दूनो दुःखितस्तस्य भावस्तत्ता तया । उद्गमनाय निस्सरणायोन्मुखमुद्युक्तं अश्रु ययोर्दृशोर्न्यरुणत् अमङ्गलशङ्कया निरुद्धवान् । रुधिरावरणे लङ् । अथ पुत्रदर्शनानन्तरं प्रमदेन सन्तोषेणोदितमप्युत्पन्नमपि सुतदर्शनानन्तरमानन्देनोद्गतमपीत्यर्थः । अदः अश्रु तयोरेव दृष्ट्योः प्रतिनिरुध्य अमङ्गलभयान्निरुध्य । गिरं वाचमब्रवीत ॥ १० ॥

**अयि सुतेदमुदाहर तत्त्वतो ननु समागतवानसि साम्प्रतम् ।**
**स्वजनतारहितस्य तु कोऽत्र ते सहचरोऽर्भक दीर्घतमे पथि ॥ ११ ॥**

**अयीति** ॥ अयीत्यव्ययं प्रश्नेऽनुनये वा वर्तते । 'अ प्रश्नेऽनुनये त्वयि' इत्यमरः। अयि सुत हे सुत साम्प्रतमिदानीं समागतवान् इयद्दूरमागतवानसि ननु । तदस्तु तावत् । अर्भक बालक स्वजनतया स्वजनसमूहेन रहितस्य विरहितस्य । ते तव अत्र त्वयेदानीमतीत्यागते दीर्घतमे अनिदूरे पथि मार्गे सहचरः सहायस्तु कः । इदं मया पृष्टं तत्त्वतो यथार्थतः उदाहर कथय । हृञ् हरणे लोट् ॥ ११ ॥

**जनकवाचमिमामवधारयन् कलमुदाहरदम्बुरुहेक्षणः ।**
**स्वपदमाव्रजतो व्रजतोऽप्यतो ननु सखा मम काननगो विभुः ॥ १२ ॥**

**जनकेति** ॥ इमां एवमुक्तां जनकवाचं पितृवाचं अवधारयन् एकाग्रचित्तः सुशृण्वन् अम्बुरुहवत् पद्मवदीक्षणे लोचने यस्य सः । स्वपदं स्वस्थानं प्रति स्वेन प्रथमतो गन्तुं विवक्षितं काननदेवालयमित्यर्थः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रि-वस्तुषु' इत्यमरः । आव्रजतः उत्सवमन्दिरान्निर्गत्यागच्छतो मम अतः काननालयात् व्रजतोऽपि नालिकेर्यन्तरदेवायतनं गच्छतोऽपि काननं गच्छतीति काननगो विभुः श्रीभगवान् सखा ननु सहायो ननु । कलमव्यक्तमधुरं यथा भवति तथा । 'कल-मव्यक्तमधुरं' इत्यमरः । उदाहरन् उवाच ॥ १२ ॥

**तदितरायतनात्तु यदागमं कृतरतिः खलु तत्र हरिः सखा ।**
**अहमिहापि महेन्द्रदिगालयं प्रणतवानुत यावदधीश्वरम् ॥ १३ ॥**

**तदिति** ॥ अहं तस्मात्काननायतनादितरदन्यत् यदायतनं तस्मात् नालिकेर्यन्तरा-यतनादिति यावत् । यदागमं रजतपीठपुरं प्रति निरगाम् । गम्लृ गतौ लुङ् । तदानी-मारभ्य तत्र नालिकेर्यन्तरालये कृता रतिः क्रीडा येन स हरिः । इहापि रजतपीटेऽ-पीति यावत् यदा महेन्द्रदिशि आलयो मन्दिरं यस्य तं अधीश्वरमुत स्वामिनं हरिं च प्रणतवान् तावत्काले सखा खलु । खलु वाक्यालङ्कारे ॥ १३ ॥

**अपि ततोऽहमुपेत्य सहामुना भगवतेऽत्र सते प्रणतिं व्यधाम् ।**
**इति निगद्य विभाति शिशुः स्म विस्मितसभाजनचीर्णसभाजनः ॥ १४ ॥**

**अर्पीति** ॥ रजतपीठपुरे अमरालयद्वयं वर्तते । तत्र पूर्वालयस्थः प्रथमतो नम्यः, पश्चिमालयस्थः पश्चान्नम्यः इति सम्प्रदायनियमः । तस्मात्पूर्वालयस्थमादौ नत्वा ततः पश्चिमालयस्थं नन्तुमागच्छतः । कः सङ्गत्यपेक्षायामाह—अर्पीत्यादिना । सभायां स्थितो जनः सभाजनः । विस्मित एवं चरित्रं दृष्ट्वा विस्मितः । यः सभाजनस्तेन चीर्णं कृतं सभाजनं सम्भावनं यस्य स शिशुः । अहं ततो महेन्द्रदिगालयादपि अमुना महेन्द्रदिगालयस्थेन सहोपेत्य अत्र पश्चिमालये सते वर्तमानाय भगवतेऽनन्तासनाय प्रणतिं व्यधाम्, कृतवानस्मि इति उक्तप्रकारेण निगद्य विभाति स्म । अशोभत । स्म अतीतार्थे ॥ १४ ॥

विरहितस्वजनं चरणप्रियं विविधभूतभयङ्करवर्त्मनि ।
अयि कृपालय पालय बालकं लघुशुभस्य ममेत्यनमद्द्विजः ॥ १५ ॥

**विरहितेति** ॥ अयीत्यव्ययं प्रार्थने कृपालय कृपामन्दिर । "निकाय्यनिलयालयाः" इत्यमरः । श्रीहरे! विरहिताः स्वजना यस्य तमपि विविधा ये भूताः प्राणिनस्तैर्भयङ्करे वर्त्मनि मार्गे चरणे सञ्चारे प्रियं लघु अल्पं शुभं भाग्यं यस्य तस्य मम बालकं पालय रक्ष । पाल रक्षणे लोट् । इति अभिधाय द्विजो भट्टोऽनमत् । श्रीमदनन्तासनं नमश्चकार ॥ १५ ॥

तमुपगृह्य सुतं मुनयोनिधिर्गृहमसौ गृहिणीसहितो ययौ ।
उदयतीति हि बालदिवाकरे स्मितवभूत्सुजनाननवारिजम् ॥ १६ ॥

**तमिति** ॥ सुशोभनानि तपांसि तेषां निधिराश्रयः । असौ भट्टः तं सुतमुपगृह्य उपादाय गृहिणीसहितो जायासहितःसन् गृहं ययौ । बाल एव दिवाकरस्तस्मिन् इति उक्तप्रकारेण उदयति सति क्रमेणाभिव्यज्यमानसामर्थ्ये सति सुजनानामाननानि तुल्यान्येव वारिजं स्मितं विकसितं अभूदिति ॥ १६ ॥

वरविमानगिरावपि चण्डिका शिशुमहो जननी तमलालयत् ।
अपरथा परितुष्टमनाः कथं त्रिगिरिपं वसतिस्मितदायकः ॥ १७ ॥

वरेति ॥ पाजकक्षेत्रमध्ये वर्तमाने वरः श्रेष्ठो यो विमानागिरिः विमानाख्यपर्वत-स्तस्मिन् वर्तमाना । जननी माता दुर्गाया लक्ष्म्यात्मकत्वेन मुख्यप्राणमातृत्वादिति भावः । चण्डिका दुर्गापि तं शिशुमलालयत् अमानयत् । लल ईप्सायाम् लङ् । अपरथा तल्लालनाभावे विगतः सहायो यस्य स विसहायकः सहायरहित इत्यर्थः । एष इह भुवि परितुष्टं सन्तुष्टं मनो यस्य तादृशःसन् कथं चिरं बहुकाले वसेत् । स्वसहायभूतस्य रूप्यपीठपुरवासिनो हरेस्तत्राभावेऽपि स्वमातुर्दुर्गाया लालनातिशयादेव पाजकक्षेत्रे चिरमुवासेति भावः ॥ १७ ॥

सकलशब्दमयी च सरस्वती सततमानमति स्वयमेव यम् ।
द्विजवरोऽथ कदाचन मातृकाः किल सुतं परिचाययति स्म तम् ॥ १८ ॥

सकलेति ॥ अथ द्विजवरः सकलाः समस्ता ये शब्दास्तेषामभिमानिनी अखिल-शब्दमयी सरस्वती च यमेनं वायुं स्वयमेव सततं सर्वदा आनमति सम्यङ् नमति । तं सुतं मातृका अक्षराणि 'मातृकाकरणे स्वरे । ....मातृवर्णसमाम्नायोपमातृषु' इति हेमचन्द्रः । कदाचन कस्मिंश्चिन्मुहूर्ते परिचाययति स्म किल ज्ञापयामास किल । चिञ् चयने लट् । किल शब्देनाक्षराभ्यासस्यापरमार्थतामाह । तथा च सरस्वती-नम्यस्यास्य नेदानीं मातृकापरिचयेन भाव्यमिति भावः ॥ १८ ॥

लिपिकुलं ननु तात गते दिने लिखितमेव पुनर्लिखितं कुतः ।
इति निजप्रतिभागुणभावितं हरिपदस्य वचस्तमनन्दयत् ॥ १९ ॥

लिपिकुलमिति ॥ ननु प्रश्ने । तात! पितः गते दिने अतीतदिने पूर्वेद्युरि-त्यर्थः । लिखितं लिपिकुलं अक्षरजातं पुनरद्यापि कुतः कस्मात् लिखितम् इति इत्थं निजप्रतिभैव स्वाभाविकप्रज्ञैव गुणस्तेन भावितमुत्पादितं प्रतिभातिशयेनोक्तमिति यावत् । हरेः पदं नाम यस्य तस्य हरिवाचकवासुदेवनामवत इत्यर्थः । स्वपुत्रस्य वचः तं पितरं अनन्दयत्सन्तोषयामास ॥ १९ ॥

शिशुरसौ प्रतिभाम्बुधिरित्यलं जनमनोवचनग्रहपीडना ।
न भवतादिति तं विजनस्थले स्वतनयं समशिक्षयदेषकः ॥ २० ॥

शिशुरिति ॥ एष एव एषकः । स्वार्थे कप्रत्ययः । स्वननयं स्वगुत्रं विगता जना यस्मिन् तादृशं यत् स्थलं तस्मिन् रहसीत्यर्थः । असौ शिशुः अलं सम्यक् प्रतिभया प्रज्ञया अम्बुधिरिव प्रतिभाम्बुधिः इति मनांसि च वचनानि च जनानां मनोवचनानि तान्येव ग्रहः पिशाचस्तस्य पीडना । 'बालग्रहो ग्रहण निर्बन्धनानुग्रहेषु च । रणोद्यमे पूतनादावादित्यादौ विधुन्तुद' इति हेमचन्द्रः । न भवतात् मा भूत् इति मत्वा समशिक्षयत् विद्याभ्यासं कारितवान् । शिक्ष विद्योपादने लङ् । यद्ययं स्वेन पाठितः स्यात्तदास्य पाण्डित्यं दृष्ट्वाऽयं प्रतिभाम्बुधिरिति जना वदेयुस्ततश्चास्य किञ्चिदनिष्टं भवेत्तन्माभूदिति बुद्ध्या । तथा यदि प्रकटं पाठयेत्तदाऽस्य बुद्ध्यतिशयं दृष्ट्वा पूर्ववद्वदेयुस्तच्च मा भूदिति रहसि पाठयामासेति भावः ॥ २० ॥

महवता स्वजनेन समीरितस्वजननीसहितेन कदाचन ।
रुचिरवाचनयार्चितवाक्श्रिया प्रति ययौ प्रभुणा घृतवल्यपि ॥ २१ ॥

महवतेति ॥ कदाचन मह उत्सवोऽस्यास्तीति महवान् तेन । 'मह उद्धव उत्सवः' इत्यमरः । स्वबन्धुजनेन समीरिता उत्सवार्थमागन्तव्यमिति प्रोक्ता या स्वजननी तया सहितस्तेन रुचिरा मनोहरा या वाचना पुस्तकवाचनं तया अक्षराणां जवेन सकलपुस्तकवाचनशक्त्येति भावः । अर्चिता सर्वैः सम्भाविता वाक्श्रीः वचनसम्पद्यस्य तेन प्रभुणा समर्थेन वासुदेवेन घृतवल्यपि 'घृतवल्ली' नामकदेशविशेषोऽपि प्रतिययौ प्राप्ता । या प्रापणे कर्मणि लिट् । घृतवल्लीत्यस्य 'नेयम्पळ्ळी' इत्यपभ्रष्टसंज्ञा ॥

परिषदा नितरां परिवारितः शिवपदः किल धौतपटोद्भवः ।
इह कथां कथयन्ददृशे ततः पृथुधिया पृथुकाकृतिनामुना ॥ २२ ॥

परिषदेति ॥ इह घृतवल्यां कथां पुराणकथां कथयन् परिषदा सभया । 'सभासमितिपरिषत्सदः' इति हलः । कथां शृण्वता जनसमूहेनेत्यर्थः । नितरां परिवारितः परिवृतः शिव इति पदं नाम यस्य सः । धौतपटे धौतपटाख्यकुले उद्भव उत्पत्तिर्यस्य तादृशः अपभ्रष्टसंज्ञायां 'माडिनाय' इति प्रसिद्धकुलोद्भव इत्यर्थः । कश्चिद्द्विजः पृथुः पूर्णा धीर्ज्ञानं यस्य तेन । पृथुकस्य बालकस्य । आकृतिः स्वरूपं यस्य तेन । 'पृथुकः

शावकः शिशुः' इत्यमरः । अमुना वासुदेवनाम्ना मारुतिना वायुपुत्रेण ददृशे दृष्टः ॥ २२ ॥

इदमुवाच विचारविचक्षणः शुचिवचः शनकैः स जनान्तरे ।
अपरथा कथितं कथक त्वया ननु मतान्महतामिति सस्मितम् ॥ २३ ॥

इदमिति ॥ विचारविचक्षणः पदार्थानां पदानां च वाच्यवाचकभावविचारकुशलः । स जनान्तरे जनमध्ये । हे कथक! पौराणिक! त्वया महतां व्यासशुकादीनां मतात् सिद्धान्तात् अपरथा अन्यथा कथितं ननु । शुचि शुद्धं शब्दसौष्ठवोपेतं इतीदं वचो वाक्यं सस्मितं स्मितसहितं यथा भवति तथा शनकैरुवाच ॥ २३ ॥

अगणयन्न शिवं जनता तदा सवचने वसुदेवसुताह्वये ।
मुखरमिच्छति को मृगधूर्तकं प्रकृतहुंकृतसिंहशिशौ सति ॥ २४ ॥

अगणयन्निति ॥ वसुदेवसुतस्य श्रीकृष्णस्य आह्वयो नाम यस्य तस्मिन् । वासुदेवनामक इत्यर्थः । यद्वा वसुदेवसुत इति वासुदेव इत्याह्वयो यस्य तस्मिन् । स वचने सति वचनयुक्ते सति एवं वदति सतीति यावत् । जनता जनसमूहः । शिवं शिवनामकं पौराणिकं नागणयत् न सम्भावयामास । गण संख्याने लङ् । तथा हि । प्रक्रममुपक्रान्तं हुंकृतं हुंकारो येन तस्मिन् सिंहशिशौ सति मुखरं वाचालं मृगधूर्तकं शृगालं को विवेकी इच्छति सम्भावयितुमिच्छति । 'गोमायुर्मृगधूर्तकः' इत्यमरः ॥

अथ कथां कथयेति तदा जने गदितवत्युचितार्थमुदाहरत् ।
स समलाल्यत विस्मयिभिर्नरैरपि सुरैर्विजयांकुरपूजकैः ॥ २५ ॥

अथेति ॥ अथ पक्षान्तरे कथकोदितवाक्यार्थो महतामभिमतो न चेदिति यावत् । तर्हि कथं महतामभिमतार्थः कथं कथय त्वं ब्रूहि । कथ वाक्यप्रबन्धे लोट् । इति जने महाजने गदितवति सति उचितार्थं कथकेनान्यथोक्तस्य वाक्यस्योचितमर्थमुदाहरदुवाच । तदा स वासुदेवः विस्मयिभिर्विस्मयशीलैर्नरैः । विजयस्य योऽङ्कुरस्तस्य पूजकैः सुरैरपि समलाल्यत अमान्यत । लल ईप्सायाम् कर्मणि लङ् ॥ २५ ॥

स जननीसहितो जनकं गृहे प्रगतवांस्तमुदन्तमवेदयन् ।
निगद तात शिवः कथकः स किं वितथगीरथवाहमितीरयन् ॥ २६ ॥

स इति ॥ जननीसहितः प्रगतवान् गृहं गतः स बालकः गृहे स्वमन्दिरे वर्तमानं जनकं पितरं प्रति हे तात! पितः! निगद त्वमेवैतद्वद । गद व्यक्तायां वाचि लोट् । कथकः पौराणिकः स शिवः वितथगीः किं? वितथा अयथार्था गीः वाक् यस्य तादृशः किं? अथ नचेत् अहं वा वितथगीः । अयथार्थवादी इतीरयन् सन् तं घृतवल्यां प्रवृत्तमुदन्तं वृत्तान्तं अवेदयत् ज्ञापयामास । विद ज्ञाने लङ् ॥ २६ ॥

ननु सुतावितथं कथितं त्वयेत्यमुमुदीर्य सविस्मयमस्मरत् ।
प्रकृतितः कृतिता खलु मे शिशोर्मदधिनाथदयोदयजेत्यसौ ॥ २७ ॥

नन्विति ॥ असौ भट्टः हे सुत! त्वया वितथमयथार्थं न भवतीत्यवितथं सत्यमित्यर्थः । तद्वाक्यत्वाभिमतार्थ इति यावत् । कथितं ननु इति अमुं पुत्रमुदीर्य सविस्मयं विस्मयसहितं यथा भवति तथा । मे मम शिशोः प्रकृतितः स्वभावतः कृतिता चतुरता ममाधिनाथः स्वामी रजतपीठवासी श्रीमदनन्तासनस्य दयाया उदयोऽभिव्यक्तिस्तस्माज्जातामदधिनाथदयोदयजा इत्यस्मरत् । स्मृ चिन्तायां लङ् ॥ २७ ॥

कथयतां प्रथमे कथयत्यलं स्वजनके जनसङ्घवृते कथाम् ।
सकललोकमनोनयनोत्सवश्चतुरधीः स कदाचिदवाचयत् ॥ २८ ॥

कथयतामिति ॥ कदाचित् कथयतां पौराणिकानां प्रथमे प्रधाने । 'प्रथमः स्यात्प्रधानाद्यो'रिति हेमचन्द्रः । जनानां श्रोतॄणां जनानां संघेन समूहेन वृते परिवृते स्वजनके कथां पौराणिकभगवत्कथां कथयति सति सकललोकानां सकलजनानां मनांसि च नयनानि च तेषां उत्सव इव उत्सवो हृद्यः । चतुरा निपुणा धीर्यस्य स वासुदेवः अलं सम्यग् अवाचयत् वाचयामास ॥ २८ ॥

विविधशास्त्रिपदार्थनिवेदने लिकुचनाम्नि तदानुदितार्थके ।
किमिति तात तदर्थमवर्णयन् कथयसीति शनैरयमब्रवीत् ॥ २९ ॥

विविधेति ॥ तदा पुराणकथनावसरे विविधानां शाखिनां वृक्षाणां पदानां वाचकशब्दानां अर्थानां वाच्यार्थानां निवेदने ज्ञापने प्रस्तुते सतीति शेषः । लिकुच नाम्नि लिकुचाख्यपदे अनुदितोऽनुक्तः अर्थो वाच्यार्थो यस्य तस्मिन् सति अयं वाचको बालकः हे तात! तस्य लिकुचपदस्यार्थं अवर्णयन् अकथयन् त्वं किमिति कथयसि कथाः वदसि । कथ वाक्यप्रबन्धे लट् । इति शनैरब्रवीत् । ब्रूञ् व्यक्तायां वाचि लङ् ॥ २९ ॥

अवदतीति पितर्यपि चोदिते प्रतिबुभुत्सुषु तत्र जनेष्वपि ।
अयमुदीर्य तदर्थमवाप्तवान् परिषदो ह्यसमानसुमाननाम् ॥ ३० ॥

अवदतीति ॥ इति एवं चोदिते लिकुचपदार्थवर्णनाय प्रेरितेऽपि पितरि अवदति सति तदर्थमनुक्तवति तत्र सभायां जनेष्वपि प्रतिबुभुत्सुषु प्रतिबोद्धुमिच्छत्सु सत्सु अयं वासुदेवः तदर्थं लिकुचपदार्थं उदीर्य परिषदः सभायाः असमाना असदृशी या सुमानना पूजा तां अवाप्तवान् हि ॥ ३० ॥

बहुविधैश्चरितैरिति चारुभिः सकललोककुतूहलकारिणम् ।
द्विजवरेण वयस्युचिते स्थितं तमुपनेतुमनेन दधे मनः ॥ ३१ ॥

बहुविधैरिति ॥ अनेन द्विजवरेण भट्टेन इतीत्थं बहवो विधाः प्रकारा येषां तैः । चरितैश्चरित्रैः । सकललोकानां सकलजनानां कुतूहलमाश्चर्यं कर्तुं शीलमस्यास्तीति तं । उचिते वयसि उपनयनयोग्ये वयसि स्थितं, गर्भाष्टमं जन्माष्टमं वा संवत्सरं प्राप्तमिति भावः । तं स्वपुत्रं उपनेतुं उपनीतं कर्तुं मनो दधे धृतं ॥ ३१ ॥

समुचितग्रहयोगगुणान्वितं समवधार्य मुहूर्तमदूषणम् ।
प्रणयबन्धुरबान्धववानसौ द्विजकुलाकुलमुत्सवमातनोत् ॥ ३२ ॥

समुचितेति ॥ प्रणयेन स्वकृतस्नेहेन । बन्धुराः आत्मनि स्नेहबन्धयुक्ता यद्वा बन्धुरा रम्या नम्या वा । 'बन्धूरबन्धुरौ रम्ये नम्ये हंसेतु बन्धुर' इति रभसः । ये बान्धवा बन्धुसम्बन्धिनस्तेऽस्यसन्तीति तथोक्तः । असौ भट्टः समुचित उपनयनोचित यो

अविरलैर्गरलोष्मभिराकुलीकृतसमस्तजनो विचचार यः ।
क्वचिदमुं निजिघांसुरशान्तिमानुपससर्प स सर्पमयोऽसुरः ।। ३८ ।।

अविरलैरिति ।। अशान्तिमान् मन्त्रौषधादिभिरुपशमनरहितः यः सर्पस्वरूपः सर्पमयोऽसुरः । अविरलैर्निबिडै गरलानां विषाणां ऊष्मभिर्बाष्पैराकुलीकृतः भीषितः । समस्तजनो येन स लोके विचचार । स सर्पाकारासुर अमुं द्विजसुतं निजिघांसुः हन्तुमिच्छुः सन् । क्वचित् पाजकक्षेत्रप्रदेशे उपससर्प प्राप । सृप् लृगतौ लिट् ।।

त्वरितमुद्यतविस्तृतमस्तकः प्रतिददंश यदैनमविक्षतम् ।
प्रभुपदारुणचारुतरांगुलीविहृतिपिष्टतनुः प्रतताम सः ।। ३९ ।।

त्वरितमिति ।। स सर्पमयोऽसुरः त्वरितं शीघ्रं यथा भवति तथा । उद्यतं प्रभुपाददंशनायोन्नमितं विस्तृतमस्तकं विस्तृतफणो यस्य तथा सन् यदा अविक्षतं क्षतरहितमेनं वासुदेवं प्रतिददंश । दशि दंशने लिट् । तदा प्रभोः पदस्य पादस्य अरुणा रक्ता चारुतरा अतिसुन्दरा या अंगुली तस्या विहृत्या लीलया पिष्टा चूर्णिता तनुः शरीरं यस्य तथा सन् प्रतताम श्रान्तोऽभूत् । तमु ग्लानौ लिट् ।। ३९ ।।

गरुडतुण्डमिव प्रतिपन्नवान्द्विजकुमारपदं स ममार च ।
समुचितं चरितं महतामिदं सुमनसो मनसेष्टमपूजयन् ।। ४० ।।

गरुडतुण्डमिति ।। स सर्पः गरुडतुण्डमिव गरुडवदनमिव द्विजकुमारकस्य पदं पादं प्रतिपन्नवान् प्राप्तः सन् ममार च । तदा सुमनसो देवा महतां समुचितं युक्तं इष्टं दुष्टनिग्रहरूपत्वात्स्वतामभीष्टं इदं विचरितं कर्म मनसा अपूजयन् सम्भावयाञ्चक्रुः । पूज पूजायां लङ् ।। ४० ।।

गिरिशगुर्वमरेन्द्रमुखैश्च यच्चरणरेणुरधारि सुरार्थिभिः ।
शिवसुरांघ्र्यभिवन्दनपूर्वकं स विदधेऽध्ययनं छलमानुषः ।। ४१ ।।

गिरिशेति ।। यस्य चरणौ पादौ तयोरेणुः रजः । 'रेणुर्द्वयोस्त्रियां धूलिः' इत्यमरः । गिरौ कैलासे शेत इति गिरिशः । गिरौ शेतेर्डः इति डः । स च गुरुर्बृहस्पतिश्च,

सुरेन्द्रश्च, ते मुखानि मुख्या येषां तैः सुराधिपैः सुरेश्वरैः अधारि धृतं । धृ धारणे लुङ् । स छलमानुषो व्याजेन मानुषः क्षितिसुरस्य भूदेवस्य अंघ्र्योः पादयोरभिवन्दनं नमनं पूर्वकं यथा भवति तथा अध्ययनं वेदाध्ययनं विदधे चक्रे ॥ ४१ ॥

करतले खलु कन्दुकवत्सदा सकलया कलया सह विद्यया ।
अरिधरेण समं स्फुरितं गुरोर्मनसि तस्य विडम्बयता जनान् ॥ ४२ ॥

करतल इति ॥ जनान् अज्ञजनान् विडम्बयतोऽनुकुर्वतो गुरोः सकलजगद्गुरोः तस्य मनसि सकलया समस्तया विद्यया वेदादिरूपया कलया इतरकलाविद्यया च सह करतले हस्ततले कन्दुकवत् अरिधरेण चक्रधरेण सकलविद्याप्रतिपाद्येन हरिणा समं सह स्फुरितं विलसितं खलु । इतरकलाविद्याभिः सह सकलवेदादिविद्याः । तत्प्रतिपाद्यं भगवन्तं च । सदा करतलामलकवज्जानात्येव । तथापि अज्ञजनव्यामोहनाय अध्ययनं विदध इति भावः ॥ ४२ ॥

अनधिकैरधिकैश्च वयस्यथो बहुभिरध्ययनोपरमान्तरं ।
अनिकटे बटुभिः पटुभिर्गुरोः स विजहार सुर्वा सखिभिः समम् ॥ ४३ ॥

अनधिकैरिति ॥ अथो सुखमस्यास्तीति सुखी । स अध्ययनस्योपरमस्य समाप्तेरन्तरे मध्ये अध्ययनस्य समाप्तेर्मध्य इत्यर्थः । वयसि अधिका न भवन्तीत्यनधिकाः तैः । समानैरित्यर्थः । वयसिन्यूनैश्च, वयसि अधिकैश्च । बहुभिः पटुभिश्चतुरैः सखिभिर्बटुभिर्ब्रह्मचारिभिः समं सह गुरोरुपाध्यायस्य अनिकटे असमीपे दूर इत्यर्थः । विजहार ॥ ४३ ॥

पदमुदीर्य जवेन यियासितं द्रुतमखेष्वभवन्सपुरस्सरः ।
अयमयत्नतयेति न विस्मया ननु मनोजवजित्यवनोऽसकौ ॥ ४४ ॥

पदमिति ॥ सोऽयं जवेन वेगेन यातुमिष्टं यियासितं स्थानमुदीर्य, अवविलेन स्वप्रतिपन्नं स्थानं प्रति अभिद्रवणं कृत्वा यः प्रथमतः प्राप्नोति सोऽस्माम्वधिक इत्येवं नदेनं कृत्वेति भावः । द्रुता धावन्त ये सखायस्तेषु धावतां सखीनां मध्य इत्यर्थः ।

द्रुधातोरादिकर्मणिकर्तरि चेति कर्तरि क्तः । न विद्यते यत्नो यस्य तस्य भावस्तत्ता तया । आयासरहिततयेत्यर्थः । पुरः पुरतः सरतीति पुरःसरः । द्रुवद्भ्यः सखिभ्योऽतिशीघ्रमाद्रुत्य पुरोगन्ताभवदिति विस्मयः आश्चर्यं न । कुत इत्यत आह—नन्विति । असकौ असौ । 'अव्ययसर्वनाम्नामकच् प्राक् टे'रित्यकच् प्रत्ययः । मनसो जवं वेगं जयतीति स चासौ पवनश्च वायुश्च ननु । मनोजवापेक्षयाप्यतिवेगवत्पवनावतारत्वादस्य नैतच्चित्रमिति भावः ॥ ४४ ॥

प्लवनतेजसि हन्त न केवलं विजितवान् स तदा सकलाञ्जनान् ।
प्रभुनिदेशकरो हनुमत्तनौ ननु जिगाय स वालिसुतादिकान् ॥ ४५ ॥

प्लवनेति ॥ स प्लवनतेजसि लङ्घनसामर्थ्ये । 'तेजो बले प्रभावे च' इति वैजयन्ती । सकलान् जनान् न केवलं तदा द्विजकुमारत्वेन जितवान् । किन्तु हनुमत्तनौ हनुमच्छरीरे हनुमदवतार इत्यर्थः । प्रभोः श्रीरामस्य निदेशः आज्ञा तं । 'निदेशः शासनं च सः' इत्यमरः । करोतीति तादृशः । वालिनः सुतोऽङ्गद आदिर्येषां तान् कपीन्द्रान् समुद्रतरणादौ जिगाय ननु ॥ ४५ ॥

जलविहारपराजयिभिः स्पृधा सखिभिरीरितवारिपरिश्रितम् ।
वदनमाकुललोचनमादधे स्मितममुष्य हि कश्चन विभ्रमम् ॥ ४६ ॥

जलविहारेति ॥ जलविहारे जलक्रीडायां पराजयः पराभव एषामस्तीति तैः । सखिभिर्वयस्यैः । स्पृधा स्पर्धया ईरितानि अञ्जलिभिः क्षिप्तानि यानि वारीणि तैः । परिश्रितं परितः श्रितं । अत एव आकुले कलुषीकृते लोचने यस्य तत् स्मितं विकसितं अमुष्य वदनं मुखं कश्चन यत्किञ्चित् विभ्रमं शोभाविशेषं । 'विभ्रमः संशये भ्रान्तौ शोभायाञ्चे'ति वैजयन्ती । आदधे दध्रे ॥ ४६ ॥

स शनकैर्वलिनो युगपद्गतान्प्रविहृतेषु सर्वान्निरपातयत् ।
अशनकैर्युगपत्प्रकृताहवान्सहसितो द्विजसूनुरयत्नवान् ॥ ४७ ॥

स इति ॥ हसितेन मन्दहासेन सहितः सहसितः । स द्विजसूनुः प्रविहृतेषु प्रविहारेषु । 'नपुंसके भावे क्त' इति क्तः । क्रीडास्वित्यर्थः । युगपन्नभवतीत्ययुगपन्

पृथगित्यर्थः । गतान् आत्मानं पातयितुमागतान । प्रकृतः प्रकर्षेण कृत आहवः क्रीडायुद्धं यैस्तान् । उपक्रान्तक्रीडान् बलिनः सर्वान् शनकैः शनैरेव निरपातयत पातयामास । अथ युगपदागतान् प्रकृताहवान् सर्वान् शनकैर्नभवतीत्यशनकैराग्रु यत्नाभावोऽयत्नः सोऽस्यास्तीत्ययत्नवान् । यत्नवान्नभवतीत्ययत्नवानिति वा । आयास-रहितः मन्नित्यर्थः । निरपातयत् । अत एव सहसिन इत्युक्तम् ॥ ४७ ॥

ग्रहणनिग्रहणे ग्रहणे दृढे गुरुभरोद्धरणादिविधौ पटौ ।
इह विभावुपचारधिया नृणामृतमयं ननु भीम इतीरितम् ॥ ४८ ॥

ग्रहणेति ॥ ग्रहणस्य अन्येनकृतस्यहस्तादिग्रहणस्य निग्रहणे विमोचने । दृढे मोचयितुमशक्ये ग्रहणे स्वकर्तृकान्यहस्तादिग्रहणे च । गुरुर्महान् भरो भारस्तस्य । उद्धरणमुद्धृतिः । तदादिर्यस्य तस्य विधौ व्यापारे पटौ चतुरे । इह विभौ उपचारा च सा धीश्च तया सिंहो देवदत्त इत्युपचारबुद्ध्यापि । अयं भीम इति नृणामीरितं वचनं ऋतं सत्यं ननु । अयं भावः । आत्मानं कश्चिद्धस्तादौ गृह्णाति चेत् आशु मोचयति, स्वयमन्यहस्तं गृह्णाति चेन्नकश्चिन्मोचयति, अतिगुरुपाषाणादिकमप्ययत्नेनोद्धरति । एवं विधमेनं जनः अयं साक्षाद्भीम इत्युपचारबुद्ध्यापि यदुवाच तत्सत्यमेव वस्तुगत्याऽस्यैव भीमत्वादिति ॥ ४८ ॥

विहरतीति पठत्यपि न स्फुटं स्वगृहगामिनि चाद्रुतमायति ।
परितुतोष न तत्र जगद्गुरौ स किल पूगवनान्वयजो द्विजः ॥ ४९ ॥

विहरतीति ॥ इति उक्तप्रकारेण विहरति क्रीडां कुर्वेति स्फुटं सम्यग् पठतीति पठन् तस्मिन् पठति न, वेदपाठं सम्यगकुर्वाणेऽपि स्वस्यगृहं स्वगृहं । तद्गन्तुं शीलमस्यस्तीति तस्मिन् । भोजनादिकमुद्दिश्य स्वमन्दिरगमनशीलस्येत्यर्थः । द्रुतं न भवतीत्यद्रुतं शनै. एतीत्यायन् तस्मिन् आयति आगच्छति । तत्र तस्मिन् जगद्गुरौ वासुदेवाह्वये 'पूगवना'ख्योऽन्वयो वंशस्तस्मिन् जातः । 'तोटन्तिल्लाय' इत्यपभ्रष्टभाषा-प्रसिद्धवंशज इत्यर्थः । स द्विजः उपाध्यायो न परितुतोष किल । किल ऐतिह्ये ॥

अथ कदाचन सोऽध्ययनान्तरे तमवदत्कुपितोऽन्यमनस्विनम् ।
पठसि नो शठ ते सखिभिः समं किमिति नित्यमुदासितधीरिति ॥ ५० ॥

**अथेति** ॥ कदाचन कुपितः क्रुद्धः स द्विजः अध्ययनान्तरेऽध्ययनमध्ये अन्यस्मिन् मनोऽस्यास्तीत्यन्यमनस्वी तं । अध्ययनादन्यविषयमानसमित्यर्थः । तं वासुदेवं हे शठ व्याजिन्! यद्वा शठ! गुणैः श्लाघ्य! 'शठ श्लाघायामि'ति धातोः। ते सखिभिः समं सह किमिति किमर्थं एवं न पठसि? नित्यं सदा । 'नित्यानवरताजस्रमि'त्यमरः । उदासिता उदासीना धीर्बुद्धिर्यस्य तादृशः । किमिति वर्तसे इति शेषः इत्यवदत् ॥

गुणनिका चरणादिकगोचरा न मम हृद्यितेत्युदितेऽमुना ।
वद विशारदवाद यथेप्सितं त्वमुपरीत्यवदद्धरणीसुरः ॥ ५१ ॥

**गुणनिकेति** ॥ चरणः पाद आदिर्यस्य स चरणादिकः । सगोचरो विषयो यस्याः सा, पादार्धर्चादिविषयेत्यर्थः । गुणनिका गुणनं पुनःपुनरुच्चारणमिति यावत् । मम हृद्यिता हृदः मनसो दयिता प्रिया, न भवति इति वचसि अमुना वासुदेवेनोदिते सति स धरणीसुरः ब्राह्मणो विशारदो विद्वान् तद्वद्वदतीति विशारदवादस्तत्सम्बुद्धिः । विशारदो विचक्षणश्च मेधावी'ति हलः । त्वं उपरि इदानीं पठ्यमानाद्वर्गादुपरि ईप्सितमनतिक्रम्य यथेप्सितं यथेष्टं वद ब्रूहि इत्यवदत् । पादादिगुणनं तव प्रियं नचेदित उपरि वर्गश संहितां, पदं, क्रमं वा अन्यद्वा यथेप्सितं वदेत्युपाध्यायोऽवददिति भावः ॥ ५१ ॥

सकललक्षणशिक्षणमूलभूः श्रुतिसमामननं स्खलनोज्झितम् ।
न खलु केवलमस्य गुरोर्व्यधात्सुमनसामपि तत्र कुतूहलम् ॥ ५२ ॥

**सकलेति** ॥ सकलानि यानि लक्षणानि वेदोच्चारणलक्षणानि तेषां यच्छिक्षणं तस्य मूलभूता भूमिः उत्पत्तिकारणस्थानभूतं स्खलनोज्झितं स्खलनरहितं अस्य वासुदेवस्य श्रुतीनां समामननं वर्गश उच्चारणं केवलं गुरोरुपाध्यायस्य कुतूहलं कुतुकं न व्यधात् न चकार । किन्नाम तत्र तस्मिन् समाजे सुमनसामपि देवानामपि कुतूहलं व्यधाच्चकार ॥ ५२ ॥

प्रियवयस्यशिरोगुरुवेदनामशमयन् सहजामपि दुःसहाम् ।
स विपिने विजने मुखवायुना श्रवणगोचरितेन कदाचन ॥ ५३ ॥

**प्रियेति** ॥ स वासुदेवः कदाचन विगता जना यस्मिन् तस्मिन् विपिने अरण्ये प्रियवयस्येन सह वर्तमानः सन्निति शेषः । सोढुमशक्यां दुःसहां सहजाता सहजा तामपि जन्मप्रभृतिवर्तमानामपीत्यर्थः । तदानीमाविर्भूतां प्रियवयस्यस्य प्रियसखस्य शिरसो गुर्वी महतीं वेदनां श्रवणे श्रोत्ररन्ध्रे गोचरितेन विषयीकृतेन विहितेनेति यावत् । मुखवायुना स्ववदनपवनेन अशमयत् शान्तामकरोत् । शम उपशमे लङ् । वयस्यो गुरुपुत्र इति प्रथा ॥ ५३ ॥

अधिगतोपनिषच्च सकृच्छ्रुता प्रकटभागवतीति न विस्मयः ।
अधिगता ननु जात्वपि नश्रुताः प्रतिभया श्रुतयः शतशोऽमुना ॥ ५४ ॥

**अधिगतेति** ॥ अमुना वासुदेवेन सकृत् एकदा श्रुता भगवतः सम्बन्धिनी भागवती प्रकटं स्पष्टं यथा भवति तथा भागवती प्रकटभागवती प्रकटं भगवत्स्वरूप-प्रतिपादिकेति भावः । उपनिषच्च श्रीमन्महैतरेयोपनिषदपि अधिगता ज्ञातेति विस्मयो न । उपाध्यायेन मूलादारभ्यापरिसमाप्तेः सकृन्निगदितोपनिषदनेन ज्ञाते-त्याश्चर्यं न भवतीति भावः । कुत इत्यत आह—अधिगतेति । जात्वपि कदाचिदपि श्रुता नभवन्तीति नश्रुताः । शतानीति शतशः शतसंख्याका इत्यर्थः । श्रुतयो वेदाः । प्रतिभया स्वरूपप्रज्ञया अधिगता ननु ज्ञाता हि । अश्रुतप्रतिबोद्धुरस्य न श्रुताधिगमो विस्मय इति भावः ॥ ५४ ॥

साक्षादपोपनिषदो विभुरैतरेय्याः पाठच्छलेन विजनेऽर्थरसान्ब्रुवाणः ।
अध्यापकाय विततार विमोक्षबीजं गोविंदभक्तिमुचितां गुरुदक्षिणां सः ॥५५॥

**साक्षादिति** ॥ अथ स विभुः विगता जना यस्मात्तस्मिन् एकान्तप्रदेश इत्यर्थः । इतरया इतरादेव्या अपत्यं पुमानैतरेयो महिदासाभिधो हरिः, तेन दृष्टा ऐतरेयी तस्या उपनिषदः । पाठच्छलेन पाठव्याजेन अध्यापकाय । साक्षात् स्पष्टं । 'साक्षात्प्रत्य-

क्षतुल्ययोः इत्यमरः । अर्थरसान् अर्थश्रेष्ठान् । 'रसः सारो वरश्चेति शब्दा एकार्थवाचका' इत्युक्तेः । ब्रुवाणः सन् उचितामुपाध्यायस्य योग्यां विमोक्षबीजं मोक्षकारणं। 'हेतुर्ना कारणं बीजं' इत्यमरः । गोविन्दभक्तिं गुरुदक्षिणां उपाध्यायदक्षिणां वितनन् ददौ । श्रीमन्महैतरेयोपनिषदर्थकथनेन तस्य योग्यतानुसारेण श्रीविष्णुभक्तिमुपाध्यायस्योत्पादितवान् । सैव तस्य गुरुदक्षिणाभूदिति भावः । वसंततिलकावृत्तम् ॥

अयि स्वामिन् दुष्टान्दमय दमय व्यक्तमचिरान्
गुणान् गूढान्विष्णोः कथय कथय स्वान् प्रमदयन् ।
तदानन्दं तन्वन्निति सुमनसां साऽनुसरता-
मनुज्ञामादत्त त्रिभुवनगुरुर्ब्राह्मणगुरोः ॥ ५६ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के तृतीयः सर्गः ॥

**अयीति** ॥ अयीत्यव्ययं प्रार्थनावाचकं । स्वामिन्! नाथ! दुष्टान् दुर्जनान् दमय दमय निराकुरु निराकुरु । दमु दान्तौ लोट् । हे स्वामिन्! स्वान् स्वकीयान् सज्जनान् प्रमदयन् सन्तोषयन् सन् गूढान् विष्णोर्निर्गुणत्वादिभिर्निगूहितान् विष्णोर्गुणान् । अचिरात् शीघ्रं । व्यक्तं स्पष्टं यथा भवति तथा । कथय कथय । अत्र सर्वत्र द्विर्वचनमादरद्योतकं । इति इत्थं अनुसरतां अनुवृत्तिं कुर्वतां सुमनसां देवानां आनन्दं तन्वन् स त्रीणि भुवनानि समाहृतानि त्रिभुवनम् । तस्य गुरुः श्रीवासुदेवः ब्राह्मणगुरोरुपाध्यायात् अनुज्ञां आदत्त स्वीकृतवान् । शिखरिणीवृत्तम् । 'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् ॥ ५६ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीमत्सुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां तृतीयः सर्गः ॥



**अथैष सल्लोकदयासुधार्द्रया सदागमस्तेननिरासकामया ।**
**रमावरावासभुवा विशारदो विशाल्ययाचिन्तयदात्मनो धिया ॥ १ ॥**

**अथेति** ॥ अथ गुरुकुलवासानन्तरं विशारदो विचक्षणः एष वासुदेवनामा सन्तश्च ते लोकाश्च सल्लोकाः सज्जनाः । 'लोकस्तु भुवने जने' इत्यमरः । तेषु या दया सैव सुधा तया आर्द्रया क्लिन्नया अकठिनयेति भावः । सन्तश्चते आगमाश्च सदागमा वेदाद्यास्तेषां स्तेनस्तस्करः सङ्करस्तस्य निरासे निरसने काम इच्छा यस्या-स्तया । रमाया वरस्य भर्तुः श्रीहरेः आवासस्य निवासस्य भूः स्थानं तया । 'भूः पृथिव्यां स्थानमात्र' इति विश्वः । विशालया आत्मनो धिया बुद्ध्या अचिन्तयत विचारयामास । चिति स्मृत्यां लङ् । अस्मिन् सर्गे प्रायः वंशस्थवृत्तम् । 'जतौनु-वंशस्थमुदीरितं जराविं'ति तल्लक्षणात ॥ १ ॥

**अनन्यसङ्गाद्गुणसङ्गिता हरेर्जनस्य मानं तु विशिष्टचेष्टितम् ।**
**असङ्गमस्मात्प्रकटीकरोम्यहं निजं भजन् पारमहंस्यमाश्रमम् ॥ २ ॥**

विचारप्रकारमेव विवृणोति—

**अनन्येति** ॥ अन्येषां भगवदितरवस्तूनां सङ्गः संसर्गः अन्यसङ्गः । स न भव-तीत्यनन्यसङ्गस्तस्मात् भगवदितरवैषयिकवस्तुष्वासक्तिराहित्यादित्यर्थः । हरेर्गुणानां सङ्गोऽस्यास्तीति गुणसङ्गी । तस्य भावस्तत्ता श्रीहरिगुणश्रवणमननादिष्वादरवत्व-मित्यर्थः । घटत इति शेषः । जनस्य विशिष्टचेष्टितं तु विशिष्टानामुत्तमानामाचरणमेव मानं प्रमाणं । विशिष्टाचरणमेव प्रमाणीकृत्येतरजनाः प्रवर्तन्त इति भाव. । 'यद्यदा-चरति श्रेष्ठ' इति वचनात् । अस्मात् कारणात् विशिष्टाचरणस्य प्रमाणत्वादिति यावत् । अहं परमहंसानां सम्बन्धी पारमहंस्यस्तं आश्रमं यत्याश्रममित्यर्थः । 'आश्रमोऽस्त्री मुनिस्थाने ब्रह्मचर्यादिके मठे' इति वैजयन्ती । भजन् सन् निजं मम स्वभावभूतं न विद्यते सङ्गो यस्य सोऽसङ्गस्तं । भावप्रधानो निर्देशः । असङ्गत्वमिति यावत् । सङ्गाभावोऽसङ्गस्तमिति वा । प्रकटीकरोमि सर्वेषां प्रदर्शयामि ॥ २ ॥

**मम प्रभोर्नापरथा हि शोभते द्विषत्सु विष्णुं यददण्डधारणम् ।**
**हरिस्वसा नन्वचिरादसच्छिदे भवेदता नास्मि च दण्डधारकः ॥ ३ ॥**

**ममेति** ॥ विष्णुं द्विषत्सु मायिप्रभृतिषु वादिषु यत् दण्डस्य, नैर्गुण्यवादित्वेन हरिद्वेषिणां मायिप्रभृतीनां जिह्वोच्छेदादिलक्षणशिक्षायाः, धारणं दण्डधारणं तस्याभावोऽदण्डधारणम् । 'दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे दमे' इति वैजयन्ती । तत् प्रभोः भगवद्द्वेषिषु दण्डधारणसमर्थस्य मम अपरथा यत्याश्रमस्वीकारं विना न शोभते । शुभ दीप्तौ लट् । तर्हि क्रियतां दण्डधारणं किमिति पारमहंस्यमाश्रीयत इत्यत आह—हरिस्वसेति । हरिस्वसा श्रीकृष्णभगिनी दुर्गा । असच्छिदे असतां निराशाय अचिराच्छीघ्रं भवेत् । असतारं कुर्यात् । अतस्तया दुर्गया असद्दण्डनस्य करिष्यमाणत्वात् अहं च दण्डधारको नास्मि । अयं भावः । श्रीहरिद्वेषिणां देहादिदण्डनं कार्यमेव समर्थेन । तदप्यचिराद् दुर्गया करिष्यते तस्मादस्मिन्नवसरे नाहं करोमि । तस्माद्दण्डधारणायोग्यं यत्याश्रममेव स्वीकरोमीति ॥ ३ ॥

**विचिन्तयन्नित्थमनन्तचिन्तकः समस्तसंन्यासनिबद्धनिश्चयः ।**
**असावनुज्ञार्थमथानमद्धरिं समस्तसंव्यापिनमात्मदायगम् ॥ ४ ॥**

**विचिन्तयन्निति** ॥ अनन्तचिन्तकः भगवतश्चिन्तानिरतः असौ । इत्थं विचिन्तयन् सन् अथ समस्तस्य गृहक्षेत्रादेः संन्यासे परित्यागे निबद्धो निरूढो निश्चयो यस्य तादृशः सन् । अनुज्ञार्थं गन्तुमनुज्ञां स्वीकर्तुं समस्तं जगत् संव्याप्तुं सम्यग् व्याप्तुं शीलमस्यास्तीति तं । आत्मनः स्वस्य दायः गृहक्षेत्रादिस्तं गच्छतीति तादृशम्तं हरिं अनमत् ॥ ४ ॥

**निजे जने किं नमसीति पृच्छति ब्रुवन् स्वदस्तुप्रणतिं व्यथामिति ।**
**गुणैः किलान्वेषणवाञ्जगद्गुरुस्तदा जगामाखिलकार्यशिक्षकः ॥ ५ ॥**

**निजेति** ॥ तदा नमस्कारकाले निजे स्वकीये पित्रादौ जने किं किमर्थं नमसि नमस्कारं करोषि इति पृच्छति सति. तं जनं प्रतीति शेषः । स्वस्य वस्तु स्ववस्तु

स्वस्वामिभूतं विष्ण्वाख्यं वस्त्वित्यर्थः । तस्मै प्रणतिं नमस्कारं व्यधां अकरवम् इति ब्रुवन् वदन् । स्वभावतस्तद्वस्त्वन्तर्गत भगवन्नमस्कारं कृत्वापि अमुख्यया वृत्त्या वस्तुशब्देन धनक्षेत्रादीतरपदार्थस्यापि वाच्यत्वात्तत्प्रणतिं व्यधामिति पृच्छतामुत्तरं दत्त्वेत्यर्थः । जगद्गुरुः सकलजगतां गुरुरपि अखिललोकानां समस्तजनानां शिक्षकः । न गुरोरन्वेषणवान् विचारवान् सन् जगाम किल । किलेत्यपरमार्थे । भगवदितरस्य नरस्याप्ययं गुरुस्तस्मादस्य गुर्वन्वेषणं लोकविडम्बनार्थमिति सूचयति किल शब्देन । अयं भावः, अज्ञस्य हि गुर्वपेक्षा न चायमज्ञस्तथापि ज्ञानिनां देवानां नानुषादिजन्मसु स्वज्ञानादिगुणानप्रकाश्य अज्ञवच्छ्रवणादिकं कर्तव्यमिति लोकशिक्षणार्थमेव गुर्वन्वेषणार्थं जगामेति । तच्चोक्तं 'धर्मो हि सर्वविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः । ज्ञानादिगूहनमुताध्ययनादिरत्र' इति ॥ ५ ॥

**यतिर्यतात्मा भुवि कश्चनाभवद्विभूषणो भूरिविरक्तिभूषणः ।**
**न नाममात्राच्छुचिमर्थतोऽपि यं जनोऽच्युतप्रेक्षमुदाहरत्स्फुटम् ॥ ६ ॥**

यतिरिति ॥ जनः शुचिं वाङ्मनःकायैः शुद्धं यं यतिं, केवलं नाम नाममात्रं तस्मात् । डित्थादिवन्नाममात्रेणेत्यर्थः । अच्युतप्रेक्षं अच्युतप्रेक्षनामानं नोदाहरत् न प्रोक्तवान् । किन्तु स्फुटं सम्यग् अर्थतोऽपि, अच्युतस्य प्रेक्षा ज्ञानं यस्य सोऽच्युतप्रेक्ष इति व्युत्पत्त्या भगवज्ज्ञानवत्त्वलक्षणशब्दप्रवृत्तिनिमित्तादपीत्यर्थः । 'प्रेक्षोपलब्धिश्चित्संविदि'त्यमरः । अच्युतप्रेक्षमुदाहरत् । तादृशो यतिर्यतो नियत आत्मा मनो यस्य तादृशः, विगतानि भूषणानि आभरणानि यस्य तादृशः । भूरिर्बहुः या विरक्तिः सैव भूषणमलङ्कारो यस्य तादृशः । यत्याश्रमभूषणभूतविषयविरक्तिमानित्यर्थः । कश्चन यतिस्तस्मिन्काले‌ऽभवत् ॥ ६ ॥

**पुरैष कृष्णाकरसिद्धशुद्धिमद्वरान्नभुक्त्या किल पाण्डवालये ।**
**विशोधितात्मा मधुकृत्प्रवृत्तिमांश्चचार कांश्चिन् परिवत्सरान् मुदा ॥ ७ ॥**

पुरेति ॥ एषोऽच्युतप्रेक्षः पुरा पूर्वजन्मनि यतिः सन् मधुकरोतीति मधुकृत्तस्य प्रवृत्तिः । ततस्ततो गत्वा पुष्परसादानलक्षणव्यापारः, सा अस्यास्तीति तादृशः ।

मधुकरवत्तत्रतत्र भिक्षाटनलक्षणमाधूकरव्रतनियतः सन्नित्यर्थः । कृष्णाया द्रौपद्याः करेण सिद्धं निष्पन्नं अत एव शुद्धिमत् वरान्नं उत्तमान्नं तस्य भुक्त्या भोजनेन विशोधितो निर्मलीकृत आत्मा मनो यस्य तादृशः सन् । 'अन्नमशितं त्रेधा विधीयते' इति श्रुतेः, उपभुक्तस्यान्नस्यान्तःकरणपरिणामहेतुत्वादिति भावः । पाण्डवानामालयो मन्दिरं यस्मिन् तस्मिन् पाण्डवानां हस्तिनपुरादिदेश इत्यर्थः । पाण्डवानामालये इति वा योजना । कांश्चित्परिवत्सरान् संवत्सरान् मुदा प्रीत्या चचार सञ्चचार । किलेति, ऐतिह्ये ॥ ७ ॥

**अभूत्कुशास्त्राभ्यसनं न पातकं क्रमागताद्विप्रतिसारतो यतेः ।**
**यथा कुशस्त्राभ्यसनं मुरद्विषः पदाम्बुजे व्याधवरस्य गर्हितम् ॥ ८ ॥**

**अभूदिति** ॥ यतेः अच्युतप्रेक्षस्य क्रमेणागतात् क्रमप्राप्तात् श्रीमध्वशास्त्रश्रवणानन्तरमुत्पन्नादित्यर्थः । विप्रतिसारादिति विप्रतिसारतः पश्चात्तापादित्यर्थः । 'पश्चात्तापोऽनुतापस्याद्विप्रतीसार इत्यपि' इत्यमरः । कुशास्त्रस्य कुत्सितमायिशास्त्रस्य अभ्यसनं श्रवणादिरूपाभ्यासः पातकं अधःपातकारणं नाभूत् । पश्चात्तापात्पातकिनामपि पापनिवृत्तिसंभवादिति भावः । तत्र दृष्टान्तमाह— यथेति । मुरद्विषः श्रीकृष्णस्य पदाम्बुजे व्याधवरस्य जराव्याधनाम्नो व्याधश्रेष्ठस्य । कुत्सितं च तत् शस्त्राभ्यसनं च कुशस्त्राभ्यसनं यथा तद्वत्, श्रीकृष्णस्य स्वलोकारोहणकाले जराव्याधेन भ्रान्त्या कृतं बाणेन श्रीकृष्णपादतले ताडनं, तस्य अयं श्रीकृष्ण इति ज्ञानानन्तरं पश्चात्तापेन नरकसाधनं न जातम् । तद्वन्मायिशास्त्रादिकुशास्त्रश्रवणमप्यस्य पश्चात्तापान्नरकप्राप्तिसाधनं नाभूदिति भाव. ॥ ८ ॥

**विनीतमाम्नायशिरोविशारदं सदैव तत्त्वं प्रबुभुत्सुपादरात् ।**
**गुरुर्विदित्वोपगतां निजां मृतिं कदाचिदूचे तमुपह्वरे गिरम् ॥ ९ ॥**

**विनीतमिति** ॥ गुरुः अच्युतप्रेक्षाचार्यः कदाचित् निजां मृतिं मरणं उपगतां समीपगतां विदित्वा विनीतं विनयोपेतं । आम्नायानां वेदानां शिरांसीव आम्नायशिरांसि उपनिषदः तेषु विशारदं विचारविचक्षणं सदा तत्त्वं भगवत्तत्त्वमेव । आदर आसक्तिस्तस्मात्

प्रकर्षेण याथार्थ्येन बोद्धुमिच्छुं प्रभुभक्तं तं शिष्यं उपह्वरे एकान्ते । 'रहः प्रच्छन्न-मेकान्तनिःशब्दकमुपह्वरम्' इति हलः । गिरं वाचमूचे उवाच ॥ ९ ॥

**अहं स्वयं ब्रह्म न किञ्चिदस्ति मत्परं विजृम्भेत यदा स्फुटं चितिः ।**
**इतीह मायासमयोपपादितं निरन्वयं सुव्रत मा स्म विश्वसीः ॥ १० ॥**

वचनप्रकारमेव दर्शयति—

**अहमिति** ॥ सु शोभनं व्रतं यस्य तत्सम्बुद्धिः । हे सुव्रत! अहं स्वयं साक्षात् ब्रह्म परब्रह्म इति चितिः ज्ञानं यदा स्फुटं सम्यग् विजृम्भेत परिपक्वं भवेत् । 'जृभि गात्र विनामे' । तदा मत् मत्तः परं व्यतिरिक्तं किञ्चिद्वस्तु नास्ति, इति इह तत्वविषये मायाकल्पितं ब्रह्मव्यतिरिक्तमिति समयः सिद्धान्तः- मायासमयः मायावादिशास्त्र-मित्यर्थः । तस्मिन् 'समयस्तु क्रियाकारे सङ्केते चरिते सतां । सिद्धान्ते शपथे काल' इति वैजयन्ती । उपपादितं समर्थितं प्रमेयमिति शेषः । यतः निर्गता अन्वया उपपत्त्यादिलिङ्गानि यस्मात्तं निरन्वयं युक्तिशून्यमित्यर्थः । तस्मात् इह अस्मिन् प्रमेये मास्मविश्वसीः विश्वासं मा कार्षीः । श्वस प्राणने लुङ् । नमाङ्योगे इत्यड भावः । अत्र विश्वासकरणे हेतुत्वेन निरन्वयमिति हेतुगर्भं विशेषणं प्रयुक्तं तथा च युक्तिशून्यत्वाद्विश्वासो न कार्य इति भावः ॥ १० ॥

**यदेतदात्मैक्यमुपास्तिचोदितं न मे गुरोरप्यपरोक्षतां गतम् ।**
**पुरातनानामपि सौम्य कुत्रचित्ततो मुकुन्दं भज संविदे मुदा ॥ ११ ॥**

**यदिति** ॥ उपास्तये उपासनाय चोदितं मायिना प्रोक्तं यदात्मैक्यं चेतनानामैक्यं सर्वेषां चेतनानां ब्रह्मैक्यमिति भावः । एतत् मे गुरोरप्यपरोक्षतां प्रत्यक्षतां न गतम् न प्राप्तम् न केवलं मे गुरोरेव, किन्तु पुरातनानामपि मद्गुर्वपेक्षयापूर्वजानामपि कुत्रचित् अपरोक्षतां न गतं । हे सौम्य! शोभन! ततः आत्मैक्यस्य प्रत्यक्षागोचरत्वा-द्युक्त्यादिरहितत्वाच्च मुकुन्दं मोक्षप्रदं श्रीहरिं मुदा प्रसन्नबुद्ध्या संविदे तत्वज्ञानाय भज । तत्वज्ञानाय प्रार्थयन् सन् भजेति भावः ॥ ११ ॥

इतीदमादिश्य वचो वचस्विनि स्वके गुरौ लोकमथान्यमीयुषि ।
असेवतालोच्य मुहुर्गुरोर्गिरं स रूप्यपीठालयमिन्दिरावरम् ॥ १२ ॥

इतीति ॥ वचांस्यस्य सन्तीति वचस्वी तस्मिन् चतुरवचसीत्यर्थः । स्वके स्वस्य-न्यासिनि गुरौ इति इदं वचः, आदिश्योक्त्वा अन्यं परं लोकं ईयुषि सति गते सति अथ स अच्युतप्रेक्षः गुरोः स्वगुरोर्गिरं । 'अहं परब्रह्मेत्यारभ्य मुकुन्दं भज संविदं मुदा' इत्यन्तां वाचं मुहुः पुनः पुनः आलोच्य गुरूक्तप्रकारेण कुर्यां नवेति विचार्य अन्ततः करोमीत्येव निश्चित्य रूप्यपीठमालयो यस्य तं इन्दिरावरं रमापतिं श्रीमद-नन्तासनं असेवत । षेवृ सेवने लङ् ॥ १२ ॥

सुभक्तिना तेन स भक्तवत्सलो निषेवितस्तत्र परं बुभुत्सुना ।
भविष्यतः शिष्यवराद्धि विद्धि मामिति प्रविष्टः पुरुषं तमभ्यधात् ॥ १३ ॥

सुभक्तिनेति ॥ परं सर्वोत्तमं हरिं बोद्धुमिच्छुना बुभुत्सुना शोभनाभक्तिर्यस्य तेन सुभक्तिना अच्युतप्रेक्षेण तत्र रजतपीठपुरे निषेवितो नितरां सेवितः भक्तेषु वत्सलः स्निग्धः भक्तप्रिय इत्यर्थः । स हरिः कालान्तरे पुरुषं कञ्चन पुरुषं प्रविष्टः सन तं अच्युतप्रेक्षं प्रति भविष्यतः शिष्यवराच्छिष्यश्रेष्ठात् मां विद्धि जानीहि इति अभ्यधात् अब्रवीत् । तत्वजिज्ञासुना त्वया सेवितोऽहं परितुष्टोऽस्मि तस्मान्मत्प्रसादादेव तव शिष्यवरो भविष्यति तदुक्तप्रकारेण मां जानीहीत्यभ्यधादिति भावः ॥ १३ ॥

प्रतीक्षमाणं तमनुग्रहं मुदा निषेवमाणं पुनरम्बुजेक्षणम् ।
सतां गुरुः कारणमानुषाकृतिर्यतिं प्रशान्तं तमुपाससाद सः ॥ १४ ॥

प्रतीक्षमाणमिति ॥ सतां गुरुः कारणेन मतत्वज्ञानप्रवर्तनलक्षणनिमित्तेन मानुषाकृतिः मनुष्यस्वरूपं यस्य तादृशः । '...आकृतिस्तु जातौ रूपे वपुष्यपि' इति हेमचन्द्रः । स वासुदेवनामा, तं हरिकृतमनुग्रहं प्रतीक्षमाणं पुनः मुदा अम्बुरुहव-दीक्षणं दृष्टिर्यस्य तं हरिं निषेवमाणं नितरां सेवन्तं प्रशान्तं तं यतिं अच्युतप्रेक्षं उपाससाद । शिष्यभावमासुमुपजगाम ॥ १४ ॥

सुतं यतीन्द्रानुचरं विरागिणं निशम्य संन्यासनिबद्धमानसम् ।
सुवत्सलौ रूप्यतलालयस्थितं वियोगतान्तौ पितरौ समीयतुः ॥ १५ ॥

**सुतमिति** ॥ सुवत्सलौ सु सम्यक् वत्सलौ स्नेहयुक्तौ वियोगतान्तौ वियोगक्लिन्नौ तौ, माता च पिता च पितरौ । 'पितामात्रा' इत्येकशेषः । सुतं यतीन्द्रानुचरं अच्युतप्रेक्षशिष्यभूतं विरागोऽस्यास्तीति विरागी तं । संन्यासे निबद्धं निषण्णं मानसं मनो यस्य तं । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । रूप्यतले रूप्यपीठे य आलयो मन्दिरं तस्मिन् स्थितं निशम्य समीयतुः । सुतं द्रष्टुं संन्यासान्निवारयितुमप्यागतौ ॥

वराश्रमस्ते जरतोरनाथयोर्न जीवतोः स्यादयि नन्दनावयोः ।
सयाचनं वाक्यमुदीर्य ताविदं परीत्य पुत्राय नतिं वितेनतुः ॥ १६ ॥

**वरेति** ॥ तौ पितरौ अयि नन्दन! अयीत्यव्ययं प्रार्थने वर्तते । अयि सुत! जरतोः स्थविरयोः न विद्यते नाथः रक्षको ययोस्तयोः अन्तेवयसि त्वां विना पालक-रहितयोरित्यर्थः । आवयोर्जीवतोर्जीवनवतोः सतोः ते तव वराश्रमः उत्तमाश्रमः संन्यासाश्रम इत्यर्थः । नस्यान्नभवेत्, इति सयाचनं प्रार्थनया सहितमिदं वाक्यमुदीर्य परीत्य प्रदक्षिणीकृत्य पुत्राय नतिं नमस्कारं वितेनतुः प्रचक्रतुः ॥ १६ ॥

नतिर्न शुश्रूषुजनाय शस्यते नतं भवद्भ्यां स्फुटमत्र साम्प्रतम् ।
अहो विधात्रा स्वयमेव दापिता तदभ्यनुज्ञेति जगाद स प्रभुः ॥ १७ ॥

**नतिरिति** ॥ शुश्रूषुजनाय सेवकजनाय नतिर्नमस्कारः न शस्यते न प्रशस्यते । शसु इच्छायां । तथापि अत्र सेवके मयि साम्प्रतं इदानीं स्फुटं सर्वजनसमक्षं भवद्भ्यां नतं नमस्कृतं । तत एव विधात्रा सर्वप्रेरणादिकर्त्रा श्रीहरिणा स्वयमेव मत्प्रार्थनं विनैव तस्य यत्याश्रमस्य अभ्यनुज्ञा अनुज्ञा दापिता प्रदापिता । अहो आश्चर्यम् । प्रभुः स इति जगाद ऊचे । अयं भावः । उत्तमो नन्यो हीनो नेति विधिविहित-नियमः । तथा च भवद्भ्यां नत्या मम प्रकृतयत्याश्रमनिर्बन्धनादुत्तमत्वं भविष्यतीति विधिना सूचितम् । तस्माद्विधिनैवाभ्यनुज्ञातत्वान्मम यत्याश्रमोऽपरिहार्य इति ॥

अनुत्तरज्ञः स तमर्थयन् पुनर्यतीन्द्रमानम्य गतः प्रियायुतः ।
गृहे वसन् कल्पसमान् क्षणान्नयन् सुताननेन्दोरनिशं ततोऽस्मरत् ॥ १८ ॥

अनुत्तरेति ॥ ततः स मयगेहभट्टः उत्तरं प्रत्युत्तरं न जानातीत्यनुत्तरज्ञः, पुत्रोक्तवाक्यस्य प्रत्युत्तरं दातुमजानन्नित्यर्थः । प्रियायुतः भार्यायुतः सन् पुनस्त पुत्रमर्थयन् । अयि नन्दन! त्वया यत्याश्रमो न स्वीकर्तव्य इति प्रार्थयन् सन्, तं यतीन्द्रं यतिश्रेष्ठमच्युतप्रेक्षं आनम्य नत्वा, अस्मै यस्याश्रमो नदेय इति प्रार्थयन्निति वा योजना । गतः स्वमन्दिरं गतः । ततः स्वगृहप्राप्त्यनन्तरं गृहे मन्दिरे वसन् क्षणानेकैकक्षणमपि कल्पेन कल्पाख्यकालेन समान् सदृशान् नयन् गमयन् सन् अनिशं निरन्तरं सुताननेन्दोः सुतमुखचन्द्रस्य अस्मरत् । अत्र 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । इगर्थः स्मरणार्थः, इक् स्मरण इति धातोः । दुःखिनां क्षणोऽपि कल्पायते, सुखिनां कल्पोऽपि क्षणायत इति प्रसिद्धेः कल्पसमानित्युक्तम् ॥ १८ ॥

स चिन्तयन् पुत्रमनोरथं शुचा पुनश्च तीर्त्वोपगतो महानदीम् ।
व्रतीश्वरानुव्रतमात्मनन्दनं तमैक्षत ग्रामवरे मठान्तरे ॥ १९ ॥

स इति ॥ शुचा दुःखेन पुत्रस्य मनोरथः संन्यासग्रहणेच्छा तं । 'वाञ्छालिप्स' मनोरथः' इत्यमरः । चिन्तयन् स भट्टः पुनश्च महानदीं नेत्रावतीं तीर्त्वोपगतः स्वगृहात्पुत्रदर्शनार्थमागतः, ग्रामवरे ग्रामश्रेष्ठे 'कारेवूरु' इत्यपभ्रष्टनामकग्राम इत्यर्थः । अन्यो मठो मठान्तरं तस्मिन् 'कुत्याडि' इत्यपभ्रष्टनामकमठविशेष इत्यर्थः । व्रतीश्वरस्य अच्युप्रेक्षस्य अनुव्रतं अनुकूलव्रतं यस्य तं । 'पाराशरीव्रती भिक्षुः' इति हलः । आत्मनन्दनमैक्षत ॥ १९ ॥

सञ्जातकोपाकुलितो धरासुरो महात्मनां लङ्घनभीरुरप्यलम् ।
सुतस्य कौपीनधृतौ हि साहसप्रतिश्रवो मे दृढ इत्यभाषत ॥ २० ॥

सञ्जातेति ॥ स धरासुरो ब्राह्मणः अलं अतितरां महानात्मा परमात्मा येषां तेषां श्रीहरिभक्तानां लङ्घनभीरुरपि लङ्घनादतिक्रमात् भीरुर्भयशीलोऽपि सञ्जातः पुत्रः स्व-

वाक्यं न शृणोतीति सञ्जातः यः कोपः क्रोधः तेनाकुलितः क्षुब्धः सन्, सुतस्य मम पुत्रस्य कौपीनधृतिः कौपीनधारणं तस्यां सत्यां, संन्यासं गृहीत्वा कौपीनदण्डादिके धृते सतीत्यर्थः । मे मम । साहसप्रतिश्रवोऽनशनादिरूपं किञ्चित्साहसंकर्म कुर्यामिति साहसस्य प्रतिश्रवः प्रतिज्ञा, दृढः केनाप्यनिवर्त्य इत्यभाषत । अब्रवीत् ॥ २० ॥

क्षणेन कौपीनधरो निजं पटं विदार्य हे तात कुरुष्व साहसम् ।
इतीममुक्त्वा विभुरब्रवीत्पुनः शुभान्तरायं न भवांश्चरेदिति ॥ २१ ॥

**क्षणेनेति** ॥ प्रभुः समर्थः क्षणेन क्षणकालेन निजं पटं स्वकीयं पटं विदार्य कौपीनधरः सन्, हे तात! चिकीर्षितं साहसं कुरुष्वेति इमं तातं उक्त्वा, हे तात! भवान् विज्ञातभारतादिशास्त्रसारोऽपि शुभान्तरायं शुभस्यान्तरायं विघ्नं न करोतु इति पुनरब्रवीत् ॥ २१ ॥

न पुत्र पित्रोरवनं विना शुभं वदन्ति सन्तो ननु तौ मुतौ मृतौ ।
निवर्तमाने न हि पालकोऽस्ति नौ त्वयीति वक्तारममुं सुतोऽब्रवीत् ॥ २२ ॥

भट्टः पुत्रवचनं श्रुत्वा संन्यासस्य शुभत्वाभिप्रायेण भवान् शुभान्तरायं न चरेदिति यदुक्तं त्वया तदसत् । पुत्रस्य पितृशुश्रूषातिरिक्तस्य शुभस्याभावादित्याहेत्याह—

**नपुत्रेत्यादिना** ॥ हे पुत्र! सन्तः धर्मशास्त्रप्रवर्तका मन्वादयः सुतस्य पित्रोः मातापित्रोः अवनं शुश्रूषणादिरूपं रक्षणं विनान्यच्छुभं न वदन्ति । 'वृद्धौ च मातापितरौ सती भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा बोढव्या मनुरब्रवीत्' इति वचनात् । तस्मात्तव यत्याश्रमादपि स्थविरयोरावयोरवनमेव शुभं । न तत्रान्तरायः क्रियते । तस्मात्किमुच्यते त्वया शुभान्तरायं न चरेदिति, इति पितुरभिप्रायः । युवयोः पालकान्तराभावे मया सर्वथा भवच्छुश्रूषणमेवकार्यं सति चान्यस्मिन् पालके कथं युवयोरनाथत्वं? कथं च भवत्पालनमेव शुभम्? इति चेत्तत्राह—नन्विति । नौ तव भ्रातरौ मम मृतौ मृतौ ननु, त्वमपि जानासिहीत्यभिप्रायः । तस्मात्त्वयि निवर्तमाने सति निवृत्तिमार्गं यत्याश्रममङ्गीकुर्वति सति नौ आवयोः पालको रक्षको नास्ति हि । इति वक्तारममुं पितरं प्रति इदं वक्ष्यमाणं वचः सुतोऽब्रवीत् ॥ २२ ॥

यदा विरक्तः पुरुषः प्रजायते तदैव संन्यासविधिः श्रुतौ श्रुतः ।
न सङ्गहीनोऽपि परिव्रजामि वामहं तु शुश्रूषुमकल्पयन्निति ॥ २३ ॥

यदुक्तं वृद्धौ च मातापितरावित्यादि, नतत्सर्वाधिकारिकं किन्त्वविरक्तपुरुषविषयमेव न विरक्तपुरुषविषयकं, तथात्वे श्रुतिविरोधादित्याह—

यदेति ॥ पुरुषो यदा यस्मिन्काले विरक्तो विषयासक्तिरहितः प्रजायते तदैव तस्मिन्नेवकाले संन्यासविधिः सन्यासविधानं । 'विधिर्ब्रह्मविधानयो'रिति हेमचन्द्रः । श्रुतौ 'यदहरेव विरजेत् तदहरेव प्रव्रजेदि'त्यस्यां श्रुतौ श्रुतः प्रसिद्धः । तर्हि त्वयिनिवर्तमाने सत्यावयोः पालको नास्तीत्यस्योत्तरमाह- सङ्गहीनोपीति । अहं सङ्गहीनोऽपि विषयसङ्गरहितोऽपि वां युवयोः शुश्रूषुं सेवकमकल्पयन् सन् न परिव्रजामि । न संन्यासं गृह्णामि । इत्यब्रवीदिति पूर्वेणान्वयः ॥ २३ ॥

बहुश्रुतत्वाद्यदि तत्सहे बलान्न सा सवित्री विरहं सहेत ते ।
इति द्विजेनाभिहितेऽनमत्स तं भवाननुज्ञां प्रददात्विति ब्रुवन् ॥ २४ ॥

बह्विति ॥ यदि यद्यपि बहूनां बहुशास्त्राणां श्रुतं श्रवणं यस्य तस्य भावस्तत्वं तस्मात् बहुशास्त्रश्रवणबलेन विवेकित्वादित्यर्थः । बलात् धैर्यबलात् तत् तव परिव्रजनं सहे सोढुं समर्थः । षहमर्षणे । तथापि ते तव सा सवित्री सा माता ते विरहं वियोगं न सहेत । इति वचसि द्विजेन विप्रेण स्वपित्राभिहिते सति । सः, भवान् अनुज्ञां संन्यासाश्रमानुज्ञां प्रददातु प्रतिदिशतु, इति ब्रुवन्सन् तं पितरमनमत् ॥ २४ ॥

विचिन्त्य विद्वान् सनिरुत्तरीकृतस्तथास्तु मातानुवदेद्यदीति तम् ।
उदीर्य कृच्छ्रादुपगम्य मन्दिरं प्रियासकाशे तमुदन्तमब्रवीत् ॥ २५ ॥

विचिन्त्येति ॥ एवं न विद्यते उत्तरं यस्य स निरुत्तरः । अनिरुत्तरो निरुत्तरः कृत निरुत्तरीकृतः प्रत्युत्तररहितत्वेनकृतः स विद्वान् विचिन्त्य, अथ किमत्रवक्ष्यामीति विचार्य, यदि माता तव जननी अनुवदेत् संवादं कुर्यात्, तर्हि तथा त्वदुक्तप्रकारेण अस्तु भवतु । इति तं सुतमुदीर्य । कृच्छ्रात् सुतवियोगासहनरूपक्लेशात् मन्दिरं गृहं

उपगम्य प्रियासकाशे भार्यासकाशे तं नुतस्यात्मनश्च विवादरूपमुदन्तं वृत्तान्त-मब्रवीत् ॥ २५ ॥

**निशाचरारेरिव लक्ष्मणः पुरा वृकोदरस्येव सुरेन्द्रनन्दनः ।**
**गदोऽथ शौरेरिव कर्मकृन् प्रियः सुभक्तिमान् विश्वविदोऽनुजोऽभवन् ॥ २६ ॥**

**निशाचरेति** ॥ अथ पुरा निशाचराणां रात्रिचराणां रावणादीनामरेः शत्रोः श्रीरामस्य लक्ष्मण इव, वृकः वृकाख्याग्निरुदरे यस्य तस्य भीमस्य सुरेन्द्रनन्दन इव अर्जुन इव, शूरस्य गोत्रापत्यं पुमाञ्छौरिः श्रीकृष्णस्तस्य गद इव गदनामकानुज इव । 'गदः कृष्णानुजे रोगे गदाप्रहरणान्तर' इति हेमचन्द्रः । सुभक्तिमान् शोभन-भक्तिमान् प्रियः कर्मकृत् सेवकः । भक्तिमत्व, प्रियत्व, सेवकत्वरूपगुणैर्लक्ष्मणार्जुन गदैः समो विश्वविदः सर्वज्ञस्य वासुदेवस्यानुजोऽभवत् ॥ २६ ॥

**कदाचिदप्यालयबुद्धिरालयं निवेदयन्पालकमेनमेतयोः ।**
**दृढस्वसंन्यासनिषेधनिश्चयां धवानुमत्येदमुवाच मातरं ॥ २७ ॥**

**कदाचिदिति** ॥ न विद्यते लयः प्रलयेऽपि नाशो यस्यास्तादृशी बुद्धिर्वृत्तिज्ञान-परम्परा यस्य स वासुदेवाह्वयः । कदाचिदालयं मन्दिरं । 'निकाय्यनिलयालयाः' इत्यमरः । आप्यैतं स्वानुजमेतयोः पित्रोः पालकं रक्षकं निवेदयन्नयं वां पालक इति वदन् सन् धवानुमत्या भर्तुरनुमतेन स्वस्य संन्यासः स्वसंन्यासस्तस्य निषेधः । दृढं यथा भवति तथा स्वसंन्यासनिषेधस्तस्मिन् निश्चयो यस्यास्तां मातरमिदं वच उवाच॥

**वराश्रमासि मम संवदस्व मां कदाचिदप्यम्ब यदीच्छसीक्षितुम् ।**
**यदन्यथा देशमिमं परित्यजन्न जातु दृग्विषयो भवामि वः ॥ २८ ॥**

**वराश्रमेति** ॥ अम्ब! मातः! 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । यदि कदाचिदपि मामीक्षितुं द्रष्टुमिच्छसि, तर्हि मम वराश्रमासिं संन्यासाश्रमस्वीकारं संवदस्वानुजानीहि। यदन्यथा संवादं नकरोषि चेत् इमं देशं परित्यजन्नहं जातु कदापि वो युष्माकं दृग्विषयो गोचरो न भवामि । अतः संवदस्वेति भावः ॥ २८ ॥

- इति ब्रुवाणे तनये कदाचिदप्यदर्शनं तस्य मृतेर्निदर्शनम् ।
विचिन्त्य पर्याकुलिता चिकीर्षितं सुतस्य कृच्छ्रान्न्यरुणन्न सा शुभा ।। २९ ।।

इतीति ।। तनये पुत्रे, इति पूर्वोक्तप्रकारेण ब्रुवाणे सति वदति सति पर्याकुलिता किमत्रकुर्यामिति संभ्रान्ता शुभा स्वभावतः शुभानुकूला सा कदाचिदपि दर्शनाभावोऽदर्शनं मृतेर्मरणस्य निदर्शनं समानमिति यावत् । इति विचिन्त्य विचार्य तस्य सुतस्य कर्तुमिष्टं चिकीर्षितं संन्यासस्वीकरणं कृच्छ्रात् क्लेशात् नन्यरुणत् न निरुद्धवती । रुधिरावरणे लङ् ।। २९ ।।

अथोपगम्यैष गुरुं जगद्गुरुः प्रसाद्य तं देववरप्रसादितः ।
सदा समस्ताश्रमभाक् सुरेश्वरो विशेषतः खल्वभजद्वराश्रमम् ।। ३० ।।

अथेति ।। अथ पित्रोरनुज्ञास्वीकारानन्तरं देववरैः प्रसादितः प्रसादायाभिमुखीकृतः दुर्मतनिराकरणपूर्वकं सम्मतप्रवर्तनलक्षणदेवताकार्यसाधनोन्मुख इत्यर्थः । जगद्गुरुः सुरेश्वर एषः, गुरुमच्युतप्रेक्षमुपगम्य, तं प्रसाद्य स्वगुणैः सन्तोषयित्वा सदा समस्ताश्रमान् ब्रह्मचर्यादीन् भजतीति तादृशोऽपि, स्वस्यवासुदेवावतारत्वेन सदा सर्वाश्रमवानपीत्यर्थः । वराश्रमं संन्यासाश्रमं अभजत्खलु । देवानां युगपत्समस्ताश्रमभाक्त्वञ्च । 'कृत्स्ना एव गृहिणः कृत्स्ना एते यतय एतेषां न पुत्रादायमुपयन्ति नैवैते गृहान् विसृजन्ति', 'देवा एव ब्रह्मचारिणो, देवा एव गृहस्था, देवा एव वनस्था' इत्यादिश्रुतिसिद्धम् ।। ३० ।।

क्रियाकलापं सकलं स कालविद्विधानमार्गेण विधाय केवलं ।
सदा प्रसन्नस्य हरेः प्रसत्तये मुहुः समस्तन्यसनं समभ्यधात् ।।३१।।

क्रियेति ।। कालं कालविशेषं वेत्तीति कालवित् । स वासुदेवः सकलं क्रियाकलापं क्रियासमूहं । 'कलापो भूषणे काञ्च्यां संघाते भूषबर्हयो'रिति वैजयन्ती । यत्याश्रमस्वीकारसमये कर्तव्यं तद्विधानोक्तं जीवच्छ्राद्धादिसमस्तक्रियाजातमित्यर्थः । विधानमार्गेण, केवलं सम्यग्विधाय सदाप्रसन्नस्य हरेः प्रसत्तये प्रसादाय मुहुः समस्त-

न्यसनं । 'भूः सन्यस्ता मयेत्यादिना देहेन्द्रियात्मादीनां समस्तानां संन्यसनं, भगवति समर्पणं समभ्यधाच्चक्रे । प्रैषोच्चारणमकरोदिति भावः ॥ ३१ ॥

अनन्तमात्रान्तमुदाहरन्ति यं त्रिमात्रपूर्वं प्रणवोच्चयं बुधाः ।
तदाभवद्भाविचतुर्मुखाकृतिर्जपाधिकारी यतिरस्य सूचितः ॥ ३२ ॥

**अनन्तेति** ॥ बुधा ज्ञानिनस्तिस्रो मात्रा अकारोकारमकाराख्या वर्णा पूर्वा आद्या यस्य स त्रिमात्रपूर्वस्तं, प्रणवात्मक उच्चयो वर्णसमुदायस्तं, अनन्ता मात्रा वर्णा यस्य सोऽनन्तमात्रोवेदस्तेन अन्तोर्थनिर्णयो यस्य सोऽनन्तमात्रान्तस्तं उदाहरन्ति । अकारादिवर्णत्रयपूर्वकमष्टाक्षरात्मकं प्रणवसमुदायं अनन्ताक्षरेण प्रणवव्याख्यानरूपेण समस्तवेदेन निर्णीयमानं प्रवदन्ति ज्ञानिन इति भावः । अस्यैवं विधस्य प्रणवस्य तदा तस्मिन् काले चतुर्मुखस्याकृतिः स्वरूपं यस्य स भविष्यच्चतुर्मुख इत्यर्थः । अत एव सूचितः सुष्ठुचितः । चतुर्मुखस्यैव प्रणवजपे मुख्याधिकारित्वादिति भावः । जपाधिकारोऽस्यास्तीति जपाधिकारी यतिरभवत् । यतिमात्रस्यास्ति जपाधिकारः, भाविचतुर्मुखात्मको यतिरूपस्त्वयं प्रणवस्य मुख्याधिकारी तदाऽभवदिति भावः ॥

गुणानुरूपोन्नतिपूर्णबोध इत्यमुष्य नाम द्विजवृन्दवन्दितः ।
उदाहरद्भूरियशा हि केवलं न मन्त्रवर्णः स च मन्त्रवर्णकः ॥ ३३ ॥

**गुणेति** ॥ गुणानुरूपोन्नतिरर्थोन्नतिर्यस्य तद्गुणानुरूपोन्नति । अन्वर्थकमिति यावत् । पूर्णबोध इति पूर्णप्रज्ञ इत्यमुष्ययतेः नाम, केवलं मन्त्रवर्णः । 'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः' इति वेद एव नोदाहरत न प्रोक्तवान् । किन्तु द्विजानां वृन्दानि समूहास्तैः वन्दितः । भूरि बहुलं यशो यस्य तादृशः । इदं विशेषणद्वयं मन्त्रवर्णस्यापि साधारणं । स, मन्त्रवर्णकश्च प्रणवोपदेष्टाच्युतप्रेक्षश्चो-दाहरत् । पूर्णबोधतीर्थ इति नाम प्रोक्तवान् । अयं भावः न केवलं पूर्वोक्तश्रुतिः । किन्तु मन्त्रोपदेष्टा गुरुरपि यदृच्छया पूर्णबोध इति नामोदाहरदिति भावः । श्रुत्यर्थस्तु—अस्य वृषभस्य समर्थस्य वायोस्तृतीयं रूपं योषणा योषित्, आदराद्बहु-वचनं दोहसे ज्ञानदोहाय जनयन्ताजनयत् । दशप्रमतिं पूर्णप्रज्ञनामकमित्यर्थः ।

'दशेति सर्वमुद्दिष्टं पूर्णं सर्वमिहोच्यते । प्रज्ञाप्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः' इति स्मृतेश्च ॥ ३३ ॥

निरङ्गरागं मुखरागवर्जितं विभूषणं विष्टपभूषणायितम् ।
अमुं धृताषाढमवेक्ष्य मेनिरे स्वभावशोभानुपमेति जन्तवः ॥ ३४ ॥

**निरङ्गरागमिति** ॥ जन्तवः निर्गतोऽङ्गरागश्चन्दनानुद्यनुलेपो यस्मात्तं । 'अङ्गरागोऽङ्गलेपः स्यादि'ति हलः । मुखरागेण ताम्बूलाञ्जनादिमुखालंकारेण वर्जितं रहितं विगतानि भूषणानि काञ्चीकटककेयूरांगुलीयादिभूषणानि यस्मात्तं । अमुं पूर्णप्रज्ञाचार्यं धृत आषाढो दण्डो येन तं । 'आषाढो व्रतिनां दण्ड' इति हलः । विष्टपानां त्रिलोकानां भूषणवदाचरतीतिविष्टपभूषणायितस्तं त्रिलोकालङ्कारभूतमित्यर्थः । अवेक्ष्य स्वभावा अकृत्रिमा सा च सा शोभा च, न विद्यते उपमा सादृश्यं यस्या सानुपमा-सदृशेति मेनिरे । मनु, अवबोधने लिट् ॥ ३४ ॥

भुजङ्गभूतेशविहङ्गपादिकैः प्रवन्दितः सावसरप्रतीक्षणैः ।
ननाम सोऽयं गुरुपूर्वकान्यतीनहो महीयो महतां विडम्बनम् ॥ ३५ ॥

**भुजङ्गेति** ॥ योऽवसरस्य समयस्य प्रतीक्षणं दर्शनं तेन सहितैः, वर्णितुं कदावसरो भविष्यतीत्यवसरप्रतीक्षणसहितैरित्यर्थः । भुजङ्गश्च भूतानि च तेषामीशौ शेषरुद्रौ, विहङ्गान् पक्षिणः पातीति विहङ्गपो गरुडः । तौ च स च, त आदयो येषां तैः भुजङ्गभूतेशविहङ्गपादिकैः । स्वार्थे कः । प्रवन्दितः सोऽयं पूर्णप्रज्ञाचार्यो गुरुरच्युतप्रेक्षः पूर्वो येषां । तान् यतीन् ननाम । तथा हि महतां महापुरुषाणां विद्यमानं विडम्बनं प्राकृतजनानुकरणं महीयोतिमहत् । अहो आश्चर्यम् ॥ ३५ ॥

वराश्रमाचारविशेषशिक्षणं विधित्सुरस्याचरितं निशामयन् ।
विशेषशिक्षां स्वयमाप्य धीरधीर्यतीश्वरो विस्मयनायतान्तरम् ॥ ३६ ॥

**वरेति** ॥ धीराधीर्यस्य सोऽचञ्चलचित्त इत्यर्थः । यतीश्वरोऽच्युतप्रेक्षः, अस्य पूर्णप्रज्ञाचार्यस्य वराश्रमस्य संन्यासाश्रमस्य, आचारविशेषस्य शिक्षणं शिक्षां

विधित्सुर्विधातुमिच्छुः सन्, आचरितमाचारं निशामयन् पश्यन् सन् स्वयं विशेषशिक्षां विशेषशिक्षणमाप्यान्तरं मानसं विस्मयमायत प्रपेदे । अय पयगतौ लङ् ॥ ३६ ॥

**स रौप्यपीठालयवासिने यदा ननाम नाथाय महामतिर्मुदा ।**
**तदामुनाग्राहि नरप्रवेशिना भुजे भुजेनाशु भुजङ्गशायिना ॥ ३७ ॥**

**स इति** ॥ महती मतिर्यस्य सः पूर्णप्रज्ञो रूप्यपीठालये वस्तुं शीलमस्यास्तीति तस्मै नाथाय स्वामिने मुदा प्रीत्या यदा ननाम, तदा नरे कस्मिंश्चित्पुरुषे प्रवेष्टुं शीलमस्यास्तीति तेनामुना । भुजङ्गे शेषे शेतुं शीलमस्यास्तीति तेन, भुजेन हस्तेन भुजे श्रीपूर्णप्रज्ञहस्ते आश्वग्राहि गृहीतः ॥ ३७ ॥

**चिरात्सुतत्त्वं प्रबुभुत्सुना त्वया निषेवणं मे यदकारि तत्फलम् ।**
**इयं ददामीत्यभिधाय सोऽमुना तदा प्रणीय प्रददेऽच्युतात्मने ॥ ३८ ॥**

**चिरादिति** ॥ तदामुना नरप्रवेशिना हरिणा हस्ते गृहीत्वा प्रणीय, अच्युतप्रेक्षसमीपमानीय सुतत्त्वं शोभनतत्त्वं प्रबुभुत्सुना प्रबोद्धुमिच्छुना त्वया चिरात् बहुकालं मे निषेवणं सेवाकारि कृतं यद्यस्मात्तस्मात्तत्फलं तस्य निषेवणस्य फलमिमं ददामीत्यभिधाय, अच्युते आत्मा मनो यस्य तस्मायच्युतप्रेक्षाय प्रददे दत्तः । मत्प्रसादात्प्राप्तोऽयं तव मत्तत्त्वमुपदेक्ष्यतीत्युक्त्वा प्रददाविति भावः ॥ ३८ ॥

**अनुग्रहं तं प्रतिगृह्य साग्रहं मुदात्मनाप्तां कृतकृत्यतां स्मरन् ।**
**अभूदसंगोऽपि स तत्सुसङ्गवान्सुसंगभूपा ननु साधुसंगिता ॥ ३९ ॥**

**अनुग्रहमिति** ॥ सोऽच्युतप्रेक्षस्तं देवकृतमनुग्रहं आग्रहेणादरेण सहितं यथा भवति तथा साग्रहं मुदा प्रतिगृह्याङ्गीकृत्य आत्मना स्वेन, कृतं कृत्यं प्रयोजनं येन तस्य भावस्तत्ता तां आप्तां प्राप्तां स्मरन् सन, न विद्यते सङ्गः प्राकृतपुरुषसङ्गो यस्य तादृशोऽपि, तत्सुसङ्गवान् तस्मिन् पूर्णप्रज्ञे सु सम्यक् यः सङ्गः संसर्गः सोऽस्यास्तीति तादृशोऽभूत् । एतच्च युक्तमित्याह—साध्विति । साधुषु यः सङ्गः सोऽस्यास्तीति साधुसङ्गी तस्य भावस्तत्ता । न विद्यते सङ्गो विषयसंसर्गो येषां तेषां

भूषालङ्कारो ननु । यद्वा सङ्गाभावोऽसङ्गस्तस्य भूषेति वा । तथाहि 'सङ्गः सर्वात्मना त्याज्यः सचेत्त्यक्तुं न शक्यते । सद्भिः सह स कर्तव्यः सन्तः सङ्गस्य भेषजं' इति श्रुतिः । एवञ्चात्यक्तसङ्गानां सत्सङ्गः सङ्गत्यागकारणं, त्यक्तसङ्गानान्तु भूषणमेवेत्युक्तं भवति ॥ ३९ ॥

यियासति स्वस्तटिनीं मुहुर्मुहुर्नमत्यनुज्ञार्थिनि भूरिचेतसि ।
तमस्मरत्स्वामिनमेव दूनधीर्गुरुर्भविष्यद्विरहाग्निशङ्कया ॥ ४० ॥

यियासतीति ॥ स्वस्तटिनीं स्वर्गनदीं स्वर्गङ्गामित्यर्थः । यियासति यातुमिच्छति । भूरि पूर्णं चेतोबुद्धिर्यस्य तस्मिन् पूर्णप्रज्ञाचार्ये इत्यर्थः । अनुज्ञामर्थितुं शीलमस्यास्तीति तस्मिन् सति, अत एव मुहुर्मुहुर्नमति सति भविष्यन् यो विरहो वियोगः स एवाग्निस्तस्य शङ्कया दूना दुःखिना धीर्मनो यस्य स गुरुरच्युतप्रेक्षस्तं रजतपीठगतं स्वामिनमेवास्मरत् । स्मृ आध्याने लङ् ॥ ४० ॥

इतस्तृतीये दिवसे द्युनिम्नगा त्वदर्थमास्माकतटाकमाव्रजेत् ।
अतो न याया इति तं तदावदत्प्रविश्य कञ्चित्करुणाकरो हरिः ॥ ४१ ॥

इत इति ॥ तदा करुणाकरो हरिः, कञ्चित्पुरुषं प्रविश्य दिवो निम्नगा नदी द्युनिम्नगा गङ्गा तुभ्यमिति त्वदर्थं । इत एतद्दिनात्तृतीये दिवसेऽस्माकं सम्बन्धी आस्माकः स चासौ तटाकश्च तमात्रजेदागमिष्यति । अतोऽत्रैव स्नातुं शक्यत्वात्त्वं न यायाः, गङ्गायां स्नातुं दूरं न गच्छेति तं पूर्णप्रज्ञमवदत् ॥ ४१ ॥

तदाज्ञयोपागतजाह्नवीजले जनोऽत्र सस्नौ सह पूर्णबुद्धिना ।
ततः परं द्वादशवत्सरान्तरं सदाव्रजेत्सा तदनुग्रहाङ्किनी ॥ ४२ ॥

तदिति ॥ जनस्तस्य हरेरेवाज्ञा तदाज्ञा तयात्र सरस्युपागता सम्प्राप्ता या जाह्नवी तस्या जले पूर्णबुद्धिना पूर्णप्रज्ञेन सह सस्नौ । ष्णा शौचे लिट् । सा गङ्गा ततःपरं उत्तरत्र, द्व्यधिकादशद्वादश तेचते वत्सराश्च तेषामन्तरे मध्ये, द्वादशवत्सरा अन्तरं यस्मिन् काल इति वा । तस्मिन् पूर्णप्रज्ञे कृतोऽनुग्रहस्तदनुग्रहः । तस्मिन्काले भगवता श्रीमध्वाचार्ये कृतानुग्रह इत्यर्थ. । तत्याङ्कः चिह्नं ज्ञापकमिति यावत्, सोऽस्यास्तीति

तदनुग्रहाकाङ्क्षिनी सती, भगवता श्रीमध्वाचार्येण कृतस्यानुग्रहस्य चिह्नभूतद्वादशवल्ली-रान्तरागमनव्रतीति भावः । सदा नियमेनाव्रजन् रजपीठपुरतटाकमागच्छेत ॥४२॥

**गते दिनानां दशके समासके वराश्रमं प्राप्य सपत्रलम्बनम् ।**
**जिगाय जैत्रान् बहुतर्ककर्कशान् स वासुदेवाह्वयपण्डितादिकान् ॥ ४३ ॥**

**गत इति** ॥ स पूर्णप्रज्ञाचार्यः स्वयं वराश्रमं यत्याश्रमं प्राप्य समासके मासेन-सहिते दिनानां दिवसानां दशके गतेसति, बहुतर्ककर्कशान् बहुभिस्तर्कैरनुमानैः कर्कशान् कठिनान् परनिराकरणनिर्दयानित्यर्थः । अत एव जैत्रान् जयशीलान् वासुदेवेत्याह्वयो यस्य स चासौ पण्डितो विद्वांश्च स आदिर्येषां तान्, वासुदेवपण्डितेति कश्चिद्वैशेपिकाग्रणीस्तदादिकानित्यर्थः । पत्रलम्बनेनसहितं यथा भवति तथा सपत्र-लम्बनम् (सनिर्णायकपत्रमित्यर्थः) जिगाय । त्रिदिनश्चोपन्यासं व्यधात्, विद्वा-न्निरन्तरं वैशिषिकाग्र्यो वासुदेवाह्वयोऽमुना विजित इतिचैतिह्यम् ॥ ४३ ॥

**गुरोः स्वशिष्यं चतुरं चिकीर्षतः प्रचोदनाच्छ्रोतुमिहोपचक्रमे ।**
**अथेष्टसिद्धिश्छलजातिवारिधिर्निरादरेणापि महात्मनामुना ॥ ४४ ॥**

**गुरोरिति** ॥ अथ महात्मनामुना पूर्णप्रज्ञार्येण इह अस्मिन्ग्रन्थे निर्गत आदरः आसक्तिः यस्मात्तेनापि । छलानि छलोत्तराणि जातयो जात्युत्तराणि ताभिर्वारिधिरिव वारिभिः पूर्णेत्यर्थः । इष्टसिद्धिरिष्टस्याद्वैत्यभीप्सितात्मैक्यस्य सिद्धिर्येन तादृशः । 'इष्टसिद्धि'नामकाद्वैतग्रंथविशेषः, स्वशिष्यं चतुरं विदग्धं चिकीर्षतः कर्तुमिच्छतः गुरोरच्युतप्रेक्षस्य चोदनात् नियोगात् श्रोतुमुपचक्रमे । क्रमु पादविक्षेपे कर्मणि लिट् । उपक्रान्तम् ॥ ४४ ॥

**तदाद्यपद्यस्थमवद्यमण्डलं यदावदत्षोडशकद्वयात्मकम् ।**
**उपर्युपास्तं तदिति ब्रुवत्यसौ गुरौ तमूचे प्रणिगद्यतामिति ॥ ४५ ॥**

**तदिति** ॥ असौ श्रोता पूर्णप्रज्ञः, तस्य श्रोतुमुपक्रान्तस्य इष्टसिद्धिनामकग्रंथ-स्याद्यं यत्पद्यं श्लोकस्तत्रतिष्ठतीति तादृशं, षोडशकद्वयात्मकं षडधिकादश षोडश,

षोडशैव षोडशकानि तेषां यद्वयं तदात्मास्वरूपं यस्य तादृशं द्वात्रिंशत्संख्याकमित्यर्थः। अवद्यमण्डलं दोषसमूहं यदावदत् उद्भावितवान्, तदा तदवद्यमण्डलमुपर्युपरित-नवत्रयेऽप्ययास्तं परिहृतमिति गुरौ ब्रुवति सति तर्हि, तत्, मदुद्भावितदूषणपरिहार-रूपमुत्तरमिदानीं प्रणिगद्यतामित्यूचे ॥ ४५ ॥

भवत्प्रवक्तृत्वसमर्थता न मे सकोपमित्थं वदति व्रतीश्वरे ।
अभाद् मायासमये पटौ नृणां बभूव तद्दूषणसंशयांकुरः ॥ ४६ ॥

वदति ॥ इहास्मिन् मायाकल्पितं ब्रह्मातिरिक्तमिति समयः सिद्धान्तो माया-समयः। तस्मिन् मायिप्रणीतशास्त्र इत्यर्थः। पटौ चतुरेऽपि व्रतीश्वरे यतीश्वरेऽ-च्युतप्रेक्षे, मे मम भवत्प्रवक्तृत्वे भवतो व्याख्यातृत्वे समर्थता शक्तत्वं न। इत्थ-मेवं सकोपं कोपेनसहितं यथा भवति तथा वदति सति, नृणां गुरुशिष्यविवादं शृण्वतां पुरुषाणां तद्दूषणसंशयांकुरस्तस्येष्टसिद्धिनामकग्रंथस्य, दूषणस्य श्रीमदाचा-र्योक्तदोषस्य संशयस्तस्य सद्वा, असद्वा, इति सन्देहस्यांकुर इवांकुरो बभूव। एतावत्कालं निर्दोषत्वेन निश्चितस्य मायिसमयस्येदानीं सदोषत्वशङ्कांकुरोभूदिति भावः ॥ ४६ ॥

बुधोऽभिधानं श्रवणं बुधेतरो ध्रुवं विदध्याद्विमुमुक्षुरात्मनः ।
यतिर्विशेषादिति लोकचोदनात्प्रवक्ति मायासमयं स्म पूर्णधीः ॥४७॥

बुध इति ॥ आत्मनः स्वस्य विमुमुक्षुर्विमोक्तुमिच्छुर्बुधो विद्वान् ध्रुवं निःसंशयं यथा भवति तथाभिधानं व्याख्यानं विदध्यात् कुर्यात्। बुधेतरः बुधादन्योऽविद्वानित्यर्थः। विमुमुक्षुः सन् श्रवणं गुरुमुखाच्छास्त्रश्रवणं विदध्यात्। तत्रापि यतिर्विशेषाद्गृहस्थादिभ्योऽतिशयात् व्याख्यां श्रवणं वा विदध्यात्। 'उपनिष-दमावर्तयेदुपनिषदमावर्तयेदि'ति श्रुतेः। तस्य व्याख्याश्रवणादिरूप शास्त्रप्रवृत्तिमन्त-रेण कर्तव्यान्तराभावद्गृहस्थादिभ्यो विशेषेति भावः। इति लोकचोदनात् लोकानां तत्रत्यजनानां प्रेरणात् पूर्णधीः पूर्णप्रज्ञाचार्यो मायासमयं मायाशास्त्रं प्रवक्तिस्म व्याचख्यौ। स्म, अतीते ॥ ४७ ॥

अखण्डितोपन्यसनं विसंशयंससम्प्रदायं प्रवचोदृढोत्तरम् ।
समागमञ्छ्रोतुममुष्य साग्रहा जनाः श्रुताढ्याश्चतुरा बुभूषवः ॥४८॥

अखण्डितेति ॥ श्रुताढ्याः शास्त्रश्रवणसम्पन्ना जनाश्चतुरा युक्तिविशेषज्ञानेन विदग्धा बुभूषवः भवितुमिच्छवः सन्तः । अखण्डितं निरन्तरं उपन्यसनमुपन्यासः यस्मिन् तत्, विसंशयं विगतः संशयो यस्मात्तत्, दृढान्युत्तराणि यस्मिन् तत्, इतरेतरश्चोदकानां दूषणरहितोत्तरोपेतमित्यर्थः । ससम्प्रदायं सम्प्रदायेनसहितं, अमुष्य पूर्णप्रज्ञस्य प्रवचो व्याख्यानं श्रोतुं साग्रहा आग्रहोपेताः सन्तः समागमन् । गम्लृगतौ लुङ् ॥ ४८ ॥

गुरोरुपान्ते श्रवणे रतैर्द्विजैः सपञ्चषैर्भागवते कदाचन ।
बहुप्रकारे लिखितेतु वाचिते प्रकारमेकं प्रभुरभ्यधाद्दृढम् ॥ ४९ ॥

गुरोरिति ॥ कदाचन गुरोरच्युतप्रेक्षस्योपान्ते समीपे श्रवणे भागवतश्रवणे निरतैः पञ्चषैः पञ्च वा षड्वा पञ्चषास्तैर्द्विजैः बहुप्रकारे बहुश्चासौ प्रकारश्च तस्मिन्, बहुप्रकारेणेत्यर्थः । लिखिते भागवते वाचितेऽपि स प्रभुः पूर्णप्रज्ञाचार्यो दृढं निस्संशयं यथा भवति तथा एकं प्रकारमभ्यधात् । श्रीभागवतव्याख्यानावसरे श्रोतृजनैः स्वस्वपुस्तकेषु पृथक् पृथक् पाठत्वेन लिखिते भागवते वाचितेऽपि स प्रभुरयमेवपाठो व्यासाभिमतेति एकमेव पाठं दृढमभ्यधादिति भावः ॥ ४९ ॥

परप्रकारेष्वपि सम्भवत्सु ते विनिर्णयोऽस्मिन् कथमित्युदीरिते ।
मुकुन्दबोधेन महाहृदब्रवीत्प्रकारमेकं भगवत्कृतं स्फुटम् ॥ ५० ॥

परेति ॥ परप्रकारेष्वपि, परेचते प्रकाराश्च तेष्वपि पाठान्तरेष्वपीत्यर्थः । सम्भवत्सु सत्सु ते तवास्मिन् भवदुक्तपाठे विनिर्णयोऽयमेव साम्प्रदायिकपाठो नान्य इति निश्चयः कथमिति वचसि, मुकुन्दबोधेन मुकुन्दस्य बोधो ज्ञानं यस्य तेन, अच्युतप्रेक्षेणेत्यर्थः । उदीरिते सति, महाहृत् महत् हृत् ज्ञानं यस्य तादृशः । पूर्णप्रज्ञः एकं प्रकारमात्मनाभिहितं पाठप्रकारं भगवत्कृतं श्रीवेदव्यासकृतं स्फुटं सम्यक् सोपपत्तिकमब्रवीत् ॥ ५० ॥

निगद्यतां गद्यमिहैव पञ्चमे जगद्गुरोर्वेत्थ कृतिस्थितिं यदि ।
इति ब्रुवाणे यतिसत्तमे स्वयं तदुक्तमार्गेण जगाद भूरिहृत् ॥ ५१ ॥

**निगद्यतामिति** ॥ यदि जगद्गुरोः श्रीवेदव्यासस्य कृतिस्थितिं निर्माणप्रकारं वेत्थ जानासि । विद ज्ञाने लट् । तर्हि, इहैव भागवत एव पञ्चमे पञ्चमस्कन्धे गद्यं निगद्यतां पाठतोऽर्थतश्च प्रोच्यतामिति यतिसत्तमे यतिश्रेष्ठे । 'अग्रेसरः सत्तम उत्तमश्च' इति हलः । अच्युतप्रेक्षे ब्रुवाणे सति, भूरिहृत् भूरिबहुहृत् ज्ञानं यस्य तादृशः । पूर्णप्रज्ञः स्वयं तदुक्तमार्गेण श्रीवेदव्यासोक्तमार्गेण जगाद, पाठतोऽर्थतश्चावदत् ॥

अशेषशिष्यैश्च तदाज्ञया तदा परीक्षणार्थेक्षि समस्तपुस्तकम् ।
स तत्र हन्तैकतमेक्षितं त्यजन्न तावदध्यायनिकायमभ्यधात् ॥ ५२ ॥

**अशेषेति** ॥ तदा तस्मिन्काले तदाज्ञया तस्य गुरोराज्ञया, अशेषशिष्यैः परीक्षणाय परीक्षायै, तदुक्तप्रकारेण पाठः पुस्तकेऽस्ति नवेति परीक्षार्थमित्यर्थः । समस्त पुस्तकं पञ्चमस्कन्धात्मकसमस्तपुस्तकमैक्षि दृष्टं । स पूर्णप्रज्ञाचार्य तत्र अशेषपुस्तकमध्ये एकतमेक्षितं शुद्धपाठात्मकैकतमपुस्तके दृष्टं पाठं न त्यजन्, पुस्तकापेक्षां विना पञ्चमे गद्यं वदन्नपि विशुद्धपाठात्मकैकतमपुस्तकगतपाठानुसारेण वदन्नपीति भावः । तावत्तदा शिष्यैः पुस्तकेक्षणमनय इत्यर्थः । अध्यायनिकायं पञ्चमस्कन्धाध्यायानां समूहमभ्यधात् पाठतोऽर्थतश्चावदत् । हन्त आश्चर्यम् ॥ ५२ ॥

अत्र जन्मनि न यत्पठितं ते जैत्र भाति कथमित्यमुनोक्ते ।
पूर्वजन्मसु हि वेद पुरेदं सर्वमित्यमितबुद्धिरुवाच ॥ ५३ ॥

**अत्रेति** ॥ जैत्र! जयशील! ते त्वया, अत्रजन्मन्यस्मिन् जन्मनि यद्वेदपुराणादिकं नपठितं तत्कथं भाति प्रतिभाति ? इति वचस्यमुना गुरुणोक्ते सति अमितबुद्धिः पूर्णप्रज्ञाचार्यः । इदं सर्वं पूर्वजन्मस्वतीतजन्मसु वेदपुरा व्यज्ञासिषं इत्युवाच । वेदपुरेत्यत्र 'यावत्पुरानिपातयोर्लट्' इति सूत्रेणातीतार्थे लट् । 'विदो लटो वा' इति णलादेशः । रथोद्धतावृत्तं । 'रोनराविह रथोद्धता लगौ' इति तल्लक्षणम् ॥५३॥

इति बहुविधविश्वाश्चर्यचित्तप्रवृत्तेर्जगति विततिमापन्नूतनाप्यस्य कीर्तिः ।
क्षपिततततमस्का भास्करीव प्रभालं सुजनकुमुदवृन्दानन्ददा चन्द्रिकेव ॥५४॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते
श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के चतुर्थः सर्गः ॥

इतीति ॥ इत्येवं बहुविधविश्वाश्चर्यचित्तप्रवृत्तेर्बहुविधा नानाविद्याविषया विश्वाश्चर्या सर्वलोकाश्चर्यभूता चित्तप्रवृत्तिः मनोवृत्तिर्यस्य तस्यास्य श्रीपूर्णप्रज्ञाचार्यस्य क्षपिततततमस्का ततं व्याप्तं सर्वजनहृद्गतमित्यर्थः । यत्तमोऽज्ञानं क्षपितं निरस्तं ततमः यया सा सुजनकुमुदवृन्दानन्ददा सुजना एव कुमुदानि कुमुदपुष्पाणि तेषां वृन्दस्य समूहस्यानन्दं ददातीति तादृशी कीर्तिः नूतनापि, क्षपिततततमस्का निरस्तजगद्व्याप्तान्धकारा भास्करी भास्करसम्बन्धिनीप्रभेव, सुजनकुमुदवृन्दानन्ददा सज्जनाख्यकुमुदवृन्दानन्दकारिणी चन्द्रिकेव ज्योत्स्नेवेति दृष्टान्तद्वयं । जगति विततिं व्याप्तिमलं सम्यगापत् अगमत् । मालिनीवृत्तं । 'ननमयययुतेयं मालिनीभोगिलोकैः' रिति तल्लक्षणात् ॥ ५४ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां चतुर्थः सर्गः ॥



वेदान्तविद्यानिजराज्यपालने सङ्कल्प्यमानो गुरुणा गरीयसि ।
अदभ्रचेता अभिषिच्यते पुरा स वारिभिर्वारिजपूरितैरथ ॥ १ ॥

**वेदान्तेति** ॥ अथ पूर्णप्रज्ञाचार्यस्य भागवतव्याख्यानानन्तरं गरीयसि महति वेदान्तविद्यानिजराज्यपालने वेदानामन्तो निर्णयो यस्मात्तद्वेदान्तं ब्रह्ममीमांसाशास्त्रं तद्रूपा या विद्या वेदान्तविद्या सैव निजराज्यमात्मीयराज्यं, तस्य पालनं व्याख्यानेन शिष्यादिषु सम्प्रदायप्रवर्तनाख्यरक्षणं तस्मिन् , सङ्कल्प्यमानो वेदान्तशास्त्रप्रतिकूलवादिनिराकरणपूर्वकं वेदान्तव्याख्यादिप्वयं समर्थः सन् सम्यक् प्रवर्तनामिति मनसा सङ्कल्प्यमान इत्यर्थः । अदभ्रचेताः । दभ्रमल्पं न भवतीत्यदभ्रं परिपूर्णं । तादृशं चेतो यस्य सोऽदभ्रचेताः पूर्णप्रज्ञाचार्यः । गुरुणाच्युतप्रेक्षाचार्येण वारिजपूरितैः शङ्खपूरितैर्वारिभिर्जलैरभिषिच्यते पुरा । अभिषिक्तः । षिचृत् आसेचने । 'यावत्पुरानिपातयोर्लडि'ति अतीतार्थे कर्मणि लट् । गुरुणा योगराज्येऽभिषिक्तोऽभूदिति भावः । अत्र वृत्तंतु इन्द्रवंशेति । यथोक्तम् स्यादिन्द्रवंशा गदिता 'ततौ जरौ' इति ॥

आनन्दरूपस्य परस्य पात्रधीरानन्दसन्दायिसुशास्त्रकृत्स यत् ।
आनन्दतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूपरूपकम् ॥ २ ॥

**आनन्देति** ॥ यद्यस्मात् स पूर्णप्रज्ञाचार्यः आनन्दरूपस्य । आनन्दः रूपं यस्य तस्य, परस्य सर्वोत्तमस्य हरेः, पात्रधीः पात्रभूतार्धीर्यस्य सः, तस्मादानन्दाख्यस्य हरेरावासभूतबुद्धित्वादित्यर्थः । यस्माच्च स पूर्णप्रज्ञाचार्यः आनन्दसन्दायिसुशास्त्रकृत् । आनन्दं सन्दातुं शीलमस्यास्तीति आनन्दसन्दायि । तादृशञ्च तत् सुशास्त्रञ्च, तत्करोतीति तथोक्तः । तस्माच्चानन्दतीर्थ इति गुरूदितं गुरुणाभिहितं, पदं नाम । तस्य श्रीपूर्णप्रज्ञाचार्यस्य । अत्यनुरूपरूपकं । अत्यनुरूपं अत्यनुकूलं रूपं स्वरूपं यस्य । तादृशं बभूव । आनन्दरूपस्य हरेः पात्रभूतत्वादानन्दतीर्थ इति, आनन्दकरशास्त्रकृत्वाच्च, आनन्दतीर्थ इति च व्युत्पत्तिरुक्ताभवति । 'तीर्थं मन्त्राद्युपाध्यायशास्त्रे-

त्वमसिपावने । पात्रेचाचार्यतीर्थेषु' इति यादवः । तथा चानन्दतीर्थ इति गुरुदत्तं नामान्वर्थमभूदिति भावः ॥ २ ॥

**कदाचिदत्रोपययौ यतिः सखा गोविन्दबुद्धेर्बहुशिष्यसंवृतः ।**
**अमुष्य शिष्या अनुमानशिक्षितास्तदाजिगीषन् गुरुबुद्धिमुद्धताः ॥ ३ ॥**

**कदाचिदिति** ॥ कदाचित् कस्मिंश्चित्काले । बहुशिष्यसंवृतो बहुभिः शिष्यैर्युक्तः। गोविन्दबुद्धेर्गोविन्दे बुद्धिर्यस्य तस्याच्युतप्रेक्षस्य । सखा यतिः । अत्रोपययौ । तत्रानुमानशिक्षिताः । अनुमाने तर्कशास्त्रे शिक्षिताश्चतुरा अत एवोद्धता अहङ्कारिणः । अमुष्यागतस्य यतेः शिष्याः गुरुबुद्धिं । गुरुः पूर्णा बुद्धिर्यस्य तं पूर्णप्रज्ञाचार्यं । अजिगीषन् जेतुमैच्छन् । जी जये सन्नन्ताल्लङ् ॥ ३ ॥

**भिदा सुसाध्येत्यनुमानमत्र तैः प्रायुज्यताशु प्रतिपक्षभीषणम् ।**
**अखण्डयत्तमखण्डधीरिदं स पक्षदक्षः फणिनं विराडिव ॥ ४ ॥**

**भिदेति** ॥ तैः शिष्यैर्भिदा भेदः, सुसाध्या सुखेन साधयितुं शक्येत्येवमुक्त्वा, अत्र भेदसाधने प्रतिपक्षभीषणं प्रतिपक्षस्य प्रतिवादिनो भीषणं भयङ्करमनुमानमाशु प्रायुज्यत प्रयुक्तं । विमतौ जीवपरमात्मानौ भिन्नौ नियम्यनियामकत्वात्, राजभृत्य-राजवत्, इत्यनुमानमित्यर्थः । पक्षदक्षः पक्षेऽभ्युपगतपक्षसमर्थने दक्षः समर्थः । सोऽखण्डधीः पूर्णप्रज्ञाचार्यः । विराड्डीनां पक्षिणां राड्वा राजा विराट् गरुडः, सोऽपि पक्षाभ्यां दक्षः, फणोऽस्यास्तीति फणी तं फणिनमिवाखण्डयत् । खडि भेदे लङ् । खण्डनप्रकारश्चेत्थं । किमिदं विशेषणं भिन्नत्वलक्षणं पक्षाभ्यां भिन्नं? अहोस्विदभिन्नं? उत भिन्नाभिन्नं?, न प्रथमः। भिन्नयोर्विशेषणपक्षयोः सम्बद्धयोर्वा विशेषणविशेष्यभावः, असम्बद्धयोर्वा, तत्र द्वितीयेऽतिप्रसङ्गात्सम्बद्धयोरेव विशेषणविशेष्यभावो वाच्यः । सम्बन्धश्च भिन्नयोरेव न चाभिन्नयोः । सम्बन्धस्य द्विष्ठत्वात्, तथा च विशेषणस्य भेदस्य, विशेष्ययोर्भेदिनोश्च, परस्परं सम्बद्धयोरेव विशेषणविशेष्यभावो वक्तव्यः, तत्रापि सम्बन्धान्तरविवक्षायां तत्रापि भेदापेक्षयाभवितव्यं, एवं भेदपरम्परापेक्षया-नवस्थास्यात् । नद्वितीयः विशेषणमात्रस्य वा, विशेष्यमात्रस्य वा, अभ्युपगमे

उभयाभावप्रसङ्गात् । न तृतीयः । प्राचीनपक्षद्वयोक्तदोषापातात्, व्याहतेश्च, तस्मात् प्रतिज्ञाया एवासम्भवादुक्तानुमानेन भेदसाधनमशक्यमेवेति ॥ ४ ॥

अथापि मिथ्या विमतं मतत्वतो विवादनिर्मुक्तवदित्यवादि तैः ।
अनेन सत्यं विमतं मतत्वतो यथा घटादीत्यनुमा न्यगद्यत ॥ ५ ॥

अथेति ॥ अथापि प्रागुक्तभेदसाधकानुमानखण्डनानन्तरमपि विमतं सत्यत्वमिथ्यात्वाभ्यां विप्रतिपत्तिविषयभूतं वियदादिकं, मिथ्या, अनिर्वचनीयं । मतत्वतः मतस्य दृश्यस्य भावो मतत्वं तस्मात् दृश्यत्वादित्यर्थः । विवादनिर्मुक्तवत्, विवादानिर्मुक्तं रहितं तद्वद्विप्रतिपत्तिरहितवदित्यर्थः । दृश्यत्वमिथ्यात्वाभ्यां सम्प्रतिपन्नशुक्तिरजतादिवदिति यावत् । इत्यनुमानं तैरवादि प्रोक्तं । अथानेन, पूर्णप्रज्ञाचार्येण, विमतं सत्यं मतत्वतः । यथा घटादीत्यनुमानुमानं न्यगद्यत निगदिता ॥ ५ ॥

हेतोरतिव्याप्तिरवादि तैर्यदा सकौतुकैरतूर्णमसावविस्मयः ।
न शुक्तिरूप्यादि मतं यदन्यथा मतं यदित्यादि वदन् जिगाय तान् ॥ ६ ॥

हेतोरिति ॥ सकौतुकैः कौतुकेन सम्भ्रमेणसहितैः । यदा हेतोः दृश्यत्वापरनामकमतत्वहेतोरतिव्याप्तिरनैकान्तिकतावादिरुक्ता । प्रपञ्चसत्यत्वसाधने प्रयुक्तस्य मतत्वहेतोः मिथ्याभूते शुक्तिरजतादौ विपक्षेऽपि वर्तमानत्वादनैकान्तिकत्वात्तेन प्रपञ्चसत्यत्वसाधनं शक्यमिति तैरुक्तमिति भावः । तदाविस्मयो न विद्यते विस्मयो यस्यासौ श्रीपूर्णप्रज्ञाचार्यो यद्यस्मात्तत्, शुक्तिरूप्यादिकमन्यथा, सत्यत्वेनप्रमिताकारादन्यथान्येनप्रकारेणासत्यत्वेनेत्यर्थः । मतमनुभवसिद्धं । तस्माच्छुक्तिरूप्यमादिर्यस्य तच्छुक्तिरूप्यादि शुक्तिरजतनभोनैल्यादिकं, मतं दृश्यं न । विपक्षे शुक्तिरूप्यादौ न दृश्यत्वं वर्तत इति नतस्यानैकान्तिकत्वमित्यर्थः । इति, एवमादिर्यस्य वाक्यस्य तत्, इत्यादिवाक्यं । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । वदन् सन् तान् वादिनो जिगाय । अयं भावः । भवेदिदं मतत्वहेतोरनैकान्तिकत्ववर्णनं, यदि शुक्तिकादौ प्रतीतस्य रजतादेः दृश्यत्वं स्यात् । नचैतदस्ति । तथा हि दृश्यत्वं नाम दृग्दृश्ययोः सम्बन्धः । तत्र च शुक्तिकादौ प्रतीतस्य

रजतादेः, असदेव रजतं प्रत्यभादित्यादिना बाधोत्तरकालमसत्त्वानुभवादसता च सम्बन्धायोगाच्छुक्तिरूप्यादिना दृक्सम्बन्धः । किन्तु शुक्तिकादिसन्निकृष्टमेवेन्द्रियं दोषवशादत्यन्तासद्रजताद्याकारेणावगाहत इति शुक्तिकादेरेव दृश्यत्वाभ्युपगमान्नमिथ्याभूतरजतादेर्दृश्यत्वमिति नानैकान्तिकता हेतोरिति । ननु सत्यत्वसाधनानुमाने घटादिनिदर्शनमसम्मतं, घटादेरस्माभिर्मिथ्यात्वाभ्युपगमात्, तथा च दृष्टान्तस्साध्यविकल इति चेत्तर्हि मिथ्यात्वसाधनानुमाने शुक्तिरजतादिनिदर्शनमस्माकमसम्प्रतिपन्नं । मिथ्याशब्देन न तावदसत्त्वं विवक्षितं तथात्वे मायिनामपसिद्धान्तप्रसङ्गात् । तस्मान्मिथ्याशब्देन सदसद्विलक्षणत्वमेव विवक्षितं, एवञ्च सदसद्विलक्षणत्वसाधने शुक्तिरजतादिकं निदर्शनत्वेनोपात्तं, न च तत्सदसद्विलक्षणत्वमस्माकं सम्प्रतिपन्नं । असदेवरजतं प्रत्यभादिति बाधोत्तरकालं तस्यासत्त्वानुभवात् । तथा च शुक्तिरजतादौ सदसद्विलक्षणत्वाभावान्मिथ्यात्वसाधनानुमानेऽपि निदर्शनं साध्यरहितमिति भावः । ननु शुक्तिरजतादिकं सदसद्विलक्षणमेवावगन्तव्यमित्यत्रार्थापत्तिरस्ति । तथा हि । सच्चेन्नबाध्येत, असच्चेन्नप्रतीयेत, बाध्यते प्रतीयतेचेदं । अतः ख्यातिबाधान्यथानुपपत्त्या सदसद्विलक्षणमिति चेन्न । सत्त्वेन ख्यातिरसत्त्वेन बाध इति सदसदात्मकत्वेनाऽप्युपपत्तेः । नन्वेतद्विरुद्धमिति चेद्धन्त तर्हि सदसद्विलक्षणत्वमपि कथं न विरुद्धं । विमतमनिर्वचनीयं बाध्यत्वात् यन्नानिर्वचनीयं न तद्बाध्यं यथात्मेत्यनुमानेनानिर्वचनीयत्वं शुक्तिरजतादेस्साधयाम इति चेत्तर्हि घटादेरपि सत्यत्वं, सन् घटः, सन् पट इत्यादिप्रत्यक्षेण सिद्धमित्युत्तरमित्याद्यादिशब्देनोक्तम् ॥ ६ ॥

**तत्त्वेऽप्यतत्त्वे विमतेनुमां वदंस्तदप्रतिष्ठां प्रतिपादुकः स्वयम् ।**
**विजित्य विश्वान् विदुषः सभास्वसौ जगाम नाम्नाऽप्यनुमानतीर्थताम् ॥ ७ ॥**

**तत्त्व इति** ॥ तस्यानुमानस्याप्रतिष्ठां प्रामाण्यलक्षणप्रतिष्ठाभावं । प्रतिपादुकः प्रतिपादनशीलः । 'लषपते'त्यादिना, उकञ् प्रत्ययः । अत एव तदप्रतिष्ठामित्यत्र 'नलोके'त्यादिना षष्ठीप्रतिषेधात् न 'कर्तृकर्मणोः कृति' इति षष्ठी । असौ श्रीपूर्णप्रज्ञाचार्यो विदुषां पण्डितानां सभासु तत्रतत्रप्रस्तुततत्तत्प्रमेये विमते विप्रतिपन्ने सति, तत्तत्प्रमेयमेवमनेवमिति च विवादे सतीति यावत् । तत्त्वे तस्यभावस्तत्त्वं तस्मिन् । तस्य

प्रमेयस्य तत्स्वरूपमुपपन्नमित्येतस्मिन्नर्थ इत्यर्थः । अतत्वे तत्वं न भवतीत्यतत्वं तस्मिन् । तस्य तत्स्वरूपमनुपपन्नमित्येतस्मिन्नर्थेचानुमामनुमानं, यथा शब्दस्यानित्यत्वनित्यत्वविवादे शब्दोऽनित्यः कृतकत्वाद्घटवत् , इत्यानित्यत्वेऽनुमानमभिधाय तत्र प्रतिपक्षतयाक्षिपतो वादिनो विजित्य, अनित्यत्वमेव व्यवस्थाप्य पुनस्तेषाममामर्थ्यप्रकटनाय शब्दः नित्योऽस्पर्शद्रव्यत्वाद्गगनवदित्याद्यनुमानेऽभिहिते, तदप्याक्षिपतः समस्तवादिनो विजित्य शब्दस्यनित्यत्वमनित्यत्वंचानुपपन्नमित्यादिरूपेणानुमां वदन् सन् विश्वान् समस्तवादिनो विजित्य नाम्नानुमानतीर्थतां जगाम । अस्यानुमानोपन्यसनचातुर्यं दृष्ट्वा नायमानन्दतीर्थः । किन्नाम! अनुमानतीर्थं इति वादिमण्डले प्रसिद्धोऽभूदिति भावः ।

नन्वेवं परस्परविरुद्धार्थद्वयसाधनेऽप्यनुमानोपन्यासेसत्यनुमानयोः परस्परविरुद्धत्वेनाप्रतिष्ठत्वं स्यादिति चेन्न तस्येष्टत्वात् । न च प्रमाणत्रित्वाभ्युपगमविरोधः । प्रत्यक्षागमानुसारिण एव तस्य प्रामाण्याभ्युपगमात् । यथोक्तं स्वयमेव 'नचानुमानस्यनियतप्रामाण्यम्' । सर्वत्रशक्यते कर्तुमागमं हि विनानुमा । तस्मान्नसा शक्तिमती विनागममुदीक्षितुम् । प्रत्यक्षागममाहात्म्यादनुमानं प्रमाणताम् । यातिनैवान्यथा तस्य नियतत्वं कचिद्भवेदिति । एतदभिप्रायेणैव तदप्रतिष्ठां प्रतिपादुक इत्युक्तम् ॥७॥

समस्तवादीन्द्रगजप्रभङ्गदश्चरन्त्यवन्यां प्रतिपक्ष कांक्षया ।
वेदद्विषां यः प्रथमः समाययौ स वादिसिंहोऽत्र सबुद्धिसागरः ॥८॥

**समस्तेति** ॥ समस्तवादीन्द्रगजप्रभङ्गदः । समस्ता ये वादीन्द्रा वादिश्रेष्ठास्त एव गजास्तेषां यः प्रभङ्गः पराजयस्तं ददातीति तादृशः । अवन्यां भुवि प्रतिपक्षकाङ्क्षया प्रति, विरुद्धः पक्षः परिग्रहो यस्य सः प्रतिपक्षः, प्रतिवादी । तस्य काङ्क्षया इच्छया चरन् कास्ति प्रतिवादीत्यान्विष्य तत्रतत्र पर्यटन् , वेदद्विषां वेदान् द्विषन्तीति, तेषां वेदाप्रामाण्यवादिनां बौद्धानामित्यर्थः । प्रथमोऽग्रणीः 'प्रथमः स्यात्प्रधानाद्योः' इति हेमचन्द्रः । यो बुद्धिसागरस्तन्नामको बौद्धः । सोऽत्राच्युतप्रेक्षसमीपं प्रति, सवादिसिंहः स्वेनवादेविजित्य स्वपक्षे निक्षिप्तेन वादिसिंहाख्यद्विजेन सहितः सन्

नमाययौ । तच्चोक्तं 'वैशेषिकविशेषज्ञो वादिसिंहाभिधो द्विजः । नदीं विजित्य सम्प्राप्तो बौद्धाग्र्यं बुद्धिसागरं । खण्डितस्तेन पाण्डित्यात्तत्पक्षापेक्षकोऽभवत् । तौ श्रुत्वा मध्वदैदर्शी प्राप्तौ तद्गुरुमूचतुः । वादिनौ वादकामौ द्वौ भगवंस्त्वामिताविति । बुद्धयब्धि बुद्धिमाश्रित्य परो वादी कथां व्यधादिति' ॥ ८ ॥

**तस्योरुदुर्गर्ववतो जिगीषया निशातमादत्त मुकुन्दधीर्द्रुतम् ।**
**स्वशिष्यहस्तेन मठान्तरेषुधेः सुपक्षदक्षं सुखतीर्थमार्गणम् ॥ ९ ॥**

**तस्येति** ॥ मुकुन्दधीरच्युतप्रेक्षः । उरुदुर्गर्ववत उरुरुत्कृष्टो यो दुर्गर्वो दुष्टाहङ्कारः । सोऽस्यास्तीति, तस्य । अहमेव विद्वदग्रणीर्मत्समः कोऽस्तीति दुरहङ्कारवत इत्यर्थः । तस्य बुद्धिसागरस्य जिगीषया जेतुमिच्छयानिशातमतितीक्ष्णं । सुपक्षदक्षं सुपक्षे शोभनसिद्धान्ते दक्षं चतुरं सुखतीर्थमार्गणं सुखतीर्थं एवानन्दतीर्थ एव मार्गणो बाणस्तं । मठान्तरेषुधेः, अन्यो मठो मठान्तरं तदेव इषुधिर्निषङ्गस्तस्मात्, स्वशिष्यहस्तेन स्वशिष्य एव हस्तस्तेन, द्रुतं यथा भवति तथादत्त । प्राप्तप्रतिवादिनिराकरणायानन्दतीर्थाचार्यमन्यमठगतं स्वशिष्येणाह्वयामास प्रतिभटनिरासाय निशाङ्गाद्बाणमिवेति भावः ॥ ९ ॥

**जैत्रं प्रजिज्ञासु कुतूहलाकुलं नृणां कुलं प्रत्वरितं निशामयन् ।**
**अवन्दतोपेत्य गुरुं गरिष्ठधीः स रूप्यपीठायतनोत्तमस्थितम् ॥ १० ॥**

**जैत्रमिति** ॥ जैत्रं जयशीलं जये सामर्थ्ययुक्तमिति यावत । प्रजिज्ञासु प्रज्ञातुमिच्छु कुतूहलाकुलं कुतूहलेन सम्भ्रमेणाकुलं विवशं, पूर्णमिति वा । 'आकुलं भरितं पूर्णं' इति हलः । प्रत्वरितमतिवेगयुक्तं नृणां पुरुषाणां कुलं समूहं निशामयन्, स गरिष्ठधीर्गरिष्ठा श्रेष्ठा धीर्यस्य स पूर्णप्रज्ञाचार्यः । रूप्यपीठायतनोत्तमस्थितं, रूप्यात्मकं पीठं तस्मिन्यदायतनोत्तमं तस्मिन् स्थितं गुरुमुपेत्यावन्दत ॥ १० ॥

**स वादिसिंहस्य गिरं गरीयसीमखण्डयत्पण्डितमण्डलान्तरे ।**
**तीक्ष्णेन वाक्येन मितेन वेगिना गदां शरेणेव विशारदो मुहुः ॥११॥**

**स इति** ॥ विशारदः परवादिनिराकरणचतुरः स पूर्णप्रज्ञाचार्यस्तीक्ष्णेन प्रतिवादिना सोढुमशक्येन मितेन शब्दापेक्षयाल्पेन वेगोऽस्यास्तीति वेगी तेन, वक्तुमुचितं कालमनतिक्रम्योक्तेनेत्यर्थः । वाक्येन गरीयसीं युक्तियुक्तत्वेन श्रेष्ठां वादिसिंहस्य गिरं पण्डितमण्डलान्तरे पण्डितसमूहमध्ये, विशारदो युद्धपण्डितभटस्तीक्ष्णेन निशितेन मितेन परिमितेन वेगिना वेगवता शरेण गदामिव मुहुरखण्डयत् । खडि भेदे लङ् ॥ ११ ॥

**असावसूयन् द्विनवप्रकारतां व्यचीक्लृपत्कश्चिदथार्थमुच्चकैः ।**
**जगद्विजेतुश्च जये ससंशयस्तावज्जनोऽजायत पूर्णचेतसः ॥ १२ ॥**

**असाविति** ॥ अथ श्रीमध्वाचार्येण स्ववाक्यखण्डनानन्तरमसूयन्नसूयां कुर्वन्नसौ वादिसिंहः कश्चिदर्थे कश्चित्पदार्थमुच्चकैरुच्चैर्ध्वनिना द्विनवप्रकारतः । नवचते प्रकाराश्च. द्वौ च ते नवप्रकाराश्च तैरिति ततः । अष्टादशप्रकारैरित्यर्थः । व्यचीक्लृपत् । कल्पयामास । तावत्तदा जनस्तत्रमिलितजनो जगद्विजेतुर्जगतो विजयशीलस्य पूर्णचेतसः पूर्णं चेतो यस्य तस्य श्रीपूर्णप्रज्ञाचार्यस्य । जये जयविषये ससंशयो विजयते नवेति संशयसहितोऽजायत । अभूत । जनि प्रादुर्भावे लङ् ॥ १२ ॥

**विकल्पकोटीरथ खण्डयन् द्रुतं रेजेऽधिकं स्मेरमुखो बृहन्मतिः ।**
**तमस्ततीर्वा द्युमणिर्विशुद्धया गवाश्रितो विष्णुपदं सदास्पदम् ॥ १३ ॥**

**विकल्पेति** ॥ अथ सदास्पदं सतामाश्रयभूतं विष्णुपदं श्रीहरिचरणं श्रितः. आश्रितः । स्मेरमुखः स्मेरं स्मितयुक्तं मुखं यस्य तादृशः, अनेन परनिराकरणे आयासाभावः सूचितः । बृहन्मतिर्बृहती बह्वर्थविषयिणी मतिर्बुद्धिर्यस्य तादृशः श्रीपूर्णप्रज्ञाचार्यः । विकल्पकोटीः वादिसिंहकृतविकल्पपक्षान्द्रुतमविलम्बितं यथा भवति तथा विशुद्धया शब्दार्थदोषशून्यया गवावाचा, सदास्पदं नक्षत्राश्रयभूतं प्राणिनामाश्रयं वा 'तारा भं रात्रिजं धिष्ण्यं सत्त्वक्षत्रं' इति वैजयन्ती । विष्णुपदं आकाशं श्रितो द्युमणि सूर्यो विशुद्धया गवा स्वतेजसा तमस्ततीर्वा, तमसां निकरमिव । 'वा विकल्पोपमानयोः' इत्यमरः । खण्डयन्नस्त्वधिकं यथा भवति तथा रेजे, अशोभत ॥ १३ ॥

अगाधमात्मन्यतिवेलमुद्धतं निरस्कृताशेषसरस्वतीतनिम् ।
कामं महामानसकुम्भसम्भवो लघूचकारेत्यपि बुद्धिसागरम् ॥ १४ ॥

**अगाधमिति** ॥ महामानसकुम्भसम्भवः, महत् मानसं यस्य पूर्णप्रज्ञाचार्यः स एव कुम्भसम्भवोऽगस्त्यः । 'अगस्त्यः कुम्भसम्भवः' इत्यमरः । अगाधं गम्भीरबुद्धिमात्मन्यात्मविषयेऽतिवेलमत्यन्तं यथा भवति तथा । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः । उद्धतमविनीतं । निरस्कृताशेषसरस्वतीततिं तिरस्कृता निराकृता अशेषसरस्वतीततिः समस्तवादिवाक्सन्ततिर्येन तं । 'सरस्वती ह्यापगायां गौ वाग्देवतयोरपि' इति हेमचन्द्रः । बुद्धिसागरमपि न केवलं वादिसिंहमेव वादिसिंहनिराकरणानन्तरमतिसंरम्भात्प्रत्यवतिष्ठमानं बुद्धिसागरमपि, इति वादिसिंहनिराकरणप्रकारेण । कामं, यथेच्छं यथा भवति तथाऽनायासेनेति यावत् । लघूचकार । खण्डिताहङ्कारं चकार । प्रागगस्त्योऽगाधमतलस्पर्शमात्मनि स्वस्मिन्नतिवेलं वेलामतिक्रम्योद्धतं प्रवृद्धं, तिरस्कृता स्वतरङ्गैर्निराकृताशेषसरस्वतीततिरशेषनदीसमूहो येन तं सागरमिवेति श्लेषाभिप्रायः ॥

स्व एव वादोऽस्त्विति वादिनौ खलावथोत्तरं भाति यदीर्यतामिति ।
मध्वे ब्रुवाणेऽमत तौ जितौ जनः स निश्चिकायाथ निशापलायनात् ॥ १५ ॥

**स्व इति** ॥ वादः स्व एवास्तु । इति वादिनौ वदन्तौ खलौ दुष्टौ तौ वादिसिंहबुद्धिसागरौ प्रति मध्वे श्रीमध्वाचार्ये, 'यद्युत्तरमसद्युक्तिखण्डनोत्तरं भाति प्रतिभाति तर्ह्येवेदानीमीर्यतामुच्यतां । अन्यथा प्रत्युत्तराप्रतिपत्तिरप्रतिभानामनिग्रहस्थानापरपर्यायं पराभवकारणं युवयोः प्राप्त'मिति ब्रुवाणेऽमति जनस्तूष्णीं स्थितौ दृष्ट्वा जितौ पराजितावमत । मेने । स जनः निशापलायनाद्रात्रावेव गमनान्निश्चिकायापि । तौ निशायामेव पलायितौ श्रुत्वा पराजिताविति निश्चयमकरोच्च ॥ १५ ॥

बुद्ध्यब्धिना वादिवरेण चार्जितां जयश्रियं भूपरिवर्तिना चिरात् ।
अहो मुहूर्तादयमप्रयत्नवानवाप्तवानित्यतिविस्मितं जनैः ॥ १६ ॥

**बुद्ध्यब्धीति** ॥ अयं श्रीमध्वाचार्यो भूपरिवर्तिना भुवं परिवर्तितुं प्रतिवाद्यपेक्षया पर्यटनं कर्तुं शीलमस्यास्तीति, तेन बुद्ध्यब्धिना बुद्ध्याब्धिरिव, तेन बुद्धिसागरेण-

त्यर्थः । वादिवरेण वादिसिंहेन चेत्यर्थः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्युक्तेः सिंहशब्दस्य श्रेष्ठार्थत्वाद्वादिसिंहेनेति वक्तव्ये वादिवरेणेत्युक्तम् । चिरादार्जितां जयश्रियं मुहूर्तान्मुहूर्तमात्रेण प्रयत्नवान्न भवतीत्यप्रयत्नवान्सन्, आयासरहितः सन्नित्यर्थः । अवाप्तवान् प्राप । अपहृतवानिति भावः । अहो इति जनैरतिविस्मितं ॥ १६ ॥

व्याख्यान् कदाचिन्मणिमद्विनिर्मितं भाष्यं जनैस्तर्कविशारदैर्वृतः ।
उवाच वाचं परिहाससहासवान्सम्मोदतीर्थः सुरमोददायिनीम् ॥ १७ ॥

**व्याख्यान्निति** ॥ मणिमद्विनिर्मितं सङ्करनाम्नाभ्युत्पन्नेन मणिमता विरचितं भाष्यं ब्रह्मसूत्रभाष्यं व्याख्यान् व्याकुर्वन्, तर्कविशारदैस्तर्के तर्कशास्त्रे विशारदैश्चतुरैर्जनैर्वृतः सहितस्संमोदतीर्थः सम्यङ्मोदः सम्मोदः, सम्मोदकरं तीर्थं शास्त्रं यस्मात् स आनन्दतीर्थाचार्यः । परिहाससहासवान् परिहासरूपो हासः, परिहासयुक्तो हास इति वा. सोऽस्यास्तीति तादृशस्सन् । 'परिहासश्च नर्मणि' इति हलः । सुरमोददायिनीं सुराणां मोदः सन्तोषः, तं दातुं शीलमस्यास्तीति, तादृशीं वाचमुवाच ॥ १७ ॥

सत्सूत्रभावे प्रविचारिते पृथग्भाष्याभिसन्धौ च विशुद्धबुद्धिभिः ।
निगृह्य गूढाग्रहमुग्रमेतयोर्मान्योऽन्वयोऽन्योन्यमहो न दृश्यते ॥ १८ ॥

**सदिति** ॥ विशुद्धबुद्धिभिर्विशुद्धा निर्मला बुद्धिश्चित्तं येषां तैः पुरुषैः । उग्रं नरकाद्यनर्थप्रदं, गूढाग्रहं गूढो निगूढ आग्रहो विचारमार्गमपहायैवमेवतत्त्वमित्येवंरूप आग्रहस्तं निगृह्य परित्यज्य । सत्सूत्रभावे सन्ति शोभनानि सूत्राणि ब्रह्मसूत्राणि तेषां भावोऽभिप्रायस्तस्मिन्, पृथक् भाष्यं विहाय प्रविचारिते सति, सम्यग्विचारिते सति, तथा भाष्याभिसन्धौ च भाष्याभिप्राये च प्रविचारिते सत्यनयोः सूत्रसाङ्करभाष्ययोरन्योन्यं मिथो मान्यः परम्पराविरोधेनाङ्गीकर्तुमुचितोऽन्वयो व्याख्यानव्याख्येयरूपः सम्बन्धो न दृश्यते । अहो! । एवं विधेऽप्यस्मिन् भाष्ये महाजनस्य कथमादर इति भावः । तथा हि । सूत्रेषु विष्णोरनन्तगुणपूर्णत्वं, निर्दोषत्वं, चेतनाचेतनात्मकसर्वप्रपञ्चविलक्षणत्वं, मुख्यतोवचनवृत्त्यासर्ववेदप्रतिपाद्यत्वं, मुक्तौ च सर्वजीवनियामकत्वं,

प्रपञ्चसत्यत्वमित्यादयोऽर्थाः प्रतिपाद्यन्ते । भाष्येतु विष्णोर्निर्गुणत्वं, जीवाभेदेन-सकलदोषभाजनत्वं, सर्वशब्दावाच्यत्वं, प्रपञ्चस्य मिथ्यात्वं, मुक्तौ जीवब्रह्मैक्यञ्चेत्यादयोऽर्थाः सूत्रविरुद्धाः प्रतिपाद्यन्ते । तस्मात्परस्परविरुद्धयोर्भाष्यसूत्रयोः कथं व्याख्यानव्याख्येयभावलक्षणस्सम्बन्धः । कथञ्च प्रमाणतमसूत्रविरुद्धभाष्ये महाजनानां प्रमाणत्वाभिमान इति भावेन, अहो इत्युक्तमिति भावः ॥ १८ ॥

इति ब्रुवाणे प्रतिपादयत्यलं भाष्येऽत्र दोषान्प्रबलान्मुहुर्मुहुः ।
तस्मिंस्तु विस्मेरधियोऽपि यत्नतो न स्थेयसः पर्यहरन्नमानमी ॥ १९ ॥

इतीति ॥ इति ब्रुवाणे वदति तस्मिञ्छ्रीमध्वाचार्येऽत्रभाष्ये प्रबलान् दुष्परिहरान्दोषान्मुहुर्मुहुरलं सम्यक् प्रतिपादयति सति विस्मेरधियो विस्मेरा विस्मिता धीर्येषां ते, अमी व्याख्यानावसरे पर्यासीनास्तर्कविशारदा जनाः, स्थेयसोऽतिस्थिरानिमान् श्रीमध्वेनोद्भावितान्दोषान्यत्नतोऽपि न पर्यहरन् । न परिहृतवन्तः ॥ १९ ॥

नन्वस्य सूत्रस्य परोऽर्थ उच्यतां यद्भाष्यमात्रं भवता निरस्यते ।
भवादृशैर्यः कविभिर्न दृश्यते कथं चनेत्यूचुरिमे वचस्विनः ॥ २० ॥

नन्विति ॥ नन्विति शङ्कार्थे । यद्यस्मात्कारणाद्भवता केवलं भाष्यं, भाष्यमात्रं निरस्यते निराक्रियते, भाष्यमेवबहुधा निरस्यते सूत्रन्तु प्रशस्यत इत्यर्थः । तस्मात्कारणाद्भवन्त इव पश्यन्तीति भवादृशास्तैः कविभिर्विद्वद्भिः कथञ्चन केनापिप्रकारेण योऽन्योऽर्थो न दृश्यते स परोऽन्योऽर्थोऽस्य सूत्रस्य ब्रह्मसूत्रस्य भवतोच्यतामिति वचस्विनो वाग्मिन इमे सभास्था वादिन ऊचुः ॥ २० ॥

अक्लिष्टशब्दान्वयमेष सम्भवत्सूत्रार्थमुर्वीवचनं तदाददे ।
मानीकृताम्नाययुतस्मृति क्षणादेष्यत्कथाताण्डवसूत्रधारकम् ॥ २१ ॥

अक्लिष्टेति ॥ एष श्रीमध्वाचार्यस्तदाक्लिष्टशब्दान्वयं, शब्दानां वाचकशब्दानां अन्वयो वाच्यार्थैः सहसम्बन्धः, अक्लिष्टः योगेन रूढ्या वा सुबोध्यः शब्दान्वयो यस्य तत्, योगेन रूढ्या वा तत्तदर्थवाचकत्वशक्तिमच्छब्दैरेव विवक्षितार्थकथना-

दर्थानां शब्दानाञ्च परस्परं वाच्यवाचकभावलक्षणं सम्बन्धं ज्ञापयदिति भावः । यद्वा शब्दाश्चान्वयाश्च शब्दान्वया अक्लिष्टाश्शब्दान्वया यस्मिन् तत्, सम्भवत्सूत्रार्थं सम्भवन्नुपपाद्यमानः सूत्रार्थो यस्मिन् तत्, मानीकृताम्नाययुतस्मृति, आम्नाययुता वेदयुक्ता या स्मृतयः पुराणानि मानीकृता उक्तार्थे प्रमाणत्वेनोदाहृता यस्मिन् तत्, एष्यत्कथाताण्डवसूत्रधारकं, एष्यन्ती स्वयं करिष्यमाणभाष्यात्मिका या कथा वाक्यप्रबन्धः । 'कथ वाक्यप्रबन्धे' इति धातोः । तदात्मकस्य ताण्डवस्य नर्तनस्य सूत्रधारकं पूर्वरङ्गभूतं, एवं मया भाष्यं करिष्यत इत्येतत्सूचयदिति भावः । वचनमुपन्यासरूपं वाक्यमुच्चैः उन्नतस्वरो यथा भवति तथा क्षणात् क्षणकालादादरेण वक्तुमुपचक्रमे ॥ २१ ॥

**बुभुत्सया मत्सरवर्जिताञ्जनान्समत्सरान्वा विजिगीषयागतान् ।**
**श्रुतप्रवीणानतितार्किकान्मुहुर्भङ्ग्यानया भङ्गमुपानिनाय सः ॥ २२ ॥**

**बुभुत्सयेति** ॥ स श्रीमध्वाचार्यः । श्रुतप्रवीणान् श्रुतेन शास्त्रश्रवणेन प्रवीणान् चतुरबुद्धीनतएवातितार्किकानत्यन्तं तर्कशास्त्रज्ञान् मत्सरवर्जितान् मत्सररहितानतएव बुभुत्सया बोद्धुमिच्छया परापररूपतत्त्वस्येत्यर्थः । आगतान् जनान्, अथ समत्सरान् मत्सरयुतानतएव विजिगीषया विजेतुमिच्छयागतांश्च, अनया पूर्वोक्तया भङ्ग्या रीत्या, मानीकृतश्रुतिस्मृतियुक्तयुक्तिवाचोभङ्ग्येत्यर्थः । मुहुर्भङ्गं पराभवमुपानिनाय निरुत्तरत्वं प्रापयामास । तत्वजिज्ञासयागतानां प्रश्नस्योत्तरदानेन संशयनिरसनद्वारा विजिगीषयागतानां प्रश्नस्य निराकरणेन च, भङ्गमुपानिनायेति विवेकः ॥ २२ ॥

**कदाचिदेनं प्रतिगम्य सौम्यधीः स मध्यगेहार्यवरः प्रसेदिवान् ।**
**हेतोः कुतश्चिद्विमनीकृतोऽप्यहो गुणाभिलुब्धः सुजनः प्रसीदति ॥ २३ ॥**

**कदाचिदिति** ॥ सौम्यधीः कोमलचित्तः स मध्यगेहार्यवरः मध्यगेहश्चासावार्यवरश्च साधुश्रेष्ठ इत्यर्थः प्राक् कुतश्चिद्धेतोः कारणाद्विमनीकृतोऽपि, अविमना विमनाः सम्पद्यमानः कृतः विमनीकृतः कलुषीकृतचित्तोऽपि । कदाचिदेनं श्रीमध्वाचार्यं प्रतिगम्य प्राप्यप्रसेदिवान् प्रसन्नचित्तोऽभूत् । अहो ! । सुजनो गुणाभिलुब्धः,

गुणा एवाब्धिस्तस्मिन्लुब्धो लोभयुक्तःसन् । गुणबाहुल्यं दृष्ट्वा तद्धानुमशक्तःसन्नि-त्यर्थः । प्रसीदति प्रकर्षेण सीदति तत्रसक्तो भवति हि । सुजनः प्रतीयमानमल्प-दोषमगणय्य गुणिनि सक्तो भवतीत्यतोऽयमपि सुजनाग्रेसरो गुणाब्धिं श्रीमध्वं दृष्ट्वान्योपाधिकं मनोदोषं विहाय प्रसन्नचित्तोऽभूदिति भावः । [ अत्रार्थान्तरन्यासा-लङ्कारः ] ॥ २३ ॥

**तेजोमृतं नन्दनगात्रपात्रगं नेत्राञ्जलिभ्यामपिबत्सदाव्ययम् ।**
**विद्यासुधां चास्य वचोमहाघटे पूर्णामसौ कर्णपुटेन पण्डितः ॥ २४ ॥**

**तेज इति** ॥ पण्डितो विद्वानसौ मध्यगेहार्यो नन्दनगात्रपात्रगं नन्दनस्य गात्रमेव शरीरमेव पात्रं तद्गच्छतीति तादृशं, सदाव्ययं न विद्यते व्ययो यस्य तदव्ययं तेजोमृतं तेज एवामृतं नेत्राञ्जलिभ्यां नेत्रे एवाञ्जली हस्तौ ताभ्यामपिबत् । सादरं सन्ददर्शेति यावत् । अस्य श्रीमध्वाचार्यस्य वचोमहाघटे वचांस्येव व्याख्यानात्मकवाच एव महाघटस्तस्मिन् पूर्णां विद्यासुधाञ्च विद्यारूपामृतञ्च कर्णावेव पुटं, तेनापिबत् । चित्रं तत्प्रवचनं सादरमशृणोदिति भावः ॥ २४ ॥

**लीलाविवादे गुरुणा जगद्गुरोः प्रसङ्गतस्तत्र च तादृशे सति ।**
**सूत्रार्थवित्कुरु भाष्यमञ्जसेत्याक्षेपपूर्वं गुरुरभ्यधादिमम् ॥ २५ ॥**

**लीलेति** ॥ जगद्गुरो श्रीमध्वाचार्यस्य गुरुणाच्युतप्रेक्षाचार्येण प्रसङ्गतस्तत्र च गुरुणासहप्रसङ्गकाले च तादृशे तादृग्विधे । 'सत्सूत्रभावैरविचारितं' इत्यादि पूर्वोक्त-प्रकारेण शाङ्करभाष्यनिराकरणरूप इत्यर्थः । लीलाविवादे लीलया मत्सरराहित्येन विवादो भाष्यं सूत्रसम्मतं भवति न भवतीति विप्रतिपत्तिस्तस्मिन्सति गुरुरच्युतप्रेक्ष इमं श्रीमध्वाचार्यं प्रति 'त्वं सूत्रार्थवित्सूत्राणां ब्रह्मसूत्राणामर्थं वेत्ति सम्यग् जानातीति तादृशश्चेद्भाष्यमञ्जसा कुरु' इत्याक्षेपपूर्वं, आक्षेपः पूर्वो यथा भवति तथाभ्यधात् । प्रोवाच ॥ २५ ॥

**विधानमात्रे तदुपादृते तदा पयो यथाच्छं परमः स हंसराट् ।**
**तल्लीनमाक्षेपमुपेक्षताफलं वारीव सन्तो हि गुणांशतोषिणः ॥ २६ ॥**

**विधानेति** ॥ परमो हंसराट् परमहंसश्रेष्ठः स मध्वाचार्यस्तदा विधानमात्रं केवलं विधानं 'तद्भाष्यमञ्जसा कुरु' इत्येवं रूपं, हंसराडच्छं निर्मलं पयः क्षीरं यथा, आददादिति शेषः । तथाददे । अङ्गीचकार । अफलं न विद्यते फलं यस्य तदफलं निष्फलमित्यर्थः । तल्लीने तस्मिन् 'सूत्रार्थविच्चेत्कुरुभाष्यमञ्जसे'त्यस्मिन् वाक्य इत्यर्थः । लीनं गूढमाक्षेपं, हंसराट् क्षीरलीनं वारीवोपैक्षत । उपेक्षितवान् । अयं भावः । एतद्भाष्यं सूत्रसम्मतं नेत्युक्ते, तदसहमानो गुरुराक्षेपपूर्वकं त्वमञ्जसा भाष्यं कुर्वित्यब्रवीत् । तदायं श्रीमध्वः तद्वाक्ये काकुवेद्यमाक्षेपं हित्वा भाष्यमञ्जसा कुर्विति विधानवाक्यमात्रं गुर्वाज्ञारूपत्वेनाददे । यथा हंसः सनीरंक्षीरं पुरोवर्ति दृष्ट्वा नीरमपहाय क्षीरं पिबेत्तद्वदिति । एतदेव सतां युक्तमित्याह सन्तोऽहीति । हि यस्मात्सन्तः सज्जना गुणांशतोषिणो गुणलक्षणोंऽशः गुणांशस्तेन तोषो एषामस्तीति तादृशाः, सन्तोऽपि गुणदोषयोः दोषमनादृत्य गुणलेशं दृष्ट्वा तमेवाद्रियन्त इति भावः । [ अत्र उपमार्थान्तरन्यासयोः सङ्करः ] ॥ २६ ॥

**वैराग्यवैयात्यसुवाक्त्वपूर्वकैर्युक्तो गुणैः पारमहंस्यभूषणैः ।**
**ज्येष्ठो यतिर्यो लिकुचान्वयोद्भवस्तं भूरिभक्तिः स कदाचिदब्रवीत् ॥ २७ ॥**

**वैराग्येति** ॥ पारमहंस्यभूषणैः परमहंसस्य यतेर्भावः पारमहंस्यं यतित्वं तस्य भूषणैः, वैराग्यवैयात्यसुवाक्त्वपूर्वकैः विगतो रागः ऐहिकामुष्मिकफलोपभोगापेक्षा यस्य स विरागस्तस्य भावो वैराग्यं, वैयात्यं धाष्ट्र्यं जिह्वोपस्थजय इत्यर्थः, शोभना वाग्यस्य सुवाक् तस्य भावः सुवाक्त्वम्, वाग्मित्वमिति यावत् । तानि पूर्वाणि येषां 'शेषाद्विभाषा' इति कः । तैर्गुणैर्युक्तः भूरिभक्तिर्भूरिः बह्वी भक्तिर्यस्य स लिकुचान्वयोद्भवो लिकुचाख्येऽन्वये वंशे, उद्भव उत्पत्तिर्यस्य सः । ज्येष्ठः आश्रमज्येष्ठो यो यतिः । स कदाचित् श्रीमध्वाचार्यमब्रवीत् ॥ २७ ॥

**विरोधिवेदान्तकृतान्तसम्पदां भाष्यादिकं चेदिदमस्तु का क्षतिः ।**
**अस्मभ्यमाचक्ष्व विचक्षणोचितं भावं तु सूत्रोपनिषद्विवक्षितम् ॥ २८ ॥**

**विरोधीति** ॥ इदं भाष्यादिकं शङ्करप्रणीतभाष्यमादि यस्य तद्ग्रन्थजातमित्यर्थः । वेदान्तकृतान्तसम्पदां वेदान्तानामन्तो निर्णयो यस्मात्तद्वेदान्तमध्यायचतुष्टयात्मकब्रह्म-

मीमांसाशास्त्रं, 'अन्तोऽन्त्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । तस्य कृतान्तस्य सिद्धान्तस्य तस्मदां विरोधिचेदस्तु का क्षतिः । का हानिः । हे विचक्षण! सूत्रोपनिषदाद्यर्थविचारविचक्षण! श्रीमध्वाचार्य! त्वमस्मभ्यं सूत्रोपनिषद्विवक्षितं सूत्राणि चोपनिषदश्च नाभिविवक्षितं वक्तुमिष्टं, सूत्रोपनिषदामभिप्रेतमिति वा, उचितं पूर्वोत्तर-विरोधाभावेन प्रमाणान्तरसम्मत्या युक्तियुक्तन्यायाङ्गीकर्तुमुचितं भावमर्थं । 'भावो लीला क्रिया चेष्टाभूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायां' इति वैजयन्ती । आचक्ष्व। वद ॥ २८ ॥

**इत्यस्य वाचा शरदेव भासिता यदाखिलाशा शुभपूर्णया बभौ ।**
**प्रमोदतीर्थाननचन्द्रचन्द्रिका व्याख्याभिधा विष्णुपदप्रकाशिनी ॥ २९ ॥**

इतीति ॥ शुभपूर्णया शुभेन परिपूर्णया परममङ्गलयेति यावत् । इति, एवमुक्तयास्य लिकुचान्वयसम्भवस्य यतेर्वाचा 'अस्मभ्य'मित्यादिपूर्वोक्तवाचा, अखिलाशाः समस्त-सज्जनानामभिलाषाः 'कोन्वस्माकं सूत्रोपनिषदाद्यर्थं सम्यग्वक्ष्यति, कंवापृच्छामः' इत्यादिरूपाः सतामभिलाषा इत्यर्थः । अखिलाशाः अखिलदिशः शुभपूर्णया शोभना पूर्णा पूर्णिमा यस्यास्तया शरदेव शरदृतुनेव भासिताः प्रकाशिताः, ब्रह्मसूत्राद्यर्थ-जिज्ञासाभिलाषः सकलसज्जनानामस्ति । तस्मात्त्वं सूत्राद्यर्थं सम्यग्वदेत्यस्यवाचा यदा सर्वेषामभिलाषो व्यञ्जित इति भावः । तदा व्याख्याभिधा व्याख्येत्यभिधा नाम यस्याः सा, विष्णुपदप्रकाशिनी. पद्यते मुक्तैर्गम्यत इति पदं स्वरूपं विष्णुपदं भगवत्स्वरूपं तत्प्रकाशयतीति तादृशी, प्रमोदतीर्थाननचन्द्रचन्द्रिका, प्रमोदतीर्थस्य आनन्दतीर्था-चार्यस्य यदाननं मुखं तदेव चन्द्रस्तस्य चन्द्रिका कौमुदी बभौ । शुशुभे । चन्द्रिका विष्णुपदमाकाशं प्रकाशयन्ती यथा शोभते तद्वत्तदुक्तयनन्तरं श्रीमध्वाचार्येण स्वमुखतः क्रीडमानं व्याख्यानं श्रीहरिस्वरूपं प्रकाशयत्सत्सतामानन्दकरमभूदिति भावः ॥ २९ ॥

**जेष्यन्कदाचित्कलिकालपालितां दिशं प्रयातोऽच्युतबुद्धिना सह ।**
**स्वप्रधीर्मण्डितविष्णुमङ्गलं विष्णुं जगन्मङ्गलमाननाम सः ॥ ३० ॥**

**जेष्यन्निति** ॥ समग्रधीः समग्रा पूर्णा धीर्यस्य स मध्वाचार्यः । कदाचिज्जेष्यन् दाक्षिणात्यविदुषो जेष्यन्नच्युतबुद्धिना अच्युतप्रेक्षाचार्येण सह कालपालितां यमपालितां 'कालो मृत्युर्यमेचे'ति वैजयन्ती । दिशं रजतपीठापेक्षया दक्षिणां दिशमित्यर्थः । प्रयातःसन् मण्डितविष्णुमङ्गलं मण्डितोऽलङ्कृतो विष्णुमङ्गलाख्यदेशो येन तं जगन्मङ्गलं जगतो मङ्गलं यस्मात्तं । जगति मङ्गलं शोभनमिति वा । विष्णुमाननाम । सादरं ननाम ॥ ३० ॥

भिक्षाप्रदात्रात्र परीक्षितुं मुहुर्दत्ते प्रभुक्ते कदलीफलोच्चये ।
अनेन निर्यत्नमवार्यविस्मयस्तमार्यवर्यं विजनेऽवदद्गुरुः ॥ ३१ ॥

**भिक्षेति** ॥ अत्र विष्णुमङ्गले भिक्षाप्रदात्रा भिक्षाया अन्नस्य 'अन्धः कूरं भक्तं दीदिविरन्नं तथोदनं भिक्षा' इति हलः । प्रदात्रा केनचिद्गृहस्थेन परीक्षितुं लोकप्रसिद्धमस्य स्वेच्छाभोक्तृत्वलक्षणमाहात्म्यं वास्तवंनवेतिपरीक्षणाय. भिक्षावसाने, मुहुः पुनःपुनः कदलीफलोच्चये कदलीपक्वफलसमूहे दत्तेऽनेन श्रीमध्वाचार्येण निर्यत्नं निर्गतो यत्नः आयासो यथा भवति तथा प्रभुक्तेसति, अवार्यविस्मयोऽवार्योऽस्यर्थो विस्मयो यस्य स गुरुरच्युतप्रेक्षाचार्य आर्यवर्यं महतामुत्तमं तं श्रीमध्वाचार्यं विजने विगतः जनो यस्मिन् , तस्मिन् प्रदेशे रहसीत्यर्थः । अवदत् ॥ ३१ ॥

भिक्षावसाने द्विशताधिकैः फलैर्वृद्धैः प्रभुक्तैः परिपूरितेऽपि ते ।
तनूदरे नास्ति गरिष्ठता कथं सुचित्त सत्यं वदताद्भवानिति ॥ ३२ ॥

**भिक्षेति** ॥ सुचित्त! सु शोभनं चित्तं यस्य तत्सम्बुद्धिः । श्रीमध्वाचार्य! भिक्षावसाने भोजनावसाने प्रभुक्तैर्वृद्धैर्महद्भिः द्विशताधिकैः द्वे च ते शते च ताभ्यामधिकैः फलैः कदलीपक्वफलैस्ते तव परिपूरितेऽपि तनूदरे सूक्ष्मोदरे गरिष्ठता गुरुता कथं नास्ति. भवान् सत्यं वचो वदतात् । वदत् । इत्यवदिति पूर्वेणान्वयः ॥ ३२ ॥

अंगुष्ठमात्रं जठरं प्रतिष्ठितं जाज्वल्यमानं मम जातवेदसम् ।
नित्यं हितं विश्वदहं च वित्त तं विश्वस्नेता इति सोऽब्रवीत्तदा ॥ ३३ ॥

**अंगुष्ठेति** ।। तदा विश्वेशचेता विश्वेशे जगदीशे हरौ चेतो मनो यस्य सः श्रीमध्वाचार्यः । 'हे गुरवः! यूयं मम जठरे प्रतिष्ठितं स्थितं जातवेदसमग्निमंगुष्ठमात्र-मंगुष्ठपर्वपरिमितं जाज्वल्यमानं भृशं ज्वलन्तं वित्त जानीत । गुरुत्वाद्बहुवचनं । पञ्चमपि मम नित्यं सदा हितं वित्त । एतादृशेनाप्यनेन मम न किञ्चिदनिष्टमस्तीति भावः । तं मम जठरस्थितं जातवेदसं विश्वदहञ्च विश्वं जगद्दहतीति तादृशञ्च वित्त । प्रलये जगद्दहनदक्षञ्चेत्यर्थः' इत्यब्रवीत् ।। ३३ ।।

**पर्याकुलानेकसरस्वतीततीन्यायोपपन्नान् विविधार्थसंयुतान् ।**
**अतीत्य देशान् समयांश्च चारुधीरसौ जगामाभिमतेन वर्त्मना ।। ३४ ।।**

**पर्याकुलेति** ।। चारुधीश्चारुर्मनोहरा धीर्यस्य सोऽसौ मध्वाचार्यः । अभिमतेन महाजनसम्मतेन श्रुत्येनेति यावत । वर्त्मना मार्गेण पर्याकुलानेकसरस्वतीततीन पर्याकुलाः सम्पूर्णा या अनेकसरस्वत्योऽनेकनद्यस्तासां ततिः समूहो येषु देशेषु तान् । शास्त्रपक्षे परिपूर्णानिकवाचां ततिः समूहो येषु तान , 'सरस्वती वाचि नद्यां स्त्रीरत्ने' इति हेमचन्द्रः । न्यायोपपन्नान्सत्सज्जनपदधर्मोपेतान् . तत्तच्छास्त्रन्याययुक्तांश्च विवि-धार्थसंयुतान् विविधा नानाविधा येऽर्थाः पदार्थास्तैः संयुतान युक्तान् नानाविधप्रमेय-रोपयुक्तांश्च देशान प्रासान्प्रासान् देशान समयांश्च ततत्त्वादिभिः प्रस्तुतशास्त्राणिचा-तीत्य, अतिक्रम्य निराकृत्य च जगाम । विष्णुमङ्गलादपि दक्षिणतो ययौ ।।३४।।

**स्वहेलया पातितपार्थिवव्रजां धीशुद्धिदां केरलभूषणायिताम् ।**
**पयस्विनीं प्रेक्ष्य पथि द्विजार्चितां स भाविनीमस्मरदत्र चण्डिकाम् ।।३५।।**

**स्वेति** ।। स श्रीमध्वाचार्यः पथि मार्गे स्वहेलया स्वलीलया 'हेलाविलासबिब्बोक-लीलाललितविभ्रमाः' इति हलः । स्वप्रवाहलीलयेत्यर्थः । पातितपार्थिवव्रजां पातितः पार्थिवव्रजो वृक्षसमूहो यया तां धीशुद्धिदां धियोऽन्तःकरणस्य शुद्धिं स्नानपानादिना ददातीति तां केरलभूषणायितां भूषणवदाचरतीति भूषणायिता केरलस्य केरलदेशस्य भूषणायिता तां द्विजार्चितां विप्रैः पक्षिभिश्च पूजितां । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । पयस्विनीनामनदीं प्रेक्ष्य, अत्र केरलदेशस्थ पयस्विनीतटे भाविनीमवनागं

करिष्यन्तीं स्वहेलयास्वनमनलीलया पातितपार्थिवव्रजां पातिततुरुष्कादिदुष्टराजसङ्घां यया तां धीशुद्धिदां स्मरणकीर्तनादिना चित्तशुद्धिदां केरलभूषणायितां केरलदेशेऽवतारात्तदलङ्कारभूतां द्विजार्चितां ब्राह्मणपूजितां चण्डिकां दुर्गामस्मरत् ॥ ३५ ॥

ततः क्रमेण प्रचलन्नुपेयिवाननन्दतेन्दीवरसुन्दरच्छविम् ।
अम्भोजनाभं स भुजङ्गशायिनं श्रीवल्लभं श्रीमदनन्तसत्पुरे ॥ ३६ ॥

तत इति ॥ स श्रीमध्वाचार्यस्ततः पयस्विनीतटात् क्रमेण प्रचलन् गच्छन्सन् श्रीमदनन्तसत्पुरे श्रीमत्कान्तिमद्यदनन्तसत्पुरं अनन्तसत्पुराख्यक्षेत्रं तस्मिन्नुपेयिवान् प्राप्तः, इन्दीवरसुन्दरच्छविं इन्दीवरवत् सुन्दरा छविः कान्तिर्यस्य तं । अम्भोजनाभं, अम्भोजं नाभौ यस्य तं भुजङ्गशायिनं भुजङ्गे शेषे शेत इति तं श्रीवल्लभं श्रीहरिमवन्दत ॥ ३६ ॥

वेदान्तसूत्राणि कृतान्तवित्तमो व्याख्यादसौ शिष्यगणाय संसदि ।
विलक्षणं जीवगणाद्गुणार्णवं ब्रह्माच्युताख्यं प्रतिपादयन्मुहुः ॥ ३७ ॥

वेदान्तेति ॥ कृतान्तवित्तमः कृतान्तं ब्रह्मसूत्रसिद्धान्तं । 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः । अतिशयेन वेत्तीति कृतान्तवित्तमः, असौ श्रीमध्वाचार्यः । संसदि विद्वत्सभायां शिष्यगणाय शिष्यसमूहाय वेदान्तसूत्राणि, अच्युताख्यं अच्युत इति आख्या यस्य तत् ब्रह्म गुणार्णवं गुणैरर्णव इव तं । अतएव जीवगणात् जीवसमूहात् विलक्षणं भिन्नं मुहुः पुनःपुनः प्रतिपादयनसन् व्याख्यात् व्याचख्यौ । ख्या प्रकथने लङ् । ब्रह्मशब्दस्य जीवादिष्वपिरूढत्वादच्युताख्यं ब्रह्मेत्युक्त्यावब्रह्मशब्दो विष्णुवाचीत्युक्तं भवति । तस्य जीवगणाद्विलक्षणत्वे गुणार्णवत्वं हेतुः । जीवस्याल्पगुणत्वात् । तस्माद्विरुद्धधर्माधिकरणत्वयुक्त्या जीवब्रह्मणोर्भेदं प्रतिपादयनसन् व्याचख्यावित्यर्थः ॥

अप्रांशुनृत्तोपपदाभिवासजः स सङ्करो वैरपरायणः पुनः ।
असूययात्रेऽत्र महानतिक्रमः सूत्रार्थवादाकृतभाष्यकेष्विति ॥ ३८ ॥

अप्रांश्विति ॥ वैरपरायणो वैरं श्रीमुख्यप्राणस्य द्वेषानुसन्धाने परायणस्तत्परः । 'तत्परस्तु परायणः' इति हलः । स पूर्वं कालटिग्रामजातः सङ्करः । पुनर्जन्मान्तरेऽ-

प्रांशुनूलोपपदाधिवासजः, अप्रांशुनूलमुपपदं यस्याधिवासशब्दस्य । सोऽधिवासः अधिवासशब्दो वाचकत्वेन यस्य तस्मिन्कुले जातः, अप्रांशुनूलाधिवासस्य 'कुडुपुम्नूरु' इत्यपभ्रष्टभाषायां संज्ञा । नौळवभाषायां अप्रांशोः 'कुडु' इति नूलस्य 'पोसल्' इति अधिवासस्य 'ऊरु' इति च प्रसिद्धेः कुडुपुम्नूराख्ये कुले जातःसन्नित्यर्थः, अत्रानन्तपुरे अन्वयया मत्सरेण अकृतभाष्यकैस्त्वकृतं भाष्यं यैस्तेषु वर्तमानः सूत्रार्थवादः सूत्रार्थानां वादः कथनं महानतिशयितः, अतिक्रमः मर्यादातिक्रम इत्यूचे । अयं भावः । ये भाष्यकृतस्तेषां भाष्यनिरपेक्षं सूत्रार्थकथनं युक्तं । अकृतभाष्याः पुरुषाः यदिभाष्य-निरपेक्षं सूत्रार्थं वदन्ति तर्हि महान् मर्यादातिक्रम इति ॥ ३८ ॥

**वदोत्तरं भाति यदीह कुर्महे भाष्यं कृतिर्नास्य हि दण्डवारिता ।**
**जगद्गुरूणामिति तां गुरोर्गिरं जनः समस्तोऽभिननन्द सस्मिताम् ॥ ३९ ॥**

**वदेति** ॥ इह अस्माभिरुक्ते सूत्रार्थे यद्युत्तरमस्मदुक्तसूत्रार्थनिराकरणसमर्थमुत्तरं भाति प्रतीयते तर्हि त्वं वद ब्रूहि । भाष्यमपेक्षितश्चेत्कुर्महे करिष्यामः । अस्य भाष्यस्य कृतिर्निर्माणं दण्डवारिता नहि न भवतिहि । भाष्यकरणेऽयं दण्डो भविष्यति तस्माद्भाष्यं नकर्तव्यमिति केनचिद्राजादिना दण्डेनवारिता नहीति भावः । जगद्गुरूणां रुद्रादीनां गुरोः श्रीमध्वाचार्यस्य, इत्येवमुक्तां सस्मितां तां गिरं समस्तो जनोऽभिननन्द ॥ ३९ ॥

**प्राज्ञैर्महापुरुषसर्वलक्षणैः सम्पन्नदेहोऽयमितीरिते प्रभौ ।**
**परे परस्याप्यतिपीनतादृशः स्फिङ्मात्रसंशंसनमत्र चक्रिरे ॥ ४० ॥**

**प्राज्ञैरिति** ॥ प्रभौ श्रीमध्वाचार्ये प्राज्ञैः पुरुषलक्षणशास्त्राभिज्ञैः पुरुषैः, अयं महापुरुषसर्वलक्षणैर्महापुरुषाणामत्युत्तमाधिकारिणां यानि सर्वाणि लक्षणानि, अङ्ग-सम्पद्भिः । 'लक्षणं कार्यिके चिह्ने नाम्नि मुद्राङ्कलक्ष्मणोः' इति वैजयन्ती । सम्पन्नः सम्पूर्णो देहो यस्य स इतीरितेसति परेऽपि सङ्करपक्षीया अप्यतिपीनतादृशः, अति-पीनतां स्फिङ्मात्रस्यातिपुष्टत्वं पश्यन्तीति तादृशाः सन्तः परस्य सङ्करस्य केवलं स्फिक् स्फिङ्मात्रं तस्य संशंसनं सम्यक्स्तुतिं । स्त्रियां स्फिचौ कटिप्रोथौ' वित्यमरः ।

तदेव चक्रिरे । सभायामयं महापूरुषसर्वलक्षणपूर्णदेह इति श्रीमध्वाचार्ये प्रशस्यमाने सति तदसहमानाः परे स्वकीयस्य सङ्करस्यातिस्थूलस्फिङ्मात्रप्रशंसनं चक्रुस्तस्मिन् प्रशंसनीयलक्षणान्तरमपश्यन्त इति भावः ॥ ४० ॥

**रिफग्दूषणानि प्रतिपादयत्यलं सम्पूर्णसंख्येऽस्य तु लक्ष्मशास्त्रतः ।**
**तद्दण्डसंखण्डनसंश्रवं व्यधात्तदक्षमोऽसौ प्रकृतिर्हि सासताम् ॥ ४१ ॥**

**स्फिगिति** ॥ सम्पूर्णसंख्ये सम्पूर्णा संख्या ज्ञानं यस्य तस्मिन् । 'बुद्धिर्मतिश्च मेधासंख्या संवित्तिरुपलब्धि'रिति हलः । श्रीपूर्णप्रज्ञाचार्ये लक्ष्मशास्त्रतो लक्ष्मणः लक्षणस्य शास्त्रं तेन, अस्य स्फिग्दूषणान्यलं सम्यक् प्रतिपादयतिसति । तदक्षमस्तस्मिन दण्डखण्डने, अक्षमोऽसमर्थोऽसौ सङ्करः तद्दण्डसंखण्डनसंश्रवं तस्य श्रीमध्वाचार्यस्य दण्डस्य संखण्डने संश्रवं प्रतिज्ञां । 'प्रतिश्रवः संश्रवः प्रतिज्ञेति' हलः । व्यधाच्चक्रे । दण्डसंखण्डनाशक्तः किमिति प्रतिज्ञां चकारेत्यत्राह प्रकृतिरिति । सा, अशक्यकार्यप्रतिज्ञासतां प्रकृतिर्हि स्वभावो हि । अतश्चकारेति भावः । [ अत्रार्थान्तरन्यासालङ्कारः ] ॥ ४१ ॥

**स्नात्वात्र तीर्थेष्वचिरेण कन्यकातीर्थे सुतीर्थे सुखतीर्थ आप्लुतः ।**
**समुद्रसेतौ च निमज्य विष्णवे श्रीरामनाथाय नमश्चकार सः ॥ ४२ ॥**

**स्नात्वेति** ॥ स सुखतीर्थ आनन्दतीर्थाचार्योऽत्रानन्तपुरक्षेत्रे तीर्थेषु स्नात्वाचिरेणाविलम्बात् सुतीर्थे शोभनतीर्थे कन्यकातीर्थे कन्याकुमार्यास्तीर्थ आप्लुतः स्नातःसन समुद्रसेतौ च समुद्रस्य सेतौ श्रीरामकृते च 'धनुष्कोटा'विति यावत् । निमज्य स्नात्वा श्रीरामनाथाय श्रीरामश्चासौ नाथश्च तस्मै विष्णवे नमश्चकार । नमस्कारं कृतवान् । तस्मिन् सेतौ श्रीरामेण प्रतिष्ठापिते रामनाथाख्यलिङ्गे सन्निहिताय हरये नमस्कृतवानिति भावः ॥ ४२ ॥

**तमात्र जन्तं यतिवेषधारिणं दण्डं प्रकाश्यैष हसन्नभाषत ।**
**खण्ड्येत दण्डो यदि चण्ड न त्वया त्वं पण्डकोऽपण्डित वन्ध्यवागिति ॥४३॥**

**तमिति** ॥ एष श्रीमध्वाचार्यः । आत्रजन्तं स्वाभिमुखमागच्छन्तं यतिवेषधारिणं यतेर्यो वेषस्तं धर्तुं शीलमस्यास्तीति तं सङ्करं प्रति दण्डं स्वहस्तगतदण्डं प्रकाश्य तस्मै दर्शयित्वा हसनसन्, चण्ड! क्रूर! अपण्डित! मूर्ख! त्वया यदि दण्डः मम दण्डो न खण्ड्येत । खडि भेदे लिङ् । तर्हि वन्ध्यवाक् वन्ध्या व्यर्था वाक् यस्य सोऽनृतवचन इत्यर्थः । त्वं पण्डको नपुंसक इत्यभ्यभाषत । भाष व्यक्तायां वाचि लङ् ॥

**लज्जानतः स्वार्थमथार्थयन्नसन्नुपैक्ष्यतासौ द्विजनायकैस्तदा ।**
**आनन्दयन्तं वदनेन्दुना जगत्तं द्वेष्टि कः प्राज्ञमिहेति वादिभिः ॥ ४४ ॥**

**लज्जेति** ॥ अथ लज्जानतो लज्जयाऽधोमुखः स्वार्थं स्वप्रयोजनं तं प्रत्यर्थयन् ब्राह्मणान् प्रार्थयन्, भवद्भिरत्रदण्डभङ्गे साहाय्यं कर्तव्यमिति प्रार्थयन्। असन् दुष्टोऽसौ संकरस्तदा, 'वदनेन्दुना वदनमेवेन्दुस्तेन जगदानन्दयन्तमिह भुवि प्राज्ञं श्रीमध्वाचार्यं को विवेकी द्वेष्टि द्वेषं कुर्यात्' । द्विष अप्रीतौ लट् । इति वादिभिर्वक्तृभिर्द्विजनायकैर्ब्राह्मणश्रेष्ठैरुपैक्ष्यत । उपेक्षितोऽभूत् । ईक्ष दर्शनाङ्कनयोर्लङ् ॥ ४४ ॥

**या याः प्रसक्ताः परिषत्सु पूर्वैर्विद्याविदग्धैर्विविधैः समागमे ।**
**स तासु तासु प्रतिभातिभासुरो विद्यासु विद्याधिपतिर्जिगाय तान् ॥ ४५ ॥**

**या या इति** ॥ परिषत्सु विद्वत्सभासु विविधैर्नानाविद्याविशेषविद्भिर्विदग्धैस्तत्तद्विद्यासु चतुरैः पुरुषैः समागमेऽस्मिन् सङ्गतेऽसत्यां या या विद्याः प्रसक्ताः प्रस्तुताः, तासु तासु विद्यासु प्रतिभातिभासुरः प्रतिभया स्वरूपप्रज्ञयातिभासुरोऽत्यन्तं भासुरो विद्याधिपतिः स श्रीमध्वाचार्यस्तान् तत्तद्विद्यावतो विदुषो जिगाय । जी जये लिट् ॥

**अचाल्यमानः सगुरुः सचापलैरसज्जनानामवलीयसामिह ।**
**उवास मासांश्चतुरो महामनाः सिंहो गुहान्तःपगतः शुनामिव ॥ ४६ ॥**

**अचाल्येति** ॥ सगुरुर्गुरुसहितः । अवलीयसां, अतिदुर्बलानामसज्जनानां चापलैः चञ्चलचेष्टाभिः । अल्पीयसां क्षोभकारणैर्दुर्वादिचेष्टाभिरित्यर्थः । अचाल्यमानोऽप्रकम्प्यमानः स महामना महन्मनो यस्य स पूर्णप्रज्ञाचार्यः । इह समुद्रमेतो चतुरोमा-

साल्वृनां शुनकानां चापलैश्चाल्यमानो गुहाया अन्तं मध्यमुपगतः सम्प्राप्तः सिंह इव उवास । वसनिवासे लिट् । चातुर्मास्यमुवासेति भावः ॥ ४६ ॥

**शृङ्गारसिन्धुं स भुजङ्गशायिनं श्रीरङ्गवासं कृतमंगलं सताम् ।**
**अमन्दधीर्देवमवन्दतागतः कवेरकन्याहिमवायुसेवितम् ॥ ४७ ॥**

**शृङ्गारेति** ॥ आगतः सेतौ चातुर्मास्यव्रतं समाप्य तत आगतोऽमन्दधीः, अमन्दा पूर्णा धीर्यस्य सः श्रीमध्वाचार्यः । शृङ्गारसिन्धुं शृङ्गारेण सिन्धुरिव समुद्र इव तं भुजङ्गशायिनं भुजङ्गे शेषे शेतुं शीलमस्यास्तीति तं श्रीरङ्गवासं श्रीरङ्गक्षेत्रे वासो यस्य तं । सतां कृतमङ्गलं कृतं मङ्गलं श्रेयो येन तं कवेरकन्याहिमवायुसेवितं कवेरस्य तन्नामकमुनेः कन्या कुमारी 'कावेरी' तस्या यो हिमवायुः शीतलवायुस्तेन सेवितं । 'हिमं शीतं तुषारं च चन्दने च हिमे विदुः' इति विश्वः । कावेरीजलसम्पर्काच्छीतलवायुनासेवितमित्यर्थः । देवं क्रीडादिगुणयुक्तं श्रीहरिमवन्दत । वन्दतेर्लङ् ॥

**ततो निवृत्तः परमेव पूरुषं प्रणम्य नानायतनेषु सञ्चरन् ।**
**प्रकाशयन् स्वातिशयानमानुषानाशामुदीचीं प्रययावसौ क्रमात् ॥ ४८ ॥**

**तत इति** ॥ असौ श्रीमध्वाचार्यस्ततः श्रीरङ्गक्षेत्रान्निवृत्तःसन् मञ्जरन्नामादिकेषु सञ्चरनसन्, नानायतनेषु दौर्गे, शैव, स्कान्दादिनानादेवालयेषु परं सर्वोत्तमं पूरुषमेव पूर्णषड्गुणं श्रीहरिमेव प्रणम्योदीचीमुत्तरमाशां दिशं, अमानुषान् मानुषेष्वविद्यमानान् स्वातिशयान् स्वमाहात्म्यातिशयान् प्रकाशयनसन प्रययौ । यातेर्लिट् ॥ ४८ ॥

**ततस्ततो विस्मितलोचनैर्नरैर्निरीक्ष्यमाणोऽतिसुलक्षणाकृतिः ।**
**ग्रामोत्तमान् प्राप्य पयस्विनीतटे विवेश देवायतनं स किञ्चन ॥ ४९ ॥**

**तत इति** ॥ विस्मितलोचनैः स्वसौन्दर्यदर्शनेन विस्मितानि लोचनानि येषां तैर्नरैस्ततस्ततो निरीक्ष्यमाणः । अतिसुलक्षणा शोभनलक्षणोपेताकृतिर्देहो यस्य स श्रीमध्वाचार्यः । ग्रामोत्तमान् ग्रामश्रेष्ठान् प्राप्य पयस्विनीतटे पयस्विन्याख्यनद्यास्तटे किञ्चन देवायतनं देवतामन्दिरं विवेश ॥ ४९ ॥

अधीत्य धर्मेण षडङ्गमागमं तदर्थसंवर्णननिर्णयान्विताः ।
प्रापुर्द्विजेन्द्रास्तमपूर्वपूरुषं जिज्ञासवः सुप्रथितं जगत्त्रये ॥ ५० ॥

अधीत्येति ॥ धर्मेण स्वाध्यायाध्ययनोचितधर्मेण षडङ्गं षट् ('शिक्षाव्याकरणं छन्दो निरुक्तं ज्योतिषं तथा । कल्पश्चे'ति षडङ्गानि) शिक्षादीन्यङ्गानि यस्य तमागमं वेदमधीत्य । न केवलमध्ययनमात्रेण चरितार्थाः, किन्तु तदर्थसंवर्णननिर्णयान्विताः, तस्यार्थानां संवर्णनं सम्यक्कथनं तस्मिन् यो निर्णयस्तेनान्विताः । व्याकरणनिरुक्त्या-दिभिरस्यागमस्यायमर्थ इति वक्तुं समर्था इत्यर्थः । द्विजेन्द्राः पयस्विनीतटवासिनो द्विजप्रवरा जगत्रये जगतां त्रये सुप्रथितं सुप्रसिद्धमपूर्वपूरुषं, अपूर्वः पूर्वमदृष्टः स चासौ पूरुषश्च तं श्रीमध्वाचार्यं जिज्ञासवो महामहिमत्वेन श्रुतोऽयं कीदृश इति ज्ञातु-मिच्छवः सन्तः प्रापुः ॥ ५० ॥

सुस्मितेन्दुमरविन्दलोचनं स्वर्णवर्णमतिभद्रभाषणम् ।
वीतभूषमपि विश्वभूषणं तं दिदृक्षुरलमापतज्जनः ॥ ५१ ॥

सुस्मितेति ॥ जनः सुस्मितेन्दुं सुस्मितमेवेन्दुर्यस्य तमरविन्दलोचनं अरविन्दमिव लोचनं यस्य तं स्वर्णवर्णं स्वर्णवद्वर्णो यस्य तं, अतिभद्रभाषणमतिभद्रं भाषणमालापो यस्य तं वीतभूषं वीता विगता भूषालंकृतिर्यस्य तं । अपि तथापि विश्वभूषणं विश्वस्य भूषणमिवाचरति भूषणाति भूषणतीति भूषणस्तं, तं श्रीमध्वाचार्यं दिदृक्षुर्द्रष्टु-मिच्छुःसन्नलं सम्यगापतत् । आजगाम । पत्लृ पतने लङ् । तत्र विद्वज्जनस्य विद्वत्तादिगुणजिज्ञासयागमत् । तदितरो जनस्तत्स्वरूपदिदृक्षयागमदित्यभिप्रायेण 'प्रापुर्द्विजेन्द्रा, तं दिदृक्षुरलमापतज्जनः' इति च पृथगुक्तं ॥ ५१ ॥

विद्योरुद्युतिधीरतारकतिरस्कारे पतङ्गायितो
दुर्वादीभकुतर्ककुम्भदलने सिंहप्रबर्हायितः ।
लोलालोककलोकदक्कुमुदिनीसंह्लादनेऽब्जायितः
संसन्मण्डलमण्डनायितवपुः स्वानन्दतीर्थो बभौ ॥ ५२ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के पञ्चमः सर्गः ॥

विद्वेति ॥ विद्वेषोरुद्युतिरुक्ष्णकान्तिर्येषां ते च ते धीरा विद्वांसस्त एव तारकाणि तेषां तिरस्कारो निराकरणं तस्मिन् । 'धीरोधीमाँल्लब्धवर्णः' इति हलः । पतङ्गवन्मृ-र्यवदाचरतीति पतङ्गायितः । 'पतङ्गौ पक्षि सूर्यौ च' इत्यमरः । उद्यदादित्यो यथा नक्षत्रप्रभां नाशयेदेवं श्रीमध्वोऽपि विदुषां विद्वत्तां निराकरोतीति भावः । दुर्वादिन एवेभा गजास्तेषां ये कुतर्ककुम्भा भगवतो निराकारत्वनिर्गुणत्वादिसाधककुतर्कारव्यकुम्भ-स्थलानि तेषां दलने विदारणे, सिंहेषु प्रवर्हः श्रेष्ठस्तद्वदाचरतीति तादृशः । 'मुख्यं पुरोगं प्रवरं प्रवर्हम्' इति हलः । सिंहप्रवर्हो यथेभकुम्भमयलं विदारयेदेवमसौ कुतर्क-विदारण समर्थ इति भावः । लोलश्चञ्चलः सम्भ्रान्तो वाऽऽलोको दर्शनं यस्य स एव लोलालोककः । स्वार्थे कः । सचासौ लोको जनस्तस्य दृग्लोचनं सैव कुमुदिन्युत्पलं, तस्याः संह्लादनं सन्तोषीकरणं तस्मिन्नब्जवच्चन्द्रवदाचरतीत्यब्जायितः । 'अब्जौ शङ्ख शशाङ्कौ च' इत्यमरः । संसन्मण्डलस्य सभामण्डलस्य मण्डनवदलङ्कारवदाचरतीति मण्डनायितं वपुर्देहो यस्य सः स्वानन्दतीर्थो बभौ । भा दीप्तौ लिट् । [अत्र शार्दूल-विक्रीडितवृत्तम् । 'अर्काश्चैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' । इति तल्लक्ष-णात् । अत्ररूपकोपमयोः संसृष्टिः ] ॥ ५२ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां पञ्चमः सर्गः ॥



ऐतरेयमथ किञ्चन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।
श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच ॥ १ ॥

ऐतरेयेति ॥ अथ श्रीमच्छ्रदर्शनानन्तरं तत्र सदसि तस्यां सभायां गरिष्ठः श्रेष्ठः कश्चिद्विद्वान् । ऐतरेयशाखायां भवमैतरेयं किञ्चनसूक्तं सूचयन्सन्, सभा मिलितेयं सभा भवद्भ्यः सूक्तभावमेतत्सूत्रार्थं । 'भावो लीला क्रिया चेष्टा भूत्यभिप्राय जन्तुषु । पदार्थमात्रे सत्तायाम्' इति वैजयन्ती । श्रोतुमिच्छति तावत इत्युवाच । [ अत्र स्वागतावृत्तम् । स्वागता 'रनभगैर्गुरुणा'चेति लक्षणात ] ॥ १ ॥

वर्णसौष्ठवगरिष्ठमतूर्णं तुल्यमात्रमतिमात्रसुलक्ष्म ।
व्यूढहज्ज्वलदघोषममुष्योच्चारणं विदधदभ्यर्थिलार्थम् ॥ २ ॥

वर्णेति ॥ व्यूढं पूर्णं हृत् यस्य स पूर्णप्रज्ञाचार्यः, वर्णानामक्षराणां यत्सौष्ठवं सुष्ठुत्वं तेन स्पष्टतयेति यावत । गरिष्ठमत्युत्तमं यथा भवति तथा, तूर्णं त्वरितं न भवति यथा तथा अतूर्णं, तुल्या मात्रा यथा भवति तथा तुल्यमात्रं । तुल्यमात्रत्वं नाम, अकारादिवर्णानां ह्रस्वत्वेनोच्चारण एकमात्रत्वं, दीर्घत्वे द्विमात्रत्वं, प्लुतत्वे त्रिमात्रत्वं, व्यञ्जनोच्चारणेत्वर्धमात्रत्वमिति । तदुक्तं 'एकमात्रो भवेद्ध्रस्वः द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतोज्ञेयो व्यञ्जनन्त्वर्धमात्रकम्' इति । तथाचैकमात्रत्वेन ह्रस्वोच्चारणं, द्विमात्रत्वेन दीर्घोच्चारणमित्यादिरीत्येति भावः । अतएव शोभनं लक्षणं लक्ष्म यस्य तत्सुलक्ष्म, अतिमात्रमत्यन्तं सुलक्ष्म शोभनलक्षणयुक्तं यथा भवति तथा । जलदस्य घोष इव घोषो ध्वनिर्यथा भवति तथा जलदघोषं । उच्चारणं प्रकृतसूक्तोच्चारणं विदधत् कुर्वन्सन्नमुष्य तव प्रस्तुतसूक्तस्यार्थमभ्यर्थित । उवाच । धात्वोर्लुङ् ॥

लक्षणान्विततया वचनेऽस्मिन् देवतागुरुमसावतिशेते ।
मानमित्यपि विधाय धिया ते तत्तु सूक्तमपरार्थमवोचन् ॥ ३ ॥

लक्षणेति ॥ ते द्विजेन्द्राः । असौ श्रीमध्वाचार्यो लक्षणेन वेदोच्चारणोचितलक्षणेनान्वितोयुक्तस्तस्यभावस्तत्ता तया, अस्मिन् वचने सूक्तोच्चारणतदर्थकथनादिरूपे वचने । विषसप्तमीयं । देवतागुरुं बृहस्पतिमतिशेतेऽतिक्रामति । शीङ् स्वप्ने लट् । इति धिया मनसा मानं सम्भावनांविधायापि, तत् मध्वोक्तं सूक्तन्तु, अपरोर्थो यस्य तत् । श्रीमध्वोक्तार्थादन्यार्थमित्यर्थः । अवोचन् । अस्य सूक्तस्य भवदुक्तार्थो न भवतीत्यवोचन्निति भावः ॥ ३ ॥

स्यात्तथेत्थमपि सम्भवितार्थस्त्र्यर्थतां श्रुतिषु वित्त दशार्थम् ।
भारतं ननु शतार्थमपि स्याद्वैष्णवं पदसहस्रतयं हि ॥ ४ ॥

स्यादिति ॥ हे विद्वांसः! यूयं श्रुतिषु सर्ववेदेषु त्रयोऽर्था यस्य सत्र्यर्थः तस्य भावस्तत्ता तां । अर्थत्रययुक्तामित्यर्थः । वित्त जानीत । विदेर्लोट् । भारतं श्रीमहाभारतं दशार्था यस्य तद्दशार्थं वित्त । विष्णोर्वाचकं वैष्णवं, पदानां नाम्नां सहस्रमेव सहस्रतयं, शतं अर्था यस्य तच्छतार्थमपि स्यान्नु । हि यस्मादर्थः एतत्सूक्तार्थस्तथास्मदुक्तप्रकारेण स्यात् इत्थमपि भवदुक्तप्रकारेणाप्यर्थः सम्भवतीति सम्भविता । तथा च श्रुतीनां त्र्यर्थत्वादर्थद्वयमपि प्रामाणिकमेवेत्यर्थः । तथाचोक्तं—'त्रयोर्थाः सर्ववेदेषु दशार्थाः सर्वभारते । विष्णोः सहस्रनामापि निरन्तर शतार्थकम्'मिति ॥

इत्युदीरयति विस्तृतचित्ते भूसुरा इह जिगीषव एनम् ।
ऊचुरर्थशतकं हरिनाम्नां वर्ण्यतामिति सहासमुखास्ते ॥ ५ ॥

इतीति ॥ विस्तृतचित्ते विस्तृतं चित्तं यस्य तस्मिन् पूर्णप्रज्ञाचार्ये । इति वेदादेस्त्र्यर्थतादिकमस्तीत्युदीरयति वदतिसति, इह वेदादेरर्थत्रयादिवर्णनविषय एनं श्रीमध्वाचार्यं जिगीषवस्ते भूसुराः, सहासं हासयुक्तं मुखं येषां तादृशा सन्तः । अत्रायं निरुत्तरो भविष्यतीति मत्वा स्मितमुखाः सन्त इत्यर्थः । हरिनाम्नां 'विश्वं विष्णुः' इत्यादिभगवन्नाम्नामर्थानां शतकं शतं वर्ण्यतामुच्यतामित्यूचुः ॥ ५ ॥

वर्णयामि तदहं सकलं वः सौष्ठवादनुवदन्तु भवन्तः ।
तं वदन्तमिति तेऽथ वदन्तो वाढमित्यनिदधोद्यममापुः ॥ ६ ॥

**वर्णयामीति** ॥ अहं तत् सकलमर्थशतकं वो युष्मानप्रति वर्णयामि वदामि । वर्ण, वर्णक्रियाविस्तारगुणवचनेषु लट् । भवन्तः सुष्ठुभावः सौष्ठवं तस्मात्, अनुवदन्तु मदुक्तप्रकारेणार्थशतकं सम्यग्भवन्तोऽनुवदन्त्वित्यर्थः । अथ, इतिवदन्तं श्रीमध्वाचार्यं वदमिति तथास्त्विति वदन्तस्ते द्विजा अतिदृढो य उद्यमः प्रयत्नस्तमापुः । तेन वक्ष्यमाणार्थशतानुवादे सावधाना बभूवुरित्यर्थः ॥ ६ ॥

**प्रत्ययप्रकृतिसङ्गमभङ्गीं शब्दशास्त्रविहितां प्रतिदर्श्य ।**
**शुद्धधीः श्रुतिशिरःशतसिद्धानभ्यधात्सपदि विश्वपदार्थान् ॥ ७ ॥**

**प्रत्ययेति** ॥ शुद्धधीः श्रीमध्वाचार्यः सपदि तदानीमेव श्रुतीनां शिरांसीव श्रुतिशिरांस्युपनिषदस्तेषां यानि शतानि तेषु सिद्धान् प्रमितान्, विश्वमिति यत्पदं तस्यार्थान् । 'विश्वं विष्णु'रित्यत्रस्थविश्वशब्दस्यार्थानित्यर्थः । शब्दशास्त्रं व्याकरणशास्त्रं, तस्मिन् विहितां प्रोक्तां, प्रत्ययः पश्चाद्विधीयमानः 'क' इत्यादिः । प्रकृतिः प्राग्विधमान 'विश्' इत्यादिशब्दस्वरूपं । तयोः सङ्गमस्य सम्बन्धस्य भङ्गीं प्रकारं प्रतिदर्श्य दर्शयित्वा । अभ्यधात् । उवाच । तत्कथमिति चेदुच्यते । 'विशप्रवेशन' इति धातोरौणादिके कप्रत्यये कित्वादुपधागुणाभावे च सति विश्वमिति रूपं । विशतीति विश्वं । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेस्सर्वत्रप्रविष्टत्वाद्विश्वमित्यर्थः । सर्वत्रप्रविष्टत्वाज्ज्ञानरूपत्वाद्वा विश्वं । तत्रायं विभागः । विशधातोः क्विप्, वागतिगन्धनयोरित्यस्माड्डुप्रत्ययष्टिलोपश्च । गत्यर्थस्य ज्ञानार्थकत्वाद्वं ज्ञानरूपमिति भावः । विट् चासौ वश्चेति विश्वमिति विग्रहः । विः पक्षी गरुडः, विना श्वयति गच्छतीति विश्वम् । अस्मिन् पक्षे पक्षिवाचकाद्वीत्यतः परतः 'टुओश्वि गति वृद्ध्यो'रित्यस्मादच्प्रत्ययः । विशेषेण श्वयति प्राप्नोतीति वा विश्वं । अस्मिन् पक्षे वीत्युपसर्गः । विशेषेण वर्धत इति वा विश्वं । परिपूर्ण इति यावत् । विश्वं वायुमन्तर्यामितया वर्तयतीतिवा विश्वम् । अत्र च विश्वशब्दो वायुपरः । 'विश्वो हिरण्यगर्भोऽग्निर्यमो वरुण रुद्रेन्द्राः' इति विश्वशब्दस्य वायौ प्रयोगात् । अत्रच विश्वशब्दादुत्तरतो वृतुवर्तन इति धातोर्डप्रत्ययष्टिलोपश्च । विश्वं जगद्वर्तयतीतिवा विश्वम् । उक्त एव धातुप्रत्ययविभागः । अत्र विश्वशब्दो जगद्वाचकः । इत्यादिरूपेण विश्वशब्दस्य पञ्चाशद्विकानर्थानभ्यधात् ॥

यावदर्थशतकं न विशङ्कं सन्ततोक्तिकृदपूपुरदेषः ।
वर्णितावधृतिदुर्बलचित्तास्तावदाकुलहृदो ह्यभवंस्ते ॥ ८ ॥

**यावदिति** ॥ विगता शङ्का यथा भवति तथा विशङ्कमनगत्र सन्ततं निरन्तरं या उक्तिरर्थकथनं तां करोतीति तथोक्तः । एषः श्रीमध्वाचार्यो यावदर्थानां शतकं नपूर-यत्नपूरयामास । पृ पालनपूरणयोर्लङ् । तावद्वर्णितानां प्रोक्तार्थानामवधृतावधारणे दुर्बलमसमर्थं चित्तं येषां ते द्विजा आकुलं सम्भ्रान्तं हृन्मनो येषां तादृशा अभवन् ॥

साङ्गवेदचतुरा इतिहासे शिक्षिताः सुबहवोऽप्यतिधृष्टाः ।
नैतदीरितमहो जगृहुस्ते विश्वसंक्षयपयोऽम्बुगणा वा ॥ ९ ॥

**साङ्गेति** ॥ अङ्गैः शिक्षादिषडङ्गैः सहिताः सांगाः ये वेदास्तेषु चतुराः कुशलाः । इतिहासे भारते शिक्षिताः । उपलक्षणमेतत्, सकलविद्याविदग्धा इति भावः । , सुबहवो मिलिता अपि । अतिधृष्टा अतिधैर्यवन्तोऽपि द्विजा एतदीरितं एतदुक्तं विश्वशब्दार्थजातमम्बुगणा गर्तसमूहा विश्वस्य संक्षयो यस्मिन् काले स विश्वसंक्षयः प्रलयकालः । तस्य पयोवा जलमिव । 'वा विकल्पोपमानयोः' इत्यमरः । नजगृहुः । न धृतवन्तः । अहो । [ अत्रोपमालङ्कारः ] ॥ ९ ॥

देवतास्वसुलभा प्रतिभा ते मानुषेषु चपलेषु कथा का ।
क्षाम्य सौम्य सकलज्ञ नमस्ते ते ब्रुवन्त इति तं किल नेमुः ॥ १० ॥

**देवतेति** ॥ ते द्विजाः । हे सकलज्ञ! सर्वज्ञ! ते प्रतिभा स्वरूपप्रज्ञा देवतास्व-सुलभा दुर्लभा, चपलेषु चञ्चलचित्तेषु मानुषेष्वसुलभेति का कथा? किं कथ्यते? हे सौम्य! मनोज्ञ! क्षाम्य, अस्मच्चापलं क्षमस्व । क्षमूष् सहने लोट् । ते नम इति ब्रुवन्तःसन्तः तं श्रीमध्वाचार्यं नेमुः । नमश्चक्रुः किल । [अत्र कैमुत्यालङ्कारः] ॥

वेदशास्त्रचतुरैरिह विद्यावित्तलिप्सुभिरत्राप्तमशेषैः ।
प्राप केरलसुमण्डलजातैरन्यदायतनमायतनेनाः ॥ ११ ॥

**वेदेति** ॥ आयतं विस्तृतं चेतो यस्य स पूर्णप्रज्ञाचार्यः । वेदाश्च शास्त्राणि च तेषु चतुरैः विदग्धैः । विद्यया लभ्यं वित्तं विद्यावित्तं । विद्याविक्रयानुसारेण लभ्यवित्तमित्यर्थः । तल्लब्धुमिच्छुभिर्लिप्सुभिरशेषैः सर्वैः, केरलाख्यं नृमण्डलं प्रशस्तदेशः, तस्मिन् जातैरुत्पन्नैरवासं प्राप्तमिह पयस्विनीतटेऽन्यदायतनं देवास्थानान्तरं प्राप ॥

तर्कतन्त्रकुशलानपि पुंसश्चर्करीति वत सोऽयममानान् ।
मानमानमयतीह कथं नो नेषमण्डलभुवां समितानाम् ॥ १२ ॥

**तर्केति** ॥ सोऽयं श्रीमध्वाचार्यस्तर्कस्तर्कशास्त्रं, तन्त्रं भाट्टशास्त्रं, तयोः कुशलांश्चतुरानपि पुंसः पुरुषान, न विद्यते मानोऽहङ्कारो येषां तान् । खण्डितपाण्डित्याभिमानानित्यर्थः । चर्करीत्यतिशयेन करोति । कृञो यङ्लुङन्तात्लट् । वत खेदे । एष श्रीमध्वाचार्य इह समितानां मिलितानां, मण्डले केरलदेशे भवन्ति मण्डलभुवस्तेषां नोऽस्माकं मानमभिमानं कथं नानमयति ? कथं न निराकुर्यात् ? इति मन्त्रयन्तस्ते द्विजवर्यास्तं श्रीमध्वाचार्यमुपेत्यापृच्छन्नित्युत्तरश्लोकेनान्वयः ॥ १२ ॥

मन्त्रयन्त इति ते द्विजवर्या अन्यदेशजमुखास्तमपृच्छन् ।
सद्ददादददसुशंसननिन्दाकारिसूक्तगतमर्थमुपेत्य ॥ १३ ॥

**मन्त्रयन्त इति** ॥ इति पूर्वोक्तरीत्या मन्त्रयन्तो विचारयन्तस्ते द्विजवर्या अन्यस्मिन्देशे जातः अन्यदेशजः । सो मुखं प्रधानो येषां ते तथोक्ताः सन्तः । अस्माभिरेव प्रश्नादिके कृतेसति यद्यस्माकं पराजयः स्यात्तदा केरलमण्डलस्थत्रिंशद्ग्रामजनानामस्मिन् देवस्थाने मिलितत्वात् केरलमण्डलस्यैव पराजयः स्यादिति मत्वा देशान्तरादागतब्राह्मणपुरस्सराःसन्त इति भावः । तं श्रीमध्वाचार्यमुपेत्य, सद्वस्तु ददातीति सद्दः । ददद्दान इति धातोः । सच, न ददातीत्यददः, सच सद्ददाददौ, सुष्ठु शंसनं स्तुतिः, तच्च निन्दाच सुशंसननिन्दे, सद्ददाददयोः सुशंसननिन्दे सद्ददाददसुशंसननिन्दे, ते करोतीति तादृशं यत्सूक्तं तत्र गतः प्रतिपाद्यः । तं अर्थमपृच्छन् विचारितवन्तः । तत्सूक्तञ्च 'नवा उदेवा क्षुधमिद्वधन्दनुस्ताशितमुपगच्छन्ति मृत्यवे' इत्यादिकं । तत्र उताप्रणं मर्डितारं नविन्दते इत्यदातुर्निन्दनं प्रतिपाद्यते । तथा हि

अपृणत् अदाता पुरुषः मर्डितारं पालकं भगवन्तं न विन्दते न लभते, इति । 'स इत् भोजोयो गृहवे ददात्यन्नकामाय चरते कृशाय' इति प्रदातुः प्रशंसनं प्रतिपाद्यते। अस्यार्थः—गृहवे गृहमागताय, अन्नकामाय चरते तत्रतत्र पर्यटते, कृशाय दरिद्राय, यो ददात्यन्नादिकमिति शेषः । स इत् स एव, भोजः शुभभोक्ता । इहामुत्रचेति शेषः । एतत्सूक्तप्रतिपाद्यमर्थमपृच्छदिति भावः ॥ १३ ॥

तं स्फुटं प्रकटयन् स पृणीयाच्छब्दमूलमवदत्पृणधातुम् ।
तं जिगीषुमथ विप्रमदः प्रीधातुमेष निगदन्तमुवाच ॥ १४ ॥

तमिति ॥ तं प्रस्तुतसूक्तार्थं स्फुटं व्यक्तं यथा भवति तथा प्रकथयन् स श्रीमध्वाचार्यः । पृणीयादिति शब्दस्य मूलं प्रकृतिं, पृण इति धातुः पृणधातुस्तं । 'पृणदान' इति धातुमित्यर्थः । अवदत् । पृणीयादिति शब्दः पृणदान इति धातुमूलक इत्यवददिति भावः । अथ, एवं कथनानन्तरमेव श्रीमध्वाचार्यो जिगीषुमात्मानं जेतुमिच्छन्तं, अदः पृणीयाच्छब्दमूलं प्रीङ्धातुं, 'प्रीङ् प्रीणन' इति धातुं निगदन्तं वदन्तं तं स्वप्रत्यर्थिभूतं विप्रमुवाच ॥ १४ ॥

प्रादिभेदमविदन् गुणय त्वं मूढ पांसुषु लिखन् लिपिसङ्घम् ।
भर्त्सयन्निति जहास सुहासो मत्सराकुलधियो जडयन्सः ॥ १५ ॥

प्रेति ॥ प्रादिभेदं प्र, आदिर्येषां तेषां भेदं । 'प्र, प्रि, प्रु, प्रृ' इत्यादिवर्णभेदमित्यर्थः । अविदन्नजानन्नत एव मूढ! । पृणीयादित्यत्र प्रीङ् प्रीणन इति धातुरिति वदतस्तवाक्षरगुणभेदज्ञानमपि नास्तीत्यभिप्रायेण मूढेत्युक्तं । त्वं पांसुषु लिपिसङ्घं लिपिसमूहं लिखन्सन् गुणय । इत्येवमुक्त्वा भर्त्सयन् धिक्कुर्वन् शोभनो हासो यस्य सुहासः स श्रीमध्वाचार्यः । मत्सरेणाकुलाग्रस्ता धीर्येषां तान् केरलमण्डलजानान् विदुषो जडयन् जडीकुर्वनसञ्जहास । अपहासं चक्रे ॥ १५ ॥

तस्य सङ्घवतोऽखिलविद्यापाटवं पृथुहृदः प्रतिबुध्य ।
आनमन्सबहुमानममी तं ये नमन्ति किल नाकिनिकायाः ॥ १६ ॥

तर्दति ॥ अमी द्विजास्तत्प्रसङ्गस्य तत्सूक्तप्रसक्तेर्बलतः सामर्थ्यात् । तत्सूक्तार्थ-कथनप्रसङ्गबलादित्यर्थः । पृथु पूर्णं हृद्यस्य तस्य श्रीपूर्णप्रज्ञस्याखिलासु विद्यासु पाटवं चातुर्यं प्रतिबुध्य ज्ञात्वा । नाकः स्वर्गो येषामस्तीति नाकिनो देवाः, तेषां निकायाः समूहा यं नमन्ति । तं श्रीमध्वाचार्यं बहुमानेनादरेण सहितं यथा भवति तथा सबहुमानमानमन्किल ॥ १६ ॥

कन्यकादृतसुरेन्द्रवपुःश्रीदानवाचि वरसूक्तहृदुक्तौ ।
कुत्रचित्सदसि तावदपाला कीर्तितातितरुणीत्ययमूचे ॥ १७ ॥

कन्यकेति ॥ अयं श्रीमध्वाचार्यः । कुत्रचित्सदसि कस्याञ्चित्सभायां, कन्यकया आदृतः सत्कृतः कन्यकादृतः, सचासौ सुरेन्द्रश्च कन्यकादृतसुरेन्द्रः । वपुषः कन्या-वपुषः, श्रीदानं कान्तिदानं वपुःश्रीदानं, कन्यकादृतसुरेन्द्रेण वपुःश्रीदानं, तद्वक्तीति तादृशं, यद्वरसूक्तमुत्तमसूक्तं तस्य हृदभिप्रायस्तस्योक्तिः कथनं, तस्यां प्रस्तुतायां सत्यां, तत्रसूक्ते, अपालेति कीर्तितोक्ता । अपालाशब्दवाच्येत्यर्थः । अतितरुणी नवयौवने-त्यूचे । तत्सूक्तञ्च 'कन्या३ वारवायती सोममपि स्रुताविदत् । अस्तम्भरंत्यब्रवीदिं-द्रायसुनवेत्वा शक्रायसुनवेत्वा' इत्यादिकं, तदर्थश्च । पुरातनी कन्येति कन्यार्थः । सोममावयती जनयन्ती कन्या, स्रुतापि प्राप्तापि सोमलतामाहर्तुं गताविददलभत । अस्तं गृहंप्रति भरन्ती वहन्त्यब्रवीत्, अवदत् । हे सोम! त्वमिन्द्रायसुनवे, शक्रायसुनवे, अवदन्यामिति । तात्पर्यद्योतिका द्विरुक्तिः । 'असोयएषिवीरक' 'अपालामिन्द्रत्रिष्पू-त्व्यकृणोत्सूर्यत्वचं' इत्यादिनादरेण प्रीत इन्द्रस्त्रिवारं पूत्वी पूतां कृत्वा स्वपाणिभ्यां परिमृज्य संशोध्यापालां नवयौवनां सूर्यत्वचं सूर्यवत्प्रकाशमानत्वचमकृणोच्चकारेति । अत्रापालाशब्देनातितरुणी कथ्यत इत्ययमूच इत्यर्थः ॥ १७ ॥

श्वित्रिणी भवति तत्पदवाच्येत्याग्रहेण वदतो विदुषोऽत्र ।
कश्चिदेष्यति विपश्चिदिहेनं पृच्छतेत्ययमगच्छदथोक्त्वा ॥ १८ ॥

श्वित्रिणीति ॥ अथायं श्रीमध्वाचार्यः । तच्च तत्पदञ्चापालपदं, तेन वाच्या श्वित्रिणी कुष्ठवती भवतीत्याग्रहेण प्रमाणं विना दुराग्रहेण वदतो ब्रुवाणानविदुषोऽ-

बुधान्प्रति, इह कश्चित् विपश्चित् विद्वानेष्यत्यागमिष्यति । इण् गतौ लट् । एनं विपश्चितंप्रति अत्रापालापदार्थविषये । यूयं पृच्छत । पृच्छज्ज्ञीप्सायां लोट् । इत्युक्त्वागच्छत् । ततो ययौ ॥ १८ ॥

देशमेनमचिरादुपयातस्तादृशाकृतिरहो कृतबुद्धिः ।
तांस्तथाभ्यधित तत्पदभावं सूरिमौलिमणिनात्र यथोक्तं ॥ १९ ॥

देशमिति ॥ एनं विद्वद्भिरवस्थितं देशमचिराच्छीघ्रमुपयात आगतः, तादृशा श्रीमध्वोक्तलक्षणाकृतिराकारो यस्य सः । कृता शिक्षिता बुद्धिर्यस्य स विद्वानित्यर्थः । तान् अपालापदार्थे विप्रतिपन्नान् द्विजान्प्रति तत्पदभावमपालापदार्थं । 'भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायां' इति वैजयन्ती । सूरीणां विदुषां मौलिमणिना चूडामणिनात्र यथोक्तं प्रोक्तं तथाभ्यधित । उवाच । अहो! चित्रमेतत् । धाञो लुङ् ॥ १९ ॥

केवलं न सकलाः श्रुतिविद्यामानपूर्वकसमस्तगिरोऽस्य ।
अप्यनागतगतप्रतिपत्तिं श्रद्दधुः पृथुलचेतस एते ॥ २० ॥

केवलमिति ॥ एते द्विजा मानं प्रमाणं पूर्वं यासां ता मानपूर्वकास्तादृशाः समस्तगिरः समस्तवचांसि यस्य तस्य, अस्य पृथुलं महच्चेतो यस्य तस्य श्रीपूर्णप्रज्ञाचार्यस्येत्यर्थः । केवलं सकलाः श्रुतिविद्या वेदविद्या न श्रद्दधुः । अयं केवलं सकलवेदविद्याचतुर इत्येव न श्रद्दधुः । अपितु, आगतं प्राप्तं न भवतीत्यनागतमेष्यत् , गतमतीतं, तयोः प्रतिपत्तिं ज्ञानमपि श्रद्दधुः । विश्वसुः ॥ २० ॥

यद्यदेव सपदि प्रकृतं स्यात्तत्तदेष यदवेदखिलञ्च ।
सर्वदा सदसि सर्वबुधानां सर्वविद्यतिरिति प्रथितोऽभूत् ॥ २१ ॥

यदिति ॥ यद्यस्मात्सपदि तत्तत्काले सर्वे ये बुधा ज्ञानिनस्तेषां सदसि सर्वदा यद्यत्प्रकृतं प्रस्तुतं स्यात् । यत्रयत्र सदसि यच्छ्रुतिपुराणादिकं प्रस्तुतं भवेत् । तत्तदखिलञ्चैष श्रीमध्वाचार्योऽवेत् ज्ञातवान् । वागतिगन्धनयोर्लङ् । तस्मात् सर्वं वेत्तीति सर्ववित् , सचासौ यतिश्च सर्वविद्यतिरिति प्रथितः प्रसिद्धोऽभूत् ॥ २१ ॥

अप्रयातमपि देशमशेषं व्यानशे सुजनकैरवबन्धुः ।
पूर्णदृक् प्रततया निजकीर्त्या पूर्णचन्द्र इव चन्द्रिकयालम् ॥ २२ ॥

**अप्रयातमिति** ॥ सुजना एव कैरवाणि कुमुदानि तेषां बन्धुः, पूर्णा दृक् ज्ञानं यस्य स श्रीमध्वाचार्यः । प्रततया व्यापया निजकीर्त्यात्मीयकीर्त्या, अप्रयातमपि स्वेनाप्रविष्टमप्यशेषं देशं, कैरवबन्धुः पूर्णचन्द्रश्चन्द्रिकयेवालं सम्यग्व्यानशे । व्याप्नोति स्म ॥ २२ ॥

सुन्दरेषु सुरमन्दिरवृन्देष्विन्दिरारमणवन्दनकृत्यम् ।
आचरन्न स चिरात्सुविचारो रौप्यपीठपतिमाप मुकुन्दम् ॥ २३ ॥

**सुन्दरेष्विति** ॥ सुन्दरेषु शोभनेषु सुराणां यानि मन्दिराणि तेषां वृन्देषु समूहेष्विन्दिरारमणस्य श्रीहरेर्यद्वन्दनं तदेव कृत्यं कार्यमाचरन्, शैवादिनामालयेष्वपि केवलमिन्दिरापतिवन्दनमस्य स्वकर्तव्यमाचरन्नित्यर्थः । शोभनो विचारस्तत्वविमर्शो यस्य स सुविचारः श्रीमध्वाचार्यः । नञ्चिरात् नातिचिरेण । न समासोऽयं । रूप्यपीठपतिं मुकुन्दमाप ॥ २३ ॥

भूसुरप्रवरबुद्धिसमृद्धिव्यक्तयुक्तवपुषं रुचिराङ्गीम् ।
सत्वदीप्तमणिमालिकयालं भूषितां भुवनभूषणभूताम् ॥ २४ ॥

**भूसुरेति** ॥ करुणयाब्धिरिव करुणाब्धिः । पुष्टा पूर्णा बुद्धिर्यस्य स पूर्णप्रज्ञ इत्यर्थः । स स्वयं श्रुतिततिं वेदसमूहं, वेदेर्जाता वेदिजा द्रौपदी तामिव दृष्ट्वा दुष्टानां मायिप्रभृतिवादिनां पक्षाणां सिद्धान्तानां दमने निराकरणे स्थिरां सन्धां प्रतिज्ञां । 'सन्धा सन्धौ प्रतिज्ञायां' इति वैजयन्ती । पुरा भरताग्र्य इव भीम इवाकरोत् । यथा भीमः सर्ववेदाभिमानिनीं द्रौपदीं, केशाकर्षणादिना दुःशासनादिभिः क्लिष्टां दृष्ट्वा तद्वधे प्रतिज्ञामकरोत् । तथा श्रीमध्वाचार्योऽप्यन्यवादिभिरन्यथाव्याख्यानादिना क्लिष्टां वेदततिं दृष्ट्वा परसिद्धान्तनिराकरणे प्रतिज्ञामकरोदिति भावः । अन्त्यकुलकमेतत् । [तल्लक्षणं द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकं ।

कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतं' इति ] कथं भूतां श्रुतिततिमित्यत आह-भूसुरेति ॥ भूसुरेषु विप्रेषु प्रवराः श्रेष्ठा वसिष्ठवामदेवादिश्रुतिद्रष्टारो मुनयस्तेषां या वृद्धिसमृद्धिस्तस्यां व्यक्तमभिव्यक्तं युक्तवपुरुचितस्वरूपं यस्यास्तां । द्रौपदीपक्षेतु. भूसुरप्रवरौ याजोपयाजाख्यौ द्रुपदपुरोहितौ तयोर्या वृद्धिसमृद्धिः बुद्ध्याधिक्यं । द्रुपद-पत्न्याप्राश्यहविषस्तदनागमननिमित्तेन वह्नौ होमसमये । भगवदनुसन्धानविशेषपूर्वकहोम इति यावत् । तया व्यक्तं अभिव्यक्तं युक्तवपुः युक्तस्वरूपं यस्यास्तां, रुचिराणि मनोहराण्यङ्गानि शिक्षाद्यङ्गानि, हस्तपादादीनि च यस्यास्तां, सूत्राण्येव ब्रह्मसूत्राण्येव दीप्तमणयः । अर्थान्तरे, सूत्रेषु तन्तुषु दीप्तमणयः शोभमानमणयस्तेषां मालिकयालं सम्यग्भूषितां, भुवनभूषणभूतां भुवनालङ्कारभूतां श्रुतिततिं वेदिजां दृष्ट्वा भीमसेन इव श्रीमध्वाचार्यो दुष्टपक्षदमनास्थिरसन्धामकरोदित्यन्वयः ॥ २४ ॥

पादसुन्दरपदक्रमभावैर्भासितां प्रकटवर्णगुणाढ्याम् ।
भारतोत्तमभृतामनुरूपाच्छादनां समधिकस्वरशोभाम् ॥ २५ ॥

**पादेति** ॥ पादाः ऋचांचतुर्थांशाः, सुन्दरपदानि शोभनपदानि, क्रमाश्च. भावस्त-त्तदभिप्रायास्तैर्भासितां । अर्थान्तरे, पादाभ्यां सुन्दरं यथा भवति तथा पदक्रमो गमनं भावा विलासाः तैर्भासितां शोभितां । प्रकटाः प्रसिद्धा ये वर्णगुणाः स्पृष्टतादयस्तैराढ्यां पूर्णां, [अत्र वर्णगुणाश्च 'स्पृष्टत्वादयः । स्पृष्टत्वमीषत्स्पृष्टत्वं संवृतत्वं तथैवच विवृतत्वं वर्णानामन्तःकरणमुच्यत' इति वचनात् ] इतरत्र. प्रकटाः प्रसिद्धाः, वर्णः कृष्णवर्णः गुणाः श्रीहरिभक्त्यादयस्तैराढ्यां, भारतश्चतदुत्तमश्च, उत्तमशास्त्रञ्चेति भारतोत्तमं । भारताख्योत्तमशास्त्रमिति यावत् । तेन भृतां बृंहितां वर्णितार्थामिति यावत् । उपलक्षणमेतत् । वेदव्याख्यानरूपैर्भारतपुराणैर्महार्थतया व्याख्यातामिति भावः । तदुक्तं–'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत । बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति' इति इतरत्र, भारतोत्तमैर्भारतकुलोत्पन्नश्रेष्ठैः पाण्डवैर्भृतामूढां, अनुरूप-माच्छादनं शुद्धादिषु गूहनं यस्यास्तामनुरूपवसनाञ्च समधिकस्वरशोभोदात्तादिस्वराणां शोभा, ध्वनिशोभा च यस्यास्तां दृष्ट्वेत्यादिपूर्ववत् ॥ २५ ॥

**राजसूयमुखमन्मखवृत्तां वासुदेवगुणनिष्ठितभावाम् ।**
**सर्वधर्मपरिशिक्षणदक्षां वन्दितां जनतया जननीवत् ॥ २६ ॥**

**राजसूयेति** ॥ राजसूयप्रमुखाश्वमेधयज्ञो मुखं प्रधानो येषां तादृशा ये सन्मखाः सद्यज्ञास्तेषु वृत्तां मन्त्रत्वेन प्रवृत्तां । वासुदेवस्य ये गुणाश्शुभधर्मास्तेषु निष्ठितः स्थिरो भावोऽभिप्रायो यस्यास्तां । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तोह्यस्मिन् गुणा' इत्यादिना भगवतोऽनन्तगुणप्रतिपादनपरामिति भावः । इतरत्र, वासुदेवगुणेषु निष्ठितभावः स्थिरचित्तं यस्यास्तां । सर्वेषां धर्माणां परिशिक्षणे शिक्षायां दक्षां चतुरां । 'प्रातरुत्थायाथ सन्ध्यामुपासीत नमेद्देवाञ्जुहुयादग्निं वेदानावर्तयीत नान्यत्किञ्चिदाचरेन्न भृशं वदेत' इत्यादिना सर्वधर्मपरिशिक्षणचतुरामित्यर्थः । जनानां समूहो जनता तया जननीवन्मातृवद्वन्दितां दृष्ट्वेत्यादि पूर्ववत् ॥ २६ ॥

**मौलिसंग्रहविकर्षणदूनां मायिना सदसि दुष्टजनेन ।**
**न्यायमार्गमपहाय महान्तं स्वेश्वरत्वमपि साधयतान्तम् ॥ २७ ॥**

**मौलीति** ॥ महान्तं, न्यायानां भगवत एव सर्वेश्वरत्वादिप्रतिपादकब्रह्ममीमांसाशास्त्रसिद्धयुक्तीनां मार्गं पन्थानमपहाय हित्वा अलं सम्यक् स्वेश्वरत्वं स्वस्य ब्रह्मत्वमपि, साधयता । पक्षान्तरे, पाण्डवानामर्धराज्यदानरूपन्यायमार्गमपहाय स्वस्यैव साम्राज्यभोक्तृत्वलक्षणमीश्वरत्वं साधयता । दुष्टजनेन दुर्जनेन मायिना मायावादिना सदसि विद्वत्सभायां, मौलेर्वेदशिरस उपनिषदः संग्रहेण प्रमाणत्वेनपरिग्रहेण यद्विकर्षणं 'एकमेवाद्वितीयमि'त्यादिवाक्यजनितभ्रान्त्याशेषोपनिषदां बलादद्वैतपरतया योजनं । तेन दूनां दुःखितां । अन्यत्र, मायाकैतवमस्यास्तीति तेन । 'व्रीह्यादिभ्यादिनिः' । दुष्टजनेन दुःशासनेन सदसि कुरुसभायां मौलेः केशपाशस्य संग्रहेण सम्यग्ग्रहणेन विकर्षणेनाकर्षणेन दूनां दुःखितां दृष्ट्वेति पूर्ववत् ॥ २७ ॥

**सज्जनैः कतिपयैरतिदीनैश्चालितः कलिवलाच्छुभमार्गात् ।**
**अभ्युपेक्षितविकर्षणदुःखां सातिशोकमपि कैश्चन दृष्टाम् ॥ २८ ॥**

**सज्जनैरिति** ॥ कलिबलात् कलिसामर्थ्याच्छुभमार्गाच्छुद्धमार्गाच्चालितैरतएवाति-दीनैरतिदुर्बलैः कतिपयैः कैश्चित् सज्जनैरप्युपेक्षितं यद्विकर्षणदुःखं यस्यास्तां । सज्जना अपि मायिनमुपेक्षन्ते, न निराकुर्वन्त्यतोऽतिदुःखितामिति भावः । अन्यत्र, कतिपयैः सज्जनैर्भीष्मादिभिरुपेक्षितं विकर्षणदुःखं यस्यास्तां । एतच्च 'इत्युक्ता अपि भीष्माद्याः कल्यावेशेनमोहिताः । पृच्छ धर्मजमित्युक्त्वा तूष्णीमेव बभूविरे' इति वचनात्सिद्धम् । कैश्चन सज्जनैः ऋष्यादिभिः । विदुरादिभिश्च । अतिशोकेनसहितं यथा भवति तथा सातिशोकं । शोकपूर्वकं दृष्टामित्यर्थः । इतरत्र, धर्मसाक्षिभिरादि-त्यादिभिश्च दृष्टां । श्रुतितातिं वेदिजामिव दृष्ट्वेत्यादि पूर्ववत् ॥ २८ ॥

वासुदेव धरणीधरनाथेत्युच्चकैरपि मुहुः प्रवदन्तीम् ।
पूर्णसद्गुणमजं गतदोषं बिभ्रतीं हृदि विविक्तमशेषात् ॥ २९ ॥

**वासुदेव इति** ॥ वासुदेव! धरणीधर! नाथ! इति मुहुः पुनःपुनरुच्चकैरतितरां प्रवदन्तीं । तथाहि । 'वासुदेवोवा इदमग्र आसीदि'त्यत्र वासुदेवेति । 'दाधर्थपृथि-वीमभितोमयूखैः' इत्यत्र धरणीधरेति । 'आत्मेत्येवोपासीते'त्यत्र नाथेति च वदतिहि श्रुतिः । पक्षान्तरे, वासुदेवेत्यादिभगवन्नामानि मुहुरुच्चकैरभिदधानां । हृदि स्वाभिप्राये, पूर्णाः सद्गुणा यस्य तं, गतादोषा यस्मात्तं, अशेषात्समस्तजगतो विविक्तं विलक्षणमजं जन्मादिरहितं भगवन्तं श्रीहरिं बिभ्रतीं । एवं भूतभगवत्स्वरूपप्रतिपादनपरामिति भावः । इतरत्र, हृदि मनसि पूर्णसद्गुणं गतदोषमशेषाद्विविक्तमजं भगवन्तं बिभ्रतीं ध्यायन्तीं दृष्ट्वेत्यादि पूर्ववत् ॥ २९ ॥

वार्यतां बुधजनैर्ननु हा हा नैष धर्म इति चाभिदधानाम् ।
कृष्णलालिततमामनवद्यामप्यनन्यशरणां शरणोत्काम् ॥ ३० ॥

**वार्यतामिति** ॥ बुधजनैर्विद्वज्जनैर्वार्यतां वेदादेरैक्यपरतां प्रतिपादयन्मायिमतं निराक्रियतां । 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इवते तमो य उ विद्यायां रताः' इत्यत्राविद्यामनिराकृत्य केवलविद्यायामेव निरतानां भूयस्तमःप्रा-प्त्युक्त्याविद्यानिराकरणं कर्तव्यमित्युच्यते, 'अथहैनमुपाकोशत्सलंभिदा सन्धंभिदा

सत्यंभिदा, मैत्रावरुण्यो मैत्रावरुण्यो मैत्रावरुण्यः' इत्यादिनाचा भेदो निराक्रियते। अत एव ऐक्यवादो नधर्म इति चाभिदधानां वदन्तीं। अन्यत्र, बुधजनैर्ज्ञानिजनैर्वार्यतां दुर्योधनाज्ञया दुःशासनेन क्रियमाणं महिकर्षणं निवार्यतां। एष द्यूतव्यापारो धर्मो न. हा हा कष्टं ननु, इतिचाभिदधानां। कृष्णेन श्रीवेदव्यासेनातिलालितामत्यन्तं मानितां। इतरत्र, यादवकृष्णेन च लालिततमां। न विद्यतेऽवद्यं दोषो यस्यास्तां। अपौरुषेयत्वेनाप्रामाण्यकारणदोषरहितामित्यर्थः। अज्ञानादिदोषरहिताञ्च। नविद्यतेऽन्यः शरणं रक्षको यस्यास्तां, श्रीमध्वाचार्यमृतेपालकरहितामित्यर्थः। पक्षान्तरे, भीमान्यपालकरहिताञ्च। अतएव शरणे रक्षणे, उत्कामुत्कण्ठोपेतां। शरणमिच्छन्तीञ्च। 'शरणं गृहरक्षित्रोः' इत्यमरः। श्रुतिनतिं वेदिजामिव दृष्ट्वा दुष्टपक्षदमनास्थिरसन्धामकरोत्॥ ३०॥

वेदिजामिव पुरा भरताभ्यः स स्वयं श्रुतिततिं खलु दृष्ट्वा।
पुष्टबुद्धिरकरोत्करुणाब्धिर्दुष्टपक्षदमनस्थिरसन्धाम्॥ ३१॥

अयं पूर्वमेव व्याख्यातः॥ ३१॥

अव्ययं सततमप्युपभुक्त्या वित्तमव्ययमिव दूरयियासुः।
ज्यायसे सगुरवे हरिगीताभाष्यमेष विरचय्य तदादात्॥ ३२॥

अव्ययमिति॥ एष श्रीमध्वाचार्यः। सगुरवे गुरुसहिताय ज्यायसे, आश्रमज्येष्ठाय लिकुचान्वयोद्भवाय यतये। 'गुरुर्गीष्पतिपित्राद्योः पौरोहित्यकरेचना' इति यादवः। हरिगीताभाष्यं श्रीभगवद्गीताया भाष्यं तदा विरचय्य कृत्वा। दूरं यातुमिच्छुः दूरयियासुः कश्चित्पुरुषः स्वजनाय स्वकीयजनाय सततं सर्वदोपभुक्त्याप्युपभोगेनापि। व्ययेनापीत्यर्थः। अव्ययं नाशरहितमतएवाग्र्यमुत्तमं वित्तमिवादात्। [अत्रोपमालङ्कारः] ॥

हेतुवादिनि विशङ्कटबुद्धौ तीर्थमर्थयति गन्तुमनुज्ञाम्।
तां दिदेश पुरुषोत्तमतीर्थश्चिन्तयन् स पुरुषोत्तमरक्षाम्॥ ३३॥

हेत्विति॥ हेतुं गमनकारणं वक्तुं शीलमस्यास्तीति तस्मिन्। 'देवोपसंग्रहस्यास्य यत्फलं दैवचोदितं। तत्सिषाधयिषुर्यामि देवगुह्योपपादितं' इति गुह्यं देवकार्यं

साधयितुं यामीति देवकार्यसाधनलक्षणगमनकारणवादिनीत्यर्थः । विशङ्कटा विशाला बुद्धिर्यस्य स श्रीपूर्णप्रज्ञाचार्यः । 'विशङ्कटं विशालं स्यात्' इति हलः । तस्मिन्तीर्थे पुण्यक्षेत्रे प्रतिगन्तुमनुज्ञामर्थयति याचतिस्मेति । स पुरुषोत्तमस्य भगवतस्तीर्थं शास्त्रं गीताभाष्यादिशास्त्रज्ञानमिति यावत् । यस्य स पुरुषोत्तमतीर्थः । 'तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः' इति हेमचन्द्रः । अच्युतप्रेक्ष इत्यर्थः । पुरुषोत्तमस्तां श्रीमध्वाचार्यस्येति शेषः । चिन्तयन्सन् तामनुज्ञां दिदेश । प्रददौ ॥ ३३ ॥

नीरजामलयमण्डलवृत्त्या श्लाघितो भुवि सदाल्यनुयातः ।
साधुपान्थपरितापमपास्यन्नुत्तरां दिशमयान्मरुदंशः ॥ ३४ ॥

**नीरज इति** ॥ निर्गतं रजोगुणो यस्मात्स नीरजाः । मलयस्य मलयपर्वतस्य मण्डले प्रदेशे वृत्तिर्वर्तनं तया, मलयसमीपवृत्तिदक्षिणदेशगतासिलदुर्वादिनिराकरणादिनेति भावः । भुविश्लाघित आदृतस्सन् सज्जनानामाल्या समूहेनानुयातोऽनुगतः । 'वीथ्या-लिरावलिः पङ्क्तिः श्रेणीरेखास्तु राजयः' इत्यमरः । साधवः सज्जना एव पान्थाः पथिकजनास्तेषां परितापं सन्तापमपास्यन्निराकुर्वन्मरुतोंऽशो मरुदंशः श्रीमध्वाचार्यः । उत्तरां दिशमयात् । ययौ । यातेर्लङ् । श्लेषार्थस्तु, नीरजाः पांसुरहितो मलयपर्वत-वलयवर्तनेन भुवि श्लाघितः, मलयपर्वतगतचन्दनसम्पर्केण सुरभितयादृतः । अतएव सदा सर्वदाऽऽलिभिः भ्रमरैरनुयातः । 'षट्पदभ्रमरालयः' इत्यमरः । साधु सम्यक् यथा भवति तथा पान्थपरितापमपास्यन्मरुदंशो वातैकदेशो यथा कालविशेष उत्तरां दिशं व्रजेत्तद्वत् श्रीमध्वोप्युत्तरां दिशं जगामेति भावः ॥ ३४ ॥

बुद्धिशुद्धिकरगोनिकराढ्यं तीर्थजातमुभयं च शरण्यम् ।
आत्ममज्जनत एव निकामं पर्यशोधयदमन्दमनीषः ॥ ३५ ॥

**बुद्धीति** ॥ अमन्दा पूर्णा मनीषा बुद्धिर्यस्य स पूर्णप्रज्ञाचार्यः । बुद्धेरन्तःकरणस्य शुद्धिं करोतीति तादृशो यो गोनिकरो वचनसमूहस्तेनाढ्यं सम्पूर्णं । तीर्थपक्षेत्, बुद्धिशुद्धिकरेण गोनिकरेण जलसमूहेनाढ्यं । उभयञ्च तीर्थजातं तीर्थसमूहमात्मनः स्वस्य मज्जनेनावगाहनतएव निकामं नितरां यथा भवति तथा पर्यशोधयत् । 'शुद्ध

शौचे लङ् । अत्रतीर्थशब्देन शास्त्रं नद्यादिकञ्चोच्यते । शास्त्रे मज्जनं नाम पूर्वोक्तपरामर्शः, अन्यत्रावगाहनम् ॥ ३५ ॥

**वासुदेवपदसन्ततसङ्गी तेजसाप्यल्पमधःकृतशर्वः ।**
**अत्यवर्तत नितान्तमथासौ गाङ्गमोघमघनाशनकीर्तिः ॥ ३६ ॥**

**वासुदेवेति** ॥ अथ वासुदेवस्य श्रीहरेः पदयोः पादयोर्यः सन्ततसङ्गः सोऽस्यास्तीति तथोक्तः । तेजसापि सामर्थ्येनाप्यलं सम्यगधःकृतोऽधरीकृतश्शर्वो रुद्रो येन तादृशः । अघानां नाशनं यया सा अघनाशिनी, श्रवणादिना पापनाशनहेतुः कीर्तिर्यस्य सोऽसौ श्रीमध्वाचार्यः । गङ्गायाः सम्बन्धी गाङ्गस्तमोघं प्रवाहं नितान्तमत्यवर्तत अतीत्यावर्तत । अतिवर्तनं नाम न केवलं तरणमात्रं, किन्तु गुणतोप्यतिवर्तनं विवक्षितमिति भावेन वासुदेवेत्यादिहेतुगर्भं विशेषणद्वयम् । गङ्गातु सकृदेव भगवत्पदसङ्गवती, तेजसा रुद्रादवराचेत्यतो गङ्गाया अप्युत्तमोऽयं गङ्गां तीर्त्वा जगामेति फलितार्थः ॥ ३६ ॥

**तत्र तत्र स जगत्त्रयचित्रं कर्म शर्मदमनुस्मृतिमात्रात् ।**
**सञ्चरन् विदधदाप नराणां गोचरं बदरिकाश्रमपार्श्वम् ॥ ३७ ॥**

**तत्रतत्रेति** ॥ तत्रतत्र तत्तत्तीर्थक्षेत्रविशेषेषु सञ्चरन्, जगतां त्रयं तस्मिंश्चित्रमाश्चर्यं, केवला अनुस्मृतिः स्मरणं अनुस्मृतिमात्रं तस्माच्छर्मसुखं ददातीति शर्मदं । भक्तानां सुखप्रदमित्यर्थः । कर्म विदधत् कुर्वञ्छ्रीमध्वाचार्यो नराणां गोचरं गन्तुं योग्यं बदरिकाश्रमस्य पार्श्वं निकटमाप ययौ ॥ ३७ ॥

**मण्डयन्भरतखण्डमखण्डं नादिरायणपदोऽत्र परो यः ।**
**तं नमन्मचुरधाद्धरिगीताभाष्यमार्पयदुपायनमस्मै ॥ ३८ ॥**

**मण्डयन्निति** ॥ अत्र मनुष्यगोचरबदरिकाश्रमे । स्थित इति शेषः । अखण्डं समस्तं भरतखण्डं हिमवत्सेतुमध्यगमित्यर्थः । मण्डयन्नलंकुर्वन्, नो नकार आदिर्यस्य तन्नादि, रायण इति पदं रायणपदं, नादि रायणपदं यस्य सः । नारायणपदवाच्य

इत्यर्थः । यः परः सर्वोत्तमो भगवांस्तं नमन् प्रचुरधीः पूर्णप्रज्ञाचार्योऽस्मै श्रीनाराय-णाय हरिगीताभाष्यं स्वकृतभगवद्गीताभाष्यमुपायनमार्पयत् । उपायनत्वेन समर्पयामास । ऋगतौ लङ् ॥ ३८ ॥

प्रीतयेऽस्य पुरतो वरभाष्यं वाचयन् स जनतामपसार्य ।
वच्मि शक्तित उरुक्रमगीताभाष्यमित्यकथयत्पुरुसंख्यः ॥ ३९ ॥

**प्रीतय इति** ॥ जनानां समूहो जनता तामपसार्यास्य श्रीनारायणस्य प्रीतयेऽस्य पुरतो वरमुत्तमं भाष्यं गीताभाष्यं वाचयन् पुरुः पूर्णा संख्या ज्ञानं यस्य स पूर्णप्रज्ञाचार्यः उरुक्रमगीताभाष्यं भगद्गीताभाष्यं शक्तितः वच्मीत्यकथयत् । अयं भावः । श्रीमध्वाचार्यः 'देवं नारायणं नत्वा सर्वदोषविवर्जितं । परिपूर्णं गुरूंश्चान्गीतार्थं वक्ष्यामि शक्तितः' इति मङ्गलाचरणश्लोके ग्रन्थारम्भप्रतिज्ञां कुर्वन् श्लोकान्ते 'शक्तित' इति पदमकथयदिति ॥ ३९ ॥

एतदर्थमतिसूक्ष्ममपि त्वं शक्त एव न यदात्थ समस्तम् ।
तेन लेशत इतीह पदं स्यादित्यगद्यत जगज्जनकेन ॥ ४० ॥

**एतदिति** ॥ त्वं अतिसूक्ष्ममत्यन्तदुर्विज्ञेयमप्येतत्या गीताया अर्थं समस्तं सर्वं वक्तुं शक्त एव समर्थ एव सन् यद्यस्मात् न आत्थ नोक्तवानसि । तेन कारणेन इह मङ्गलश्लोकान्ते 'लेशत' इति पदं स्याद्भवत्विति जगज्जनकेन जगत्पित्रा नारायणेना-गद्यत । उक्तम् । 'शक्तित' इति पदस्थाने 'लेशत' इति प्रयुज्यतामित्युक्तमिति भावः ॥ ४० ॥

तेन तत्प्रवचने विहितेऽलं शुश्रुवुः प्रशयिता अपि शिष्याः ।
उच्यतामिति मुहुः सपृथिव्यास्फालनं पदमहो हरिणोक्तम् ॥ ४१ ॥

**तेनेति** ॥ तेन श्रीमध्वाचार्येणालं सम्यक्तस्य गीताभाष्यस्य प्रवचने व्याख्याने विहिते कृतेसति प्रशयिताः शयाना शिष्या अपि पृथिव्या आस्फालनेन हस्तताडनेन सहितं यथा भवति तथा हरिणा मुहुः पुनःपुनरुक्तमुच्यतामितिपदं शुश्रुवुः । अहो

आश्चर्यम् । रात्रौ व्याख्यानसमाप्त्यनन्तरं शिष्येषु शयानेषु तत्र प्रतिमागतेन नारायणेन पुनरपि व्याख्या क्रियतामित्यभिहितं शयानैश्शिष्यैरपि श्रुतमिति भावः ॥ ४१ ॥

शब्दभेदमवधार्य तमर्चासन्निधापितवपुषः परमस्य ।
तस्य भावविदमन्दमनीषः प्रोत्थितः प्रवचनं व्यधितेभ्यः ॥ ४२ ॥

**शब्देति** ॥ अमन्दा मनीषा यस्य स श्रीपूर्णप्रज्ञाचार्योऽर्चायां प्रतिमायां सन्निधापितं सन्निहितं वपुः स्वरूपं यस्य तस्य । 'अर्चापूजा प्रतिमयोः' इति वैजयन्ती । परमस्य सर्वोत्तमस्य श्रीहरेस्तं शब्दभेदं 'उच्यता'मित्युक्तशब्दविशेषमवधार्य सावधानं श्रुत्वा तस्योच्यतामितिपदस्य भावविदभिप्रायवेत्ताऽसन् । पुनरपि व्याख्याक्रियतामिति तदभिप्रायं जानन्निति भावः । प्रोत्थितश्शयनादुत्थितःसन्नेभ्यः शिष्येभ्यः प्रवचनं व्याख्यानं व्यधित । अकरोत ॥ ४२ ॥

मज्जनं व्यधित शीतलगङ्गावारि नित्यमरुणोदयकाले ।
यत्स्पृशन्ति न नरा हिमभीता अंश एष पृषतामधिपस्य ॥ ४३ ॥

**मज्जनमिति** ॥ पृषतां वायूनां । 'पृषदश्वः पवमानः प्रभंजन' इति हलः । अधिपस्य स्वामिनो मुख्यप्राणस्यांश एषः श्रीमध्वाचार्यो नरा बदरिकाश्रमस्थजना हिमभीताःसन्तो यज्जलं न स्पृशन्ति तस्मिन् शीतलं यद्गङ्गाया वाः तस्मिन् मज्जनं स्नानं नित्यं प्रतिदिनमरुणोदयकाले । [ 'चतस्रो घटिकाः प्रातररुणोदय उच्यते' इत्युक्तकाले ] व्यधित चकार ॥ ४३ ॥

काष्ठमौनमदधादुपवासं शुद्धमप्यकृत शुद्धहृदिच्छन् ।
नित्यतुष्टहरितोषविशेषं चिन्तयन्प्रभुमनन्तमठान्तः ॥ ४४ ॥

**काष्ठेति** ॥ नित्यं सदा तुष्टः स्वस्य प्रीतस्तादृशो यो हरिस्तस्य तोषविशेषमिच्छञ्छुद्धं हृत् ज्ञानं यस्य सः श्रीमध्वाचार्यः । अनन्तमठस्य अन्तर्मध्ये, अन्तरित्यव्ययम् । अनन्तमठ इति मनुष्यगोचरबदरिकाश्रमे नारायणमन्दिरस्याख्या । तदन्तरित्यर्थः । प्रभुं श्रीनारायणं चिन्तयन् काष्ठमौनं काष्ठमौनव्रतमदधात् । चकार । शुद्धमुपवासं निरशनव्रतमपि चक्रे ॥ ४४ ॥

**प्रैरयत्स्वचरणे रतचित्तं मध्वमत्र दिनमण्डलमेनम् ।**
**स्वाश्रमोपगमनाय मुकुन्दो दीप्तिदर्शितविदितागतिरन्यैः ॥ ४५ ॥**

**प्रैरयदिति** ॥ अन्यैः श्रीमध्वेतरैर्दीप्तिः प्रकाशविशेषस्य दृष्टिर्दर्शनं तया विदिता ज्ञाताऽऽगतिः प्राप्तिर्यस्य । स मुकुन्दः श्रीवेदव्यासः, अत्रानन्तमठे दिनानां मण्डलं । 'कालाध्वनो'रिति द्वितीया । निरन्तरमष्टचत्वारिंशद्दिनेष्वित्यर्थः । स्वचरणे स्वपादे रतमासक्तं चित्तं यस्य तमेनं मध्वं स्वाश्रमस्योपगमनाय प्राप्तये प्रैरयत् । प्रेरयामास । ईर प्रेरणे लङ् । वेदव्यासः रात्रावागत्य स्वकीयोत्तरबदरिकाश्रममागन्तुं श्रीमध्वं प्रेरयामास यदा तदास्यागमनं शिष्यादिभिः प्रकाशविशेषं दृष्ट्वा ज्ञातमित्यभिप्रायः ॥

**नक्तमेव भगवत्युपयाते प्रोदिते सति सहस्रमरीचौ ।**
**मौनवानलिखदुत्तमचित्तः शिष्यशिक्षणपरः करुणावान् ॥ ४६ ॥**

**नक्तमिति** ॥ भगवति श्रीवेदव्यासे नक्तमेव रात्रावेवोपयाते स्वाश्रमंप्रति गते सति । सहस्रं मरीचयो यस्य तस्मिन् सूर्ये प्रोदिते सति । मौनमस्यास्तीति मौनवान् । तथापि करुणा दयास्यास्तीति करुणावान् शिष्येषु कृपावानित्यर्थः । उत्तमं चित्तं यस्य स पूर्णप्रज्ञाचार्यश्शिष्याणां शिक्षणं तस्मिन् परं तात्पर्यं यस्य तथाभूतस्सन्नलिखत् । शिष्य-शिक्षणार्थं यद्वक्तव्यं तदलिखदिति भावः । लिख अक्षरविन्यासे लङ् ॥ ४६ ॥

**नेदृशं स्थलमलं शमलघ्नं नास्य तीर्थसलिलस्य समं वाः ।**
**नास्तिविष्णुसदृशं ननु दैवं नास्मदुक्तिसदृशं हितरूपम् ॥ ४७ ॥**

**नेदृशमिति** ॥ अलं सम्यग् शमलं पापं हन्ति नाशयतीति शमलघ्नमीदृशं एतत्क्षेत्रसदृशं स्थलं न । अन्यत्रविद्यते । अस्य तीर्थरूपं सलिलं तस्य समं वार्जल-मप्यन्न । अस्माकमुक्तिः अस्मदुक्तिस्तया सदृशं समानं हितरूपं वचनञ्च न । विष्णुना सदृशं दैवं क्वापि न विद्यते ननु ॥ ४७ ॥

**याति तावदधुनैव जनोऽयं व्यासरूपमजितं प्रदिदृक्षु ।**
**आव्रजेदिह न वा स हि वेद स्वस्ति वोऽस्त्विति ययावथ मध्वः ॥ ४८ ॥**

यातीति ॥ अयं जनो व्यास इति रूपं यस्य तमजितं श्रीहरिं प्रद्रष्टुमिच्छुः सन्नधुनैवेदानीमेव याति यावत् । यास्यति । यावत्पुरानिपातयोर्लट् । अयं जन इह पुनरात्रजेदागच्छेन्नवातदहं नवेद । स श्रीवेदव्यासो वेद हि । जानाति हि । वो युष्मभ्यं स्वस्ति सुखमस्तु । 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमरः । इत्यलिखदिति पूर्वेणान्वयः । अथ लेखनानन्तरं मध्वो ययौ ॥ ४८ ॥

नाथ नाथ बत नोऽत्र विनाथान् मा त्यजोरुकरुणो भगवंस्त्वम् ।
नोदितं स्मृतमपीति हि शिष्यैः स्वामिनोभिमतभङ्गभयेन ॥ ४९ ॥

नाथनाथेति ॥ नाथनाथ! स्वामिन्! तात्पर्येण द्विरुक्तिः सम्भ्रमेवा । भगवन् श्रीमध्व! उरुः करुणा यस्य स त्वं विगतो नाथो येषां तान्नोऽस्मानत्र विदेशे मा त्यज । न परित्यज । मा शब्दोऽयं नतुमाङ्, अतो न लुङ् । बत खेदे । शिष्यैरित्येवं-वक्ष्याम इतिस्मृतमपि मनसाचिन्तितमपि स्वामिनः, गुरोः श्रीमध्वाचार्यस्य, अभिमतस्य अभीप्सितगमनस्य भङ्गाद्भयेन नोदितं । नोक्तम् । अस्माभिरेवं विज्ञापिते सत्यसौ कृपालुत्वान्नगमिष्यति, तथाचाभिमतगमनभङ्गः स्यादिति भयेन नोक्तमिति भावः ॥

सद्गुरोर्न विरहं सहमानः सत्यतीर्थयतिरन्वगमत्तम् ।
यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमशृणोत्पुरुसंख्यात् ॥ ५० ॥

सदिति ॥ यः सत्यतीर्थयतिरितरादेव्याः सुतो महिदासाभिदो हरिस्तेनदृष्टाः शाखा इतरासुतशाखास्तासु प्रतिपाद्यं अग्र्यमर्थं । पुरुः पूर्णा संख्या ज्ञानं यस्य तस्माच्छ्रीमध्वाचार्यात् त्रिवारं त्रिरावृत्त्याश‍ृणोत् । ससत्यतीर्थयतिस्सद्गुरोः श्रीमध्वाचार्यस्य विरहं वियोगं नसहमानस्सन् सोढुमशक्तस्सन् तं श्रीमध्वमन्वगमत् । अन्वगच्छत् । अत्रेतरासुखशाखास्वर्थमित्यैकपदत्वेऽर्थस्य सुशब्देनाग्र्यत्वोक्तेः पुनरग्र्यपदवैयर्थ्यं स्यात् ॥ ५० ॥

दुर्गमार्गगतमप्यनुभावत्त्याप सोयमरुणीभवतीने ।
लीलया सजवमाक्रममाणं व्याश्रयान्तरसुदूरशिलासु ॥ ५१ ॥

दुर्गेति ॥ स सत्यतीर्थः । दुर्गो गन्तुमशक्यो यो मार्गस्तं गतमपि प्राप्तमप्यनुसृत्य धावतीत्यनुधावन् । अविलम्बेन धावन्नित्यर्थः । इने सूर्ये । 'मार्ताण्डस्तपनो विकर्तन इन' इति हलः । अरुणी भवतिसत्यस्ताभिमुखेसतीति यावत् । विगत आश्रयो यस्य तद्व्याश्रयमन्तरं मध्यं यासान्ता व्याश्रयान्तराः । सुदूरे स्थिताः शिलाः सुदूरशिलाः व्याश्रयान्तराश्चनाः सुदूरशिलाश्च तासु गिरिमध्ये परिघारूपासु शिलासु लीलयानायासेन जवेन वेगेन सहितं यथा भवति तथा सजवमाक्रममाणं, आप्लुत्याप्लुत्याक्रम्यगच्छन्तमिति भावः । नाप न जगाम । सायङ्कालपर्यन्तमनुधावन्नपि सायङ्काले प्राप्तेसति सजवं गच्छन्तं श्रीमध्वमनुगन्तुमशक्तः स्वयं ततःपरं नानुजगामेति भावः ॥

**आनिवृत्तवपुषा गुरुणारात्पाणिना ह्यभिनयेन सुनुन्नः ।**
**त्रस्तधीरतिययौ स मुहूर्तात्तद्दिनोपगतमार्गमशेषम् ॥ ५२ ॥**

आनिवृत्तेति ॥ आनिवृत्तं पृष्ठतो दृष्ट्यावृत्तं वपुर्यस्य तेन गुरुणा श्रीमध्वाचार्येण पाणिना करेणाभिनयेन पश्चाद्गमनसूचकपाणिचलनेन आराद्दूरे । 'आराद्दूरसमीपयोः' इत्यमरः । सुनुन्नः सम्यक्प्रेरितः स सत्यतीर्थः त्रस्ता व्याघ्रादिभ्यो भीता धीर्यस्य तथासन्नपि । तच्च तद्दिनञ्च तस्मिन्नुपगतः प्राप्तः स चासौ मार्गश्च तं मुहूर्तान्मुहूर्तकालादतिययौ । अत्यगात् ॥ ५२ ॥

**आश्रमे निजजनानिह दृष्ट्वा तं प्रसादमहिमानममुष्य ।**
**प्रोच्य तत्प्लवनमप्यतिचित्रं तस्य तैः सह सदास्मरदेषः ॥ ५३ ॥**

आश्रम इति ॥ एष सत्यतीर्थः, इहाश्रमेनन्तमठे निजजनान् दृष्ट्वा तेभ्यस्तं स्वस्मिन्कृतममुष्य श्रीमध्वाचार्यस्य प्रसादमहिमानं अनुग्रहमहिमानं प्रोच्य, अतिचित्रं तत्प्लवनमपि श्रीमध्वाचार्यस्य गमनमपि प्रोच्यतैर्निजैः सह तस्यास्मरत् । तं श्रीमध्वाचार्यं अस्मरत् । अधीगर्थेति कर्मणि षष्ठी ॥ ५३ ॥

**वानरेन्द्र इव वायुजवोऽसौ भीमसेन इव दानवभीपः ।**
**उल्ललास गिरिपुङ्गवशृङ्गे स व्रजन् वृजिननाशननामा ॥ ५४ ॥**

**वानरेति** ॥ समुद्रलङ्घने वानरेन्द्र इव हनूमानिव वायोर्जव इव जवो यस्यासौ । सौगन्धिकवनं गच्छन् भीमसेन इव दानवभीमो दैत्यभयङ्करः । वृजिनस्य नाशनं यस्मात् तादृशं नाम यस्य स श्रीमध्वाचार्यो गिरिपुङ्गवस्य गिरिश्रेष्ठस्य हिमवतः शृङ्गे शिखरे उल्लास । शुशुभे ॥ ५४ ॥

बहुसत्वगणं सविकं समहाविषमोक्षमहाहिमवन्तमयम् ।
विषमोक्षमहाहिमवन्तमयन्नगमैक्षत फुल्लदृगस्तभयः ॥ ५५ ॥

**बह्विति** ॥ बहुसत्वगणं, सविकं, समहाविषमोक्षमहाहिं, अवन्तं, अयं, विषमोक्षमहाः, हिमवन्तं, अयन्, नगं, ऐक्षत, फुल्लदृक्, अस्तभयः । अयन्नुत्तरबदरीं गच्छन् विषमः क्रुद्धोय उक्षावृषभः । 'उक्षानड्वान्बलीवर्दः' इति हलः । तस्य महइव तेजइव महस्तेजो यस्य सोऽयं श्रीमध्वाचार्यो विभिः पक्षिभिः सहितं सविकं, महता विषस्य मोक्षो मोचनं तेन सहिताः समहाविषमोक्षास्तादृशा महाहयो महासर्पा यस्मिन्तं । बहवो ये सत्वाः प्राणिनस्तेषां गणं समूहं । 'सत्वोऽस्त्रीजन्तुषु क्लीबे व्यवसाये पराक्रमे' इति वैजयन्ती । अवन्तं रक्षन्तं हिमवन्तं नगं गिरिं । ऐक्षत ददर्श । [अत्र तोटकवृत्तम् । 'यदि तोटकमम्बुधिसैः कथितम्' इति तल्लक्षणात् ] ॥५५॥

सुहसितकमलाकरोपगूढं सुजनसुखार्थमनन्तभोगशय्यम् ।
विकसितसुमनोघटाप्रमुक्तं मरकतरत्नमयस्थलाद्युपशोभम् ॥ ५६ ॥

**सुहसितेति** ॥ तदा स्वानन्दतीर्थस्तं धरणीधरं पर्वतं दृष्ट्वा मुररिपुं हरिमस्मरदित्यन्वययुग्मम् । अत्रोक्तविशेषणानि गिरौ हरौ च यथायोग्यं योजनीयानि । कथंभूतं धरणीधरमित्यत उच्यते सुहसितेत्यादिना । सुहसिता अत्यन्तं विकसिता ये कमलाकराः पद्मिन्यस्तैरुपगूढं परिवृतं । हरिपक्षेतु, सु शोभनं हसितं मन्दहासो यस्याः सा सुहसिता साचसा कमला रमाच तस्याः करौ ताभ्यामुपगूढं आश्लिष्टं । सुजनानां सुकृतिनां सुखायेति सुखार्थं, अनन्ता भोगाः स्रगादयः, तेच शय्याः पर्यङ्कास्तेच भोगशय्याः अनन्ता अपरिमिता अविनाशिनोवा भोगशय्या यस्य तं । हिमवत्प्रदेशस्य भूस्वर्गत्वादिति भावः । हरौतु, सुजनसुखार्थमनन्तभोग शेषशरीरं शय्या यस्य तं ।

सज्जनसुखार्थं हि भगवाननन्तभोगशाय्यी भवति । तच्चोक्तं–'माध्वश्चतुरो मासान् सर्वभूतहितायवै । स्वापं यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः' इति । विकसितानि यानि सुमनांसि पुष्पाणि तेषां घटा समूहः । घटसङ्घात इति धातोः । संसर्गो वा येषां ते विकसितसुमनोघटास्तादृशा अगा वृक्षा यस्मिंस्तं । 'घटा घटन गोष्ठीभ घटनासु प्रयुज्यत' इति विश्वः । हरौतु, विकसिताः सन्तुष्टा ये सुमनसो देवास्तेषां घटा समूहः । तां गच्छतीत्यन्तर्यामितया विशतीति तं । यद्वा विकसितसुमनसां सन्तुष्टदेवानां या घटा गोष्ठी तां गच्छतीति तथोक्तस्तं । उच्चं उन्नतमुत्तमं वा । हरौतु, उच्चं सर्वोत्तमं । मरकतरत्नमयानि यानि स्थलानि तैः अग्र्या श्रेष्ठा शोभा कान्तिर्यस्य तं । हरौतु, मरकतरत्नमयस्थलवदग्र्या शोभा यस्य तमम्बरदित्यन्वयः । [ पुष्पिताग्रावृत्तम् । 'अयुजिनयुगरेफतो यकारो युजितु नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ] ॥ ५६ ॥

पादोपान्तनमन्महामुनिगणं हेमप्रदीप्ताम्बरं
श्रीमद्रत्नकलापसम्यकटकैर्विभ्राजितं हाटकैः ।
दृष्ट्वा तं धरणीधरं सुवनमालोल्लासिनं सुन्दरं
स्वानन्दाकृतिमस्मरन्मुररिपुं स्वानन्दतीर्थस्तदा ॥ ५७ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते
श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के षष्ठः सर्गः ॥

---

स्वानन्दतीर्थस्तदा, पादाः प्रत्यन्तपर्वतास्तेषामुपान्ते समीपे नमन्तो नमस्कारं कुर्वन्तो ये महामुनिगणा महामुनिसमूहा यस्मिंस्तं । हरिपक्षेतु, पादोपान्तनमन्तः श्रीहरिचरणसमीपे नमस्कारं कुर्वन्तो महामुनिगणा यस्य तं । हेम्ना स्वशिखरगत-स्वर्णेन प्रदीप्तं प्रदीपितमम्बरमाकाशो येन तं । हरौतु, हेमवत् स्वर्णवत् प्रदीप्तमम्बरं यस्य तं । पीताम्बरधरमित्यर्थः । श्रीमन्ति कान्तिमन्ति यानि रत्नानि तेषां कलापः समूहो यस्मिंस्तं । 'कलापोर्बर्हसूषयोः संहतौ भूषणे काञ्च्यां' इति हेमचन्द्रः ।

हरौतु, श्रीमन्ति रत्नानि येषु ते श्रीमद्रत्नास्तादृशाः कलापा भूषणानि यस्य तं । हाटकैः सुवर्णैः । 'सुवर्णं हेमहाटकं' इत्यमरः । अग्र्यकटका उन्नतनितम्बास्तैर्विभ्राजितं शोभितं । हरौतु, हाटकैः सौवर्णैः अग्र्याणि यानि कटकानि हस्तवलयानि तैर्विभ्राजितं । 'भूभृन्नितम्बवलयचक्रेषु कटकोस्त्रियाम्' इत्यमरः । शोभनानि वनानि सुवनानि तेषां मालाः पङ्क्तयस्ताभिरुल्लसितुं शीलमस्येति तं । 'मालातु पंक्तौ पुष्पादिदामनि' इति हेमचन्द्रः । हरौतु, सुवनमाला शोभनवनमाला तयोल्लसितुं शीलमस्येति तं । सुन्दरं रमणीयं । हरौतु, सुललितं । शोभनमानन्दो यस्याः सा स्वानन्दा । स्वानन्दहेतुरित्यर्थः । तादृश्याकृतिःस्वरूपं यस्य तं । हरौतु, स्वानन्दो निर्दोषस्वरूपभूतानन्दः स एवाकृतिर्देहो यस्य तं । धरणीं धरतीति धरणीधरस्तं हिमवन्तं दृष्ट्वा, मुररिपुं श्रीहरिमस्मरत् । स्मृ आध्याने लङ् । [ अत्र शार्दूलविक्रीडितवृत्तम् ] ॥ ५७ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां षष्ठः सर्गः ॥



अथ हैमवते तटान्तरे बदरीषण्डविशेषमण्डितम् ।
परमाश्रममाश्रयं श्रियः सकलज्ञः स ददर्श विश्रुतम् ॥ १ ॥

**अथेति** ॥ अथ हिमवल्लङ्घनानन्तरं । स सकलज्ञस्सर्वज्ञः श्रीमध्वाचार्यो हिमवतस्सम्बन्धि हैमवतं तस्मिन् । अन्यत्तटं तटान्तरं तस्मिन्हिमवत उत्तरपार्श्व इति यावत् । बदरीणां बदरीवृक्षाणां यानि षण्डानि समूहास्तैर्विशेषमण्डितो विशेषेणालंकृतस्तं । 'षण्डं पद्मादिसङ्घाते' इति विश्वः । श्रियो रमायाश्शोभाया वा । आश्रयमाधारं विश्रुतं प्रसिद्धं परमाश्रममुत्तमाश्रमं ददर्श । उत्तरबदरिकाश्रमं ददर्शेति भावः । [ अस्मिन्सर्गे प्रायः सुन्दरीवृत्तम् । 'अयुजोर्यदि सा लगौ लगौ मसयौ स्तौ रलगाश्च सुन्दरी'ति तल्लक्षणम् ] ॥ १ ॥

हिमवर्षरविप्रभासहाः पृथुसत्रप्रथिता द्विजाश्रयाः ।
अपि विष्णुपदस्पृशोऽलसन्नुभये यत्र विचित्रशाखिनः ॥ २ ॥

**हिमेति** ॥ स श्रीमध्वाचार्यो । हिमञ्च वर्षं वृष्टिस्तच्च रविप्रभाच, ताः सहन्तेति तथोक्ताः । वृक्षास्तु हिमादिनिवारकाभावात्तादृशाः । विप्रास्तु तपसि स्थित्वा धैर्येण तादृशाः, इति भावः। पृथूनि महान्ति यानि सत्राणि वनानि यज्ञाश्च तेषु प्रथिताः प्रसिद्धाः । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । द्विजाश्रयाः पक्षिणां ब्राह्मणानाञ्चाश्रयाः । 'दन्तविप्राण्डजा द्विजा' इत्यमरः । विष्णुपदमाकाशं हरिचरणञ्च, स्पृशन्तीति विष्णुपदस्पृशः । 'वियद्विष्णुपदं' इत्यमरः । उभये, उभयविधा विचित्रा याः शाखा वृक्षाङ्गानि वेदविभागाश्च, ता एषां सन्तीति विचित्रशाखिनो नानाविधवृक्षा मुनयश्च । 'शाखा वेदविभागेच पादपाङ्गेऽन्तिकेपिच' । यत्र बदरिकाश्रमेऽलसन् । अशोभन्त । तं ददर्शेति पूर्वेणान्वयः ॥ २ ॥

श्रवणामृतगीर्गणैर्द्विजैः शुकमुख्यैः शुभपक्षिभिर्युतम् ।
कमलेष्टतमस्थिरान्तरैरपि हंसैः परमैरमेचकैः ॥ ३ ॥

पुनः कथं भूतमाश्रममित्यत आह—

**श्रवणेति** ॥ स श्रीमध्वाचार्यः । श्रवणानां श्रोत्राणाममृतायमानो यो गिरां वाचां गणः समूहो येषां तैः । मुनिपक्षेतु, श्रवणामृतगिरः, भगवद्गुणप्रतिपादकवचनानि, तासां गणो येषां तैः । शुकस्तन्नामकपक्षिविशेषः, शुकाचार्यश्च । सः मुख्यः प्रधानो येषां तैः । शुभा ये पक्षाः पतत्राणि, शुभपक्षः, शुभसिद्धान्तश्च, एषां सन्तीति नादशैर्द्विजैः, पक्षिभिर्ब्राह्मणैश्च वृतं । कमलञ्च तदिष्टतममतिप्रियञ्चेति कमलेष्टतमं तस्मिन् स्थिरमन्तरं मानसं येषां तैः । कमलाया रमाया इष्टतमः प्रियतमः श्रीहरिस्तस्मिन् स्थिरमन्तरं मनो येषां तैः । मेचकाश्यामला न भवन्तीत्यमेचकास्तैरतिशुभ्रैरित्यर्थः । निर्मलैश्च, त्रिकरणशुद्धैरिति यावत् । 'कालः श्यामलमेचका' इत्यमरः । परमैहत्तमैर्हंसैर्हंसाख्यपक्षिभिः, सन्यासिभिश्च वृतमाश्रमं ददर्शेति पूर्वेणान्वयः ॥ ३ ॥

सुमनोनिकरेण पूरितं स्वमनोऽभीष्टममल्पदुर्गमम् ।
अपरस्परमत्सरप्रजं ननुवैकुण्ठमिवाच्युतालयम् ॥ ४ ॥

पुनः कथं भूतमित्यत आह—

**सुमन इति** ॥ स श्रीमध्वाचार्यः । सुमनसां पुष्पाणां निकरः समूहस्तेन पूरितं । वैकुण्ठोप्येवं, शोभनं मनो येषां मुनीनां ते सुमनसस्तेषां निकरस्तेन पूरितमिति वा । वैकुण्ठपक्षेतु, सुमनो निकरेण देवसमूहेन पूरितं । स्वमनोऽभीष्टं । 'आत्मीय ज्ञानिधनवाची स्वशब्दः' । अत्र स्वशब्देनात्मीया उच्यन्ते । तेच स्वतन्त्रत्वात्स्वशब्दवाच्यभगवत्सम्बन्धिनः । तथा च स्वेषां स्वतन्त्रभगवत्सम्बन्धिनां सतां यन्मनस्तस्य यदभीष्टं भगवद्दर्शनादिलक्षणं तद्ददातीति तथोक्तस्तं । वैकुण्ठोऽप्येवं स्वमनोभीष्टदं । अल्पैर्दुर्बलैर्ज्ञानभक्त्यादिबलवर्जितैरित्यर्थः । तैर्दुर्गमो गन्तुमशक्यस्तं वैकुण्ठोऽप्येतादृशः । न विद्यते परस्परं मत्सरोऽन्योन्यं मत्सरो यासां ता अपरस्परमत्सरास्तादृशाः प्रजा जना यस्मिंस्तं । वैकुण्ठोऽप्यपरस्परमत्सरप्रजः । वैकुण्ठमिव वैकुण्ठलोकवदच्युतालयोऽच्युतावासभूतस्तमाश्रमं ददर्शेति पूर्ववत् ॥ ४ ॥

तमिमं प्रविशन्तमाश्रमं ह्यधिकत्रिंशदुदारलक्षणम् ।
गुणसारविदः कुतूहलादवलोक्यर्षय इत्यचिन्तयन् ॥ ५ ॥

तन्निति ॥ गुणानां सारो विवेकस्तं विदन्ति जानन्तीति तथोक्ताः । गुणानां सारासारविवेकज्ञा इत्यर्थः । ऋषय आश्रमं प्रविशन्तं द्वेऽधिके यस्याः साद्यधिका साचसा त्रिंशच्च द्व्यधिकत्रिंशदुदारलक्षणान्युत्तमलक्षणानि यस्य तं । तमिमं श्रीमध्वाचार्यमवलोक्य कुतूहलात् कुतुकादिति वक्ष्यमाणरीत्याचिन्तयन् । चिति स्मृत्यां लङ् ॥ ५ ॥

**कनकातुलतालसन्निभः कमलाक्षो विमलेन्दुसन्मुखः ।**
**गजराजगतिर्महाभुजः प्रतियान् कोऽयमपूर्वपूरुषः ॥ ६ ॥**

**कनकेति** ॥ कनकमयो योऽनुलतालोऽसदृशतालवृक्षस्तस्य सन्निभः समानः । वृत्तपुष्टस्थूलदेह इति भावः । कमलवदक्षिणी यस्य सः, विगतं मलं कलङ्को यस्मात्सः, विमलस्तादृशो य इन्दुस्तद्वत्सन्मुखं यस्य, तथा गजानां राजा गजराजस्तस्य गतिरिव गतिर्यस्य सः । महान्तौ भुजौ बाहू यस्य सः । प्रतियातीति प्रतियान् व्यासंप्रति गच्छन्नित्यर्थः । पूर्वो न भवतीत्यपूर्वः सचासौ पूरुषश्च । इतः पूर्वमस्माभिरदृष्टः पुरुष इत्यर्थः । अयं कः ? ॥ ६ ॥

**अतिशान्तवपुर्निशाकरः स्वयमेकान्तखरो दिवाकरः ।**
**इति नास्य गुणार्णवाकृतेरुपमानं भुवनेषु लभ्यते ॥ ७ ॥**

**अतीति** ॥ निशाकरोऽतिशान्तं वपुर्यस्य तादृशः । दिवाकरः सूर्य एकान्तेन नियमेन खरस्तीक्ष्ण इत्यस्माद्धेतोर्गुणैरर्णव इव गुणार्णवा आकृतिस्स्वरूपं यस्य तस्यास्य पुरुषस्योपमानं निदर्शनं भुवनेषु न लभ्यते ॥ ७ ॥

**परमाश्रमिणां गतश्रमो ननु चिह्नानि बिभर्ति धीरधीः ।**
**अपि मानुषभावविग्रहो विपुलं विस्मयमातनोति नः ॥ ८ ॥**

**परमेति** ॥ गतः श्रमो यस्य स, श्रमरहित इत्यर्थः । धीरास्थिरा धीर्यस्य सोऽयं । परमाश्रम उत्तमाश्रमो यत्याश्रम इति यावत् । स एषामस्तीति तेषां यतीनामित्यर्थः । चिह्नानि बिभर्ति ननु । मानुषस्य भावः स्वभावो यस्य तादृशो विग्रहो देहो यस्य तादृशोऽपि । नो मुनीनामस्माकं विपुलं विस्मयमाश्चर्यमातनोति । वर्धयति ॥ ८ ॥

चतुरश्चतुराननः स्वयं पवनो वा व्रतिरूप आव्रजन् ।
श्रुतिनाथदिदृक्षयान्यथा न खलु स्यान्निखिलाग्र्यलक्ष्मवान् ॥ ९ ॥

चतुरेति ॥ श्रुतिनाथस्य श्रीवेदव्यासस्य दिदृक्षा दर्शनेच्छा तया व्रतिनो यतेःरूपं वेषो यस्य सः, आव्रजश्चतुरः सर्वलक्षणचतुरश्चतुराननो ब्रह्मा स्वयं वा । पवनो वा मुख्यवायुर्वा । अन्यथा तयोरन्यतरो नचेन्निखिलानि यान्यग्र्यलक्ष्मान्युत्तमलक्षणान्यस्य सन्तीति तादृशो नस्यात् खलु ॥ ९ ॥

अवलोकितलक्षणः स तैरिति सञ्चिन्त्य कुतूहलाकुलैः ।
अविलम्बगतिर्न्यशामयत्तरुमारात्सुरपादपोत्तमम् ॥ १० ॥

अवलोकितेति ॥ कुतूहलेनाकुलैः पूर्णैरत्यन्तकुतूहलोपेतैरित्यर्थः । तैर्मुनिभिरि-त्युक्तप्रकारेण सञ्चिन्त्य विचार्य । अवलोकितानि लक्षणान्यङ्गसम्पदो यस्य सः । विरिञ्चिपवनयोरन्यतरज्ञापकत्वेन ज्ञातलक्षण इत्यर्थः । अविलम्बा भक्तयतिशयेन क्षिप्रा गतिर्गमनं यस्य स श्रीमध्वाचार्यः । आरात् समीपे, दूरे वा । सुरपादपः कल्पवृक्षस्तद्वदुत्तमं तरुं न्यशामयत् । ददर्श । ['शमोऽदर्शने' इति मित्वाभावाद्दीर्घः]

मसृणत्वचमुन्नतं ततं बहुशाखाफणसूनरत्नकम् ।
भगवन्तमनन्तमन्तिके स्थितमीशस्य निषेवणाय वा ॥ ११ ॥

कीदृशं तरुमित्यतस्तद्विशेषणान्याह—

मसृणेत्यादि श्लोकत्रयेण ॥ श्रीमध्वाचार्यः, मसृणातिस्निग्धा त्वग्यस्य सः । 'मसृणोऽकठिने स्निग्धे' इति हेमचन्द्रः । शेषोऽपि मृदुलत्वक् । उन्नतमुच्छ्रित-मुत्तमञ्च ततं छत्राकारेण व्याप्यस्थितं । बहुफणाभोगेन व्याप्यस्थितञ्च । बहवो याः शाखास्ता एव फणास्तेषु सूनानि प्रसूनान्येव रत्नानि यस्मिंस्तं । अन्यत्र, बहवो याश्शाखा वेदशाखास्तदात्मकत्वात्, विस्तृतत्वाद्वृक्षशाखासदृशा वा, ये फणास्तेषु यानि सूनस्थान्युच्छूनरत्नानि यस्य तं । 'सूनं वाच्यवदुच्छूने सूनं प्रसवपुष्पयोः' इति

विश्वः। तल्मीशस्य श्रीवेदव्यासस्य निषेवणाय सेवनायान्तिके समीपे स्थितं भगवन्तं पूज्यमनन्तं वा शेषमिव। 'वाविकल्पोपमानयोः इत्यमरः। न्यशामयदिति पूर्वेणान्वयः॥

अतिचित्रविचित्रपत्रिणं बहुवर्णं हरिगोनिवारकं।
मुनिनन्दनमिन्दिरापतेरधिकेष्टं पततामिवाधिपम्॥ १२॥

अतिचित्रेति॥ अतिचित्राण्यत्याश्चर्याणि यानि विचित्रपत्राणि नानावर्णापित-पत्राणि तान्यस्य सन्तीति तं। गरुडोऽपि, अतिचित्रे वेदात्मकत्वेनात्याश्चर्ये ये विचित्रपत्रे नानावर्णपक्षौ तेऽस्यस्त इति तं। बहवो वर्णा यस्य तं, गरुडोऽपि बहुवर्णः। 'आजानुतः स्वर्णवर्ण आनाभेर्हारगौरभाः। माणिक्यशोण आकण्ठादाके-शाद्धरितप्रभः। नीलकेशोल्लसन्माल्यः' इत्युक्तेः पञ्चवर्ण इति भावः। हरेः सूर्यस्य ये गावः किरणास्तेषां निवारकं। अनल्पछायमिति भावः। गरुडोऽपि हरेरिन्द्रस्य गौर्वज्रं तस्य निवारकः। 'अर्क मर्कट मण्डूक विष्णुवासव वायवः। तुरगः सिंह शीतांशु यमाश्च हरयो दश' इति हलः। 'दृक्दृष्टिदीधितिस्वर्णवज्रवाग्बाणवारिषु। भूमौ पशौ च गोशब्दः' इति च। मुनीन् नन्दयति स्वच्छायादिना सन्तोपयतीति मुनिनन्दनस्तं। गरुडोऽपि कश्यपमुनेर्नन्दनः। इन्दिरापते श्रीवेदव्यासस्याधिकेष्टमत्यन्तप्रियं। गरुडोप्येतादृशः। तरुं, पततां पक्षिणामधिपं स्वामिनं गरुडमिव न्यशामयदिति पूर्वेणान्वयः॥ १२॥

अमृतात्ममहाफलप्रदं दुरवापं हरिभक्तिवर्जितैः।
श्रितसाधुपुराणभारतं निगमं मूर्तमिवोरुशाखिनम्॥ १३॥

अमृतेति॥ श्रीमध्वाचार्योऽमृतात्मान्यमृतमयानि यानि महाफलानि तानि प्रददातीति तं। तत्फलास्वादनस्य जरामरणनाशकत्वादमृतात्मेत्युक्तं। वेदोऽप्यमृतं मोक्ष आत्मा स्वरूपं यस्य तदमृतात्म तदेव यन्महाफलं तत्प्रददातीति तादृशः। वेदार्थ-विचारपूर्वकं भगवत्स्वरूपज्ञानेन मोक्षो भवतीत्यतो ह्येवमुक्तं। हरिभक्तिवर्जितैर्हरि-भक्तिरहितैराप्तुमशक्यो दुरवापस्तं। बदरिकाश्रमस्याप्यवैष्णवाप्राप्यत्वात्तरुरपि तादृश इति भावः। वेदोप्यवैष्णवदुरवापः। 'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते' इति

वचनात् । श्रितानि शाखास्त्ववलम्बमानानि साधुपुराणभारतान्युत्तमपुराणभारतपुस्तकानि यस्मिंस्तं । मुनिभिः श्रीहर्यर्चनादिसमये तच्छाखानिक्षिप्तसच्छास्त्रपुस्तकजातमिति भावः । निगमोऽपि श्रितानि स्वैरुपजीव्यप्रमाणत्वेनाश्रितानि साधुपुराणभारतानि यस्य तादृशः, वेदार्थत्वोपपामित्यर्थः । उरवो बहवो या शाखास्ता अस्य सन्तीति तं । वेदोऽपि ऐतरेय, कौषीतक, बाष्कल, शाकल, पैङ्गि, काठकाद्युरुशाखावान् । तरुं मूर्तं मूर्तिमन्तं निगममिव वेदमिव न्यशामयदित्यन्वयः ॥ १३ ॥

अथ तस्य स वेदिकान्तरं सुविशाले विमले मनोहरे ।
अवलोकितवाननन्तधीर्दिवि देवानिव तापसोत्तमान् ॥ १४ ॥

अथेति ॥ आधानन्ता पूर्णा धीर्यस्य स पूर्णप्रज्ञाचार्यस्तस्य वृक्षस्य सुविशालेऽतिविस्तारे विमले मनोहरे वेदिकाया अन्तरे मध्ये तापसोत्तमान् मुनिवरान् । दिवि स्वर्गे देवानिवावलोकितवान् । दृष्टवान् ॥ १४ ॥

अपि सप्ततया विराजितान् गतसंख्यान् गुणिनो गुणोज्झितान् ।
अपि मन्युमदादिवर्जितान् गतभोगान् पवनाशनान् सदा ॥ १५ ॥

अपीति ॥ श्रीमध्वाचार्यः । गता संख्या येभ्यस्तान् । बहूनिति यावत् । सप्ता जटया सहिताः सप्तास्तेषां भावस्तया । 'ऋषीणां सा, जटा, सटा' इति हलः । जटासहितत्वेन विराजितान्शोभमानान् । गुणा एषां सन्तीति गुणिनो ज्ञानभक्त्यादि गुणसंयुक्तानित्यर्थः । गुणोज्झितान् सत्वादिगुणरहितान् । अथवा गुणः सूत्रमेषामस्तीति तान् । ब्रह्मचार्यादिवानप्रस्थान्तानिति यावत् । गुणोज्झितान् सूत्ररहितान् यतीनिति यावत् । गतो भोगः स्रक्चन्दनादिभोगो येभ्यस्तान् । सदा पवनो वायुरशनमन्नं येषां तानतएव मन्युः क्रोधः स च मदश्च तावादी येषां तैर्वर्जितान् जितषड्वर्गानित्यर्थः । मुनीनवलोकितवानिति पूर्वेणान्वयः । पवनाशनशब्दस्सर्पवाचकः । 'पन्नगः पवनाशनः' इत्युक्तेः । भोगशब्दः सर्पशरीरवाचकः । 'भोगः सुखेस्त्र्यादिभृताबहेश्च फणकाययोः' इत्यमरोक्तश्च । तथा च पवनाशनानां गतभोगत्वं विरुद्धमित्यतो विरोधालङ्कारः ॥ १५ ॥

मुनिमण्डलमध्यवर्तिनं त्रिजगन्मण्डलमण्डनायितम् ।
इह सत्यवतीसुतं हरिं परिपूर्णप्रमतिः समैक्षत ॥ १६ ॥

**मुनीति** ॥ परिपूर्णा प्रमतिर्यस्य स श्रीमध्वाचार्यः । इह वेदिकायां मुनीनां मण्डलस्य समूहस्य मध्ये वर्तितुं शीलमस्येति तं । त्रीणि च तानि जगन्ति च तेषां यन्मण्डलं प्रदेशस्तस्य मण्डनवदलङ्कारवदाचरतीति तं । सत्यवतीसुतं हरिं श्रीवेदव्यासं समैक्षत । ददर्श ॥ १६ ॥

निजहृत्कमलेऽतिनिर्मले सततं साधु निशामयन्नपि ।
अवलोक्य पुनः पुनर्नवं तममौ विस्मित इत्यचिन्तयत् ॥ १७ ॥

**निजेति** ॥ असौ श्रीमध्वाचार्योऽतिनिर्मले निजहृत्कमले आत्मीयहृत्पद्मे साधु सम्यग् यथा भवति तथा सततं निशामयन्नपि पश्यन्नपि । तं श्रीवेदव्यासं पुनःपुनर्दर्शनेन नवं नूतनमवलोक्य विस्मितस्सन्निति (वक्ष्यमाणप्रकारेण) अचिन्तयत् ॥१७॥

अगणय्यगुणार्णवोऽमलः स हि नारायण एव केवलम् ।
विधिनानुस्रुतं पराशरात्सुषुवे सत्यवती किलात्र यम् ॥ १८ ॥

**अगणय्येति** ॥ सत्यवती, विधिना ब्रह्मणा अनुसृतं अभ्यर्थितं यं श्रीवेदव्यासमत्र भुवि पराशरात् सुषुवे । प्रासूत । किलेत्यपरमार्थे । श्रीवेदव्यासस्य वस्तुतो जन्मरहितत्वात् । स एवस्सत्यवतीसुतोऽगणय्या अगण्या ये गुणास्तैरर्णववद्वार्णवः । न विद्यते मलं दोषो यस्य सोऽमलः केवलं साक्षान्नारायणः । हीतिप्रसिद्धिद्योतकः ॥

धवलेऽस्य मनःपयोनिधौ सदनुक्रोशगिरीन्द्रलोलिते ।
प्रकटीभवति स्म सुन्दरी दयिता दैत्यरिपोस्त्रयीमयी ॥ १९ ॥

**धवल इति** ॥ धवले निर्मलेऽस्य श्रीव्यासस्य मन एव पयोनिधिः क्षीरसागरस्तस्मिन् । सत्सु सज्जनेषु योऽनुक्रोशः कृपा स एव गिरीन्द्रो मन्दरगिरिस्तेन लोलिते मथितेसति । दैत्यरिपोः श्रीवेदव्यासस्य दयिता प्रिया त्रय्येव त्रयीमयी वेदत्रयात्मिका सुन्दरी स्त्री प्रकटीभवतिस्म । स्मारीति । प्रकटीबभूवेत्यर्थः । पयोनिधौ

मन्दरमथितेमति तस्माद्यथा भगवद्दयिना रमा प्रादुर्बभूव तद्वत्सज्जनकृपोन्मथिनादस्य मनसस्त्रयी प्रादुर्बभूवेति भावः ॥ १९ ॥

इत एव पुराणगौरगौ समहाभारतपारिजातके ।
सति जातवति व्यजायत प्रवरं सूत्रगणामृतं स्वयम् ॥ २० ॥

इत इति ॥ इतएवास्माच्छ्रीवेदव्यासादेव महाभारतमेव पारिजातस्तेन सहितस्समहाभारतपारिजातकस्तस्मिन् । गौराः श्वेता गावः किरणा यस्य सगौरगुश्चन्द्रः, पुराणान्येव गौरगुस्तस्मिन् । 'स्त्रियाः पुंवदिति पुंवद्भावे 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वः' । जातवतिसत्युत्पन्नेसति प्रवरमुत्तमं स्वयं साक्षात् सूत्राणां ब्रह्मसूत्राणां गणः समूहः स एवामृतमिव व्यजायत । जज्ञे । पारिजातसहिते चन्द्रे जातवतिसति पयोनिधेरमृतं यथा जातं एवं पुराणोत्पत्यनन्तरमस्माद्भगवतो ब्रह्मसूत्रमपि जातमिति भावः ॥ २० ॥

निरवग्रहमुर्वनुग्रहं विदधत्पाण्डुसुतादिसज्जने ।
अवनाववनाय संविदां सुचिरायैष चचार चारुगीः ॥ २१ ॥

निरवग्रहेति ॥ चारुर्मनोहरा गीर्वचनं यस्य स एष श्रीवेदव्यासः । पाण्डुसुता आदयो यस्य सचासौ सज्जनश्च तस्मिन्निरवग्रहमकुण्ठितं पूर्णमित्यर्थः । अनुग्रहं विदधत् कुर्वन्सन्, संविदां ज्ञानानां । संविदाश्रयपुरुषाणां संविद्विषयाणाञ्च बहुत्वात्संविदामिति बहुवचनं । अवनाय रक्षणायावनौ भुवि सुचिराय चचार ॥

अधुना कलिकालवृत्तये सवितेव क्षणदानुवृत्तये ।
जनदग्विषयत्वमत्यजद्भगवानाश्रममावसन्निमम् ॥ २२ ॥

अधुनेति ॥ अधुनेदानीमिममाश्रममावसन् भगवाञ्छ्रीव्यासः । ['उपान्वध्याङ्वस' इति कर्मसंज्ञा] अस्मिन्नाश्रमे वसन्नित्यर्थः । भगवान् कलेः कालस्तस्य वृत्तये प्रवृत्तये, जनानां या दृग्दृष्टिस्तस्या विषयो गोचरस्तस्य भावस्तत्वं । क्षणदानुवृत्तये रात्रिप्रवृत्तये सवितेव रविरिवात्यजत् । परित्यक्तवान् । अयं भावः—सुरेषु मुनिषु च भुविचरत्सु

कलियुगधर्मा न प्रवर्तेरन्नित्यधुना व्यासोऽयं जनदृग्विषयत्वं मुक्त्वा तस्मिन्नाश्रमे वसति, रात्रिप्रवर्तनार्थं सूर्योऽस्तं यथागच्छेत्तद्वदिति ॥ २२ ॥

तदिदं वपुरस्य दृश्यते दलितेन्दीवरसुन्दरद्युति ।
परमाजिनयोगपीठगं मम चेतोनयनाभिनन्दनम् ॥ २३ ॥

तदिति ॥ दलितं विकसितं यदिन्दीवरं तद्वत्सुन्दरा द्युतिः कान्तिर्यस्य तत् । परममुत्तमं यदजिनं कृष्णाजिनं तदात्मकं यद्योगपीठं योगासनं तद्गच्छतीति तादृशं । मम चेतश्च नयने च तान्यभिनन्दयतीति तादृशमस्य श्रीवेदव्यासस्य तदिदं वपुर्दृश्यते ॥ २३ ॥

अगणय्यगुणैः सुपूरितं परिपूर्णैरगणितात्मसद्गुणैः ।
इदमस्तसमस्तदूषणं सचिदानन्दमयं हि केवलम् ॥ २४ ॥

अगणय्येति ॥ इदं दृश्यमानं वपुर्गणयितुमशक्या अगणय्यास्तादृशा गुणा येषां तैः । परिपूर्णाः प्रत्येकं पूर्णाः येऽगणिता असंख्याता आत्मसद्गुणा आत्मनोनिर्दुष्ट-गुणास्तैः सुपूरितं । अस्तं निरस्तं समस्तदूषणं समस्तदोषा यस्मात्तादृशं । केवलं साक्षाच्चिता ज्ञानेन सहितः सचित्, सचासावानन्दश्च तदात्मकं सचिदानन्दमयं । दृश्यत इति पूर्वेणान्वयः ॥ २४ ॥

कमलाकमलासनानिलैर्विहगाहीन्द्रशिवेन्द्रपूर्वकैः ।
पदपद्मरजोऽस्य धारितं शिरसा हन्त वहाम्यहं मुहुः ॥ २५ ॥

कमलेति ॥ कमला श्रीः, कमलासनो ब्रह्मा, अनिलो मुख्यवायुस्तैः, विहगेन्द्रो गरुडः, अहीन्द्रः शेषः, शिवश्च, इन्द्रश्च ते पूर्वे येषां तैश्शिरसा धारितं । अस्य भगवतः, पदे पद्मेइव तयोः रजश्शिरसा मुहुर्वहामि । 'वर्तमानसामीप्ये वर्तमानवद्वे'ति भविष्यदर्थे लट् । हन्तेति हर्षे । 'हन्त हर्षेनुकम्पायां वाक्यारम्भ विषादयो'रित्यमरः ॥

प्रणमामि पदद्वयं विभोर्ध्वजवज्रांकुशपद्मचिह्नवत् ।
निजमानसरागपीडनादरुणीभूतमिवारुणं स्वयम् ॥ २६ ॥

**प्रणमामीति** ॥ ध्वजश्च वज्रश्चांकुशश्च पद्मश्च, तेषां यानि चिह्नानि तान्यस्य सन्तीति तादृशं, स्वयं स्वतएवारुणं लोहितं लोहिततलमिति यावत् । निजानां स्वभक्तानां यानि मनांसि तेषां सम्बन्धी निजमानसः । सचासौ रागो विषयाकाङ्क्षा तस्य पीडनं मर्दनं तस्मान्निराकरणादिति यावत् । अरुणीभूतमिव लोहितं जातमिव । भगवच्चरणारविन्दं पश्यतां हि मानसो रागो निवर्तते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवद्वचनात । स्वतएवारुणस्य निजमानसरागपीडनादरुणीभूतत्वमुत्प्रेक्ष्यते । लाक्षागैरिकाद्याक्रमणेन पादारुणभावस्य दृष्टत्वात । विभोः श्रीवेदव्यासस्य पदद्वयं चरणयुग्मं प्रणमामि । नमस्कुर्यां ॥ २६ ॥

**ननु केवलमेव वैष्णवं श्रितवन्तः पदमात्मरोचिषा ।**
**तमसोऽप्युभयस्य नाशका विजयन्ते नखरा नवं रविम् ॥ २७ ॥**

**नन्विति** ॥ केवलं मुख्यतो विष्णोः पदं विष्णुपदमिति योगसिद्धमिति भावः । वैष्णवं विष्णुसम्बन्धिपदं चरणं श्रितवन्त आश्रिताः । रविस्तु रूढिमात्रेण विष्णुपदाभिहिताकाशमाश्रित इति भावः । आत्मरोचिषा स्वतेजसोभयस्यापि द्विविधस्यापि तमसो नाशकाः । अन्धकारस्य, अज्ञानस्य च नाशका इति भावः । रविस्तु बाह्यमेव-निराकुर्यान्नान्तरमिति भावः । अस्य वेदव्यासस्य नखरा नखा नवमुद्यन्तं रविं विजयन्ते । अतिशेरते ननु ॥ २७ ॥

**सुकुमारतलांगुलीमतोः पदयोरस्य निगूढगुल्फयोः ।**
**उपमानमहो न दृश्यते कविवर्यैरितरेतरं विना ॥ २८ ॥**

**सुकुमारेति** ॥ कविवर्यैः कविश्रेष्ठैः । तले पादतलेऽगुल्यस्तलांगुल्यः । सुकुमारा अतिकोमला या तलांगुल्यस्ता अनयोः सन्तीति तयोः । निगूढौ गुल्फौ ग्रन्थी ययोस्तयोः । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । पदयोश्चरणयोः, इतरेतरमन्योन्यं विनोपमानं दृष्टान्तो न लभ्यते । अहो आश्चर्यं । दक्षिणपादस्य सव्यपादो दृष्टान्तस्तस्य च दक्षिणपाद इति भावः ॥ २८ ॥

उचितां गुरुतां दधत्क्रमाच्छुचि तेजस्वि सुवृत्तमुत्तमम् ।
भजतोऽत्र च भाजयत्यदो विभुजङ्घायुगलं सरूपताम् ॥ २९ ॥

उचितामिति ॥ क्रमादुचितां गुरुतां दधत् । गुल्फादूर्ध्वं जानुपर्यन्तं क्रमेण यावदुचितं तावत् स्थूलत्वं दधदित्यर्थः । शुचि निर्दोषं । तेजोस्यास्तीति तेजस्वि, सुवृत्तं सम्यग्वर्तुलमुत्तमं, अदस्तद्विभोः श्रीव्यासस्य जङ्घयोर्युगलं युग्मं । भजतः पुरुषानत्र च मुक्तेः प्रागपि । सरूपतां सारूप्यं भाजयति प्रापयति । श्रीव्यासजङ्घा-युगलस्य यथा शुचित्वं क्रमेण गुरुत्वं, सुवृत्तत्वं, तेजस्वित्वमुत्तमत्वञ्च, तद्वदुपासका अपि क्रमेण शुचयो, निर्दोषा, गुरवः स्वावराणामुपदेशकर्तारः, सुवृत्ताः शोभनाचारा-स्तेजस्विन, उत्तमा ज्ञानभक्त्यादिभिरुत्तमाश्च भवन्तीति भावः । अत्र च सरूपतां भाजयति, किमु मुक्ताविति चार्थः ॥ २९ ॥

अचलासनयोगपट्टिका वरकक्ष्या सकृदाप्तमिष्टदम् ।
परितोऽपि हरिं स्फुरन्त्यहो अनिशं धन्यतमेति मे मतिः ॥ ३० ॥

अचलेति ॥ वरोत्तमाच सा कक्ष्या मध्यबन्धनं वरकक्ष्या । 'कक्ष्याप्रकोष्ठे हर्म्यादेः काञ्च्य मध्येभबन्धने' इत्यमरः । [ मध्येभबन्धन इत्यस्य मध्यबन्धने, इभबन्धने चेत्यर्थः ] तथाच वरकक्ष्या उत्तममध्यबन्धनभूता । न विद्यते चलश्चलनं यस्य तदचलं तादृशं यदासनमवस्थानं तदर्था योगपट्टिका, अचलासनयोगपट्टिका । योग-पट्टिकया मध्यबन्धने कृतेसति स्थिरासनत्वं भवतीति भावः । सकृदेकदाऽऽसमपि प्राप्तमपीष्टदममीष्टप्रदं हरिं श्रीवेदव्यासं परितः । 'अभितः परितः' इत्यादिना द्वितीया । वेदव्यासस्य समन्तादनिशं निरन्तरं स्फुरन्तीसती धन्यतमेति मे मतिः । पुंसां सकृद्भगवत्प्राप्त्या धन्यत्वमभीष्टप्राप्तिश्च भवति । योगपट्टिकात्वनिशमपि परितः स्फुरति—अहो आश्चर्यं । तस्माद्धन्यतमेति भावः ॥ ३० ॥

रुचिरेण वरेणचर्मणा रुचिराजद्युतिचारुरोचिषा ।
परमोरुनितम्बसङ्गिना परमाश्चर्यतया विराज्यते ॥ ३१ ॥

रुचिरेणेति ॥ परमस्योत्तमस्य श्रीव्यासस्योरुनितम्बस्योत्कृष्टकटिस्थलस्य सक्तोऽभ्यागमीति तादृशेन । परमस्य ये ऊरुनितम्बास्तेषां सम्बन्धिनेति वा । 'नितम्बः पश्चिमश्रोणिभागेऽद्रिकटके कटा'विति वैजयन्ती । रुचिरेण रमणीयेन । रुचीनां मयूखानां राजा रुचिराजस्सूर्यस्तस्य या द्युतिर्दीप्तिस्तद्वच्चारु मनोहरं रोचिः कान्तिर्यस्य तादृशेन । 'रुचिर्मयूखे शोभायां' इति विश्वः । वरमुत्तमं यदेणचर्म कृष्णमृगचर्म तेन, परमं यदाश्चर्यं तस्य भावस्तत्ता तया विराज्यते । राजृदीप्तौ भावे लिट् । श्रीव्यासस्य बहिर्वासोभूतमेणचर्मातितरां विराजत इति भावः ॥ ३१ ॥

तनुनिम्नसुनाभिशोभिते वलिभे वारिजनाभ आदधे ।
प्रतनावतिसुन्दरे मृदावुदरेऽस्मिन् जगदण्डमण्डलम् ॥ ३२ ॥

तन्विति ॥ वारिणि जातं वारिजं पद्मं, तन्नाभौ यस्य स श्रीव्यासः । तनुः सूक्ष्मो यो निम्नसुनाभिर्गम्भीरशोभननाभिस्तेन शोभिते । वलिभिस्त्रिरेखाभिर्भातीति वलिभं । वलयस्त्रिरेखा अस्य सन्तीति वलिभमिति वा । 'तु द्विवलिवटेभ' इति मत्वर्थेभः । तस्मिन् प्रतनावत्यल्पेऽतिसुन्दरे मृदावस्मिन् दृश्यमान उदरे जगदण्डस्य ब्रह्माण्डस्य मण्डलमादधे । सम्यग्दधार । मृदुप्रतनूदरे ब्रह्माण्डधारणमतिचित्रमिति भावः ॥ ३२ ॥

हृदये कृतसज्जनोदये सुविशाले मुनिवंशशेखरः ।
उभयं वहति त्रयीमयं विमलं ब्रह्मसुसूत्रमुत्तमम् ॥ ३३ ॥

हृदिति ॥ मुनिवंशे वसिष्ठवंशे शेखरः श्रेष्ठः श्रीव्यासः । कृतः सज्जनोदयः सज्जनसम्पद्येन तस्मिन् सुविशाले विमले मनोहरे हृदये । त्रयीमयं त्रिवेदमयमुत्तममुभयं द्विविधं ब्रह्मसुसूत्रं शोभनं ब्रह्मसूत्रं । हृदयान्तर्वेदान्तसूत्रं बहिर्यज्ञोपवीतं च वहतीति भावः । उभयस्य त्रयीमयत्वं नाम—वेदान्तसूत्रस्य वेदार्थनिर्णायकत्वमितरस्य वेदाभिमानिभिरभिमन्यमानत्वं, वेदसिद्धत्वं वेति ॥ ३३ ॥

असमेऽनधिके सुसाधिते निजताते रविराशिदीधिति ।
प्रददौ त्रिजगज्जयध्वजं विधिरेतद्गलसङ्गिभूषणम् ॥ ३४ ॥

**असम** इति ॥ विर्विरिञ्चा । निजातातेे स्वपितरि नारायणे, न विद्यते समो यस्य तस्मिन्नसमे समरहित इत्यर्थः । नविद्यतेऽधिको यस्मात्सोऽनधिकस्तस्मिन् । उत्तमरहित इत्यर्थः । सुसाधिते 'नास्ति नारायणसमं न भूतं न भविष्यती'ति श्लोकेन पत्रालम्बनं कृत्वा श्लोकार्थे सम्यक्साधितेसति । अस्मै श्रीव्यासाय रवीणां सूर्याणां राशेः समूहस्य दीधितय इव दीधितयः किरणा यस्य तादृशं । त्रिजगतां जयस्य यो ध्वजः स इवाचरतीति त्रिजगज्जयध्वजं । गलसङ्गः कण्ठसङ्गोऽस्यास्तीति गलसङ्गि भूषणं कण्ठभूषणं प्रददौ । 'सहस्रार्थान् ऋषीनेव यौगपद्येन पृच्छत. । सहस्रोत्तरदानेन युगपत्पर्यतोषयदि'ति वचनाच्छ्रीव्यासस्य जगज्जयः प्रसिद्धः ॥ ३४ ॥

**अरिवारिजलक्षणोल्लसत्सुकुमारारुणपाणिपद्मयोः ।**
**पृथुपीवरवृत्तहस्तयोरुपमां नैव लभामहेऽनयोः ॥ ३५ ॥**

**अरीति** ॥ अरिश्चक्रं वारिजः शङ्खस्तयोर्लक्षणे रेखारूपचिह्ने । ताभ्यामुल्लसन्तौ सुकुमारारुणपाणिपद्मे सुकोमलरक्तपाणिपद्मे ययोस्तयोरनयोः परिदृश्यमानयोः । पृथू स्थूलौ पीवरौ पुष्टौ यौ वृत्तहस्तौ वर्तुलबाहू तयोरुपमां दृष्टान्तं नैव लभामहे ॥ ३५ ॥

**भजतां वरतर्कमुद्रया द्यति हस्ताग्रमबोधमीशितुः ।**
**अधिजानु समर्पितं परं कृतभूयोभयभङ्गमङ्गलम् ॥ ३६ ॥**

**भजतामिति** ॥ ईशितुः श्रीव्यासस्य हस्ताग्रं । वरा या तर्कमुद्रा ज्ञानमुद्रा तया भजतामबोधमज्ञानं द्यति खण्डयति । दो अवखण्डने लट् । जानुन्यधि, अधिजानु । विभक्त्यर्थेऽव्ययीभावः । जानूपरीत्यर्थः । समर्पितं न्यस्तं परं वामहस्ताग्रं भूयो महद्भयं भूयोभयं । संसारलक्षणं भयमित्यर्थः । तस्य भङ्गो नाशः, कृतः भूयो भयभङ्गो येन तादृशं, तच्चतन्मङ्गलं चेति तादृशं । दक्षिणवामहस्तौ ज्ञानाभयमुद्राङ्कितावििति भावः ॥ ३६ ॥

**सततं गलता स्वतः श्रुतित्रितयेनेव निकाममङ्कितः ।**
**मुविडम्बितकम्बुरीक्ष्यते वररेखात्रयवान् गुरोर्गलः ॥ ३७ ॥**

सततमिति ॥ स्वतः स्वस्मात्सततं गलता निर्गच्छता श्रुतीनां ऋगादिवेदानां त्रितयं तेन निकामं सम्यगङ्कित इव चिह्नित इव । वस्तुतस्तु यत्रेखात्रयं तदस्यास्तीति तादृशः । अतएव मुविडम्बितो मध्ये रेखात्रययुक्तत्वेन सम्यगनुकृतः कम्बुः शङ्खो येन तादृशो गुरोः श्रीव्यासस्य गलः कण्ठः । ईक्ष्यते । दृश्यते ॥ ३७ ॥

सकलास्तकलङ्ककालिमस्फुरदिन्दुप्रकरोरुविभ्रमम् ।
अधरीकुरुते स्वशोभया वदनं देवशिखामणेरिदम् ॥ ३८ ॥

सकलेति ॥ देवशिखामणेर्देवश्रेष्ठस्य श्रीव्यासस्येदं वदनं स्वशोभया स्वकान्त्या, कलाभिः सहिताः सकलाः पूर्णा इत्यर्थः । तादृशा येऽस्तकलङ्ककालिमानोऽस्तो निरस्तः कलङ्ककालिमा शशलाञ्छनकार्ष्ण्यं येषां तादृशाः स्फुरन्तः शोभमाना इन्दवस्तेषां यः प्रकरः समूहस्तस्योरुविभ्रम उरुकान्तिस्तामधरीकुरुते । निराकरोति । सम्पूर्णास्तकलङ्कचन्द्रप्रकरकान्तेरपि भगवद्वदनकान्तिरधिकेति भावः ॥ ३८ ॥

अरुणाश्मदलान्तरोल्लसन्नवमुक्तावलिमस्य लज्जयेत् ।
हसतः सितदन्तसन्ततिः परमश्रीररुणोष्ठरोचिषः ॥ ३९ ॥

अरुणेति ॥ अरुणोष्ठयो रक्तोष्ठयो रोचिः कान्तिर्यस्य तस्य हसतो मन्दस्मितं कुर्वतोऽस्य श्रीव्यासस्य । परमा, उत्तमा श्रीः कान्तिर्यस्या सा । सितदन्ताश्शुभ्रदन्तास्तेषां सन्ततिः पंक्तिः । अरुणाश्मा पद्मरागमणिस्तस्य यद्दलं तस्यान्तरे मध्य उल्लसन्ती या नवमुक्तावलिर्नूतनमौक्तिकमणिपंक्तिस्तां लज्जयेत् । ओलस्जी व्रीडायां लिङ् । हसतोऽस्यारुणोष्ठद्वयमध्यगतासितदन्तसन्ततिः पद्मरागदलमध्यगतमुक्तावलिमतिशेत इति भावः ॥ ३९ ॥

द्विजवृन्दकृतं महादरादनुयोगान्धुमहस्रमुत्तमम् ।
इयमेकपदे सरस्वती श्रुतिभर्तुः परिपूरयत्यहो ॥ ४० ॥

द्विजेति ॥ श्रुतीनां भर्ता स्वामी तस्य श्रीव्यासस्येयं सरस्वती वाणी । महादरात् महाबहुमानाद्द्विजवृन्दैर्ब्राह्मणसमूहैः कृतमुत्तमं । अनुयोगाएव प्रश्नाएवान्धवः कूपास्तेषां

सहस्रम् । 'प्रश्नोनुयोगः पृच्छाच । पुंस्येवान्धुः प्रहिः कूपः' इतिचामरः । एकपद एकवाक्ये । युगपदेवेत्यर्थः । परिपूरयति परिहरति । अहो आश्चर्यम् । नदीप्रवाहो यथाभिवृद्धःसंतीरगतकूपसहस्रं युगपदेव पूरयति तद्वदियं बहून् प्रश्नान्युगपदेव सहस्रोत्तरदानेन परिहरति । 'सहस्रार्थान् ऋषीनेष यौगपद्येन पृच्छतः । सहस्रोत्तरदानेन युगपत् पर्यतोषयदि'ति वचनादिति भावः ॥४० ॥

**जलजायतलोचनस्य मामवलोकोऽयमुपेत्य लालयन् ।**
**कुरुते परिरभ्य पूरितं भुवनानन्दकरस्मितान्वितः ॥ ४१ ॥**

**जलजेति** ॥ जलजवत्पद्मवदायते विशाले लोचने यस्य तस्य श्रीव्यासस्य । भुवनानन्दं जगदानन्दं करोतीति तादृशं यत्स्मितं तेनान्वितोऽयमवलोको दृष्टिपातः लालयन्सन्मामुपेत्य परिरभ्य पूरितं कृतार्थं कुरुते ॥ ४१ ॥

**उपकर्णममुष्य भासिता तुलसी मन्त्रयतीव लालिता ।**
**मम नाथपदं न मत्सराज्जलजाद्यानि हरेयुरित्यलम् ॥ ४२ ॥**

**उपेति** ॥ अमुष्य श्रीव्यासस्य कर्णस्य समीप उपकर्णं । 'अव्ययं विभक्ती'त्यादिना समीपार्थेऽव्ययीभावः । भगवता स्वकर्णारोपणेन भासितालंकृता तुलसी लालिता श्रीव्यासेन स्वकर्णारोपणेनैवादृतासती । हे नाथ! स्वामिन्! जलजं पद्ममाद्यं येषां तानि पुष्पाणि मत्सरान्मात्सर्यान्ममपदं स्थानं कर्णप्रदेशं न हरेयुरित्यलं सम्यक्मन्त्रयतीव । उपकर्णमेवं गुप्तभाषणं करोतीव वर्तते । मन्त्रिगुप्तभाषणे । भगवता स्वकर्णे धृता तुलसी मन्त्रयतीवेत्युत्प्रेक्षा ॥ ४२ ॥

**विभवाभिभवोद्भवादिकं भुवनानां भुवनप्रभोर्भ्रुवोः ।**
**अनयोरपि दभ्रविभ्रमात्सभवाम्भोजभवात्मनां भवेत् ॥ ४३ ॥**

**विभवेति** ॥ भुवनप्रभोर्जगत्प्रभोः श्रीव्यासस्यानयोर्भ्रुवोर्दभ्रविभ्रमात्स्वल्पविलासादपि । भवो रुद्रः, अम्भोजभवश्चतुर्मुखः, तावात्मानौ, स्वामिनौ, ताभ्यां सहितानि सभवाम्भोजभवात्मानि । तेषां भुवनानां जगतां विभव ऐश्वर्यं, अभिभवस्संहारः, उद्भव

उत्पत्तिः, त आद्यो यस्य नियमनादेस्तादृशं । 'बहुव्रीहौ कः । भवेत् ॥ ४३ ॥

त्रिजगत्तिलकालिकान्तरे तिलकोऽयं परभागमाप्तवान् ।
हरिनीलगिरीन्द्रमस्तकस्फुटशोणोपलपंक्तिसन्निभः ॥ ४४ ॥

**त्रिजगदिति** ॥ त्रिजगतां तिलकइव त्रिजगत्तिलकः श्रीव्यासस्तस्यालिकान्तरे ललाटमध्ये । 'ललाटमलिकं गोधिः' इत्यमरः । परभागो वर्णान्तरसंयोगेन लभ्य उत्कर्षस्तं । 'परभागो गुणोत्कर्ष' इति हलः । आप्तवान्नीलभगवल्ललाटे रक्तद्रव्येणकृत इत्यर्थः । अयं तिलकः । हरिनील इन्द्रनीलो यो गिरीन्द्रो गिरिश्रेष्ठस्तस्य मस्तके शिखरे स्फुटाश्शोभमाना ये शोणोपलाः पद्मरागमणयस्तेषां पंक्तेस्सन्निभः सदृशः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृशत्' इत्यमरः । तथा विराजत इति भावः । [अत्रोपमालङ्कारः] ॥ ४४ ॥

नवमम्बुधरं विडम्बयद्वरविद्युद्वलयं जगद्गुरोः ।
अवलोक्य कृतार्थतामगां सजटामण्डलमण्डनं वपुः ॥ ४५ ॥

**नवमिति** ॥ वरा उत्तमा या विद्युत्तस्या वलयो मण्डलं यस्य तं । नवं नूतनं नीलमिति भावः । अम्बुधरं मेघं विडम्बयदनुकुर्वज्जटानां यन्मण्डलं तदेव मण्डन-मलङ्कारस्तेन सहितं, गुरोः श्रीव्यासस्य वपुर्देहमवलोक्य कृतार्थतां कृतकृत्यतामगाम् । इण् गतौ लुङ् ॥ ४५ ॥

न रमापि पदांगुलीलसन्नखधूराजदनन्तसद्गुणान् ।
गणयेद्गणयन्त्यनारतं परमान् कोऽस्य परो गुणान् वदेत् ॥ ४६ ॥

**नेति** ॥ रमा, अस्य श्रीव्यासस्य पदस्य यांगुली कनिष्ठांगुली तस्यां लसञ्छोभ-मानो यो नखस्तस्य धूर्व्यापारस्तस्यां राजन्तः शोभमाना येऽनन्तसद्गुणास्ताननारतं निरन्तरं गणयन्त्यपि न गणयेत् । साकल्येन गणयितुमसमर्था । गणसंख्यान इति धातुः । भगवद्गुणानां भगवदभिन्नत्वाद्भगवन्नखव्यापारस्याप्यगणितानन्तगुणत्वं युक्तं । तस्मात् परोऽयो मतिमान्विवेकी पुमानस्य गुणान् को वदेत् ? साकल्येन ब्रूयात् ? । न कोऽपीति भावः ॥ ४६ ॥

न कुतूहलिता कुतूहलं तनुमेनामवलोक्य सद्गुरोः ।
सनवावरणाण्डदर्शिनो गृहबुद्ध्या मम निष्कुतूहलम् ॥ ४७ ॥

नेति ॥ यस्मादेवं रमाप्यल्पागणितानन्तगुणत्वं दृष्ट्वा कुतूहलिनी तस्मात् सद्गुरोः श्रीव्यासस्यैनां तनुमवलोक्य । निर्गतं कुतूहलमाश्चर्यं यथा भवति तथा निष्कुतूहलं, गृहमितिबुद्धिर्गृहबुद्धिस्तया, नवचलान्यावरणानि च, अवर्ग्नीरनभोऽहंकृन्महत्तत्वगुणत्रयाख्यानि नवावरणानि तैः सहितं तादृशं यदण्डं ब्रह्माण्डं तद्द्रष्टुं शीलमस्येति सनवावरणाण्डदर्शी । तस्य मम । कुतूहलमस्यास्तीति कुतूहली तस्य भावस्तत्ता । कुतूहलयुक्ततेत्यर्थः । कुतूहलमाश्चर्यं न । अथवा निष्कुतूहलं गृहबुद्ध्या स नवावरणाण्डदर्शिनो मम सद्गुरोः सतां गुरोर्व्यासस्यैनां तनुमवलोक्य, कुतूहलित्वाभावो न कुतूहलिता । नैकधेत्यादिवन्नसमासत्वादेकं पदं । सैव कुतूहलमिति वा योजना । तथाच भगवत्तनोः सर्वेषां मनोनयनवाचां कुतूहलविषयत्वात्तां दृष्ट्वा कुतूहलिताभाव एव कुतूहलम् । ममत्वेनां तनुं दृष्ट्वा कुतूहलं जायत इत्येतन्नकुतूहलमिति भावः ॥४७॥

इति चिन्तयता महाधिया पदवीं बाह्यगतामतीयुषा ।
समनोनयनैः पुरागतस्तत आपे वपुषापि वेदराट् ॥ ४८ ॥

इतीति ॥ इति पूर्वोक्तप्रकारेण चिन्तयता बाह्यगतामाश्रमबाह्यप्रदेशगतां पदवीं मार्गमतीयुषातीत्यगच्छता महती धीर्यस्य तेन श्रीमध्वाचार्येण । मनश्च नयने च तैः पुरा आश्रमप्रवेशात्पूर्वमेव गतः प्राप्तः स वेदराट् श्रीवेदव्यासः । ततः प्रवेशानन्तरं वपुषा देहेनापि । आपे प्राप्तः । वपुषोऽप्यतिसामीप्यमभूदिति भावः ॥४८॥

गुरुभक्तिभरानताकृतिर्विरचय्याञ्जलिबन्धमञ्जसा ।
क्षणमामुकुलीकृतेक्षणः स गुरुं केवलमभ्यवन्दत ॥ ४९ ॥

गुर्विति ॥ गुरुर्महान्यो भक्तिभरो भक्त्यतिशयस्तेनानता प्रवणाऽऽकृतिर्यस्य तादृशः । अतएव क्षणं क्षणकालमामुकुलीकृते, आनन्दाश्रुणा ईषन्मुकुलीकृते ईक्षणे लोचने यस्य तादृशः । स श्रीमध्वाचार्योऽञ्जलिबन्धं करपुटबन्धमञ्जसा विरचय्य कृत्वा

केवलं गुरुमात्मनोमुख्यगुरुमभ्यवन्दत । अस्तौत् । 'वदि अभिवादनस्तुत्योः' । प्रणामस्तु वक्ष्यते ॥ ४९ ॥

**विनयाभरणेन भूषितः स्फुटषष्टाङ्गविशिष्टचेष्टितः ।**
**भगवत्तमपादपङ्कजे भगवान् स प्रणनाम भाग्यवान् ॥ ५० ॥**

**विनयेति** ॥ विनयएवाभरणमलङ्कारस्तेन भूषितोऽलंकृतः । स्फुटं सम्यगष्टौ यान्यङ्गान्यवयवास्तैर्विशिष्टं युक्तं चेष्टितं व्यापारो यस्य तादृशः । [उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरित.' ] इत्युक्ताष्टाङ्ग चेष्टायुक्त इत्यर्थः । भाग्यवान् भगवान् स श्रीमध्वाचार्योऽतिशयेन भगवान् भगवत्तमस्तस्य । षड्गुणवतामुत्तमस्येत्यर्थः । पादपङ्कजे पादपद्मे प्रणनाम ॥ ५० ॥

**स निरीक्ष्य पराशरात्मजः प्रणतं प्रेष्ठमशेषसद्गुणः ।**
**करयोर्युगलेन वल्गुना तमुदस्थापयदाशुपातिना ॥ ५१ ॥**

**स इति** ॥ पराशरात्मजः श्रीव्यासः । अशेषसद्गुणः प्रेष्ठमतिप्रियं तं श्रीमध्वाचार्यं प्रणतं नमस्कुर्वन्तं निरीक्ष्य । वल्गुना कोमलेनाशु पतितुं शीलमस्यास्तीति तेन । शीघ्रं प्रसार्यमाणेनेत्यर्थः । करयोर्युगलेन । उदस्थापयत् । उत्थापयामास ॥ ५१ ॥

**अमितप्रमतिं श्रुतीश्वरः परिरेभे परिगृह्य तं द्रुतम् ।**
**प्रणयामृतपूर्णमानसः स्मितवक्त्रः परिफुल्ललोचनः ॥ ५२ ॥**

**अमितेति** ॥ प्रणयः स्नेहएवामृतं तेन पूर्णं मानसं मनो यस्य सः । अतएव स्मितं मन्दहासोपेतं वक्त्रं यस्य सः परिफुल्ले लोचने चक्षुषी यस्य स श्रुतीश्वरः श्रीवेदव्यासः । तममितप्रमतिं द्रुतं यथा भवति तथा परिगृह्य परिरेभे ।आलिलिङ्ग । रेभृशब्दे लिट् ॥ ५२ ॥

**यमजाम्बुदवाह ऊर्जितो यदि जाम्बूनदवारि संव्रजेत् ।**
**कनकद्युतिमध्वसङ्गवानुपमीयेत स तेन नीलभाः ॥ ५३ ॥**

यमजेति ॥ यद्यूर्जितः प्रभूतः । यमस्यजामिः स्वसा यमुना तस्या उदकस्य वाहः उदवाहः प्रवाहः । 'जामिः स्वसृकुलस्त्रियोः' इत्यमरः । जम्बूनद्याः सम्बन्धि जाम्बूनदं तच्चतद्वारिच संव्रजेत् । प्राप्नुयात् । तर्हि नीला भाः कान्तिर्यस्य स श्रीव्यासः । कनकवद्द्युतिर्यस्य सचासौ मध्वश्च तस्य सङ्गोऽस्यास्तीति तादृशः स व्यासः । तेन यमुनाजलसङ्गतजाम्बूनदवारिणोपमीयेत । अभूतोपमेयम् ॥ ५३ ॥

यदि राजविभूषणैर्युतौ द्विजवर्यान्वयजाविमौ हरी ।
नृपगोत्रभुवोः पुरात्मनोः स्फुटतुल्यावुपगूढयोर्मिथः ॥ ५४ ॥

यदीति ॥ द्विजवर्यौ वसिष्ठमध्यगेहाख्यद्विजश्रेष्ठौ, तयोरन्वयौ वंशौ, तयोर्जातौ द्विजवर्यान्वयजाविमौ हरी विष्णुवायू । यदि राजविभूषणैः कटकमकुटादिभिर्युतौ युक्तौ । स्यातामिति शेषः । तर्हि पुरा नृपयोर्यदुकुरुगोत्रे वंशौ, तयोर्भवत इति नृपगोत्रभुवौ तयोः कृष्णभीमभिधयोर्मिथः परस्परमुपगूढयोरालिङ्गितयोरात्मनोः स्वरूपयोः स्फुटं सम्यक् तुल्यौ सदृशौ स्यातामिति सम्बन्धः ॥ ५४ ॥

इदमाप शुकोऽपि लालनं न समग्रं जगतां पितुः पितुः ।
अलभिष्ट यदेष धन्य इत्यतिकौतूहलमापि तापसैः ॥ ५५ ॥

इदमिति ॥ धन्यः कृतार्थ एषः । यल्लालनं सम्भावनामलभिष्ट । लेभे । समग्रं सम्पूर्णमिदं लालनं शुकोऽपि जगतां पितुर्जनकात् पितुः स्वपितुर्व्यासान्नाप । न प्राप्तवानिति तापसैर्मुनिभिरतिकौतूहलमत्याश्चर्यमापि । प्राप्तम् ॥ ५५ ॥

अमुष्य शिष्या विनयेन तस्मै गुरोरभिप्रायविदो विदग्धाः ।
तदानुरूप्यं ददुरासनं ते चतुर्मुखायेव मुकुन्ददासाः ॥ ५६ ॥

अमुष्येति ॥ तदा गुरोः श्रीव्यासस्याभिप्रायविदो विदग्धाश्चतुरास्ते, आश्चर्यं प्राप्ता अमुष्य श्रीव्यासस्य शिष्याः । विनयेन प्रश्रयेण तस्मै श्रीमध्वाचार्यायानुरूपं श्रीव्याससम्भावनानुरूपमासनं पीठं मुकुन्ददासा भगवत्पार्षदाश्चतुर्मुखायेव ददुः । [अत्रोपेन्द्रवज्रावृत्तम् । 'उपेन्द्रवज्रा जतजास्ततो गौ' इत्युक्तेः] ॥ ५६ ॥

आस्यतामित्युदीर्योपविष्टे सत्यवत्याः सुते सत्यवाचि ।
मानयन्मन्दहासावलोकैस्तान्मुनीन्द्रानिहोपाविशत्सः ॥ ५७ ॥

आस्यतामिति ॥ सत्यावाग्यस्य तस्मिन्, सत्यवत्याः सुते, आस्यतामित्युदीर्योपविष्टेसति । मन्दहासयुक्ताश्चतेऽवलोकाश्च दर्शनानि तैस्तान् मुनीन्द्रान्नन्दयन् स श्रीमध्वाचार्य इहोपाविशत् ॥ ५७ ॥

अवगम्य तं मुनिगणा वरिष्ठतो विविधत्र्यधुर्विधिविदोऽस्य माननाम् ।
अपि सत्कथाः श्रुतिसुखाः कवीन्द्रयोरनयोर्निशम्य परमां मुदं ययुः ॥ ५८ ॥

अवेति ॥ मुनिगणा वरिष्ठतः श्रेष्ठतः श्रीवेदव्यासात् । तमवगम्य श्रीमुख्यप्राणावतारं ज्ञात्वा । विधिविदःसन्तोऽस्य विविधसम्यङ्माननां व्यधुः । चक्रुः । कवीन्द्रयोरनयोः श्रुतीनां श्रोत्राणां सुखं याभ्यस्ताः सत्कथा अपि निशम्य परमां मुदं ययुः ॥ ५७ ॥

सज्ज्ञानायानन्दविज्ञानमूर्ती प्राप्तौ पृथ्वीमाश्रमे तत्र तावत् ।
जाज्वल्येते विष्णुवायू स्म देवौ वेदव्यासानन्दतीर्थाभिधानौ ॥ ५९ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के सप्तमः सर्गः ॥

सदिति ॥ सतां सज्जनानां सम्यग्ज्ञानाय । सतां ज्ञानोपदेशार्थमित्यर्थः । पृथ्वीं प्राप्तौ । वेदव्यासानन्दतीर्थावित्यभिधाने नामनी ययोस्तौ । आनन्दश्च विज्ञानञ्च ते मूर्तिश्शरीरं ययोस्तौ विष्णुवायू देवौ, तत्राश्रमे तावत्साकल्येन जाज्वल्येते स्म । अतितरामशोभेताम् । [शालिनीवृत्तम् । तल्लक्षणंतु—'मत्तौ गौ चेच्छालिनी वेदलोकै'रिति] ॥ ५९ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां सप्तमः सर्गः ॥

प्रतिभाप्रभाप्रमुखसद्गुणैर्निजैरतिविस्मयं नियमिनां मनो नयन् ।
पुरुधीः कदाचिदथ वेदनायकं विजने शनैरुपससाद तं वने ॥ १ ॥

**प्रतिभेति** ॥ अथ (श्रीवेदव्यासदर्शनानन्तरं) प्रतिभा ज्ञानं प्रभा तेजः, ते प्रमुखे मुख्यौ येषां ते च ते सद्गुणाश्च तैर्नियमिनां मुनीनां मनोऽतिविस्मयमत्याश्चर्यं नयन् प्रापयन् पुरुधीः पूर्णप्रज्ञः । कदाचित्तं वेदनायकं वने तत्रापि विगता जना यस्मात्स विजन एकान्तप्रदेशस्तस्मिञ्छनैरुपससाद । उपसत्तिमकरोत् । श्रोतव्यं श्रोतुं रहसि गुरूपसत्तिमकरोदिति भावः । [अस्मिन्सर्गे मञ्जुभाषिणीवृत्तम् । 'सजसा जगौच यदि मञ्जुभाषिणी'ति लक्षणात् ] ॥ १ ॥

सुविशेषशेषवदशेषवर्णितप्रतिबोद्धुरस्य ननु शिष्यतोचिता ।
गुरुमानसस्य गुरुतापि सत्यतेऽिति सोपसत्तिरमरैरमान्यत ॥ २ ॥

**सुविशेष इति** ॥ शोभना ये विशेषा गोप्यतत्त्वविशेषास्तैर्वा शेषः, सोऽस्यास्तीति सुविशेषशेषवत्तादृशं यदशेषवर्णितं साकल्येनवर्णितप्रमेयं तस्य प्रतिबोद्धुः । गुरु मानसं यस्य तस्य श्रीपूर्णप्रज्ञस्य । सत्यतः श्रीव्यासस्य शिष्यता, उचिता ननु । अस्य श्रीव्यासस्य गुरुतापि श्रीमध्वगुरुताप्युचिता । इति सा, उपसत्तिः शिष्यभावेन गुरु निकटप्राप्तिः । अमरैरमान्यत । अपूज्यन । अयं भावः । यद्यपि ब्रह्मादीनां सर्वेषामपि भगवानेव परतत्वं वर्णयति । तथापि ब्रह्मवाय्वोर्यथा वर्णयति न तथा रुद्रादीनां, किन्तु कांश्चन रहस्यविशेषानवशेषयित्वैव वर्णयति । तेषां योग्यतायास्तथात्वात् । तस्माद्रुद्रादीनां तत्वकथनावसरे भगवता ये शोभनतत्वविशेषा अवशेषिताः, तानेव ब्रह्मवाय्वोर्वर्णयतीति स्थितिः । ततश्चायं मध्वोऽपि वायुत्वाच्छोभनविशेषयुक्तस्याशेषवर्णितस्य प्रतिबोद्धा । तस्मादेवंभूतस्यास्य व्यासशिष्यता, व्यासस्यैतद्गुरुताचोचितेति सा गुरूपसत्तिरमरैरमान्यत । मानपूजायां कर्मणि लङ् ॥ २ ॥

पुर एव पूरितमपूरयत्पुनर्ननु कृष्ण एष परमार्थसंख्यया ।
भगवन्मनः पुरमिवायतं पुरा निजधाम तां च जगृहे तदद्भुतम् ॥ ३ ॥

पुर इति ॥ एष कृष्णः श्रीवेदव्यासः । निजमात्मीयञ्च तद्धाम च । स्वात्राम-स्थानभूतमित्यर्थः । आयतं विस्तीर्णं भगवन्मनः श्रीमध्वमनः पुरः पूर्वमेव । 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । परमार्था यथार्था संख्या ज्ञानं तयापूरितं पूर्णमपि । पुरा कृष्णो वसुदेवसुतःसन्निजधाम स्वमन्दिरं, द्वारकापुरमित्यर्थः । परमार्थसंख्ययेव, मागधभौमादीन्विजित्यापहृतयोत्तमधनत्यकोट्यादिसंख्ययेव पुनरपूरयत् । पूर्वमेव सम्पूर्णज्ञानस्यापि पुनरपि ज्ञानमुपदिदेशेति भावः । तत्, भगवन्मनो द्वारकापुरञ्च परमार्थसंख्यां जगृह इति यत्, तदद्भुतम् । परिपूर्णमपि पुनरानीयनिहितं (जगृहे) स्वान्तर्गतं चक्र इत्येतदाश्चर्यमिति भावः ॥ ३ ॥

इतिहाससुन्दरपुराणसूत्रसत्प्रियपञ्चरात्रनिजभावसंयुतम् ।
अशृणोदनन्तहृदनन्ततोऽचिरात्परमार्थमप्यगणितागमावलेः ॥ ४ ॥

इतिहासेति ॥ अनन्तं हृदयस्य स पूर्णप्रज्ञः । अनन्ततः श्रीव्यासादगणिता ये आगमा वेदास्तेषामावलेः समूहस्य । इतिहासो महाभारतं, सुन्दरपुराणानि शोभन-पुराणानि, सूत्रं ब्रह्मसूत्रं, सत्प्रियं यत्पञ्चरात्रं, तेषां निजभावेन स्वाभाविकाभिप्रायेण संयुतं परमार्थमप्युत्तमार्थमप्यचिराच्छीघ्रमशृणोत् ॥ ४ ॥

ऋजुपुङ्गवस्य परिजानतः स्वयं सकलं तदप्यलमनन्तजन्मसु ।
स्वकृतोर्वनुग्रहबलादमुष्य तां विशिशेष शेषशयनः पुनर्धियम् ॥ ५ ॥

ऋज्विति ॥ शेषः शयनं पर्यङ्को यस्य स श्रीव्यासः । अनन्तजन्मस्वतीतानन्त-जन्मसु स्वकृतो य उर्वनुग्रहो महानुग्रहः स एव बलं तस्मात् । तदपि, उपदिष्टं सकलमपि श्रूयमाणं सर्वमपि स्वयमात्मना परिजानतः स्वप्रतिभाबलेन सम्यग्जाननः सतोऽमुष्य ऋजुपुङ्गवस्य, ऋजुश्चासौ पुङ्गवो रुद्रादिभ्यः श्रेष्ठश्च तस्य श्रीमध्वस्य । तां धियं पुनरलं सम्यग्विशिशेष । विशेषयामास । शिष अतिशये लिट् । ऋजुपुङ्ग-

वम्येत्यत्र, ऋजूनां पुङ्गव इति नषष्ठीतत्पुरुषः । ऋजूनां सर्वेषामपि समत्वेन एकस्मादेकस्योत्तमत्वाभावात् । किन्तूक्तरीत्याकर्मधारय एव । अथवा ऋजुशब्दस्य सज्जनवाचित्वमभ्युपेत्य तत्पुरुषोवा । वायुर्हि सर्वाधिकार्युत्तमः ॥ ५ ॥

अथ बादरायणसहायसम्पदा प्रययौ प्रणन्तुममितान्तरो युतः ।
अपि नादिरायणपदोदितं हरेर्वपुरन्तरं लसितमाश्रमान्तरे ॥ ६ ॥

अथेति ॥ बादरायणस्य सहायएव सम्पत्तया युतो युक्तः । अमितं पूर्णमान्तरं यस्य स श्रीपूर्णप्रज्ञः । आश्रमान्तरेऽन्याश्रमे लसितं विराजितं । नो नकार आदिर्यस्य तन्नादि तादृशं यद्रायणपदं, तेनोदितमभिहितं । नारायणाभिहितमिति यावत् । अन्यद्धपुर्वपुरन्तरं भगवद्रूपान्तरमपीत्यर्थः । प्रणन्तुं नमस्कर्तुं प्रययौ । आश्रमान्तरस्थं नारायणाख्यं भगवद्रूपं प्रणन्तुं श्रीवेदव्यासेन सह प्रययाविति भावः ॥ ६ ॥

तमपश्यदाश्रमवरे प्रभूतधीर्ज्वलनं ज्वलन्तमिव धूमवर्जितम् ।
वरवल्कलाकलितमौञ्जिमेखलं विलसज्जटावलयमादिपूरुषम् ॥ ७ ॥

तमिति ॥ प्रभूता धीर्यस्य स पूर्णप्रज्ञः । आश्रमवरे, आश्रमोत्तमे वरमुत्तमं यद्वल्कलं तेनाकलिना सम्बद्धा मौञ्जिमेखला मौञ्जीमयीरशना यस्य तं । 'वल्कं वल्कलमस्त्रिया'मित्यमरः । विलसन्विराजमानो जटावलयो जटामण्डलं यस्य तमादिपूरुषं तं नारायणं धूमवर्जितं धूमरहितं ज्वलन्तं ज्वलनमिवाग्निमिवापश्यत् ॥ ७ ॥

अतिदुर्जयेन्द्रियजयादिरूपिणा तपसा वसन्तमिव सन्ततं वने ।
निजरूपभूतनिरपेक्षनिर्मलप्रचुरात्मसौख्यरतमप्यनारतम् ॥ ८ ॥

पुनरपि कथं भूतमित्यपेक्षायामाह——

अतीत्यादिना ॥ सन्ततं निरन्तरं जनुमशक्यानि दुर्जयानि । अत्यन्तं दुर्जयान्यतिदुर्जयानि यानीन्द्रियाणि तेषां यो जयः स आदिर्यस्य तादृशं रूपमस्यास्तीति तेन । इन्द्रियजयाद्यात्मकेनेत्यर्थः । तपसा वने वसन्तमिव । ब्रह्मचर्यादितपःक्लेशमनुभवतीत्यज्ञप्रतीतिरेवेति वसन्तमिवेत्युक्तं । तर्हि वस्तुतः कथं भूतोऽयमित्यपेक्षयामाह-

निजरूपेत्यादिना । अनारतं निरन्तरं निजं नित्यं । 'निजमात्मीयनित्ययो'रिति वैजयन्ती । तादृश यद्रूपभूतं स्वरूपभूतं, तथा निर्गतापेक्षा विषयापेक्षा यस्मात्तन्निरपेक्षं, तादृशं यन्निर्गतं मलं परिमितत्वादिदोषो यस्मात्तन्निर्मलं, तादृशञ्च यत्प्रचुरं परिपूर्णमात्मसौख्यं स्वरूपभूतसुखं, तस्मिन् रतमपि तं श्रीनारायणं । अपश्यदिति सम्बन्धः ॥ ८ ॥

नयनद्वयेन नलिनप्रभामुषा परिफुल्लताविलसितेन विस्मयात् ।
तमवेक्ष्य धर्मजमधर्मदुर्लभं मनसेति भूरितरमानसोऽस्मरत् ॥ ९ ॥

नयनेति ॥ भूरितरं परिपूर्णं मानसं मनो यस्य स श्रीपूर्णप्रज्ञः । परिफुल्लतया विकसिततया विलसितेन शोभमानेनाब्जप्रभा नलिनस्य पद्मस्य या प्रभा कान्तिस्तां मुष्णात्यपहरतीति तेन नयनद्वयेन । अधर्मेणदुर्लभं प्राप्तुमशक्यं धर्मजं यमसूनुं तं श्रीनारायणमवेक्ष्य मनसा विस्मयादाश्चर्यादिति वक्ष्यमाणरीत्यास्मरत् ॥ ९ ॥

जगतां चतुर्दशतयं चतुर्मुखप्रमुखैर्युतं प्रलयमानिनाय यः ।
समुल्लसन् कमलयैव केवलं परमः स एष हि पुराणपूरुषः ॥ १० ॥

जगतामिति ॥ केवलं कमलयैव श्रियैव समं सहोल्लसन्यः श्रीनारायणः । चतुर्मुखः प्रमुखः प्रधानो येषां तैर्युतं युक्तं । जगतां लोकानां, चतुर्दशावयवा यस्य तच्चतुर्दशतयं चतुर्दशभुवनाश्रय जगत् । द्विसप्तकमित्यर्थः । 'संख्याया अवयवे तयप्' इति तयप् । प्रलयं विनाशमानिनाय । प्रापयामास । परम उत्तमः पुराणपूरुषोऽनादिपूरुषः स सर्वसंहारकर्ता एष हि पुरोवर्ती यमसूनुतयावतीर्णो हि ॥ १० ॥

त्रिगुणाकृतिप्रकृतितो महत्ततस्त्रिविधामहंकृतिममर्त्यखान्यतः ।
अपि भूतपञ्चकमितोऽण्डमण्डलं भगवानसाविह जगन्ति चासृजत् ॥ ११ ॥

न केवलं संहर्ता किन्तु स्रष्टापीत्याह—

त्रिगुणेति ॥ भगवान् षड्गुणसम्पन्नोऽसौ पुराणपूरुषः । त्रयो ये गुणाः सत्वादयस्त आकृतयो रूपाणि यस्यास्तादृशी या प्रकृतिः प्रधानं तस्या इति ततः । महत् मह-

त्त्वाभिमानिनं ब्रह्माणं, ततस्त्रिविधां वैकारिकतैजसतामसभेदेन त्रिविधामहंकृति-महङ्कारतत्वाभिमानिनं रुद्रञ्च, अतस्त्रिविधाहङ्कारादमर्त्यादेवास्ते च स्वानीन्द्रियाणि च भूतानां पृथिव्यादीनां पञ्चकमप्यसृजत् । तत्रायं विभागः । वैकारिकादहङ्काराद्-शेन्द्रियाभिमानिदेवान् , तैजसाहङ्काराद्दशेन्द्रियाणि । तामसाहङ्काराच्छब्दादितद्गुणैः सहाकाशादिपञ्चभूतान्यसृजदिति । इतो मिलितेभ्यस्तत्वेभ्योऽण्डमण्डलं ब्रह्माण्डं, इहास्मिन्ब्रह्माण्डे जगन्ति च द्विसप्तकलोकाँल्लोकिनश्चासृजत् ॥ ११ ॥

**विधिवायुवीन्द्रशिवकौशिकेशकानमरामरानुगनरासुरादिकान् ।**
**सृजति प्रपालयति हन्ति सन्ततं स्वगतिं प्रयापयति चैष लीलया ॥ १२ ॥**

**विधीति** ॥ एष भगवान् । विधिवायुवीन्द्रशिवकौशिकाः, ब्रह्म वायु गरुड रुद्र पुरन्दरा ईशकाः स्वामिनो येषाममरादीनां ते तथोक्तास्तान् । 'स्वार्थेकः' । भगवत एव सर्वस्वामित्वादीषत्स्वामिन इत्यर्थेवा । अमरा देवा, अमरानुगा देवभृत्या गन्धर्वा, नरा मनुष्या, असुराश्चादयो येषां तान् । सततं प्रवाहरूपेणाखण्डितं यथा भवति तथा लील्या सृजति । प्रपाल्यति । हन्ति च । तत्रोत्तमजीवान् स्वगतिं मोक्षं प्रयापयति । प्रापयति । चशब्दादसुरान् तमश्च प्रापयति । नित्यसंसारिणश्चात्रैव वर्तयति । एतत्सर्वञ्च लील्यैव नतु क्लेशेनेति भावेन लीलयेत्युक्तम् ॥ १२ ॥

**अगणय्य सद्गुणगणो विदूषणः स्ववशाखिलोऽप्यनुपचारतः स्वयम् ।**
**स्मृतिकीर्तनप्रणतिभिर्विमुक्तये स्वजनस्य यात्ययमनेकरूपताम् ॥ १३ ॥**

**अगणय्येति** ॥ अगणय्या गणयितुमशक्या ये सद्गुणा उत्तमगुणास्तेषां गणः समूहो यस्य तादृशः । विगतं दूषणं दोषो यस्मात्तादृशः । निर्दोष इत्यर्थः । अनुपचारतो मुख्यतः स्वयमात्मना स्वसामर्थ्येनैवेत्यर्थः, स्ववशः स्वाधीनोऽखिलः समस्तलोको यस्य तादृशोऽपि । स्मृतिः स्मरणं कीर्तनं भगवन्नामकीर्तनं प्रणतिर्नम-स्कारस्ताभिः स्वावताररूपगुणस्मरणादिभिरित्यर्थः । स्वजनस्य भक्तजनस्य विमुक्तये मोक्षार्थमनेकानि बहूनि रूपाणि वासुदेवादिरूपाणि यस्य तस्य भावस्तत्ता तां याति । नत्वेकेनैवरूपेण सर्वकार्याणां कर्तुमक्षमत्वादित्यर्थः ॥ १३ ॥

**चतुराननाय चतुरः पुरागमान् प्रददावसावनिमिषेश्वरः प्रभुः ।**
**विनिहत्य हि श्रुतिमुषं पुरातनं वपुषोद्धतं हयमुखेन सद्रिपुम् ॥ १४ ॥**

**चतुरेति ॥** असौ प्रभुः श्रीनारायणः । पुरा अनिमिषेश्वरो मत्स्येश्वरःसन्हयस्य मुखमिव मुखं यस्य तेन वपुषोद्धतं प्रवृद्धं श्रुतिमुषं श्रुतीनामपहर्तारं । चतुर्मुखाद्वेदाश्चोरयित्वा हृतवन्तमित्यर्थः । पुरातनं सद्रिपुं सतां रिपुं हयग्रीवासुरं विनिहत्य । चत्वार्याननानि यस्य तस्मै ब्रह्मणे चतुरश्चतुःसंख्याकानागमान्वेदान् प्रददौ हि । इतःपरं 'परमात्मन' इत्येतच्छ्लोकपर्यन्तं श्लोकानामर्थद्वयं योजनीयम् । प्रभुरसौ अनिमिषेश्वरो देवानामीश्वरो नारायणः । 'सुरमत्स्यावनिमिषात्रि'त्यमरः । हयमुखेन वपुषा हयग्रीवरूपेणावतीर्णःसञ्छ्रुतिमुषमुद्धतं पुरातनं सद्रिपुं निहत्य चतुराननाय चतुरो वेदान् ददौ ॥ १४ ॥

**अमरेन्द्रवैरिभुजदण्डमण्डलप्रतिकर्षपुष्करपतद्धराद्धृतिः ।**
**विदधे वराहवपुषामुनोर्मिमत्सृतिसिन्धुकच्छपतयाप्तरक्षिणा ॥ १५ ॥**

**अमरेति ॥** वरश्चासावाहवश्चेति वराहव उत्तमयुद्धं तं पुष्णातीति तेन । स्वरूपकथनमेतत् । अर्थान्तरघटनार्थञ्च । आप्तान्छरणागतान् रक्षितुं शीलमस्येति तेनामुना नारायणेन । ऊर्मयस्तरङ्गा अस्याःसन्तीत्यूर्मिमती तादृशी सृतिर्व्याप्तिर्यस्य सचासौ सिन्धुश्च तस्मिन् क्षीरसागरे । कच्छपः कूर्मस्तस्य भावस्तया । 'कूर्मो कमठ कच्छपावि'त्यमरः । अमरा देवाः, इन्द्रवैरिणोऽसुराः, तेषां ये भुजास्तएव दण्डास्तेषां मण्डलानि समूहास्तैः । प्रतिकर्ष आकर्षणं, तेन पुष्करे जले पतन्त्यो धरो मन्दरपर्वतस्तस्योद्धृतिरुद्धरणं । 'पुष्करं करिहस्ताग्रेवाद्यभाण्डमुखे जले । व्योम्नि खड्गफले पद्मे तीर्थौपधिविशेषयोरि'त्यमरः । विदधे । अकारि । अर्थान्तरंतु— उर्मयो गर्भीभाव जन्म वृद्धि परिणाम क्षय विनाशाख्यषड्र्मयोऽस्यां सन्तीत्यूर्मिमती तादृशी या सृतिः संसारः स एव सिन्धुः समुद्रस्तस्य कच्छस्तीरं तस्य । मोक्षस्येति यावत् । पातीति पः पालकस्तस्य भावस्तया । 'तीरं कूलं तटं कच्छ' इति हलः । आप्तरक्षिणा शरणागतानां मोक्षदानेनरक्षिणामुना श्रीनारायणेन । वराहस्य

वपुः स्वरूपं यस्य तेनसता, अमरेन्द्राणां देवश्रेष्ठानां वैरी हिरण्याक्षस्तस्य यानि भुजदण्डमण्डलानि दोर्दण्डसमूहास्तैः प्रतिकर्षेण विकर्षणेन पुष्करेपतन्ती जलेपतन्ती या धरा भूमिस्तस्या उद्धृतिरुद्धारः । 'धरः कूर्माधिपे गिरौ धराभूमिजरायुषि' इति च हेमचन्द्रः । विदधे । हिरण्याक्षस्य सहस्रबाहुत्वं भारते प्रसिद्धम् ॥ १५ ॥

**नरसिंह एष विददार दारुणं प्रतिघोदये नखरचक्रतेजसा ।**
**स्वरिपुं क्षणेन सरसः स्फुरत्तनुं पृथुसत्वमिष्टजनभीतिभञ्जनः ॥ १६ ॥**

**नरसिंह इति** ॥ एष श्रीनारायणः । नरश्चासौ सिंहश्च नृसिंहरूपसन्निष्टजनानां भक्तजनानां भीतेर्भञ्जनो नाशकःसन् सरसः सवीर्यःसन् । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस' इत्यमरः । प्रतिघोदये कोपोदयेसति । 'रोषः प्रतिघ उच्यते' इति हलः ।' नखरचक्रस्य नखरसमूहस्य तेजसा सामर्थ्येन । 'पटलं पेटलं चक्रं' इति हलः । स्फुरन्ती तनुर्यस्य तं शोभमानदेहं, पृथु महत्सत्वं बलं यस्य तं दारुणं क्रूरं स्वरिपुं हिरण्यकशिपुं क्षणेन विददार । अर्थान्तरंतु– नरेषु सिंहः श्रेष्ठः पुरुषोत्तमः । इष्टजनभीतिभञ्जनः श्रीनारायणो दारुणं क्रूरं स्वरिपुं स्वभक्तीयो गजेन्द्रस्तस्य रिपुं स्फुरत्तनुं, पृथुर्महान्यः सत्वः प्राणिविशेषस्तं नक्रमित्यर्थः । 'द्रव्यासु व्यवसायेषु सत्वमस्त्रीतु जन्तुषु' इत्यमरः । प्रतिघोदयेन स्वरिपुरयमितिकोपोदयेन निमित्तेन सरसो ह्रदादाकृष्येति यावत् । खरं क्रूरं यच्चक्रं सुदर्शनं तस्य तेजसा विददार ॥

**अपि वामनो ललितबाल्यवानयं प्रतिभाबलेन कृतदैत्यकौतुकः ।**
**उपधेरधःकृतबलीन्द्रशात्रवः स्वजनाय केवलमदात्परं पदम् ॥ १७ ॥**

**अपीति** ॥ अयं श्रीनारायणो ललितं मनोहरं यद्बाल्यं तदस्यास्तीति तादृशो वामनोऽपिसन् वामनाख्यावतारोऽपिसन् । प्रतिभाबलेन बुद्धिबलेन कृतमुत्पादितं दैत्यकौतुकं दैत्यानां विस्मयो येन तादृशः । उपधेस्त्रिपदच्छलादधःकृतःत्रैलोक्याधि- पत्याद्विमोच्य पाताले स्थापितो बलीन्द्रशात्रवो बल्याख्येन्द्रशत्रुर्येन तथासन् । 'द्वेष्टा वैरी च शात्रवः' इति हलः । स्वजनाय स्वभक्तजनायेन्द्राय केवलं मुख्यं परमुत्तमं पदं त्रैलोक्याधिपत्याख्यमिन्द्रपदमदात् । अर्थान्तरंतु– अयं श्रीनारायणः ।

वामनो बालरूपःसन् । जिनस्य पुत्रमुत्पन्नं दूरे निक्षिप्य स्वयं तदाकारस्वरूपग्रहणेन तत्पुत्रभावं प्रदर्श्येति भावः । ललितं श्लाघ्यं यद्बाल्यं तदस्यास्तीति तादृशःसन्प्रतिभाबलेन बुद्धिबलेन कृतं दैत्यकौतुकं जिनादिदैत्यविस्मयो येन तादृशःसन् । उपधेर्व्याजात् । 'विश्वमसत् क्षणिकं, विज्ञानं, शून्यमभाव' इत्याद्युक्त्या तान्मोहयित्वेति भावः । अधःकृता निरये निपातिता बलीन्द्रशात्रवाः, बलमेषामस्तीति बलिनस्तादृशा इन्द्रशात्रवो जिनादयो येन तथासन् । स्वजनाय स्वभक्तजनाय केवलं परं पदमदात् । विश्वमसत्क्षणिकमज्ञानमित्यादिशब्दानां स्वाभिमतार्थमुक्त्वा सर्वस्य स्वाधीनत्वबुद्धिं, स्वस्य सर्वस्मादुत्तमत्वबुद्धिञ्चोत्पाद्य देवानां मोक्षमदादिति भावः ॥ १७ ॥

कथयन्त्यमुं परशुभासमानगोहृतमर्त्यदेवतमसं मुहुर्मुहुः ।
जगतां हितं हरिमिवापरं हरिं गुरुशक्तितापसवरान्वयोद्भवम् ॥ १८ ॥

कथयन्तीति ॥ ज्ञानिनोऽमुं श्रीनारायणं । मुहुर्मुहुस्त्रिःसप्तकृत्व इति यावत् । परशौ कुठारे भासमाना या गावस्तेजांसि ताभिर्हृतानि संहृतानि मर्त्यदेवतमांसि क्षत्रियारव्यान्धकारा येन तादृशं । जगतां हितं । गुरुर्महती शक्तिर्यस्य तादृशो यस्तापसवरो मुनिवरो भृगुस्तस्यान्वयो वंशस्तस्मिन्नुद्भवोऽवतारो यस्य तं श्रीपरशुरामं । कथमिव, मुहुर्मुहुः परा उत्तमा शुभाः शोभना असमाना असदृशा गावो वाचश्च, ताभिर्हृतं निहृतं, मर्त्यदेवतमः मर्त्याश्च देवाश्च तेषां तमोऽज्ञानं येन तं अतएव जगतां हितं । गुरुः महर्षीणां गुरुः, सचासौ शक्तिः शक्तिनामाचासौ तापसवरो मुनिवरश्च । तस्यान्वये वंशे उद्भवोऽवतारो यस्य तं । अपरमन्यं हरिमिव वेदव्यासमिव । पुनः कथमिव? पर, शुभ, असमान, गोभिस्तेजोभिर्हृतं मर्त्यदेवतमः मर्त्यदेवान्धकारो येन तं अतएवान्धकारनिरसनाज्जगतां हितं । गुरुर्महती शक्तिर्यस्य तादृशो यस्तापसवरः काश्यपस्तस्यान्वय उद्भवो यस्य तमपरं हरिमिव सूर्यमिव कथयन्ति ॥ १८ ॥

करुणाकरः स वसुदेवमोददो भगवान् पुरा हिमकरान्वयेऽभवत् ।
जितवान् दिशो दशरथोऽप्यसम्पदा जनको वभूव भुवि यस्य वैरिहा ॥१९॥

करुणेति ॥ वसुभिः सहिताः सवसवस्तादृशा ये देवास्तेषां मोदं सन्तोषं ददातीति तादृशः । करुणाकरो भगवाञ्छ्रीनारायणः । पुरा भुवि हिमाः शीता न भवतीत्य-

हिमा उष्णाः कराः किरणा यस्य सूर्यस्यान्वये वंशे । 'हिमं तुषारे शीते च'ति हेमचन्द्रः । अभवत् । यस्य सूर्यवंशावतीर्णस्य हरेः, अग्र्याः सम्पदो यासु ता दिशो जितवान्वैरिणो हन्तीति वैरिहा दशरथो जनकः पिता बभूव । अर्थान्तरं तु— करुणाकरः स भगवान्नारायणो वसुदेवस्य मोदं सन्तोषं ददातीति तादृशः । पुरा भुवि हिमकरान्वये चन्द्रवंशेऽभवत् । यस्य श्रीकृष्णस्य दशदिशो जितवान्वैरिहा शत्रुहा रथः, अग्र्यसम्पदः श्रेष्ठैश्वर्यस्य जनक उत्पादको बभूव । एतच्च 'न केशव रथे कश्चित् स्थितो याति पराभवं' इति वचनात् सिद्धम् ॥ १९ ॥

**भुजगेश्वरोऽपि भुवनेश्वरः प्रियः समजन्यथारिदरजन्मभुव्यभूत् ।**
**तममुष्य कान्तिविजितेन्दुमग्रजं रमणीयमाहुरिह रामनामकम् ॥ २० ॥**

**भुजगेति** ॥ भुवनेश्वरप्रियः श्रीनारायणप्रियो भुजगेश्वरोऽपि शेषोऽपि भुवि समजनि । लक्ष्मणनाम्ना जज्ञे । अथ तदनन्तरमरिश्चक्रं, दरः शङ्खः, तयोर्जन्मोत्पत्तिः । चक्रशङ्खाभिमानिनोः कामतत्पुत्रयोर्भरतशत्रुघ्नत्वेन जन्माभूत् । इहैतेषां मध्येऽमुष्य लक्ष्मणस्याग्रजं ज्येष्ठं कान्त्या मुखकान्त्या विजित इन्दुर्येन तमतएव रमणीयं तं भगवन्तं दाशरथिं राम इति नाम यस्य तं रामनामकमाहुः । अर्थान्तरन्तु— भुवनेश्वरप्रियो भुजगेश्वरोऽपि भुवि बलभद्रत्वेन समजनि । अथ हरिशेषयोरवतारानन्तरमरीणां शत्रूणां दरस्य भयस्य जन्मोत्पत्तिः । 'दरः स्याद्भयशङ्खयोः' इति हेमचन्द्रः । अभूत् । कान्तिविजितेन्दुं कान्त्या शरीरकान्त्या विजित इन्दुर्येन स तथा तं । शुभ्राङ्गमिति यावत् । रमणीयं दर्शनीयममुष्य श्रीकृष्णस्याग्रजं तं बलभद्रमिह रामनामकं बलरामनामकमाहुः ॥ २० ॥

**जनकेन सोऽथ विरहासहिष्णुना मुहुरीक्षितो वनमनीयत प्रभुः ।**
**चकितेन दुष्टजनतस्तपस्विना तत आसुरीं निशिचरीं जघान सः ॥ २१ ॥**

**जनकेति** ॥ अथ विरहं पुत्रवियोगं सोढुं शीलमस्यास्तीति सहिष्णुः स न भवतीत्यसहिष्णुस्तेन जनकेन पित्रा दशरथेन मुहुरीक्षितो दृष्टः प्रभुः स रामः । दुष्टजनतो राक्षसजनाच्चकितेन भीतेन तप अस्यास्तीति तपस्वी तेन विश्वमित्रेण वनमनीयत ।

नीतः । ततः श्रीरामः, आसुरीमसुरवंशजां निशिचरतीनि तां राक्षसीं ताटकां जघान । अर्थान्तरेतु– विरहासहिष्णुना जनकेन पित्रा वसुदेवेन मुहुरीक्षितः प्रभुः श्रीकृष्णः । दुष्टजनतो दुर्जनात्कंसाच्चकितेन भीतेन तपस्विना भगवद्ध्यानवता वसुदेवेन वनं नन्दगोपावासभूतं बृहद्वनंप्रत्यनीयत । ततः स श्रीकृष्ण आसुरीमसुरस्वभावां निशिचरीं पूतनां जघान ॥ २१ ॥

**मुनिसप्ततन्तुकृतवैरबन्धनं कटुकेश्यरिष्टपदमुख्यदुर्जनम् ।**
**क्षपयन्तमुद्यतसुबाहुमाहवे तमथाभ्यनन्ददमरादिसद्गणः ॥ २२ ॥**

**मुनीति** ॥ अथ । अमरादिसद्गणो देवादिसज्जनसमूहः । मुनेर्विश्वामित्रस्य सप्ततंतौ यज्ञे कृतं वैरबन्धनं वैरानुसन्धानं येन तं । 'सप्ततंतुर्मखोऽध्वर' इति हलः । मुनियज्ञविरोधिनमितियावत् । कटवः क्रूरा ये केशास्तेऽस्य सन्तीति तादृशं, यदरिष्टपदमरिष्टास्पदीभूतं मुख्यदुर्जनमतिदुर्जनमित्यर्थः । उद्यतो योद्धुं सन्नद्धो यः सुबाहुस्तं राक्षसमाहवे युद्धे क्षपयन्तं नाशयन्तं श्रीराममभ्यनन्दत् । अर्थान्तरे— अथामरादिसद्गणः । सप्ता जटया सहितः सप्तः । सचासौ तंतुः सन्ततिश्च सप्ततंतुः । मुनीनां यस्सप्ततंतुस्तस्मिन् कृतं वैरबन्धनं येन तं । 'चेरुश्चते बालवधे सदोद्यता' इत्याद्युक्तरीत्या बालघातिनमित्यर्थः । केशीचारिष्टश्च केश्यारिष्टौ । केश्यरिष्टाविति पदे नामनी ययोस्तौ मुख्यौ यस्य कंसपरिवारभूतदुर्जनस्य स तादृशः सचासौ दुर्जनश्च, कटुः क्रूरो यः केश्यरिष्टपदमुख्यदुर्जनस्तं क्षपयन्तं नाशयन्तं, आहवे युद्ध उद्यतौ सुबाहू शोभनहस्तौ यस्य तं श्रीकृष्णमभ्यनन्दत् ॥ २२ ॥

**सवने विकस्वरगुणस्वरद्विजे स्फुरिते चरन् सकलगोकुलप्रियः ।**
**इतकामतापसरसार्द्रधीगिरः प्रतिलालयन्नरमतैष सुन्दरीः ॥ २३ ॥**

**स इति** ॥ सकलं समस्तं यद्गोकुलं वेदसमूहस्तत्प्रियं यस्य । यद्वा सकलं गोकुलं वेदसमूहो येषां विश्वामित्रादिमुनीनां ते सकलगोकुलास्तेषां प्रियः । एष श्रीरामः । गुणा भक्त्यादिगुणाः, ते च स्वरा उदात्तादिस्वराश्च गुणस्वराः, विकस्वराश्शोभमाना गुणस्वरा येषां, तादृशा द्विजा ब्राह्मणा यस्मिन् । तस्मिन् स्फुरिते विराजमाने सवने

विश्वामित्रयज्ञे चरन्विघ्नविघाताय तत्रतत्र सञ्चरन् सुन्दरीः रमणीयाः । श्रोत्रप्रिया इति यावत् । इतः, यज्ञनिष्पत्याप्राप्तः, कामोऽभीष्टो यस्य तादृशो यस्तापसो विश्वामित्रस्तस्य सार्द्रा स्नेहार्द्रा या धीस्तया कृता गिरो वचनानि । 'त्वत्प्रसादादस्मद्यज्ञनिष्पत्तिरभूत्, विदेहेषु च जानकीस्वयम्वरो घोष्यते तत्र याम' इत्यादि विश्वामित्रवचनानीत्यर्थः । प्रतिलालयन्मानयन्सन्नरमत । रेमे । अर्थान्तरेतु – सकलगोकुलप्रियः समस्तगोसमूहप्रियः । अथवा गोकुलं नन्दादिगोपवासस्थानं तस्य प्रियः । इतः प्राप्तः कामतापस्स्मरनिमित्तसन्तापो याभिस्तादृशा याः, सरसार्द्रधीगिरः, रसेनार्द्रा रसार्द्राः । धियश्च गिरश्च धीगिरः । रसार्द्रा धीगिरो बुद्धिवचनानि, ताभिःसहिताः सरसार्द्रधीगिरः । (इतकामतापाश्चताः सरसार्द्रधीगिरश्च) तास्सुन्दरीः मनोहरा गोपाङ्गना लालयन्मानयन् । रमयन्निति भावः । स एष श्रीकृष्णो विकस्वरशोभमानो गुणो माधुर्याख्यगुणो यस्य सत्तथोक्तः स्वरः कूजितं येषां तादृशा द्विजाः पक्षिणो यस्मिन् । तस्मिन् स्फुरिते चन्द्रिकया विराजमाने वने वृन्दावने चरन्नरमत ॥ २३ ॥

सहजान्वितः सकलमित्रसंयुतो मधुरां पुरीं जनकवल्लभां गतः ।
प्रविशन्निमां स जगदेकसुन्दरो नरनार्युदारनयनोत्सवोऽभवत् ॥ २४ ॥

सहजेति ॥ सह, एकोदरे जातः सहजो लक्ष्मणस्तेनान्वितो युक्तः । सकलमित्रेण विश्वामित्रेण संयुतः । मधुरां रम्यां जनकवल्लभां विदेहराजप्रियां पुरीं मिथिलां गतः । इमां पुरीं प्रविशञ्जगदेकसुन्दरः स रामो नरनारीणां, तत्पुरगतानामुदारनयनानामुत्कृष्टनयनानामुत्सव इव उत्सवो हर्षजनकोऽभवत् । अर्थान्तरं – सहजान्वितो बलभद्रसंयुतः सकलमित्रैर्गोपैः संयुतो जनकस्य पितुर्वसुदेवस्य वल्लभां प्रियां मधुरां पुरीं गतः । इमां पुरीं प्रविशञ्जगदेकसुन्दरः श्रीकृष्णो नरनार्युदारनयनोऽत्सवोऽभवत् ॥ २४ ॥

अथ खण्डितेश्वरधनुः स लीलया अपिनोग्रसेननृपपुत्रपौरुषः ।
समुपास्य विप्रगुरुभञ्जभूगुरुः स्वजनानमोदयदमेयतेजसा ॥ २५ ॥

अथेति ॥ अथ पुरप्रवेशानन्तरं । लीलया खण्डितं भग्नमीश्वरधनुः, विदेहेन स्वयं वरार्थमानीतं शिवधनुर्येन तादृशः । अनघोग्रा क्रूरा सेना येषां तादृशा ये

नृपपुत्रास्तेषां पौरुषं पराक्रमः । क्षपितं धनुर्भङ्गेन निरस्तमुग्रसेनननृपपुत्रपौरुषं येन तादृशः । अब्जभूगुरुर्ब्रह्मगुरुः स श्रीरामो विप्रगुरुं विश्वामित्रं समुपास्य समीपे स्थित्वा । अमेयतेजसापरिमितसामर्थ्येन स्वजनांल्लक्ष्मणादीनमोदयत् । अतोषयत् । अर्थान्तरंतु—अथ मधुराप्रवेशानन्तरं लीलया खण्डितमीश्वरधनुर्दिशवेन कंसाय दत्तं धनुर्येन तादृशः । क्षपितमुग्रसेननृपपुत्रस्य पौरुषं येन तादृशः । निहतकंस इति यावत् । अब्जभूगुरुः श्रीकृष्णो विप्रगुरुं सान्दीपनिं समुपास्यामेयतेजसा जरासन्धादि-जयरूपेणापरिमितसामर्थ्येन । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यनस्त्रिपु' इत्यमरः । स्वजनान् वसुदेवादीनमोदयत् ॥ २५ ॥

**कमलामयं कमलपत्रलोचनां भुवमागतां नृपसुतां गृहीतवान् ।**
**निजलीलया विजितराजशात्रवो मुदमापदाप्य पुरमब्धिदुर्गमम् ॥ २६ ॥**

**कमलामिति** ॥ अयं श्रीरामः । कमलपत्रवल्लोचने यस्यास्तां नृपसुतां विदेहराज-सुतां भुवमागतां भुव्यवतीर्णां कमलां रमारूपां सीतां गृहीतवान्विवाहविधिनाङ्गी-कृतवान् । ततः निजपुरं गच्छन्मार्गे निजलीलयात्मलील्या विजितोऽज्ञदृष्ट्यपेक्षया पराजितो राज्ञांशात्रवः परशुरामो येन सः । 'द्विषा वैरी च शात्रवः' इति हलः । अब्धिवद्दुर्गमं गन्तुमशक्यं पुरमयोध्यापुरमाप्य मुदमापत् । प्राप । अर्थान्तरंतु— अयं श्रीकृष्णोऽपि कमलपत्रलोचनां नृपसुतां भीष्मकसुतां भुवमागतां कमलां रमारूपां रुक्मिणीं गृहीतवान्बलादपहृत्यस्वीकृतवान् । ततः स्वपुरं गच्छन्मार्गे निजलील्या विजिता राजाख्या रुग्मिजरासन्धादयश्शात्रवा येन तादृशस्सन् । अब्धिदुर्गममब्धिना दुर्गमं पुरं द्वारकपुरमाप्य मुदमापत् ॥ २६ ॥

**स जगाम मातृजनतुष्टये किल त्वरितो वनं विदधदीप्सितं सताम् ।**
**सह भार्ययापि शुभया महाजयध्वजलक्ष्मणाग्र्यसुहृदा विनामुदा ॥ २७ ॥**

**स इति** ॥ सतामृष्यादीनामीप्सितं वाञ्छितं रावणनिग्रहादिकं विदधत्कुर्वन् स रामः । मातृजनस्य तुष्टये सन्तोषाय कैकयीसन्तोषायेत्यर्थः । किलेत्यपरमार्थे । त्वरितो वेगवान्सन्छुभया भार्यया सीतया सह । महतो जयस्य ध्वज इव ध्वजः

सचासौ लक्ष्मणश्च सचासावग्र्यसुहृदुत्तमसुहृत्तेनापि सह । अत्रामुदेति पदच्छेदः । मुदो विरुद्धा अमुत्तया । दुःखेनेत्यर्थः । विना । राज्याभिषेकं विहाय वनं गच्छतोऽप्यस्य नदुःखमिति भावः । वनं जगाम । अर्थान्तरंतु— ईप्सितमात्मनोऽभीष्टं, सतामृष्यादीनामवनं रक्षणं विदधत्कुर्वन् स श्रीकृष्णः । मातृजनतुष्टये, नरकासुरहृतकुण्डलाया आदित्यास्तुष्टये । शुभया शोभनया भार्यया सत्यभामयापि । अग्र्यसुहृदा, उत्तमसुहृदा महाजयार्थो ध्वजो महाध्वजस्तस्य लक्ष्मचिह्नभूतस्तेन । 'चिह्नं लक्ष्म च लक्ष्मणं' इत्यमरः । विना पक्षिणा गरुडेन । 'विः पक्षि परमात्मनोः' इत्यमरः । मुदा सन्तोषेण जगाम किल । नरकासुरेणोपद्रुतानां बदरिकाश्रमनिवासिनां मुनीनां रक्षां कर्तुमदितितुष्टये नरकवधार्थञ्च जगामेति भावः ॥ २७ ॥

**समतीतपर्वतपुरोगदुर्गमः खरदूषणादिसुजनद्विषो बहून् ।**
**स निहत्य विश्वभयदं सुदुःसहं नरकं महातम उपानयत्क्रमात् ॥ २८ ॥**

समतीतेति ॥ स श्रीरामः पर्वताश्चित्रकूटादयः पुरोगा मुख्या येषां तादृशा दुर्गमा दुर्गमप्रदेशाः । समतीता अतिक्रान्ताः पर्वतपुरोगदुर्गमा येन तादृशःसन् । बहून्, खरश्च दूषणश्च तावादी येषां तादृशा ये सुजनद्विषः सज्जनद्वेषिणस्तान्निहत्य क्रमात् । प्रारब्धभोगानन्तरमिति भावः । विश्वस्य समस्तजगतो भयदं श्रवणमात्रेण भयप्रदं । सुदुःसहं नित्यंदुःखरूपत्वादतिदुःसहं । महातमः तत्संज्ञकं नरकं नित्यनरकं । 'नरकौ दैत्यनिरयावि'ति हेमचन्द्रः । उपानयत् । प्रापयामास । अर्थान्तरंतु— पर्वताः पुरोगा ये दुर्गमाः, नरकासुरपुरावरणभूतजलमौरपाशादिभिरावृतत्वेन गन्तुमशक्याः । समतीताः पर्वतपुरोगदुर्गमा येन स श्रीकृष्णः । बहून् खराणि क्रूराणि दूषणानि दोषा येषां तादृशा य आदिसुजनाः, आदौ पूर्वं सु जननं येषां तादृशा ये द्विषो देवद्विषो मुरादिदैत्यास्तान्निहत्य क्रमान्नरकासुरमपि निहत्य विश्वभयदं सुदुःसहं महातमोऽन्धतमोऽनयत् ॥ २८ ॥

**रुचिराश्रमाजिररचिताऽयतेजसा प्रियया प्रियो भुवनमान्यया समम् ।**
**भृशमाकुलीकृतमदप्रमादवत्सुरपारिजातहृदवाप धाम सः ॥ २९ ॥**

**रुचिरेति** ।। भृशमतितरामाकुलीकृतं युद्धे स्वात्मना व्याकुलीकृतं । मदश्च प्रमादो विस्मरणं स च नावस्यमन इति मदप्रमादवत्तादृशं यत्, सुरान् पातीति सुरपः पुरन्दरस्तस्यारिजातं, शत्रुसमूहः । आकुलीकृतं मदप्रमादवत्सुरपारिजातं हरतीति तादृशः । प्रियः स्वभक्तप्रियः स श्रीरामः । रुचिराश्रमस्य शोभनाश्रमस्याजिरे प्राङ्गणे चितं सञ्चद्धमग्र्यतेज उत्तमतेजो यस्याः । 'अङ्गणं चत्वराजिरे' इत्यमरः । तया भुवनमान्यया प्रियया सीतया समं धाम तेजः । 'धामनी गृह तेजसी'त्यमरः । अवाप । अर्थान्तरंतु— भृशं मद ऐश्वर्यादिमदः, प्रमादोऽयं श्रीकृष्णोऽस्मत्स्वामी नारायण इत्येतद्विस्मरणं, तावेयां स्त इति मदप्रमादवन्तः । ते च ते सुराश्च । आकुलीकृताः पारिजातोद्धारिणात्मना व्याकुलीकृताः मदप्रमादवत्सुराश्च तेषां पारिजातं हरतीति तादृशः प्रियः स्वभक्तप्रियः । असुरनिग्रहान्निन्द्रादीन् विबोध्य तेषां प्रियो भूत्वेति भावः । स श्रीकृष्णः । रुचिरा शोभमानाश्रमा श्रमरहिता, आजिर्युद्धं तस्यां । पारिजातापहरणसमये देवैःसह क्रियमाणयुद्धे रचितं प्रकटितमग्र्यतेज उत्तमसामर्थ्यं यस्यास्तया भुवनमान्यया प्रियया सत्यभामयासमं साकं धाम द्वारकाख्यं गृहमवाप ।।

हरितामधीशनरदेवमण्डलं दशकं विजित्य परभीषणं मुहुः ।
स्फुरितामिह प्रियतमां निजश्रियं भगवानुपैक्षत हरन्तमप्रियम् ।। ३० ।।

**हरितामिति** ।। भगवाञ्छ्रीरामः । इहाश्रमे स्फुरितां विलसितां निजश्रियं स्वकीयश्रीरूपां सीतां हरन्तमप्रियं शत्रुं । हरितां दिशामधीशा ये नराश्च देवाश्च तेषां मण्डलं समूहं मुहुर्विजित्य परेषामन्येषां शत्रूणां वा भीषणं भयङ्करं दश कानि शिरांसि यस्य तं रावणमुपैक्षत । न निरुद्धवान् । अर्थान्तरंतु— भगवाञ्छ्रीकृष्णो हरितां दिशां, दशकं दश, विजित्य परेषां शत्रूणां भीषणं । अधीशा अधिकैश्वर्यवन्तो ये नरदेवा राजानस्तेषां मण्डलं समूहं विजित्य । इह इन्द्रप्रस्थे स्फुरितां प्रियतमामतिशयेनप्रियां निजश्रियं स्वकीयपाण्डवसम्पदं । 'स्वभक्तानामधिकैश्वर्यं हि भगवत्प्रियं, तद्भोगोऽप्यतीव हरितोषणं' इति वचनात् । हरन्तं द्यूतेनापहरन्तमतएवाप्रियं सुयोधनमुपैक्षत ।। ३० ।।

**अभिवन्दितः पवननन्दनादिभिः स कदाचिदिन्द्रसुतवर्धको गवा ।**
**निजराज्यमात्मदयिताय दत्तवान्हरिसूनवे हतविपक्षमुत्तमम् ॥ ३१ ॥**

**अभीति ॥** पवननन्दनादिभिर्हनुमदादिवानरैः ऋष्यमूकेऽभिनन्दितः स श्रीरामः । कदाचित्, गवा बाणेन । 'वज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दः' इति हलः । इन्द्रसुतवर्धको वालिच्छेदकःसन्नात्मदयिताय स्वप्रियाय हरिसूनवे सूर्यपुत्राय । 'अर्क-मर्कट मण्डूक विष्णु वासव वायवः । तुरङ्ग सिंह शीतांशु यमाश्च हरयो दश' इति हलः । सुग्रीवाय । हतो विपक्षः शत्रुर्यस्मिंस्तदुत्तमं निजं सुग्रीवस्य विद्यमानं राज्यं दत्तवान् । अर्थान्तरंतु—पवननन्दनादिभिर्भीमार्जुनादिभिरभिनन्दितः । अज्ञातवास-मतीत्योपप्लाव्ये दृष्ट्वा सन्तोषितः स श्रीकृष्णः । कदाचिद्गवा गीतावाचा, इन्द्रसुत-वर्धकोऽर्जुनस्याप्यायकःसन् । पापबुद्ध्या युद्धान्निवृत्तमपि गीतात्मिकया वाचा विबोध्य युद्धोन्मुखं कुर्वन्सन्निति भावः । आत्मदयिताय हरिसूनवे यमपुत्राय युधिष्ठिराय हता विपक्षा धार्तराष्ट्रादिशत्रवो यस्मिन् तदुत्तमं निजं राज्यं दत्तवान् ॥ ३१ ॥

**मुदमाप्य तत्र दयितोरुवार्तया मधुहा मरुत्सुतमुखप्रवृत्तया ।**
**हरितिग्मचक्रलसितोऽब्धिमध्यगं प्रययौ स पुण्यजनसेवितं पुरम् ॥ ३२ ॥**

**मुदमिति ॥** तत्र, ऋष्यमूकपर्वते स्थित एव मधुहा स श्रीरामः । मरुत्सुतस्य हनुमतो मुखेन प्रवृत्तया । उक्तयेत्यर्थः । दयितायाः सीताया उरुवार्तया मुदमाप्य हरीणां कपीनां तिग्मचक्रेण तीक्ष्णसैन्येन लसितश्शोभितस्सन् । 'चक्रं सैन्ये जलावर्ते रथाङ्गे चयराष्ट्रयोः । संसारे मण्डले वृत्ते छद्मवेदास्त्रभेदयोरि'ति यादवः । अब्धि-मध्यं समुद्रमध्यं गच्छतीति तादृशं पुण्यजनसेवितं राक्षससेवितं । 'रक्षःसन्तौ पुण्यजनावि'त्युक्तेः । पुरं लङ्कां प्रययौ । अर्थान्तरंतु— मधुहा श्रीकृष्णस्तत्रोपप्लाव्ये मरुत्सुतमुखप्रवृत्तया भीममुखप्रोक्तया युधिष्ठिरभीमार्जुनादिभिरज्ञातवासे प्रवृत्तयेति भावः । दयितोरुवार्तया प्रियपाण्डवानां कीचकनिग्रहाद्युदन्तेन । 'वार्ताप्रवृत्तिवृत्तान्त उदन्तः स्यादथाह्वयः' इत्यमरः । मुदं सन्तोषं प्राप्य हरितिग्मचक्रलसितः, सूर्यवत्तीक्ष्णसुदर्शनेन लसितोऽब्धिमध्यगं पुण्यजनसेवितं पवित्रजनसेवितं पुरं द्वारकं प्रययौ । पार्थानुपप्लाव्ये संस्थाप्य स्वयं द्वारकां प्रययाविति भावः ॥ ३२ ॥

पृथुकुम्भकर्णगजराजमुद्धतं ससहोदरं सविबुधेन्द्रशात्रवम् ।
धरणीभरं पृथुलचक्रमक्षिणोन्निशितेषुचक्रकृतविक्रमः प्रभुः ॥ ३३ ॥

पृथ्विति ॥ निशिता इषवः शरास्तेषां चक्रेण समूहेन कृतो विक्रमः पराक्रमो येन तादृशः प्रभुः स श्रीरामः । उद्धतं बलादिमदोद्धतं सहोदरेण ज्येष्ठेन रावणेन सहितं ससहोदरं विबुधेन्द्रस्य पुरन्दरस्य शात्रवश्शत्रुरिन्द्रजित् तेन सहितं स विबुधेन्द्रशात्रवं, धरणीभरं भूभारायितं पृथुलं बहु चक्रं सैन्यं यस्य तं, पृथुः स्थूलो यः कुम्भकर्णः स एव गजराजो गजश्रेष्ठस्तमक्षिणोत् । जघान । अर्थान्तरंतु– निशितेषवो निशितशरास्तेच, चक्रं सुदर्शनं तच्च, निशितेषुचक्राणि । तैः कृतो विक्रमो येन तादृशः । अर्जुनादिषु स्थितेन रूपेण इषुभिः कृतविक्रमः, स्वयंतु भीष्मंप्रति चक्रेणकृतविक्रम इति भावः । प्रभुः स श्रीकृष्णः । कुम्भाः कुम्भस्थलानि कर्णाश्च, पृथवोतिस्थूलाः कुम्भकर्णा येषां तादृशा गजराजा यस्मिंस्तत् । उद्धतं । सहसा सहितं ससहः । न विद्यते दरो भयं यस्य तददरं, अभ्यापततः शत्रून् दृष्ट्वापि भयरहितमित्यर्थः । 'दरस्त्रासश्च साध्वसं' इति हलः । भुविनृपादिरूपेणजातैर्विबुधेन्द्राणां शात्रवैः शत्रुभिर्दैत्यैः सहितं, सविबुधेन्द्रशात्रवम् । अतएव धरणीभरं भूभारभूतं पृथुलचक्रं महत्कौरवसैन्यमक्षिणोत् । जघान ॥ ३३ ॥

अथ भार्यया हुतवहं प्रविष्टया सहितः सहोदरपुरस्सरैरपि ।
अयमाप्य धाम चिरमिष्टदः सतां निजमूलरूपपरमैक्यमेयिवान् ॥ ३४ ॥

अथेति ॥ कुम्भकर्णादिवधानन्तरं हुतवहं वह्निं प्रविष्टया शपथार्थं प्रविष्टया भार्यया सीतया । सहोदरो लक्ष्मणः पुरःसरो मुख्यो येषां सुग्रीवादीनां तैरपि सहितः । धाम, अयोध्यामाप्य चिरं सतामिष्टदोऽभीष्टदोऽयं श्रीरामः । निजेन मूलरूपेण परमैक्यमुत्तमैक्यमेयिवान् । प्राप । अर्थान्तरंतु— अथ पृथुलसैन्यक्षपणानन्तरं चिरं सतामिष्टदोऽयं श्रीकृष्णः । स्वर्गारोहणकाले हुतवहं अग्निं प्रविष्टया भार्यया रुक्मिण्या सहोदरपुरस्सरैरपि बलभद्रपूर्वकैरपि सहितःसन् । धाम वैकुण्ठमाप्य निजमूलरूपपरमैक्यमेयिवान् ॥ ३४ ॥

**महिदासपूज्यचरणो द्विजादभूद्विदितात्स विष्णुयशसोऽमलात्मनः ।**
**इह यो दधे जगति पापशान्तये बहुधामहेतिमतिदीप्तगोस्थितिम् ॥ ३५ ॥**

**महिदासेति ॥** स भगवान् । विष्णोर्यशसः । निमित्तपञ्चमीयं । विष्णुयशः श्रवणकीर्तनादिनिमित्तादित्यर्थः । अमलो निर्मल आत्मा मनो यस्य । तस्माद्विदितात् प्रसिद्धाद्विजादितरादेव्यां महिदासनामाचासौ पूज्यचरणः पूज्यपादश्च । महिदासभगवत्पादाचार्यस्सन्नित्यर्थः । अभूत् । अवततार । यो महिदासाभिदः, महती ईतिरुपद्रवोऽस्यास्तीति तस्मिन् महेतिमति इह जगति, पापशान्तये पापक्षयाय बहुधा बहुप्रकारेण दीप्ता अतिस्पष्टा या गावो वैष्णवतन्त्रशास्त्ररूपा वाचस्तासां स्थितिमवस्थितिं दधे । विदधे । 'महिदासाभिधो जज्ञे इतरायास्तपोबलात् । साक्षात्सभगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्' इति ब्रह्माण्डे । अर्थान्तरंतु— स भगवान् विदितात् अमलात्मनो विष्णुयशसस्तन्नामकाद्विजादभूत् । कल्किनामावततार । मह उत्सवो येषामस्तीति महिनः । ते च ते दासाश्च ब्रह्मादयस्तैः पूज्यौ चरणौ यस्य तादृशो यः कल्की । इह जगति पापानां दस्यूनां शान्तये क्षयायातिदीप्तो यो गौर्वज्रं तस्य स्थितिर्यस्यां तां । बहुधामतेजो यस्याः सा बहुधामा । 'अनो बहुव्रीहेः' इति ङीब्भावः । साचसा हेतिरायुधं तां दधे । निदधे । प्रयुयोजेति भावः ॥ ३५ ॥

**सुतपोरुचेरयमपापकर्दमान्मनु मानवीतनयतामुपेयिवान् ।**
**समयेन भूरिनिजभक्तिपूरितान्समजीजनत् सुमनसः स वेदराट् ॥ ३६ ॥**

**सुतप इति ॥** अयं भगवान् । न विद्यते पापकर्दमः पापाख्यः पङ्को यस्य तस्मात् । शोभनं तपो यस्य सचासौ रुचौ रुचिप्रजापतिस्तस्मात् । मनोः स्वयंभुवमनोर्म्नुना मानवी । आकूत्याख्यास्तस्यास्तनयः पुत्रस्तस्य भावस्तत्ता तामुपेयिवान्ननु । अत्राप खलु । स मानवीतनयो यज्ञनामा समयेन कालान्तरेण देवराडिन्द्रःसन् । भूरिः भूयसी या निजभक्तिस्स्वविषयिणी भक्तिस्तया पूरिताः पूर्णास्तान्सुमनसो देवान् समजीजनद्दक्षिणाख्यरमायामुत्पादयामास । अर्थान्तरंतु— अयं भगवान् । सुतपसि शोभनतपसि रुचिरिच्छा यस्य तस्मात् । 'कामनेच्छा रुचिस्तथा' इति हलः ।

न विद्यते पापकर्दमो यस्य तस्मात् । अथवाश्वासौ कर्दमश्च तस्मादिति वा । कर्दम-प्रजापतेः । मनोः सुता मानवी देवहूतिः, तस्यास्तनयस्तस्य भावस्तत्तामुपेत्यिवाञ्जनु । अवाप । देवराडसर्वदेवोत्तमः स कपिलवासुदेवनामास्तन् सुमनसः सुचित्तान् देवमुनि-पूर्वकान् सज्जनान् समयेन स्वकृतसांख्ययोगशास्त्रेण भूरिनिजभक्तिभूरितान् समर्जी-जनत् । तेषामात्मनि निजभक्तिमुत्पादयामासेति भावः ॥ ३६ ॥

सुबृहत्पयोधरमिथःप्रसंहतिप्रकटीभवत्परयौवनाकृतिः ।
असुराहितां वरविलासिनीतनुः प्रददावमुष्य सुरराशये सुधाम् ॥ ३७ ॥

सुबृहदिति ॥ अमुष्य भगवतः । पयः सागरजलम् धरो मन्दरगिरिः सुबृहन्तौ अतिमहान्तौ यौ पयोधरौ तयोर्मिथः परस्परं प्रसंहतिः सङ्घट्टनं तया प्रकटीभ-वन्त्याविर्भवन्ती, परमं यौवनं यस्यास्तादृशी या आकृतिः स्वरूपं । सुबृहत्पयो-धरमिथः प्रसंहतिप्रकटीभवन्ती परमयौवनाकृतिर्यस्यास्तादृशी । वर उत्तमो विलासः स्मितादिरस्यास्तीति तादृशी तनुर्धन्वन्तरिरूपं । असुराहितामसुराणामयोग्यां सुधां सुरराशये सुरसमूहाय प्रददौ । अर्थान्तरंतु– सुबृहन्तौ यौ पयोधरौ कुचौ तयोर्मिथः प्रसंहतिः परस्परं वट्टनं तया प्रकटीभवन्ती परमयौवनाकृतिर्यस्यास्तादृशी । अमुष्य भगवतो वरविलासिनी तनुरुत्तमस्त्रीतनुः । असुराहितामसुरेष्वाहितां धन्वन्तरिरूपे-णात्मनासुरवशे निहितां सुधां तेऽभ्योपहृत्य सुरराशये प्रददौ । अपाययदिति भावः ॥ ३७ ॥

सुजनाय दत्तपद आत्मशुद्धिदः सुकुमाररूप्यभवदेष शाश्वतः ।
अनसूयया शुचिमनीषया धृतः परमादरेण मुनिपुङ्गवोढया ॥ ३८ ॥

सुजनायेति ॥ सुजनाय सज्जनाय । आत्मशुद्धिदश्चित्तशुद्धिद एष शाश्वतो नित्यो भगवान्मुनिपुंगवेनात्रिणा, ऊढयोद्वहया शुचिः शुद्धा मनीषा ज्ञानं यस्यास्तया-नसूयया तन्नामिकदेव्या परमादरेणात्यादरेण धृतो गर्भधृतः । सुकुमारं कोमलं रूपं अस्यास्तीति तादृशः । दत्त इति पदं यस्य तादृशो दत्तात्रेयनामाभवत् । अर्थान्तरंतु– एष शाश्वतो भगवान् । न विद्यतेऽसूया यस्यास्तया मुनिपुङ्गवैः मुनिश्रेष्ठैरूढया

धृतया शुचिमनीषया शुद्धज्ञानेन परमादरेण परमभक्त्या धृतः । 'अस्माकं ज्ञानमुपदेष्टुमायाहि भगवन्नि'ति ध्यातः । सुजनाय शोभनजनाय दत्तपदः प्रदत्तस्थानः । आत्मशुद्धिदः कुमार इति रूपमस्यास्तीति कुमाररूपी शोभनश्चासौ कुमाररूपीच । सनत्कुमाराभिधेय इत्यर्थः । अभवत् ॥ ३८ ॥

दयितः सतामृषभ एष भूधरोवपुरुद्वहन् परमहंसलक्षणम् ।
व्यवहरद्वलक्षतमपक्षशोभनं परतत्वलिप्सुसनकादिवन्दितः ॥ ३९ ॥

दयित इति ॥ सतां दयितः प्रिय एष नारायणः । ऋषभनामा, भुवं धरतिपोषयतीति भूधरो भूपो भूत्वा, वलक्षतमोऽतिशुभ्रो यः पक्षः सिद्धान्तस्तेन शोभनं । परमहंसानां यतीनां लक्षणं चिह्नं यस्य तादृशं वपुः शरीरमुद्वहन् दधत्सन् । परं उत्तमं यत्तत्वं परापरवस्तुयाथार्थ्यं । तल्लब्धुमिच्छन्तीति परतत्वलिप्सवो ये सनकादयस्तैर्वन्दितः स्तुतः । नतो वा । 'वदि अभिवादनस्तुत्योरि'ति धातोः । व्यवहरत विजहार । अर्थान्तरंतु— सतां दयितः ऋषभः स्वामी भूधरो धरणीश्वर एष नारायणः । परतत्वलिप्सुसनकादिवन्दितः, परतत्वं प्रदेष्टुं प्रार्थित इत्यर्थः । वलक्षतमावतिधवलौ यौ पक्षौ पतत्रौ ताभ्यां शोभनं । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । परमहंसस्योत्तमहंसपक्षिणो लक्षणं चिह्नं यस्य तद्वपुरुद्वहन् । व्यवहरत । तेषां मुनीनां परतत्वमुपदिशन्विजहार ॥ ३९ ॥

उदपादि धर्मतनयो ह्ययं हरिर्नरदेवसोदर उदारविक्रमः ।
अपि कृष्ण इत्यभिहितो मुदे सतां स्वयमेव यस्य सहजो व्यजायत ॥ ४० ॥

उदपादीति ॥ उदारो महान्विक्रमः पराक्रमो यस्य तादृशः । 'उदारो महति ख्याते दक्षिणे दानशौण्डके' इति वैजयन्ती । अयं भगवान् । नरश्चासौ देवश्च तस्य सोदरो भ्राता । शेषावतारभूतस्य नरस्य भ्रातेत्यर्थः । सतां मुदे कृष्णेत्याभिहितोऽपि स्वयमेव स्वात्मनेव यस्य हरिनाम्नः सहजो भ्राता व्यजायत । कृष्णनामापि स्वयं यस्य हरेः सहोदरत्वेन धर्मतनयो व्यजायतेति भावः । स हरिः हरिनामा धर्मतनयो धर्मप्रजेश्वरतनयःसन्नुदपादि । अर्थान्तरंतु— नरदेवसोदरः, उदारविक्रमः

स्वयमेव सतां मुदे कृष्ण इत्यभिहितोऽपि यस्य नारायणस्य सङ्जो व्यजायत । अयं पुरोवर्ती, आश्रमे विराजमानो नारायणनामा हरिरपि धर्मतनयो यमतनयःसन्नुद्पादि । पदनिष्पत्तौ लुङ् । न केवलं हरिकृष्णौ धर्मतनयौ किन्त्वयं नारायणोऽपि धर्मतनयः । अयं भावः । नरनारायणहरिकृष्णाश्चत्वारो धर्मतनयाः । तत्र नरः शेषः । अन्ये त्रयो भगवदवतारा इति ॥ ४० ॥

**परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे ।**
**अविकारिणे स्फुटमनन्तरूपिणे सुखचित्समस्ततनवे नमो नमः ॥ ४१ ॥**

**परमात्मन इति ॥** परमश्चासावात्मा च तस्मै, मुख्यत आत्मशब्दवाच्याय । सततं सर्वदा, एकं प्रधानं यद्रूपं तदस्यास्तीति तस्मै । एकं स्वगतगुणक्रियादिभिर्भेदवर्जितं रूपमस्यास्तीति तस्मा इति वा । दश च तानि रूपाणि मत्स्यादीन्यस्यसन्तीति तस्मै । शतानि सहस्राणि रूपाण्यस्यसन्तीति तस्मै । नारायणादिशतरूपिणे विश्वादिसहस्ररूपिणेचेत्यर्थः । विकाराभावोऽविकारः सोस्यास्तीति तस्मै । सर्वरूपेष्वपि जननमरणादिविकाररहितायेत्यर्थः । स्फुटं स्पष्टं यथा भवति तथा, न विद्यतेऽन्तः पर्यवसानं येषां तानि रूपाण्यस्यसन्तीति तस्मै । स्फुटमित्यनेनोक्तरूपवत्वे 'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनिचानन्तानिचे'त्यादिश्रुतिःसूचिता । सुखं, चिज्ज्ञानञ्च सुखचितौ । तदात्मकास्समस्ततनवो यस्य तस्मै नमोनमः । तात्पर्येण द्विरुक्तिः ॥ ४१ ॥

**इति चिन्तयन्नविरलान्तरो हरिं प्रणनाम सप्रणयमादृतोऽमुना ।**
**अजितौ परस्परसभाजितौ सतौ निकषा निषीदति पुरोपवेशिनौ ॥ ४२ ॥**

**इतीति ॥** इति जगतां चतुर्दशतयमित्यारभ्योक्तप्रकारेण चिन्तयन्नविरलं पूर्णं आन्तरं ज्ञानं यस्य स श्रीमध्वो हरिं नारायणाख्यं भगवन्तं प्रणनाम । अमुना नारायणेन सप्रणयं सस्नेहमादृतो मानितः स श्रीमध्वः, परस्परमन्योन्यं सभाजितौ कृतसम्भावनावुपवेशिनौ निषण्णावजितौ श्रीव्यासनारायणौ निकषा समीपे । 'अभितः परितः' इत्यादिना द्वितीया । परस्परं कृतसम्भावनयोर्निषण्णयोस्तयोः समीप इत्यर्थः । निषीदतिपुरा । न्यषीदत् । 'यावत्पुरानिपातयोर्लडिति लट् ॥ ४२ ॥

विविधा विधाय किल तत्र सङ्कथा वदनं मुनीन्द्रतनयस्य सुन्दरम् ।
अवलोक्य लोकपतिरानतं महासुखतीर्थमाह रहसि स्म गामिमाम् ॥ ४३ ॥

**विविधा इति** ॥ लोकपतिः श्रीनारायणः तत्राश्रमे । विविधाः संकथाः परस्परभाषणानि । 'सङ्कथान्योन्यसंवादः' इति हलः । विधाय, मुनीन्द्रतनयस्य पराशरसुतस्य श्रीव्यासस्य सुन्दरं वदनं मुखमवलोक्यानतं भक्तिनम्रं, महासुखहेतुः तीर्थं शास्त्रं यस्मात्तं । 'तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः' इति हेमचन्द्रः । रहसि, इमां वक्ष्यमाणां गां वाचमाहस्म । अब्रवीत्किल ॥ ४३ ॥

शृणु देवकार्यमवधार्य धैर्यवद्‌दुदीर्यमाणमिदमार्यसम्मतं ।
भविताऽन्यदुष्करतरं विधाय यत्तरुणं तवावतरणं महाफलम् ॥ ४४ ॥

**शृण्विति** ॥ धैर्यमस्यास्तीति धैर्यवत् । तद्यथा भवति तथा । सुस्थिरमित्यर्थः । उदीर्यमाणं मयाप्रोच्यमानमार्यसम्मतं श्रीव्यासप्रियं यदिदं देवकार्यं तच्छृणु । अन्यस्यातिदुःखेन कर्तुं शक्यमन्यदुष्करतरं देवकार्यमवधार्य श्रुत्वा विधाय कृत्वा तरुणं नूतनं तवावतरणमवतारो, महत्फलं यस्य तादृशं भविता । भविष्यति । भू सत्तायां लुट् ॥ ४४ ॥

अपिधाय सूत्रहृदयं सतां प्रियं प्रविधाय भाष्यमधुना निजेच्छया ।
अपरैः श्रुतिस्मृतिनिजार्थदूषकैः सुतरां तिरोभवति संविदादृता ॥ ४५ ॥

**अपिधायेति** ॥ अधुना, इदानीं । श्रुतिस्मृतीनां निजार्थानां साक्षाद्विवक्षितार्थानां दूषकैरपरैः सज्जनेभ्योऽन्यैः । भुविजातैरसुरैरितियावत् । सतां सज्जनानां प्रियं सूत्रहृदयं ब्रह्मसूत्राभिप्रायमपिधाय छादयित्वा । 'अपिधानतिरोधानपिधानाच्छादनानिचे'त्यमरः । निजेच्छया स्वेच्छया स्वाभिमतजगन्मिथ्यात्वादिप्रतिपादकत्वेनेत्यर्थः । भाष्यं ऋक्सूत्रोपनिषदादिभाष्यं प्रविधाय, आहृता नाशिता संवित्तत्वज्ञानं सुतरामतितरामधुना तिरोभवति । निलीनाभवति ॥ ४५ ॥

**अपनेतुमेनमनयं कृतं खलैः प्रतिनेतुमात्मजनतां शुभां गतिम् ।
कुरु सूत्रभाष्यमविलम्बितं व्रजेः सुमतेन योजय कवे श्रुतिस्मृतीः ॥ ४६ ॥**

**अपनेतुमिति** ॥ खलैर्दुर्जनैः कृतमेनं निजेच्छया भाष्यनिर्माणादिरूपं, नयो न्यायः सच्छास्त्रन्यायस्तद्विरुद्धोऽनयस्तं । कुयुक्तिमच्छास्त्राभासमित्यर्थः । अपनेतुं निराकर्तुं । आत्मनः, जनानां समूहो जनता तां । स्वकीयजनसमूहमित्यर्थः । शुभां गतिं मोक्षंप्रतिनेतुं प्रापयितुं । सूत्रभाष्यं ब्रह्मसूत्रभाष्यं कुरु । अविलम्बितं शीघ्रं यथा भवति तथा व्रजेः । गच्छ । कवे ज्ञानिन् ! श्रुतिस्मृतीः सुमतेन सत्सिद्धान्तेन योजय । सत्सिद्धान्तपरत्वेन व्याकुर्वित्यर्थः ॥ ४६ ॥

**अमितां मितामपि गिरं जगद्गुरोरिति तां निशम्य विरलेतरान्तरः ।
वदतां वरस्तमवदत्तदा तयोर्विरहाक्षमः खलु चराचरेशयोः ॥ ४७ ॥**

**अमितामिति** ॥ वदतां वाग्मिनां वरः श्रेष्ठः । विरलात्कृशादितरत्, विरलेतरत् । पूर्णमित्यर्थः । तादृशमान्तरं ज्ञानं यस्य तादृशः श्रीव्यासः । इति 'शृणुदेवकार्य-मि'त्याद्युक्तप्रकारां मितामपि शब्दतोऽल्पामप्यमितामर्थतोऽनल्पां । बह्वर्थगर्भामिति यावत् । जगद्गुरोः श्रीनारायणस्य तां गिरं निशम्य तं श्रीनारायणमवदत् । 'भवतोरित' इति वक्ष्यमाणरीत्योवाच । भवतोरित्यारभ्येतोनगच्छामीत्यर्थप्रतिपादकं वचनं ब्रुवतः कोऽभिप्राय इत्यपेक्षायामाह तयोरित्यादि । चराचरेशयोः स्थावरजङ्गम-स्वामिनोस्तयोः श्रीव्यासनारायणयोर्विरहाक्षमः खलु वियोगेऽसमर्थः खलु । वियोगं सोढुमसमर्थ एव, ननु सर्वथा इतो न गमिष्यामीत्यभिप्रायवानिति भावः ॥ ४७ ॥

**भवतोरितः सततसेवनामृते मम मंक्तुमस्तु भगवन्ननुग्रहः ।
न लभेय वल्लभतमेदृशं सुखं जगतां त्रयेऽपि जगदेकमङ्गलम् ॥ ४८ ॥**

वचनप्रकारमेव दर्शयति—

**भवतोरिति** ॥ हे भगवन्! इतोऽत्रैव । सार्वविभक्तिकस्तसिः । भवतोर्युवयोः सततसेवनं निरन्तरसेवा तदेवामृतं तस्मिन्मम मंक्तुं निमज्जनायानुग्रहोऽस्तु ।

वल्लभतम! प्रियतम! जगदेकमङ्गलं जगतिमुख्यमङ्गलमीदृशं सनत भगवत्सेवनामृतमदृशं सुखं जगतां त्रयेऽपि न लभेय । न प्राप्नुयाम् ॥ ४८ ॥

**कलिकालकालितगुणे धरातले सुजनो न नूनमधुनास्ति योग्यधीः ।**
**परतत्ववर्णनमयोग्यतावते ननु हव्यदानमिव निन्द्यते शुने ॥ ४९ ॥**

**कलीति** ॥ अधुना कलिकालेन । कलिसामर्थ्येनेत्यर्थः । कालिता नाशिता गुणा ज्ञानभक्तिवैराग्यादयो यस्मिन् । तस्मिन् धरातले योग्या तत्वज्ञानयोग्या धीर्बुद्धिर्यस्य स सुजनो नूनं प्रायो नास्ति । अयोग्यतावते योग्यताभाववते । योग्यतारहितायेत्यर्थः । जनाय परतत्ववर्णनं परब्रह्मोपदेशः । शुनकाय हव्यदानमिव हविर्दानमिव निंद्यते ननु । निदि कुत्सायां कर्मणि लट् ॥ ४९ ॥

**इति तं ब्रुवाणमयमब्रवीद्विभुर्भुवि सन्ति सौम्य पुरुषा गुणोचिताः ।**
**विमलान्मणीनिव गुणोज्झितानिमान् दयया विशोधय विशुद्धगोगणैः ॥५०॥**

**इतीति** ॥ अयं विभुः श्रीनारायणः । इति ब्रुवाणं तं श्रीमध्वं । हे सौम्य! भुवि गुणोचिता ज्ञानभक्त्यादिगुणानामुचिताः पुरुषास्सन्ति । विमलानिमान् पुरुषान् गुणोज्झितान् केवलं सत्संसर्गाद्यभावाद्भक्त्यादिगुणवर्जितान् । दयया कृपया विशुद्धानां गवां वाचां गणैस्समूहैः । गुणोज्झितान् सुषिरत्वेन सूत्रोज्झितान् सूत्रच्युतान् विमलान मणीन्विशुद्धगोगणैर्निर्मलजलसमूहैरिव विशोधय । विगताज्ञानादिदोषान् कुरु । शुध शौचे लोट् ॥ ५० ॥

**तव कीर्तिरार्तिमतिमात्रमानयेदशुभान्प्रभाकरविभेव कौशिकान् ।**
**कमलाकरानिव शुभान्प्रबोधयेत्परमाज्ञया मम विशेषतोऽनिशम् ॥ ५१ ॥**

**तवेति** ॥ हे मध्व! तव कीर्तिः, अशुभान् दुष्टाननिशं निरन्तरमतिमात्रमतिनरामर्तिं दुःखं , प्रभाकरविभा सूर्यप्रभा कौशिकानिव दिवान्धसंज्ञकान्पक्षिविशेषानिव । 'दिवान्धः कौशिको घूकः' इत्यमरः । कौशिका हि सूर्यप्रकाशेऽन्धा भवन्ति । आनयेत् । प्रापयेत । तवकीर्तिरशुभान् सज्जनान् प्रभाकरविभा कमलाकरानिव

पद्माकरानिव प्रबोधयेत् । विकासमानयेत् । बुध अवगमने लिङ् । तवकीर्तिसामर्थ्य-मेवेत्थंभूतं, मम परमाज्ञयोत्तमाज्ञया विशेषतोऽशुभानार्तिमानयेत् । शुभान् प्रबोधयेच्च । [अत्रोपमालङ्कारः] ॥ ५१ ॥

**इति सा महीधरमुखाद्विनिःसृता जगतां सुखाय विशदा सरस्वती ।**
**द्विजराजगोविषयतातिपूरितं प्रविवेश मध्वपृथुबुद्धिवारिधिम् ॥ ५२ ॥**

इतीति ॥ जगतां सुखाय । इति महीधरस्य धरणीधरस्य श्रीनारायणस्य मुखात् विनिसृता निर्गता विशदा शोभना सरस्वती वाक् । द्विजराजस्य श्रीवेदव्यासस्य गवां वचनानां विषयतया गोचरतयातिपूरितमतिसमृद्धम् । व्यासोक्तानामप्येता-दृशवचनानां हृदिवर्तमानत्वादितियावत् । मध्वस्य पृथुबुद्धिरेव विपुलबुद्धिरेव वारिधिः समुद्रस्तं प्रविवेश । महीधरमुखाद्गिरिकन्दराज्जगतां सुखाय विनिःसृता विशदा प्रसन्ना सरस्वती नदी द्विजराजगोविषयतातिपूरितं चन्द्रकिरणसम्बन्धादतिपूरितं सागरमिवेति श्लेषार्थः ॥ ५२ ॥

**मतमित्यवेत्य महितं महतोरभिधाय बाढमिति धीरमतिः ।**
**अनयोर्नियोगमधिरोपितवान् स्वशिरस्यनन्यसुवहं प्रणमन् ॥ ५३ ॥**

मतमिति ॥ धीरधीः स्थिरबुद्धिः श्रीमध्वः । महतोः श्रीव्यासनारायणोर्महितं सम्मतं मतं सिद्धान्तं । इति, उक्तप्रकारेणावेत्य मम गमनमेव तयोरभिमतमिति ज्ञात्वेतियावत् । प्रणमन्सन् बाढं तथास्त्वित्यभिधाय , अनन्यसुवहमन्येन सुखेन वोढुमशक्यं । अन्येन कर्तुमशक्यमितियावत् । अनयोर्नियोगं, आज्ञां स्वशिरस्यधिरो-पितवान् । शिरसि बद्धाञ्जलिर्भूत्वा बाढमित्यभिधाय तदाज्ञामङ्गीकृतवानिति भावः । [प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरासजससैः कथिते'ति तल्लक्षणम्] ॥ ५३ ॥

**आम्नायास्त्रय इव तत्त्वबोधकास्ते पापघ्नास्त्रय इव पावकाः प्रजानाम् ।**
**लोका वा सकलभृतस्त्रयोऽत्र रेजुः सानन्दा मुनिसुतधर्मसूनुमध्वाः ॥ ५४ ॥**

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के अष्टमः सर्गः ॥

**आम्नाया इति** ॥ सानन्दा आनन्दसहितास्त्रय आम्नाया इव वेदा इव प्रजानां तत्वबोधकाः परापरतत्वबोधयितारः । त्रयः पावका इव अग्नय इव प्रजानां पापानि घ्नन्तीति तादृशाः । त्रयो लोका इव सकलं बिभ्रतीति सकलभृतः सर्वं दधानास्ते त्रयः, मुनिसुतः पराशरसुतः श्रीव्यासः, धर्मसूनुः धर्मप्रजेश्वरसूनुः श्रीनारायणः, मध्वश्च, तेऽत्र, आश्रमे रेजुः । [प्रहर्षणीवृत्तम् । 'म्नौ जौ गस्त्रिदशयतिः प्रहर्षणीयम्' इति तल्लक्षणात् ] ॥ ५४ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां अष्टमः सर्गः ॥

चोदयन्तमथ गन्तुमादरात्तत्र धर्मजमजं प्रणम्य सः ।
सौख्यतीर्थकविलोकनायको वेदनायकपुरःसरो ययौ ॥ १ ॥

**चोदयन्तमिति** ॥ अथ सः । सुखमेव सौख्यं तत्कं तीर्थं शास्त्रं यस्मात्तादृशो यः कविलोकनायकः कवीनां ज्ञानिनां ये लोकाजनास्तेषां नायकः स्वामी श्रीमध्वाचार्यः । गन्तुं चोदयन्तं प्रेरयन्तमजं धर्मजं यमात्मकधर्मप्रजेश्वरजं नारायणं आदराद्भक्तेः । 'आदरं भजनं भक्तिरि'त्युक्तेः । प्रणम्य । वेदनायकः श्रीवेदव्यासः पुरस्सरोऽग्रगामी यस्य तादृशःसन् ययौ । नारायणाश्रमाद्व्यासाश्रमं ययौ ॥ १ ॥

आश्रमान्तरमवाप्य कृष्णतः श्राव्यमेव सकलं वशुश्रुवान् ।
चित्तवृत्तिमनुवृत्तिमान् गुरोः सम्यवेत्य गमनोन्मुखोऽभवत् ॥ २ ॥

**आश्रमान्तरमिति** ॥ एष श्रीमध्वः । अन्य आश्रमः, आश्रमान्तरं श्रीवेदव्यासाश्रममवाप्य गुरोः श्रीव्यासस्य चित्तवृत्तिं साधु सम्यग्यथावत्तिनथा, अवेत्य ज्ञात्वा । अनुवृत्तिरस्यास्तीत्यनुवृत्तिमान् । अनुवृत्तिं कुर्वन्सन्नित्यर्थः । कृष्णतः श्रीव्यासात्सकलञ्च श्राव्यं श्रोतव्यभागं शुश्रुवाञ्छुतवान्सन् । गमने परावृत्यदक्षिणबदरीं प्रत्यागमने । उन्मुखं यस्य तादृशोऽभवत् ॥ २ ॥

मन्दहासमृदुसुन्दराननं वन्दनीयमभिवन्द्य सत्पतिम् ।
प्राज्ञमौलिमणिरभ्यनुज्ञया तस्य तावदगमन्महामतिः ॥ ३ ॥

**मन्दहास इति** ॥ प्राज्ञानां मौलिमणिरिव शिरोमणिरिव । ज्ञानिश्रेष्ठ इत्यर्थः । महतीमतिर्यस्य तादृशः स श्रीपूर्णप्रज्ञः । मन्दो हासो यस्मिंस्तादृशं मृदु सुन्दरमाननं यस्य तं वन्दनीयं ब्रह्मादिभिर्वन्दितुमर्हं सत्पतिं श्रीवेदव्यासं अभिवन्द्य, तस्याभ्यनुज्ञया तावदगमत् । गमेर्लुङ् ॥ ३ ॥

तस्य वल्लभतमास वासभूर्मानसात्पृथुलमानसस्य नो ।
नात्यमत्क्षणमपि ह्यसाविदं नैष नाथविरही ततोऽभवत् ॥ ४ ॥

**तस्येति** ॥ तस्य श्रीव्यासस्य । पृथुलं बृहन्मानसं यस्य तस्य श्रीपूर्णप्रज्ञस्य मानसात्मनसोऽन्या वल्लभमातिप्रियावासभूरावासस्थानं नो आस । हि यस्मात्तस्मादसौ श्रीवेदव्यास इदं श्रीमध्वमानसं क्षणं क्षणकालमपि नात्यजत् । तत एव श्रीमध्वः । नाथविरहोस्यास्तीति नाथविरही नाथवियोगान्नाभवत् ॥ ४ ॥

> वीरदृष्टिकृतसिंहविभ्रमः शान्तदृष्टिकृतशान्तसम्मदः ।
> तत्र तत्र पथि पथ्यविभ्रमः पर्वतादवततार सर्वधीः ॥ ५ ॥

**वीरेति** ॥ वीराणां क्रूरप्राणिनां या दृष्टयस्तासां कृतः सिंहविभ्रमो सिंहविलासो येन तादृशः । शान्तया प्रसन्नया दृष्ट्या कृतः शान्तसम्मदः शान्तप्राणिसन्तोषो येन तादृशः । व्याघ्रादिक्रूरप्राणिनां सिंहवद्भयङ्करः, हरिणादिशान्तप्राणिनां सन्तोषकर इत्यर्थः । एवं तत्रतत्र पथि मार्गे पथ्यस्तदुचितो विभ्रमो विलासो यस्य तादृशः । सर्वा पूर्णा धीर्यस्य तादृशः श्रीपूर्णप्रज्ञः पर्वताद्धिमवतोऽवततार ॥ ५ ॥

> वानरेन्द्र इव तीर्णवारिधिर्वासुदेव इव रत्नराजवान् ।
> भीमसेन इव सूनवर्यहृन्निर्वृतिं स्वजनमानिनाय सः ॥ ६ ॥

**वानरेन्द्र इति** ॥ स श्रीमध्वः । तीर्णः सीतां दृष्ट्वा पुनरुत्तीर्णो वारिधिर्येन स वानरेन्द्रो हनूमान् कपीनिव । अङ्गदादिवानरानिवेत्यर्थः । रत्नराजो रत्नश्रेष्ठोऽस्यास्तीति तादृशः । जाम्बवन्तं जित्वानीतस्यमन्तकाख्यरत्नश्रेष्ठवानित्यर्थः । वासुदेवः श्रीकृष्णो वसुदेवादियादवानिव । सूनवर्याणि पुष्पश्रेष्ठानि हरतीति तादृशः सौगन्धिकवनात्कुसुम-श्रेष्ठहृद्भीमसेनो धर्मजादीनिव । स्वजनमनन्तमठवर्तिनं स्वकीयजनं निर्वृतिं सन्तोषमा-निनाय । प्रापयामास ॥ ६ ॥

> अग्निशर्ममुखपञ्चषैर्द्विजैरन्नमाहृतमलं पृथक् समम् ।
> कृत्स्नमादद्दनित्यविस्मयः कृत्स्नमत्तुमलमेष हि क्षये ॥ ७ ॥

**अग्नीति** ॥ अयं श्रीमध्वः । अग्निशर्मनामा कश्चिद्द्विजो मुखं पुरःसरो येषां तादृशाः । पञ्चवा षड्वा पञ्चषास्तैः । 'तत्पूरण' इति डट् । द्विजैः समं युगपदाहृतं

भिक्षार्थममरालयं प्रत्यानीतं । पृथक् प्रत्येकं आढ्नमप्यलं सपरिवारस्य स्वस्य पर्याप्तमन्नं कृत्स्नं सर्वश्चादत् । बुभुजे । इति, विस्मयो न भवतीत्यविस्मयोद्धृतं न भवति । कुत इत्यत आह– कृत्स्नमिति । एष श्रीमध्वः क्षये प्रलये कृत्स्नं सचराचरं सर्वमत्तुमलं हि । समर्थो हि । 'शीघ्रं जिगमिषुं मध्वं ज्ञात्वा सर्वे समाश्रयन् । अद्यैवाहं करिष्यामीत्येतच्छ्रुत्वाद्यापरः । सर्वेषामपिभक्तानामनुलंघ्यं क्षणं स्मरन् । गमनं त्वरितोमध्वः सर्वेभ्योऽपि क्षणं ददौ । तेच प्रत्येकमाजह्रुरन्नं सोपस्करं बहुः । यथा सपरिवारस्य पर्याप्तं स्यादयं पुनः । तत्सर्वं बुभुजे मध्वो नैतच्चित्रं समीरणे' ॥ इति श्लोकैः प्रसिद्धोऽयमर्थः ॥ ७ ॥

**व्यासदेवहृदयातिवल्लभं वासुदेवमगणय्य सद्गुणम् ।**
**साधयत्सकलदोषवर्जितं ज्ञानभक्तिदमनन्तसौख्यदम् ॥ ८ ॥**

**व्यासेति** ॥ अनन्तधीः श्रीपूर्णप्रज्ञः । व्यासश्चासौ देवश्च तस्य हृदयस्य मनसोऽतिवल्लभमतिप्रियं । व्यासेन स्वसूत्रेष्वभिप्रेतस्याभिप्रायस्यानुकूलमिति वा । श्रीमध्वप्रणीतभाष्ये हि सूत्राभिप्रायः सम्यग्विवृतः । आत्मनो रूपञ्च व्यासदेवहृदयातिवल्लभं । वासुदेवं श्रीहरिं । अगणय्या गणयितुमशक्याः सद्गुणा यस्य तं, सकला ये दोषास्तैर्वर्जितं साधयन् । अगणितसाधुगुणः सकलदोषवर्जितो हि भगवन्भाष्ये प्रतिपाद्यते । आत्मनस्स्वरूपमप्येतादृगिति भावः । ज्ञानञ्च भक्तिञ्च ददातीति तथोक्तं श्रीमत्स्वस्वरूपमपि तथा । सुखमेव सौख्यं । अनन्तं नित्यं यत्सौख्यं तद्ददातीति तथोक्तं । मोक्षदमित्यर्थः । स्वयमप्यनन्तसौख्यमोक्षदः । 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति वचनात् अद्भुतं ब्रह्मसूत्रगणभाष्यमात्मनः स्वस्यान्यरूपमिव देहमिवातनोच्चक्रे । अन्त्यकुलकमेतत् ॥ ८ ॥

**उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः ।**
**व्यञ्जयत्स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमत् ॥ ९ ॥**

**उक्तमिति** ॥ श्रीमध्वः । उक्तमुक्तमभिधेयमर्थंप्रति मुहुः पुनःपुनर्वेदवाक्यमनुवादयन् । तस्य वेदवाक्यस्यार्थञ्च स्मृतिवचोभिः पौरुषेयवाक्यैरञ्जसा व्यञ्जयन्

प्रकटीकुर्वत् । न केवलं स्वोक्तार्थे श्रुतिस्मृत्युदाहरणोपेतं किन्तु, अतियुक्तयुक्तिमत् । अतियुक्ता अत्यन्तमुपपन्ना या युक्तयस्ता अस्य सन्तीति तथोक्तं । उत्तमं भाष्यमात्मनोऽन्यद्रूपमिवातनोदित्यन्वयः । [अत्र कुलकेसर्वाणि विशेषणानि श्रीमध्वस्वरूपपरतयापि योज्यानि] ॥ ९ ॥

बालसङ्घमपि बोधयद्दृशं दुर्निरूपवचनं च पण्डितैः ।
अप्रमेयहृदयं प्रसादवत्सौम्यकान्ति च विपक्षभीषणम् ॥ १० ॥

**बालेति** ॥ श्रीमध्वः । बालसङ्घमपि मन्दबुद्धिमत्समूहमपि । अत्र बालशब्देन स्तनन्धया उच्यन्ते किन्तु स्थूलबुद्धिमन्तः । बोधयत् भगवत्स्वरूपं बोधयत् । स्वरूपमप्येतादृशं । तथा पण्डितैश्च विद्वद्भिरपि दुर्निरूपाणि, अस्य वाक्यस्यायमर्थ इति दुर्विज्ञेयानि वचनानि वाक्यानि यस्मिंस्तत् । सममेतत्स्वरूपेऽपि । अप्रमेयं हृदयमभिप्रायो यस्य तत् । प्रसादवत्प्रसन्नशब्दोपेतं । स्वरूपमप्येतादृशं सर्वजनेष्वनुग्रहकरणात् । सौम्या कान्तिर्यस्य तत् । विपक्षाणां प्रतिवादिनां भीषणं भयङ्करं । अतिदृढयुक्तियुक्तत्वात्प्रतिवादिभयङ्करमित्यर्थः । स्वरूपमप्येतादृशं । भाष्यमात्मनोऽन्यद्रूपमिवातनोत् ॥ १० ॥

अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकैरूपमन्यदिव धन्यमात्मनः ॥ ११ ॥

**अस्तेति** ॥ श्रीमध्वः । अस्तानि निरस्तानि दूषणान्यपशब्दादिदोषा यस्मात्तत् । स्वरूपञ्च कामादिदोषरहितं । अवन्ध्यान्यनिष्फलानि भाषणानि यस्मिंस्तत् । स्वरूपञ्च सत्यभाषणं । सकललक्षणानि समस्तलक्षणानि तैः । 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि'त्युक्तभाष्यलक्षणैस्समं सह लक्षितं लक्षणवत्तया वर्णितं । स्वरूपञ्च द्वात्रिंशल्लक्षणोपेतं । नाकिनायकैरपि देवश्रेष्ठैरपि माननीयं । स्वरूपमप्येतादृशं धन्यं पुण्यवद्भाष्यमात्मनोऽन्यद्रूपमिवातनोत् ॥ ११ ॥

एकविंशतिकुभाष्यदूषकं ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
अप्यदूष्यमतनोदनन्तधीर्भूतभाविभवदात्मभिः क्वचित् ॥ १२ ॥

एकेति ॥ अनन्ता धीर्ज्ञानं यस्य स श्रीपूर्णप्रज्ञः । एकाधिकाविंशतिरेकविंशतिः । तावत्संख्याकानि यानि कुभाष्याण्यन्यवादिभिःकृतकुत्सितभाष्याणि तेषां दूषकं । तानि च 'भारतीविजयश्चैव संविदानन्द एव च । ब्रह्मघोषः शतानन्द उद्वर्तश्चैव पञ्चमः । विजयो रुद्रभट्टश्च वामनाख्यस्तथाष्टमः । मयादवप्रकाशश्च नवमस्तत्रकीर्तितः । रामानुजस्तथा भर्तृप्रपञ्चो द्रविडस्तथा । ब्रह्मदत्तो भास्करश्च पिशाचो वृत्तिकारकः । तथा विजयभट्टश्च विष्णुकान्तस्तथैव च । वादीन्द्रस्तु ततः पश्चात्ततो माधवदासकः । ततः पश्चात्सङ्करश्चेत्येकविंशतिवादिभिः । प्रणीतानि निराचक्रे कुभाष्याणि महामतिः'॥ इति प्रसिद्धानि । भूता अतीता, भाविनो भविष्यन्तः, भवन्तो वर्तमानास्ते च ते आत्मनो जीवास्तैः क्वचिदप्यदूष्यमद्भुतं ब्रह्मसूत्रगणभाष्यमतनोच्चक्रे ॥ १२ ॥

गाङ्गमङ्गलतरङ्गभङ्गदप्रान्तसुश्रिहरिवेश्मकृत्समः ।
यद्रतैकतमवर्णलेखकः सत्यतीर्थ इह भाष्यमालिखत् ॥ १३ ॥

गाङ्गेति ॥ इह श्रीमद्भाष्यनिर्माणसमये सत्यतीर्थयतिः । यत् भाष्यं, तत्र गतो यद्गतः, य एकतमवर्णः एकोऽपिवर्णस्तस्य लेखकः पुरुषः । गङ्गायाः सम्बन्धिनो गाङ्गास्तादृशा ये मङ्गलतरङ्गाः शोभनतरङ्गास्तेषां भङ्गं नाशं ददातीति तादृशो यः प्रान्तस्तीरं तस्मिञ्छोभना श्रीर्यस्य तत् सुश्रि । 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति ह्रस्वः । तादृशं यद्धरिवेश्म तत्करोतीति तादृशस्तस्य समः सदृशः । गङ्गातीरे शोभनहरि-मन्दिरनिर्माणेन यत्सुकृतं, तद्भाष्यगतैकतमाक्षरलेखनेन भवेदिति भावः । एतादृशं भाष्यमादौ (सत्यतीर्थ) आलिखत् ॥ १३ ॥

तत्र देवमभिवन्द्य यातवान् स्वामिनो वचनगौरवाद्रुतम् ।
सानुगो विविधभूरतीत्य गोदावरीतटमगाद्लेशधीः ॥ १४ ॥

तत्रेति ॥ तत्रानन्तमठे देवं श्रीनारायणमभिवन्द्य स्वामिनो नारायणस्य वचनगौरवाद्वचने बहुमानात् । 'अविलम्बितं व्रजे'रिति नारायणवचनगौरवादित्यर्थः । द्रुतं

यातवान्, अलेशा पूर्णा धीर्यस्य स श्रीपूर्णप्रज्ञः । सानुगः सपरिवारःसन् विविधभू-र्नानादेशानतीत्य गोदावरीतटमगात् प्राप्तः । अत्र विविधभूरिति महाकविप्रयोगत्वात्साधुः । मितद्वादित्वात्कर्तरिड्डुप्रत्ययान्तो वा । भूरित्यव्ययं वा ॥ १४ ॥

**प्राज्ञवित्तमयमाप्तुमागतैः पण्डितैर्द्विनवशाखिभिः श्रुतीः ।**
**प्रस्तुता अभिदधौ परीक्षकैः षट् च तत्र समयानखण्डयत् ॥ १५ ॥**

**प्राज्ञेति** ॥ अयं श्रीपूर्णप्रज्ञाचार्यः । तत्र गोदावरीतटे प्राज्ञैर्लभ्यं वित्तं प्राज्ञवित्तं । विद्याविक्रयतारतम्येन लभ्यमित्यर्थः । आप्तुमागतैः, द्वेचते नवच द्विनव शाखा येषां सन्तीति तैः । द्विनवशाखाभिज्ञैरित्यर्थः । परीक्षकैः पण्डितैर्विद्वद्भिः प्रस्तुता सूक्त-खण्डादिमूलोच्चारणादिना प्रस्तुताः श्रुतीरभिदधौ । पाठतोऽर्थतश्चाभिदधौ । षट् षट्-संख्याकान् समयान्, भाट्ट प्राभाकर वैशेषिक नैयायिक बौद्ध चार्वाकसिद्धान्तान् । 'समयाः शपथाचारकाल सिद्धान्तसंविद' इत्यमरः । अखण्डयत् । निराचक्रे ॥१५॥

**ते पृथक् पृथगलं स्वशाखया दर्शनेन च परीक्ष्य निर्जिताः ।**
**सर्वविस्त्वमसि मुख्यतः कवे नास्ति ते सदृश इत्यथाब्रुवन् ॥ १६ ॥**

**त इति** ॥ ते द्विजाः । अमुं श्रीमध्वं पृथक्पृथक्प्रत्येकं स्वशाखया । स्वस्वशाख-येत्यर्थः । दर्शनेन स्वस्वसिद्धान्तेन परीक्ष्य निर्जिताः पराजिताःसन्तः । अथ कवे! ज्ञानिन् श्रीमध्व! त्वं मुख्यतः सर्वविन्सर्वज्ञोऽसि ते सदृशो नास्तीत्यब्रुवन् ॥ १६ ॥

**यस्त्रयीसकलपक्षशिक्षकस्तत्र संसदि वरिष्ठसम्मतः ।**
**शोभनोपपदभट्टनामकः पूर्णसंख्यमनमन्मुहुर्मुदा ॥ १७ ॥**

**य इति** ॥ त्रय्या वेदस्य सकलपक्षाणां सकलदर्शनानां शिक्षकः । वैदिकसि-द्धान्तानां विप्रतिपत्तौसत्यामिदमेवेति निर्णेतेत्यर्थः । तत्रसंसदि तस्यां सभायां वरिष्ठइत्ययमेवश्रेष्ठइति सम्मतसर्वेषां सम्मतः । यद्वा वरिष्ठस्य श्रीमध्वस्य सम्मतः, प्रियो यश्शोभनोपपदभट्टनामकः, शोभनोपपदं भट्ट इति नाम यस्य तादृशः । पूर्णा संख्या ज्ञानं यस्य तं श्रीमध्वं मुदा मुहुरनमत् ॥ १७ ॥

यस्तु तार्किकशिखामणिः सुधीर्वर्तमानसमयान्निराकरोत् ।
वेदभारतपुराणनिष्ठितो भाष्यमेतदशृणोत्स मध्वतः ॥ १८ ॥

य इति ॥ तार्किकशिखामणिस्तार्किकोत्तमः सुधीः शोभनबुद्धिर्यः शोभनभट्टः । वर्तमानसमयान् तत्कालेविद्यमानभाट्टादिसिद्धान्तान्निराकरोत् । निराचक्रे । वेदाश्च भारतञ्च पुराणानि च तेषु निष्ठितो निरतः । वर्तमानसमयेष्वन्यतमपक्षपातं विहाय वेदभारतपुराणोक्ताचारोपासनेषु निरत इत्यर्थः । स शोभनभट्ट एतच्छ्रीमध्वकृतं भाष्यं ब्रह्मसूत्रगतभाष्यं मध्वतः श्रीमध्वाचार्यादशृणोत् ॥ १८ ॥

नापरेषु रतिमाययौ क्वचिद्भाष्यमद्भुतमिदं स शुश्रुवान् ।
नारविन्दमकरन्दमाप्तवानच्छपिच्छ इव वाञ्छतीतरत् ॥ १९ ॥

नेति ॥ स शोभनभट्टः । अद्भुतमिदं भाष्यं शुश्रुवाञ्छुतवान्सन् , अरविन्दस्य मकरन्दं पुष्परसं । 'मकरन्दः पुष्परस' इत्यमरः । आप्तवान् प्राप्तवान्, अच्छौ श्वेतौ पिच्छौ छदौ यस्य तादृशः । हंसइत्यर्थः । इतरदन्यत्पुष्पमधु न वाञ्छति नेच्छतीव । वाञ्छ इच्छायां लट् । अपरेष्वितरेषु शास्त्रेषु क्वचिद्रतिं सुखं नाययौ । हंसोरविन्दमकरन्दमास्वाद्य मधु यथा न वाञ्छति तद्वदयं श्रीमध्वभाष्यादन्यत्रशास्त्रे रतिं न जगामेति भावः ॥ १९ ॥

तत्र तत्र सदसभासु भासुरो नन्दितीर्थसमयोक्तयुक्तिभिः ।
वादिनो विशकलय्य तान् समाक्रम्य वाच्यमुचितामुदाहरत् ॥ २० ॥

तत्रेति ॥ भासुरश्शोभमानः स शोभनभट्टस्तत्रतत्र सभासु वादिनः कुवादिनः । नन्दयतीति नद्यानन्दकारणं तीर्थं शास्त्रं यस्य तस्य समये शास्त्र उक्ताभिर्युक्तिभिर्विशकलय्य निराकृत्य तान् स्वनिराकृतान् वादिनः समाक्रम्यागणय्योचितां सभायोग्यां वाचमुदाहरत् ॥ २० ॥

चूर्णकृद्विविधशंखचूर्णकश्चूर्णनाय बहुधाप्यशक्नुवान् ।
अत्यजद्विफलधीः प्रदक्षिणावर्तवारिजमनर्घ्यमध्यहो ॥ २१ ॥

वक्ष्यमाणार्थे दृष्टान्तमाह—

**चूर्णकृदिति ॥** विविधा उच्चावचत्वेन नानाविधा ये शङ्कास्तेषां चूर्णं करोतीति तादृशश्चूर्णकृत्ताम्बूलचर्वणाङ्गचूर्णकृत् कश्चित्पुरुषः । न विद्यतेऽर्घो मूल्यं यस्य तदनर्घमपि, प्रदक्षिण आवर्तो यस्य तत्प्रदक्षिणावर्तं यद्वारिजं शङ्खः । बहुधापि मूषाग्निनिक्षेपादिनानाविधप्रयत्नेनापि चूर्णनाय चूर्णीकरणायाशक्नुवन्सन्नसमर्थःसन्नतएव विगतं फलं चूर्णलक्षणं प्रयोजनं यस्य तद्विफलं । विफलमिति धीर्बुद्धिर्यस्य तादृशः सन्नत्यजत् परित्यक्तवान् । अहो! सर्वैश्वर्यकारणं प्रदक्षिणावर्तशङ्खं परित्यजतोऽस्य मौढ्यमत्याश्चर्यमिति भावः ॥ २१ ॥

**अप्रमेयमतिशास्त्रमीदृशं यस्त्यजत्युपनतं सुदुर्लभम् ।**
**तस्य तुल्यमतिरेषु दुर्जनो नाथवास्य सदृशोऽस्ति नीचधीः ॥ २२ ॥**

एवं दृष्टान्तमभिधाय दार्ष्टान्तिकमाह—

**अप्रमेयमिति ॥** यः पुरुषः । उपनतं सत्संसर्गादिवशात्प्राप्तं सुदुर्लभं भाग्यरहितानामतिदुर्लभमीदृशं प्रदक्षिणावर्तशङ्खसदृशं । अप्रमेया मतिर्यस्य तस्य श्रीपूर्णप्रज्ञस्य शास्त्रं त्यजति । पुरुषार्थप्रदं न भवतीति बुद्ध्या परित्यजति । एषु दुर्जनस्तस्य शङ्खं त्यक्तवतस्तुल्यमतिः सदृशबुद्धिः । अथवेति पक्षान्तरसूचकं । अस्य श्रीमध्वशास्त्रं त्यजतः सदृशो नीचधीर्निकृष्टबुद्धिर्नास्ति ॥ २२ ॥

**कोऽपि तं गुणविशेषविच्च विक्रीय भूरिधनमाप पूरुषः ।**
**न ह्यनर्घ्यगुणमूल्यमाप्यते भाग्यदैवमिह योग्यतानुगम् ॥ २३ ॥**

**क इति ॥** हि यस्मात्, न विद्यतेऽर्घो मौल्यं यस्य सोऽनर्घस्तादृशो गुणो यस्य पदार्थस्यासौऽनर्घगुणः प्रदक्षिणावर्तशङ्खादिः तस्य मौल्यं केनापि पुरुषेण नाप्यते· तस्माद्गुणस्य प्रदक्षिणावर्तशङ्खगुणस्य विशेषं दाहेप्यचूर्णभावलक्षणविशेषं वेत्तीति तादृशः कोऽपि कश्चित्पुरुषस्तं अनर्घशङ्खं विक्रीय भूरिधनमपरिमितधनमाप । तथा हि । इहलोके भाग्यस्यादृष्टविशेषस्य नियामकंदैवं भाग्यदैवं योग्यतानुगं पुरुषयोग्यतानुसारि । पुरुषस्य योग्यतामनुसृत्य फलं ददातीति भावः ॥ २३ ॥

व्यक्तमुन्नतिमितोऽप्ययं जनस्तस्य यन्न लभतेऽखिलं फलम् ।
स्तोकमानसतया ततो व्रजेत्तस्य हन्त पुरुषस्य तुल्यताम् ॥ २४ ॥

**व्यक्तमिति** ॥ अयं जनः । आत्मन एव परोक्षतया निर्देशः । अहमितियावत् । व्यक्तं सम्यक्स्वयोग्यतानुसारेणेत्यर्थः । उन्नतिं ज्ञानभक्त्यादिगुणैराधिक्यमितोऽपि प्राप्तवानपिसन् । स्तोकं स्वल्पं मानसं ज्ञानं यस्य तस्य भावस्तत्ता तया । स्वल्पबुद्धितयेत्यर्थः । तस्य श्रीमध्वशास्त्रस्याखिलं सम्पूर्णं फलं ज्ञानलक्षणफलं न लभते न प्राप्नोतीति यत् । ततस्तस्मात्तस्य शङ्खविक्रयणेन भूरिधनमाप्तवतः पुरुषस्य तुल्यतां व्रजेत् । हन्त हर्षे ॥ २४ ॥

क्रीतवान्नरपतिर्महादरं सादरं पुनरुदारचेष्टितः ।
अर्चयन् सततमाप सम्पदो या न ता वचनचित्तगोचराः ॥ २५ ॥

**क्रीतवानिति** ॥ महान् पूज्यो यो दरः शङ्खस्तं । प्रदक्षिणावर्तशङ्खमित्यर्थः । क्रीतवान् धनं दत्वा स्वीकृतवान् । उदारमुत्तमं चेष्टितं व्यापारो यस्य तादृशो नरपती राजा पुनः सादरं बहुमानेन सहितं यथा तथा सततमर्चयन् पूजयन्सन् याः सम्पद आप । ताः सम्पदः वचनचित्तयोर्वाङ्मनसयोर्गोचरा विषया न ॥ २५ ॥

शास्त्रकल्पकतरोरमुष्य कः प्राप्नुयात्सकलमप्यहो फलम् ।
यस्तमुत्तमगुणं विडम्बयेद्रित्युदीर्य स जनानरञ्जयत् ॥ २६ ॥

**शास्त्रेति** ॥ अमुष्य श्रीमध्वप्रणीतस्य शास्त्रकल्पकतरोः शास्त्राख्यकल्पवृक्षस्य सकलं फलं ज्ञानलक्षणं मोक्षलक्षणं वा फलं कः प्राप्नुयात् । न कोऽपि प्राप्नुयात् । अहो! आश्चर्यं । अपि तथापि यश्चतुर्मुख उत्तमगुणं तं शङ्खं विक्रीयार्चयन्तं राजानं विडम्बयेदनुकुर्यात् । लबि अवलंसने । सः को ब्रह्मा प्राप्नुयात्, सकलं फलं प्राप्नुयादेव । ब्रह्मैव हि सर्वशास्त्रोक्तफलप्राप्तियोग्यः । शङ्खं क्रीत्वा सादरमर्चयतो नरपतेः सम्पदो यथा न वचनचित्तगोचराः, एवमेवैतच्छास्त्रकल्पतरोरखिलं फलं प्राप्तवतो विरिञ्चस्य सम्पदोऽपीति भावः । स शोभनभट्टइत्युदीर्य जनानरञ्जयत् । अतोषयत् । रञ्ज रागे लङ् ॥ २६ ॥

नेदृशैः कविभिरेव केवलं हन्त पूज्यचरणोऽभ्यपूज्यत ।
शर्वशक्रगुरुपूर्वदैवतैरप्यलं सुसमयोद्गमोत्सवे ॥ २७ ॥

नेति ॥ पूज्यौ चरणौ यस्य तादृशः । पूज्याचार्यो वा । अयं श्रीमध्वः । सुसमयस्य शोभनशास्त्रस्योद्गमोत्सवे निर्माणोत्सवे केवलमीदृशैः शोभनभङ्गमदृशैः कविभिर्विद्वद्भिरेव नाभ्यपूज्यत । किन्तु, शर्वो रुद्रः शक्र इन्द्रो गुरुर्बृहस्पतिः, ते पूर्वे येषां तानि दैवतानि देवास्तैरप्यलमभ्यपूज्यत । हन्त हर्षे । पूज पूजायां कर्मणि लङ् ॥२७॥

निम्नभूरिव सतीः प्रजा व्रजन् वारिदर्तुरशनैरपूरि सः ।
प्राज्यतापहरदर्शनाम्बुना तुङ्गदेशमिव दुर्जनं तु नो ॥ २८ ॥

निम्नेति ॥ व्रजन् गोदावरितटादुप्यपीठपुरं गच्छन् स श्रीमध्वः । प्राज्यं बहुलं तापं संसारक्लेशं हरतीति तादृशं यद्दर्शनं स्वसिद्धान्तशास्त्रं तदेवाम्बु जलं तेन । 'दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोरि'ति हेमचन्द्रः । सतीः तत्वज्ञानयोग्याः प्रजा अशनैः क्षिप्रं वारिददातीति वारिदः सचासौ ऋतुश्च वारिदर्तुः प्रावृट्कालः । निम्नभूरिव निम्नप्रदेशानिवापूरि पूरयामास । दुष्टश्चासौ जनश्च दुर्जनस्तं तत्वज्ञानायोग्यजनमित्यर्थः । वारिदर्तुस्तुङ्गप्रदेशमिव नो अपूरि । न पूरयामास ॥ २८ ॥

कर्मभिः सकललोककौतुकैर्मानितः पथि जनैः समागतः ।
सन्ननाम शिवनामकीर्तनं राजतासनपुरं विराजितम् ॥ २९ ॥

कर्मभिरिति ॥ पथि सकललोकानां समस्तजनानां कौतुकं कुतूहलं यैस्तैः कर्मभिः निमित्तैर्जनैर्मानितः पूजितःसन् समागतः । रजतासनस्य सम्बन्धि राजतासनं यत्पुरं तस्मिन्विराजितं शिव इति नाम शिवनाम, कीर्त्यतेऽनेनेति कीर्तनं वाचकं यस्य तं श्रीहरिं सन्ननाम ॥ २९ ॥

अच्युतप्रमतिरच्युतप्रियं तं दशप्रमतिमागतं तदा ।
वन्दमानमवलोक्य यां मुदं प्राप्तवांस्तदवधिर्न विद्यते ॥ ३० ॥

**अच्युतेति** ॥ तदाच्युतस्य प्रमतिः ज्ञानं यस्य सोऽच्युतप्रज्ञ इत्यर्थः । अच्युतप्रियं वन्दमानं तं, दश प्रमतयो यस्य तं, पूर्णप्रज्ञमागतमवलोक्य यां मुदं सन्तोषं प्राप्तवान् । तस्या अवधिस्तदवधिरियत्ता न विद्यते ॥ ३० ॥

प्रीतिमार्यर्यतिरुत्तमां पुरा प्रेषिताप्रतिमभाष्यदृग्ययौ ।
अप्यतोऽतिशयिनीं शुचिस्मितं तं विलोक्य सुचिरादिदृक्षितम् ॥ ३१ ॥

**प्रीतिमिति** ॥ पुरा एतदागमनात्पूर्वमेव प्रेषितं श्रीमध्वाचार्येण प्रेषितं यदप्रतिमभाष्यमसदृशभाष्यं तत् पश्यतीति प्रेषिताप्रतिमभाष्यदृगार्यर्यतिर्ज्येष्ठयतिः । लिकुचान्वयजेत्यर्थः । उत्तमां प्रीतिं सन्तोषं ययौ । इदानीं पुनः सुचिरात् सुचिरकाले द्रष्टुमिष्टं दिदृक्षितं शुचिस्मितं मन्दहासोपेतं, तं श्रीमध्वाचार्यं विलोक्य, अतोऽपि भाष्यदर्शनजातप्रीतेरप्यतिशयिनीं प्रीतिं ययौ ॥ ३१ ॥

पूर्णदृष्टिजलधेर्गृहीतवान् भाष्यसंज्ञममृतं सुखावहम् ।
चित्रमेष यतिराड् घनाघनो ग्राहयंश्च मनुजान्मुमोच नो ॥ ३२ ॥

**पूर्ण इति** ॥ पूर्णा दृष्टिर्ज्ञानं यस्य स एव जलधिः समुद्रस्तस्मात् । 'दृष्टिर्ज्ञानेऽक्ष्णिदर्शने' इत्यमरः । भाष्यमिति संज्ञा यस्य तत्सुखावहं सुखकरममृतं जलं । 'पयः कीलालममृतं जीवनं भुवनं वनं' इत्यमरः । गृहीतवानेष यतिराड्यतिश्रेष्ठः स एव घनाघनो वर्षुकमेघः । 'वर्षुकाब्दो घनाघनः' इत्यमरः । मनुजान् ग्राहयंश्च स्वयं नो मुमोच । चित्रमाश्चर्यम् । अयं भावः । वर्षुकमेघो जलधेर्जलं संगृह्य देशान्तरे वर्षन् स्वयं मुञ्चति रिक्तो भवति । अयं यतिश्रेष्ठस्तु मध्वाचार्याद्भाष्यं श्रुत्वा शिष्येभ्यो व्याकुर्वंश्च नो मुमोच । अनितरां तन्निरतोऽभूदिति ॥ ३२ ॥

सानुनीतिरथ नीतिमानयं भाष्यसद्गुणगणानवर्णयन् ।
शोभनाय गुरवे स्वभावतः कालतः कुमतलीनबुद्धये ॥ ३३ ॥

**सानुनीतिरिति** ॥ अथ कस्मिंश्चित्समये सानुनीतिरनुनयसहितो नीतिमानयं श्रीमध्वः । स्वभावतः स्वरूपतश्शोभनाय सज्जीवाय कालतः कलिकालवशात् , कुत्सितञ्च

तत् मतञ्च कुमतं मायिमतं तेन लीना निगूढा बुद्धिर्यस्य तस्मै गुरवेऽच्युतप्रज्ञाय भाष्यस्य सद्गुणानां गणान् समूहानवर्णयत् । वर्णवर्णने लङ् ॥ ३३ ॥

**उक्तिभिस्तमसकृत्सुयुक्तिभिर्बोधयन् बहुलधीः प्रसङ्गतः ।**
**स्थेयसो भिषगिवास्य हृद्गतं मूलदोषमरुचेरचिन्तयत् ॥ ३४ ॥**

**उक्तीति** ॥ बहुला धीर्यस्य स श्रीपूर्णप्रज्ञः । प्रसङ्गतः शोभना युक्तयो यासां ताभिरुक्तिभिर्वचनैस्तं स्वगुरुमसकृद्बहुवारं बोधयन्सन् । स्थेयसस्स्थिरबुद्धेः । 'स्थाणु स्थिरतरः स्थेयानेकरूपतयातुयः' इत्यमरः । बहुयुक्तिभिर्बोधनेऽपि मायिशास्त्रप्रवणैक-बुद्धेरिति भावः । अस्य स्वगुरोच्युतप्रज्ञस्य हृद्गतमरुचेः स्वशास्त्रेरुचिहीनस्य मूलदोषं कारणीभूतदोषं भिषगिवाचिन्तयत् । तस्य चिद्रोगचिकित्सां कुर्वन् भिषग्यथा यथा रोगिणोऽरुचिनिदानं दोषं चिन्तयेदाधिर्व्याधिर्वेत्यादि, तद्वदस्यापि शास्त्रेऽरुचिः किन्निबन्धना स्वभावतो दुष्टबुद्धित्वाद्वा, उतोपाधित इत्यस्य सच्छास्त्रेऽरुचिनिदाननूनं दोषं चिन्तयामासेति भावः । अत्र स्थेयस इति नारुचिविशेषणं । तथात्वे स्थेयः शब्दस्योगित्वेन ङीपिकृते स्थेयस्या इति भवेत् ॥ ३४ ॥

**दक्षपक्षविहृतेन ताडयन्भीषयन्समधिकस्वरश्रिया ।**
**हंसराट् कलिमलं निराकरोदेकदृष्टिमिव मानसाद्गुरोः ॥ ३५ ॥**

**दक्षेति** ॥ दक्षपक्षस्य शोभनसिद्धान्तस्य विहृतेन युक्तिकथनात्मक लीलया ताडयन्निराकुर्वन् । समधिको यः स्वरो व्याख्यास्वरस्तस्य श्रिया भीषयन् । हंसराट् परमहंसश्रेष्ठः श्रीमध्वो गुरोरच्युतप्रज्ञस्य मानसान्मनसः । 'हृन्मानसं मन' इत्यमरः । कलिमलं कलिदोषं । कल्यावेशनिमित्तकं सच्छास्त्रारुचिकारणीभूतं बुद्धिदोषमित्यर्थः । दक्षपक्षविहृतेन शोभनपतत्रविहारेण ताडयन्, समधिकस्वरया भीषयन् हंसराट् राजहंसाख्यपक्षिविशेषः गुरोर्महतो मानसात् मानससरसः । एकादृष्टिर्यस्य तं काकमिव निराकरोत् । निराचक्रे ॥ ३५ ॥

**निष्कलङ्कमिव चन्द्रमण्डलं पुण्डरीकमिव फुल्लतां गतम् ।**
**वारिशारदमिव प्रसादवच्चित्तमच्युतमतेर्भृशं बभौ ॥ ३६ ॥**

**निरिति** ॥ अच्युतमतेरच्युतप्रज्ञस्य चित्तं । निर्गतः कलङ्को यस्मात्तादृशं चन्द्रमण्डलमिव, फुल्लतां विकासभावं गतं पुण्डरीकमिव कमलमिव । 'पुण्डरीकं सिताम्भोज'मित्यमरः । प्रसादवन्नैर्मल्ययुक्तं शारदं शरदिभवं वारीव भृशमत्यर्थं बभौ ॥ ३६ ॥

**आननन्द स हि मध्वशास्त्रमाकर्णयन्कुसमयाग्रही पुरा ।**
**मोहपीतलवणोदको मुहुः प्राक्पिपासुरमृतं पिबन्निव ॥ ३७ ॥**

**आननन्देति** ॥ पुरा कुसमये मायिनः कुत्सितसिद्धान्ते य आग्रहः, अयं सत्सिद्धान्त इति पक्षपातः सोऽस्यास्तीति तादृशः । पश्चात् मध्वशास्त्रमाकर्णयन् सोच्युतप्रज्ञः पिपासुः प्राक्पिपासित अतएव मुहुर्मोहेनाज्ञानेन पीतं लवणोदकं येन तादृशः । लवणोदकमित्यविज्ञाय पीतलवणजल इत्यर्थः । पश्चादमृतं पिबन्निवाननन्द । पुरा तत्वबुभुत्सुःसन्मायिसमयएव तत्ववेदक इति मत्वा तच्छ्रवणादिना प्रवृद्धमिथ्याज्ञानः पश्चात्तन्निवर्तकं मध्वशास्त्रमाकर्णयन्नच्युतप्रज्ञः पिपासुः पीतलवणजलः पश्चादमृतं पिबन्निवाननन्देति भावः ॥ ३७ ॥

**विस्तृतान्तरवियत्पदौ यती आश्रयतां सुसमयप्रकाशनात् ।**
**तौ यथा विधुरवी अहो अहोरात्रमप्युरुतमो नृमोहकम् ॥ ३८ ॥**

**विस्तृतेति** ॥ विस्तृतमान्तरं ज्ञानं यस्य स पूर्णप्रज्ञः । स एव वियद्गगनं तदेव पदं आश्रयो ययोस्तौ यती लिकुचाह्वयजाच्युतप्रज्ञाख्यौ यती । अहश्च रात्रिश्च अहोरात्रं निरन्तराहोरात्रेऽपीत्यर्थः । शोभनश्चासौ समयश्च सुसमयः श्रीमध्वशास्त्रं तस्य प्रकाशनं प्रकटनं तस्मात् । तद्व्याख्यानादित्यावत् । नृणां मोहकमुरुतमो महदज्ञानं । वियत्पदौ वियदाश्रयौ विधुरवी सुकाले प्रकाशनादहोरात्रमुरुन्धकारं यथा, तथास्यतां । निराकुरुताम् । अहो आश्चर्यमनयोर्भाग्यमिति भावः ॥ ३८ ॥

**सज्जनानसह महादरेण नन्त्पापिनां प्रकृतितोऽप्रियाकृति ।**
**दारुणाघगणदारणं स्म स ग्राहयन्नपि सुदर्शनद्वयम् ॥ ३९ ॥**

सज्जनार्नाति ॥ स श्रीमध्वः । सज्जनान् तत्त्वज्ञानयोग्यान् नॄन् पुरुषान्, पापमेषामस्तीति तेषां प्रकृतितः स्वभावतोऽप्रियाऽऽकृतिः स्वरूपं यस्य तादृशं । पापिनामेतच्छास्त्रं सुदर्शनचक्रञ्चेति द्वयमपि स्वभावतो दुःसहं हि । दारुणानि यान्यघानि पापानि तेषां गणस्य समूहस्य दारणं विदारकं सुदर्शनद्वयमपि । शोभनं दर्शनं शास्त्रं, सुदर्शनचक्रञ्चेति तयोर्द्वयमपि महादरेण महतादरेण महाशङ्खेन च ग्राहयनिम । ग्राहयामास ॥ ३९ ॥

नन्वनन्यशरणात्मनां सतां सिद्धिविघ्नमुखदोषभेषजम् ।
ऐच्छदच्छलदयोदयादयं रूप्यपीठपुरगः कदाचन ॥ ४० ॥

नन्विति ॥ अयं श्रीमध्वः कदाचन रूप्यपीठपुरगःसन् । न विद्यते छलं व्याजं यस्याः सा अच्छला निर्व्याजा या दया सज्जनविषयकृपा तस्या उदयात् प्रादुर्भावात् । अन्यच्च तत् शरणं च, न विद्यतेऽन्यशरणमन्यरक्षको यस्य तादृश आत्मा मनो येषां तेषां । न विद्यतेऽन्यशरणं येषां तेऽनन्यशरणाः, अनन्यशरणा इत्यात्मा मनो येषां तेषामिति वा । श्रीमध्वाचार्यएव शरणं नान्य इति मनसा युक्तानामित्यर्थः । सतां सत्पुरुषाणां सिद्धेर्मोक्षसिद्धेर्योविघ्नः सएव मुखं मुख्यं येषान्ते तादृशा ये दोषास्तेषां भेषजमौषधमैच्छत् । सतां मोक्षविघ्नादिदोषप्रतीकारत्वेन श्रीकृष्णप्रतिष्ठां करिष्यामीत्यैच्छदिति भावः ॥ ४० ॥

गोपिकाप्रणयिनः श्रियः पतेराकृतिं दशमतिः शिलामयीम् ।
शिष्यकैस्त्रिचतुरैर्जलाशये शोधयन्निह ततो व्यगाहयत् ॥ ४१ ॥

गोपिकेति ॥ दशपूर्णामतिर्ज्ञानं यस्य स श्रीपूर्णप्रज्ञः । गोपिकाप्रणयिनः गोपिकानां वल्लभस्य श्रियः पतेर्भर्तुः श्रीकृष्णस्य शिलामयीं शिलाभिकामाकृतिं प्रतिकृतिं जलाशये तटाके । त्रयश्च चत्वारश्च त्रिचतुरास्तैः शिष्यकैः शोधयन्मलक्षालनं कुर्वन् कारयंश्च. ततः शोधनानन्तरमिह तटाके व्यगाहयत । अवगाहयामास । गाह् विलोडने लट् । अभ्यषिञ्चदिति भावः ॥ ४१ ॥

स्पर्शनाद्भगवतोऽतिपावनात्सन्निधानपदतां गतां हरेः ।
त्रिंशदुद्यतनरैः सुदुर्धरां लीलयानयदिमामसौ मठम् ॥ ४२ ॥

**स्पर्शनादिति** ॥ अतिपावनादतिपवित्रात् स्पर्शनादवगाहसमये स्वकरस्पर्शात्, भगवतो हरेः श्रीकृष्णस्य सन्निधानस्य पदमास्पदं तस्य भावस्तत्ता तां गतां । अतएव त्रिंशत् त्रिंशत्संख्याका य उद्यतनराः प्रतिमामुद्धर्तुमुद्यताः पुरुषास्तैः सुदुर्धरां सुतरां धर्तुमशक्यामिमां प्रतिमां स्वयमेव लीलयानायामेन मठमनयत । 'मठश्छात्रादिनिलयः' इत्यमरः ॥ ४२ ॥

मन्दहासमृदुसुन्दराननं नन्दनन्दनमतीन्द्रियाकृतिम् ।
सुन्दरं स इह सन्यधापयद्वन्द्यमाकृतिशुचिप्रतिष्ठया ॥ ४३ ॥

**मन्दहासेति** ॥ स श्रीमध्वः । मन्दो हासो यस्मिंस्तत् मृदु सुन्दराननं यस्य तं । 'मन्दहासहसितेन्दु'मिति क्वचित्पाठः । अतीन्द्रिया प्राकृतेन्द्रिया गोचरा, आकृतिः स्वरूपं यस्य तं । सुन्दरं वन्द्यं ब्रह्मादिस्तुत्यं नन्दनन्दनं नन्दगोपपुत्रं श्रीकृष्णं, आकृतेः प्रतिमायाः या शुचिप्रतिष्ठा शोभनप्रतिष्ठाविधानं तया, इहास्यां प्रतिमायां सन्यधापयत् । सन्निहितं कारयामास ॥ ४३ ॥

मानिनोऽपि हि वशीचकार यो दैवतप्रतिभयात्मनः खलः ।
यायजूकगुणमात्मनः स्मरन्यो जरावदितिगोत्र उच्यते ॥ ४४ ॥

**मानिन इति** ॥ कलापकमिदं । 'कलापकं चतुर्भिः स्या'दित्युक्तेः । स्वतेजसा स्वसामर्थ्येन विश्वस्य समस्तजगतः विस्मयं आश्चर्यं करोतीति तादृशः । अतएव जनैः पुनर्मुहुर्वन्द्यमानौ चरणौ पादौ यस्य तादृशः । चित्रो यो दिग्विजयः सर्वदेशस्थवादिविजयस्तेन कीर्त्या प्रशस्या कीर्तिरस्यास्तीति तादृशः । निजा आत्मीयाः प्रजा अनुदिनं प्रतिदिनं मोदयंस्तत्वोपदेशादिना सन्तोषयन् । वासुदेवदयितः श्रीकृष्णप्रियो महिष्ठा महती धीर्यस्य स श्रीपूर्णप्रज्ञः । यः खल आत्मनः स्वस्य दैवताल्लब्धा प्रतिभाप्रज्ञा दैवतप्रतिभा तया मान एषामस्तीति मानिनस्तानपीत्यर्थः । वशीचकार ।

यायजूकगुणं यष्टृत्वाख्यगुणमात्मनः स्वस्य स्मरन् । अस्मिन्नविद्यासहोमे स्वस्यैवयोग्यतामन्यस्य तदभावञ्च स्मरन्नित्यर्थः । जराघटित इति गोत्रं नाम यस्य तादृशः । 'गोत्रं क्षेत्रेऽन्वये चित्रे संभाव्ये बोधवर्त्मनोः । वने नाम्नि च गोत्रोद्रौ गोत्राभुवि गवां गणे' इति हेमचन्द्रः । उच्यते । जराघटितगोत्र इत्यस्य मोरडित्ताय इत्यपभ्रष्टसंज्ञा ॥

आत्मनः प्रियतमक्रतोरमुं पापपूरुषमवेक्ष्य घातकम् ।
तं निरस्य जनमप्यथाहितं सर्वभूधरसमर्थपूर्वकम् ॥ ४५ ॥

**आत्मन इति** ॥ अमुं पापपुरुषमात्मनः स्वस्य प्रियतमस्य पूर्वाश्रमे स्ववेदपाठकसुतस्य यः क्रतुस्तस्य घातुकं विघ्नकर्तारं । अहमेव कुलश्रेष्ठत्वाद्यजनकर्मणियोग्योऽयंत्वकुलीनत्वाद्याजनीयो न भवतीत्यादि कथनपूर्वकं सोपाध्यायसुतेन क्रियमाणयज्ञस्य विघ्नकर्तारमित्यर्थः । अवेत्य ज्ञात्वा तं जराघटितगोत्रजं, अथ ततोऽन्यमहितममित्रं जनं तत्पक्षीयजनमपि । भूधरो राजा बालकन्यापुराधिपः, सच समर्थौ पूर्वपक्षाधिप, पश्चिमपक्षाधिपौ तौ च सर्वे समस्तजनाश्च । सर्वभूधरसमर्थाःपूर्वका यथा भवति तथा । सर्वसमक्षमित्यर्थः । निरस्य निरुत्तरं कृत्वा अयाजयदित्युत्तरत्रान्वयः ॥

विश्वविस्मयकरः स्वतेजसा वन्द्यमानचरणः पुनर्जनैः ।
चित्रदिग्विजयकीर्त्यर्कीर्तिमान् मोदयन्ननुदिनं निजाः प्रजाः ॥ ४६ ॥

(४४) श्लोकार्थेन सहव्याख्यानमिदम् ॥ ४६ ॥

वासुदेवदयितो महिष्ठधीर्वासुदेवमथ साध्वयाजयत् ।
धर्मसूनुमिव धार्मिकं पुरा भीममूर्तिरयमेव भूसुरम् ॥ ४७ ॥

**वासुदेव इति** ॥ वासुदेवदयितो महिष्ठधीः श्रीपूर्णप्रज्ञः । वासुदेवं तन्नामकं स्वोपाध्यायसुतं धार्मिकं भूसुरं ब्राह्मणं । स्वतेजसा स्वबलेन विश्वविस्मयकरः । अतएव जनैर्वन्द्यमानचरणश्चित्रदिग्विजयकीर्त्यर्कीर्तिमाननुदिनं निजाः प्रजा मोदयन् वासुदेवदयितः श्रीकृष्णप्रियो भीम इति मूर्तिः स्वरूपं यस्य स भीममूर्तिरयमेव श्रीमध्वएव । यः खलु आत्मनो यायजूकगुणं शिवप्रीत्यर्थं नरमेधेन यष्टृत्वाख्यगुणं

सरन्सत्राज्ञो विहिंस्य शिवमिष्ट्वा तेन यष्टत्वं मखस्यार्थयन्नभिति भावः । आत्मनो दैवतप्रतिभया रुद्रादिदेवानां वरदाननिमित्तया प्रज्ञया मानिनोऽपि प्रबलानपि राज्ञो वशीचकार । यः खलो जरावर्घटितगोत्रो जरासन्धनामा उच्यते । पापपूरुषममुं जरासन्धमात्मनः स्वस्य प्रियतमो यः क्रतू राजसूययागस्तस्य घातकमवेत्य तं निरस्य संहृत्य । अथ सर्वभूभृत्समर्थपूर्वकं सर्वराजश्रेष्ठपूर्वकमहितं जनमपि निरस्य विजित्य पुरा धर्मसूनुमिव युधिष्ठिरमिव साधु सम्यग्यथाभवतितथायाजयदिति श्लोकचतुष्टयस्यैकान्वयः ॥ ४७ ॥

याज्यया समुचितानुवाक्यया सप्रवर्ग्यविभवैरभिष्टवैः ।
विश्ववेत्तुरनुजोऽत्र होतृतां प्राप्य दैवतततीरतोपयत् ॥ ४८ ॥

याज्ययेति ॥ विश्ववेत्तुः श्रीपूर्णप्रज्ञस्यानुजोऽत्र यज्ञे होतृतां प्राप्य । समुचितानुवाक्या पूर्वभाविनीऋग्यस्यास्तया समुचितानुवाक्ययुतयेत्यर्थः । याज्यया, अध्वर्युप्रैषानन्तरा प्रणवान्ता याज्या तया । सप्रवर्ग्यविभवैर्वषट्कारान्तैः, याज्यमहावीरप्रस्तोतृसामादिभिः सहितैः, अभिष्टवैश्शानवरतमुच्यमानप्रणवान्तैः । 'ब्रह्मजज्ञान'मित्याद्या ऋचोभीष्टवास्तैश्च दैवततती: देवसमूहानतोपयत् ॥ ४८ ॥

स प्रयुज्य निशिता निशातधीर्वैश्वदेववरशास्त्रसन्ततीः ।
राक्षसासुरनिरासकृत्सुरान् वीरवर्य इव भागमापयत् ॥ ४९ ॥

सप्रयुज्येति ॥ निशाता निशिता शिक्षितेतियावत् । धीर्यस्य स श्रीमध्वानुजः । निशिताः वीर्यवतीः, विश्वेच देवाश्च अग्निमारुतमरुत्वन्तस्तेषां सम्बन्धीनि वैश्वदेवानि तानि च तानि वरशास्त्राणि च तत्तन्मन्त्रसम्बन्धेनोत्तमास्तरूपाऋचश्च, तेषां सन्ततीः समूहान् प्रयुज्य । राक्षसाश्च असुराश्च तेषां निरासं करोतीति तादृशःसन् । यज्ञविघ्नकरराक्षसासुरनिरासकरसन्नित्यर्थः । सुरान् देवान् भागं हविर्भागं वीरवर्यइव वीर्यश्रेष्ठ इवापयत् । प्रापयामास । यथा कश्चिद्वीरश्रेष्ठः न्यायमार्गस्थितश्शास्त्रसन्ततीः प्रयुज्यान्यायेन धनादिभागमिच्छतो दुष्टान्निरस्य तद्भागार्हान् भागमापयेत्तद्वदिति भावः ॥

वायुना त्रिरपि पूर्वपायिना सर्वदैवतजिता तरस्विना ।
योऽपरोक्षवपुषाप्यपेक्षितः कोऽत्र वर्णयति तं महाक्रतुम् ॥ ५० ॥

वायुनेति ॥ त्रिरपि त्रिवारमपि । पूर्वं पातुं शीलमस्येति पूर्वपायी तेन । वेगेन सर्वान् देवान् विजित्य प्रथमतएव सोमं पीतवतेत्यर्थः । सर्वाणि दैवतानि जयतीति तेन, वेगेन सर्वदेवान् जितवतेत्यर्थः । तरो वेगोस्यास्तीति तेन । 'तरसी बलरंहसी'ति वैजयन्ती । वायुना यः क्रतुः, अपरोक्षं सर्वप्रत्यक्षगोचरं वपुः शरीरं यस्य तेनापि श्रीमध्वरूपेणापीत्यर्थः । अपेक्षितो निष्पन्नोभवेदित्यपेक्षितः । अत्र भुवि तं महाक्रतुं को वर्णयति? न कोऽपि तद्वर्णनसमर्थ इत्यर्थः । वायोस्त्रिरपि पूर्वपायित्वञ्च-'देवा वै सोमस्य राज्ञो देवा दिधिषे पूर्वपेय'मित्यादिश्रुतिसिद्धम् ॥ ५० ॥

ब्रह्मवेदननिविष्टचेतसां कर्म तत्र करणान्तरं भवेत् ।
ज्ञापयन्निति परात्मवेदकः कर्म धर्ममपि स व्यचीकरत् ॥ ५१ ॥

ब्रह्मेति ॥ ब्रह्मणो गुणपूर्णस्य श्रीहरेर्वेदने ज्ञाने निविष्टं निरतं चेतश्चित्तं येषां तेषां ब्रह्मजिज्ञासूनामिति भावः । तत्र ब्रह्मज्ञाने कर्म, अन्यत्करणं करणान्तरं साधनान्तरमित्यर्थः । भवेत् । जिज्ञासुनानुष्ठितं श्रवणादिकं यथा ज्ञानसाधनं भवेत्तद्वदेव जिज्ञासुना स्वर्गादिफलकामवर्जितेनानुष्ठितं कर्मापि ज्ञानसाधनं भवेदिति ज्ञापयन् परात्मनः श्रीहरेर्वेदको बोधकः, परमात्मज्ञापने प्रवृत्त इति भावः । स श्रीमध्वाचार्यः कर्मापि, भगवद्विषयकं यज्ञादिकर्मापि धर्मं मुमुक्षुधर्ममचीकरत । कारयामास हि ॥ ५१ ॥

यानि यानि चरितानि यानि यानीरितानि च मनोहराण्यहो ।
तानि तानि च विताननेतसो विश्वविस्मयकराणि भान्ति हि ॥ ५२ ॥

यानीति ॥ विततं विस्तृतं चेतो यस्य तस्य पूर्णप्रज्ञस्य यानि यानि चरितानि कर्माणि मनोहराणि यानि यानीरितानि च वचनानि च, तानि तानि विश्वविस्मयकराणि विश्वस्य समस्तजगतो विस्मयकराण्याश्चर्यकराणि सन्ति, भान्ति हि । शोभन्ते हि । अहो ॥ ५२ ॥

सरस्वतीर्वृत्तिकरीः शरीरिणामतीत्य वह्वीः समतीतगोत्रकः ।
पुरेव कृष्णप्रियमापदाश्रमं पृथुप्रबोधः पुनरुत्तमाश्रमम् ॥ ५३ ॥

सरस्वतीरिति ॥ पृथुः पूर्णः प्रबोधो यस्य स श्रीमध्वः । शरीरमेषामस्तीति तेषां पुरुषाणां वृत्तिं स्नानपानादिना जीवनं कुर्वन्तीति वृत्तिकर्यस्ताः । 'वृत्तिर्वर्तनजीवने' इति वैजयन्ती । वह्वीः सरस्वतीर्गोदावर्यादिनदीरतीत्य । समतीता गोत्राः सह्यविन्ध्यादिपर्वता येन तादृशःसन्पुरेव पूर्वमिव कृष्णप्रियं श्रीवेदव्यासप्रियमुत्तमाश्रमं श्रेष्ठबदरिकाश्रमं न विद्यते श्रमो यथा भवति तथाश्रमं पुनरापत् । प्राप । यद्वा— पृथुप्रबोधः । शरीरिणां वृत्तिकरीः स्वर्गादिदानेन प्रवृत्तिकरीः सरस्वतीर्वाचोऽतीत्य । 'ज्योतिष्टोमेन स्वर्ग कामो यजेत' इत्यादीनामापाततः स्वर्गादिविषयकप्रतीतिमुत्पाद्य तत्र प्रवृत्तिकारिणां वचसां विष्णुविषयत्वसमर्थनेन मोक्षपरतां प्रतिपाद्येतिभावः । समतीतं गोत्रं विश्वामित्रादिगोत्रविहिताचारविशेषो येन तादृशःसन् । कृष्णप्रियं भगवतःप्रियं । 'यत्याश्रमेतुरीये वै प्रीतिर्मम गरीयसी' इति वचनात् । उत्तमाश्रमं यत्याश्रमं पुरा ब्रह्मचर्याश्रमानन्तरं यथा प्राप । तद्वत् बदरिकाश्रमं प्रापेति भावः । [अत्र वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरा'विति लक्षणात् ] ॥ ५३ ॥

सहभोगमनन्यलभ्यमस्मै हनुमद्रूपवते ददौ पुरा हि ।
अनवेक्ष्य परं स्वभीष्टकर्त्रे प्रतिदातुं हरिरैधयत्तमेव ॥ ५४ ॥

सहेति ॥ हरिः पुरा रामावतारे हनूमद्रूपमस्यास्तीति तस्मै । अस्मै श्रीमध्वाय । अन्येन लभ्यो न भवतीत्यनन्यलभ्यस्तं । सहभुज्यतेऽत्रेति सहभोगस्तं सहभोगनामकं विरिञ्चिलोकस्वामिभावं ददौ हि । इदानीं पुनः सुष्ठु यदभीष्टं वेदान्तशास्त्रभाष्यकरणेन विवरणाद्यात्मकाभीष्टं तस्य कर्त्रे । प्रतिदातुमन्यदनवेक्ष्य अदृष्ट्वा तमेव पूर्वदत्तं सहभोगमेवैश्वर्यद्वर्धयामास । सातिशयमकरोदिति भावः । [अत्र 'विषमे ससजागुरू यदिस्युः सभरायश्च युजीह चन्द्रिका से'ति लक्षणाच्चन्द्रिकावृत्तम् ] ॥ ५४ ॥

प्रणम्य गुरुपादरादथ नियोगतो योग्यतः
स तस्य जगतां हितं विदधतो गतः सानुगः ।

महिष्ठहृदयो महामहिमसिन्धुरानन्दतो
निजैरभिगतोऽनमद्रजतपीठवासं हरिम् ।। ५५ ।।

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते
श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के नवमः सर्गः ।।

**प्रणम्येति** ।। महिष्ठं महद्धृदयं ज्ञानं यस्य स श्रीमध्वः । महान्यो महिमा तेन सिन्धुरिव सिन्धुः पूर्ण इत्यर्थः । गुरुं श्रीवेदव्यासमादरात् प्रणम्य । अथ जगतां हितं विदधतः कुर्वतस्तस्य श्रीवेदव्यासस्य । योग्यतस्त्वेन कर्तुं योग्यान्नियोगतः नियोगादाज्ञयेत्यर्थः । सानुगः सपरिवारःसन् गतः । बदरिकाश्रमे श्रीव्यासं नत्वा तदाज्ञया ततो निवृत्तः सपरिवारः पुनरपि रजतपीठपुरं गतःसन्निति भावः । आनन्दतः सन्तोषान्निजैः स्वभक्तैरभिगतःसन्रजतपीठे वासो यस्य तं श्रीहरिमनमत् । [ 'जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुरि'ति वचनात् पृथ्वीवृत्तम् ] ।। ५५ ।।

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां नवमः सर्गः ।।



**सपदि समस्कुरुत भृशं माधवगुणसाधकोऽथ मध्वरविः ।
भृगुकुलतिलकस्थानं तापकरः पापपान्थानाम् ॥ १ ॥**

**सपदीति ॥** अथ माया लक्ष्म्याः धवस्य भर्तुर्माधवस्य ये गुणा ज्ञानानन्दादयस्तेषां साधकः प्रतिपादकः । पापाः पापिष्ठाः ['आर्शाद्यच्'] कुवादिनस्त एव पान्था अध्वगाः तेषां तापकरो वादेनसन्तापकारी मध्वरविः मध्वाख्यभानुः । सपदि भृगोः कुलस्य गोत्रस्य तिलकइव श्रीपरशुरामस्तस्य स्थानं देशं । परशुरामसृष्टतौलवमण्डलमित्यर्थः । भृशं सम्यक्समस्कुरुत । अलञ्चक्रे । सम्पूर्वात् कृञो लङ्, सम्परिभ्यां इति सुट् ।

माधवस्य वसन्तस्य गुणा धर्मभूता बकुलाशोकचम्पकादिविकासः कोकिलकूजितादयश्च तेषां साधकः स्वप्रकाशेन सम्पादकः । 'चैत्रादिमासौ मधुमाधवौ द्वौ' इति हलः । पापा उलूकादिक्रूरप्राणिनस्ते च पान्थाश्च तेषां तापकरो रविः । भृगुकुलतिलकस्य शुक्रस्य स्थानं वृषभराशिं यथा स्वावस्थानेनालंकुर्यात्तद्वदिति भावः । [आर्यावृत्तम् । 'यस्याः प्रथमेपादे द्वादशमात्रास्तथातृतीयेऽपि । अष्टादशद्वितीये चतुर्थके पञ्चदशसार्ये'त्युक्तेः] ॥ १ ॥

**दशमतिशिष्यः कश्चिच्छुभजनतायै कुतूहलनतायै ।
विविधसुवृत्तं वाक्यं काव्यमिवोचे सनायकस्तवकम् ॥ २ ॥**

**दशेति ॥** कश्चिद्दशमतेः श्रीपूर्णप्रज्ञस्य शिष्यः । कुतूहलेन बदरिकाश्रमगमनादिकं श्रुत्वा विस्तरेण श्रोतुं कुतूहलेन नतायै नम्रायै । जनानां समूहो जनता शुभा सती या जनता तस्यै । विविधानि नानाविधानि सुवृत्तानि श्रीमध्वचरित्राणि यस्मिन् प्रतिपादकत्वेन तत् । आर्यातोटकादिनानावृत्तयुक्तं, सुवृत्तं काव्यमिव । नायकः स्वामी श्रीमध्वस्तस्य स्तवेन स्तुत्या सहितं सनायकस्तवकं । स्वार्थेकः । काव्यमपि काव्यनायकस्तवसहितं । वाक्यं, काव्यमिवोचे । [वृत्तं गीतिः । 'आर्या प्रथमार्धसमं यस्या अपरार्धमाहतां गीतिमि'त्युक्तेः] ॥ २ ॥

भुवनाद्भुतमध्वचेष्टितं न वदेमापि सुरायुषा वयम् ।
सकलं खलु किन्तु किञ्चिदप्यथ शुश्रूषुजनाय वर्ण्यते ॥ ३ ॥

**भुवनेति** ॥ वयं सुरायुषापि भुवनेष्वद्भुतमाश्चर्यं यन्मध्वचेष्टितं श्रीमध्वाचार्यचरित्रं सकलं समस्तं न वदेम खलु । देवानामायुषापि सर्वं वक्तुमसमर्था इति भावः । तर्हि नोच्यतामित्याशङ्क्य परिहरति किन्त्विति । किन्त्वथापि शुश्रूषुजनाय श्रोतुमिच्छवे जनाय किञ्चिदपि, अल्पं वा वर्ण्यते । [सुन्दरीवृत्तं । 'अयुजोर्यदि सौ लगौ लगौ समयो स्भौ रलगाश्च सुन्दरी'त्युक्तेः] ॥ ३ ॥

क्वचिदीश्वरदेवमेष भूपं खननं पान्थजनैर्विधापयन्तम् ।
स्वमपि प्रतिचोदयन्तमूचे क्रियया नोऽकुशलान्प्रबोधयेति ॥ ४ ॥

**क्वचिदिति** ॥ एष क्वचित्कुत्रचिद्देशविशेषे पान्थजनैः पथिकैः खननं खननव्यापारं विधापयन्तं कारयन्तं । स्वमप्यात्मानमपि प्रतिचोदयन्तं भवद्भिरपि खननं कर्तव्यमिति सपरिवारं प्रतिचोदयन्तं ईश्वरदेवं तन्नामकं भूपं । न कुशला अकुशलास्तान् । खननविषये चातुर्यरहितानित्यर्थः । नोऽस्मान् क्रियया प्रबोधय । ज्ञापय । त्वमेव किञ्चित् खननं कृत्वैवं क्रियतामित्यस्मान् प्रदर्शय । इत्यूचे । [चन्द्रिकावृत्तम् । 'विषमे समजागुरू यदि स्युः सभरायश्च युजीह चन्द्रिका सा' इत्युक्तेः] ॥ ४ ॥

प्रकारं प्रकटीकर्तुमारभ्य विरराम नो ।
महीयोमतिमाहात्म्याद्वैवश्येन खननवल्कः ॥ ५ ॥

**प्रकारमिति** ॥ खल ईश्वरदेवः प्रकारं खननप्रकारं प्रकटीकर्तुं स्वयं क्रियया स्पष्टीकर्तुमारभ्य । महीयस्यतिमहती मतिर्यस्य स श्रीपूर्णप्रज्ञस्तस्य माहात्म्यात्सामर्थ्यात् । विवशस्य परवशस्य भावो वैवश्यं तेन खननसन्नोविरराम । रमु क्रीडायां लिट् । ['व्याङ् परिभ्य' इति परस्मैपदम् । पथ्यावक्त्रवृत्तम् । 'युजश्चतुर्थतोजेन पथ्यावक्त्रं प्रकीर्तितमि'त्युक्तेः] ॥ ५ ॥

**नानेनेनानेना नेनोनूनेन ननु नुन्नाः ।**
**नानाना नो नूनं नानेनानूननानुन्नः ॥ ६ ॥**

महीयो मतिमाहात्म्यमुपपादयति—

**नेन्यादिना** ॥ न । अनेनेन । अनेन । अनेनोनूनेन । ननु । नुन्नाः । नानानाः । नो । नूनं । नानेनानूनना । अनुन्नः । इति पदच्छेदः । अनेनोनूनेन, न विद्यते एनः पापं यस्य सोऽनेनाः निर्दोष इतियावत् । अनूनो गुणादिभिर्नूनो न भवतीत्यनूनः, अनेनाश्चासावनूनश्चेत्यनेनोनूनः तेन । अनेनेन, अनानां प्राणानामिनः स्वामी तेन । अनेन श्रीमध्वरूपिणा मुख्यप्राणेन । नानानाः, अनाः प्राणास्तत्सम्बन्धित्वादानाः प्राणिनः । नानाविधाश्च ते आनाश्च नानानाः । यद्वा, अनाः प्राणा येषां सन्तीत्यनाः । अर्शादित्वान्मत्वर्थेऽच्, नानाविधाश्च तेऽनाः प्राणिनश्चेति नानाना इति वा । नूनं प्रायः ननुन्नाः न प्रेरिता नोननु न विद्यन्ते खलु । तर्हि भगवानप्यनेन प्रेरितः किमित्यत आह– नानेति, नानेनानूनना, नानाविधाश्च ते इनाः स्वामिनश्च नानेनाः तारतम्येन नानाविधाः सर्वजीवनामीश्वरा ब्रह्मादयः तेष्वनूनः नूनो न भवति, पूर्णः सचासौ नापुरुषश्च, अनूनना पूर्णपुरुषः श्रीनारायणः । अनुन्नोऽनेनाप्रेरितः । अतएव प्रायःशब्दार्थकं नूनमिति पदमुक्तमिति भावः । [एकाक्षरमुपगीतिवृत्तम् । 'आर्या परार्धतुल्ये दलद्वये प्राहुरुपगीतिमि'त्युक्तेः] ॥ ६ ॥

**यमशेषभवप्रभवः स्मरतामसुखाब्धिरपैति न चित्रमिदम् ।**
**मरुतीदृशि भान्ति हि यत्स्तवने यमशेषभवप्रभवः स्म रताः ॥ ७ ॥**

**यमिति** ॥ यं श्रीमुख्यप्राणं स्मरतां सतां । भवे संसारे प्रभवतीति भवप्रभवः संसारे विद्यमान इत्यर्थः । अशेषश्चासौ भवप्रभवश्च, सुखविरुद्धमसुखं दुःखं तदेवाब्धिरपैत्यपगच्छति । इण् गतौ लट् । किञ्च यत्स्तवनं यस्य स्तुतिः तस्मिन्रताः निरताः, यमश्च शेषश्च भवो रुद्रः स च यमशेषभवास्ते च ते प्रभवा ईश्वराश्च । जगतामितिशेषः । भान्ति स्म । ईदृशि, एतादृशमहागुणे मरुति श्रीमुख्यवायाविदं 'वैवश्येन खनन् खलो नोपररामे'तीदं चित्रमाश्चर्यं न भवति । यमशेषभवादिजग-

प्रभूणामपि तदधीनत्वादिति भावः । [तोटकवृत्तम् । 'यदितोटकमब्धिसकारयुत'मिति तल्लक्षणात्] ॥ ७ ॥

**सञ्चरन्नञ्चनीयः कदाचिद्विभुर्विष्णुपद्यास्तटं वैष्णवाग्रेसरः ।**
**प्रापदाप्तैर्निजैरेष शिष्यैर्वृतस्त्यक्तविश्वप्लवं शात्रवातङ्कतः ॥ ८ ॥**

**सञ्चरन्निति** ॥ सञ्चरन् तत्रतत्र पर्यटन्नञ्चनीयः पूज्यः । विष्णोर्भक्ता वैष्णवास्तेषु अग्रेसरः श्रेष्ठो विभुः सर्वसमर्थः । आप्तैः निजैः शिष्यैर्वृत एष श्रीमध्वः । कदाचित् शात्रवाणां शत्रूणामातङ्कतो भयात्त्यक्तास्त्याजिता विश्वप्लवाः समस्तनावो यस्मिन् तादृशं विष्णुपद्या गङ्गायास्तटं तीरं प्रापत् । जगाम । [स्रग्विणीवृत्तम् । 'कीर्तिता चतूरेफिका स्रग्विणी'त्युक्तेः] ॥ ८ ॥

**इमान्स्वस्वपूर्वाश्रयानात्मवाक्यात्सलीलं दयालुः स मूलाश्रयात्मा ।**
**निषेद्धूननादृत्य चानन्यलंघ्या तदात्याययत्तां नदीं संसृतिं वा ॥ ९ ॥**

**इमानिति** ॥ दयालुर्दयाशीलो मूलाश्रयः सर्वेषां मूलाश्रयभूत आत्मा स्वरूपं यस्य तादृशः स श्रीमध्वः । तदा, आत्मवाक्यात्स्ववाक्यात् स्वस्मात् स्वस्मात्पूर्वैः स्वस्वपूर्वैः स आश्रयो येषां तानिमान् स्वशिष्यान् । अन्यलंघ्या न भवतीत्यनन्यलंघ्या तां । नावाविनान्येन लंघयितुमशक्यामित्यर्थः । तां नदीं गङ्गां निषेद्धून् 'न गन्तव्यं न गन्तव्य'मिति निवारयतः पुरुषाननादृत्यागणय्य संसृतिं वा संसारमिव लीलयामहितं यथा भवति तथा सलीलमत्याययत् । तारयामास । इण् गतौ निजन्ताल्लङ् । सर्वेषां मूलाश्रयत्वेनाग्रतो यान्तं श्रीमध्वं तद्वचनादेको जग्राह । तमप्यन्यस्तमप्यन्य इति स्वस्वपूर्वाश्रयाञ्छिष्यान् क्रमेण स्वोत्तमभक्तियुक्तान्, स्वयं निषेद्धून् मोक्षविरोधिनः कामक्रोधादीननादृत्य यथा संसारात्तारयति तद्वत्तारयामासेति भावः । [भुजङ्गप्रयातं वृत्तम् । 'भुजङ्गप्रयातं चतुर्भिर्यकारै'रित्युक्तेः] ॥ ९ ॥

**वारयत वारयत वैरिसुहृदोऽमून् मारयत मारयत पारगमनात्प्राक् ।**
**आपतत आलपत इत्यवददुच्चैः स त्वरकराजपुरुषानुचितवाचा ॥ १० ॥**

**वारयतेति** ॥ स श्रीमश्वः । वैरिवृन्दोऽस्मद्वैरिप्रियाननून् वारयन् वारयन् निवारयन्तु निवारयन्तु । पारगमनात्तीरगमनात् प्राक् मारयत मारयत । उभयत्रापि संभ्रमेद्विरुक्तिः । इत्यालपतो भाषमाणानापततोऽभित आपततः त्वरकाणां तुरुष्काणां राजात्वरक्रराजस्तस्य पुरुषान् भटानुचितवाचा तान् प्रवक्तुमुचितया वाचा । तुरुष्कभाष-येत्यर्थः । उच्चैरित्यवदत् । [इन्दुवदनावृत्तम् । 'इन्दुवदना भजसनैः सगुरुयुग्मै-रि'त्युक्तेः] ॥ १० ॥

**न जडा जले पतत साहसादहो न भयं हि वो बहुतया वहोर्जितात् ।**
**भवतां पतिं क्षितिपतिं दिदृक्षवः प्रतियाम केन कलहं चिकीर्षथ ॥ ११ ॥**

**नेति** ॥ हे जडाः! विवेकशून्याः! यूयं साहसाज्जले न पतत । अहो आश्चर्यं भवतामविवेकितेति भावः । कुत इत्यत आह— नेति । वो युष्माकं बहुतया, अस्मदपेक्षया बहुत्वेनाबहोर्युष्मदपेक्षयाल्पसंख्याकाज्जनाद्भयं नहि । इतश्च जले न पततेत्याह— भवतामिति । वयं भवतां पतिं स्वामिनं क्षितिपतिं राजानं दिदृक्षवो द्रष्टुमिच्छवःसन्तः प्रतियाम । प्रत्यागच्छाम । तस्मात्केन, केनकारणेन कलहं चिकीर्षथ । कर्तुमिच्छथ । इत्यवददित्यन्वयः । [मञ्जुभाषिणीवृत्तम् । 'सजसाजगौ भवति मञ्जुभाषिणी'त्युक्तेः] ॥ ११ ॥

**वचसेत्यनेन स पराञ्ज्यरुणद्भुजगान्नरेन्द्र इव मन्त्रबलात् ।**
**उदतारयत्परिजनं मृतिभीः सरितश्च देवसरितश्च समम् ॥ १२ ॥**

**वचसेति** ॥ स श्रीमश्वः । इत्येवमुक्तेन अनेन वचसा परान् द्विषतः । नरेन्द्रः कश्चिद्गारुडिगः । 'नरेन्द्रो विषवैद्येचेत्यभिधानं' । मन्त्रबलान्मन्त्रसामर्थ्याद्भुजगानिव सर्पानिव न्यरुणत् । रुरोध । रुधिरावरणे लङ् । परिजनं स्वसेवकजनं, मृतिश्च भीश्च मृतिभियौ तुरुष्केभ्यो मरणभये तत्र सरित्तस्याः । देवसरितः गङ्गायाश्च समं युगपदुदतारयत् । उत्तारयामास । [प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरा सजससैः कथिता' इत्युक्तेः] ॥ १२ ॥

निर्विकारचरितोऽपि परीतः क्रूरकिङ्करसहस्रतयेन ।
स व्रजन्नुदलसज्जगदीशः सिंहराडिव सृगालसमूहे ॥ १३ ॥

निरिति ॥ स जगदीशः श्रीमध्वः । क्रूरं यत्किङ्करसहस्रतयं तुरुष्कराजभृत्यसहस्रं तेन परीतोऽपि परिवृतोऽपि निर्विकारं चरितं व्यापारो यस्य तादृशःसन् व्रजन् गच्छन्सन् । सृगालसमूहे सृगालवृन्दे सिंहराडिवोदलसन् । शुशुभे । [स्वागतावृत्तं । 'स्वागतारनभगैर्गुरुणाच' इत्युक्तेः] ॥ १३ ॥

अप्रकम्प्यवपुषं सुरासुरैः सिंहसंहननमेनमुन्नतम् ।
प्राप्तमात्मनगरान्तिकं नृपः प्रेक्ष्य सौधशिखरे स्थितोऽब्रवीत् ॥ १४ ॥

अप्रकम्प्येति ॥ सौधशिखरे सौधोपरिभागे स्थितो नृपस्तुरुष्कराजः । सुरासुरैरप्रकम्प्यमधृष्यं वपुर्यस्य तं सिंहसंहननं वराङ्गरूपोपेतं । 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इत्यमरः । उन्नतं प्रांशुमेनं श्रीमध्वं, आत्मनो नगरान्तिकं नगरसमीपं प्राप्तं प्रेक्ष्य । इत्यब्रवीत । [रथोद्धतावृत्तम् । 'रात्परैर्नरलगैरथोद्धता' इत्युक्तेः ॥ १४ ॥

रिपुनृपप्रणिधिप्रतिशङ्कया पथिकपाटनकर्मणि दीक्षितैः ।
सुमुख मे पुरुषैः परुषैः कथं यमभटैरिव नासि विहिंसितः ॥ १५ ॥

रिपुनृपेति ॥ हे सुमुख! रिपुश्चासौ नृपश्च तस्य प्रणिधयो गूढपुरुषा इति या प्रतिशङ्का, आशङ्का तया । 'प्रणिधिर्गूढपुरुष' इत्यमरः । पथिकानां पान्थानां पाटनकर्मणि हिंसनकर्मणि दीक्षितैस्तदेकनिरतैर्यमभटैरिव परुषैः क्रूरैः मे पुरुषैर्भटैः कथं विहिंसितः संहृतो नासि । [द्रुतविलम्बितवृत्तम । 'द्रुतविलम्बितमाह नभौ भरौ' इत्युक्तेः] ॥ १५ ॥

अप्लवदेवनदीतरणं ते हन्त कथं च चिकीर्षसि किं त्वम् ।
तं निगदन्तमिति प्रभुरीह स्माह महापुरुषोत्तमदासः ॥ १६ ॥

अप्लवेति ॥ ते तव, न विद्यते प्लवो नौर्यस्याः साचसा देवनदी च तस्यास्तरणं लङ्घनं कथं केन प्रकारेण? हन्त! प्लवरहितगङ्गातरणमाश्चर्यमिति भावः । त्वं किञ्च किं वा चिकीर्षसि? इतःपरं कर्तुमिच्छसि? इत्यब्रवीदिति पूर्वेणान्वयः । महांश्चासौ पुरुषोत्तमदासश्च स श्रीमध्वः । इह, इति प्रभृतिः आदिर्यस्य तदितिप्रभृति । इत्यादिवाक्यमित्यर्थः । निगदन्तं तं नृपतिं तद्भाषया, इत्याद्यं चित्रं वाक्यमाहस्मेत्युत्तरश्लोकेनान्वयः । [दोधकवृत्तम् । 'दोधकमिच्छति भत्रितयाद्गाविल्युक्तेः] ॥१६॥

योऽसौ देवो विश्वदीपः प्रदीप्तः कुर्मः सर्वं तत्परानुग्रहेण ।
यामस्तावच्चूर्णमाशामुदीचीमित्याद्यं तद्भाषया चित्रवाक्यम् ॥ १७ ॥

य इति ॥ विश्वं दीपयति प्रकाशयतीति विश्वदीपः विश्वप्रकाशको योऽसौ देवः प्रदीप्तः प्रकाशमानः । सर्वमशेषं कर्म तत्परानुग्रहः, तस्य परमानुग्रहस्तेन कुर्मः । कथमप्लवदेवनदीतरणमित्यादेरिदमुत्तरं । तावत्तूर्णमुदीचीमाशामुत्तरां दिशं यामो गच्छामः । किं चिकीर्षसीत्यस्योत्तरमेतत् । इति आद्यं यस्य तदित्याद्यं चित्रवाक्यं तद्भाषया आह स्म । [शालिनीवृत्तम् । 'मन्तौ गौ चेच्छालिनीवेदलोकै'-रित्युक्तेः] ॥ १७ ॥

गाम्भीर्यं धृतिमुरुवीर्यमार्यभावं तेजोऽग्र्यं गिरमपि देशकालयुक्ताम् ।
राजास्य स्फुटमुपलभ्य विस्मितोऽस्मै राज्यार्धं सपदि समर्पयाम्बभूव ॥ १८ ॥

गाम्भीर्यमिति ॥ राजा श्रीमध्वस्य गाम्भीर्यं, धृतिं धैर्यं, उरुवीर्यं, उत्कृष्टसामर्थ्यं, आर्यभावं पूज्यतां, विद्वत्तां वा, अग्र्यं तेजः, देशश्च कालश्च ताभ्यां युक्तां योग्यामित्यर्थः । गिरमपि स्फुटं सम्यगुपलभ्य प्राप्य श्रुत्वा दृष्ट्वाचेत्यर्थः । विस्मितःसन् सपद्यस्मै श्रीमध्वाय राज्यार्धं राज्यस्यार्धभागं समर्पयाम्बभूव । [प्रहर्षिणीवृत्तम् । 'आशाभिर्मनजरगाः प्रहर्षिणीयमि'त्युक्तेः ॥ १८ ॥

दण्डार्हवृद्धिविषयो नृपपूरुषाणां राज्यार्हवृद्धिविषयोऽभवदित्यमेषः ।
नीतिं प्रकाशयितुमेव विपत्सु कार्या गन्तुं प्रभुः प्रसभतोऽपि तथा व्यधात्सः ॥

दण्डेति ॥ नृपपूरुषाणां नृपभटानां दण्डार्हो दण्डनयोग्य इति या बुद्धिस्तस्या विषय एष श्रीमध्वः । इत्थं नृपस्य राज्यार्ह इति बुद्धिः, तस्या विषयोऽभवत् । स प्रसभतो बलाद्गन्तुं प्रभुरपि समर्थोऽपि, प्रसभतो गन्तुमशक्तानां विपत्स्वापत्सु कार्यां नीतिं तत्तद्देशकालात्मशक्त्याद्यनुसारेण प्रवृत्तिप्रकारं दर्शयितुमेव तथा व्यधाचकार । यथा राजा राजपुरुषाश्च परितुष्टाभवेयुस्तथा कृतवानिति भावः । [वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजाजगौग' इत्युक्तेः] ॥ १९ ॥

**कदाचिच्चोराणां निकरमवलोक्याभिपततामवस्थाप्य स्वीयान् करगपटपिण्डार्थमतिकृत् । चरन्नेतेष्वेतानथ मिथइहाघातयदहो विभुः सम्मोह्य प्राग्विजय इव संशप्तकगणान् ॥ २० ॥**

**कदाचिदिति** ॥ विभुः श्रीमध्वः । कदाचिदभिपततां चोराणां निकरं सन्दोहमवलोक्य स्वीयान् स्वकीयान् सर्वानवस्थाप्यैकत्रस्थापयित्वा । स्वयमेकं पटं पिण्डीकृत्य गृहीत्वा, करं हस्तं गच्छतीति करगः सचासौ पटश्च तस्य पिण्डे या अर्थमतिः धनमतिः तां करोतीति तादृशस्सन् । एतेषु चोरेषु मध्ये चरन्नितस्ततः पर्यटन्नेतान् संमोह्य मोहयित्वा प्राक्पूर्वं भारतयुद्ध इत्यर्थः । विजयोऽर्जुनः । 'बीभत्सुर्विजयः पार्थः सव्यसाची धनञ्जय' इति भारतोक्तेः । संशप्तकगणानिव मिथः परस्परमघातयत् । हनहिंसागत्योर्णिजन्ताल्लङ् । [शिखरिणीवृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'त्युक्तेः] ॥ २० ॥

**अन्यत्र च चोरान् धन्यप्रवरोऽसौ शूराञ्छतसंख्यान्प्राप्तान् स्वजिघांसून् । एकेन तु शिष्येणाकृष्टकुठारान्निस्ताडितयूथ्यानद्रावयत द्राक् ॥ २१ ॥**

**अन्यत्रेति** ॥ असौ धन्यप्रवरः श्रीमध्वः । अन्यत्र च, शतं संख्या येषां ताञ्छूरान् स्वस्य जिघांसून् प्राप्तानागतान् । एकेन शिष्येण उपेन्द्रतीर्थाख्येनाकृष्टा कुठाराः परशवो येभ्यस्तान् । तेनैव शिष्येण, यूथे भवो यूथ्यः, निस्ताडितो नितरां ताडितो यूथ्यो येषां ताञ्चोरान् द्रागद्रावयत् । द्रावयामास । [मणिमालावृत्तम् । 'त्यौ त्यौ मणिमालाछिन्नागुहवक्त्रैरि'त्युक्तेः] ॥ २१ ॥

**क्वचिच्छिलाच्छटाभ्रमादमुं ससङ्गमत्यजन् ।**
**अवेक्ष्य दस्यवः पुनः कुतूहलात्तमानमन् ॥ २२ ॥**

**क्वचिदिति** ॥ क्वचिदन्यत्र दस्यवः ससंघं शिष्यसमूहसहितममुं मध्वं दृष्ट्वा । शिलानां छटेतिभ्रमात् । 'सटाच्छटाभिन्नघनेनबिभ्रते'त्यादिप्रयोगाच्छटाशब्दः समूहार्थे प्रसिद्धः । एते शिलासमूहा न मनुष्या इति भ्रान्तेरित्यर्थः । ससङ्गममुमत्यजन् । पुनः पश्चादवेक्ष्य कुतूहलात्कौतुकात्तं श्रीमध्वमानमन् । [प्रमाणिकावृत्तम् । 'प्रमाणिका जरौ लगावि'त्युक्तेः] ॥ २२ ॥

**सत्योच्छेदे सेच्छायातं व्याघ्राकारं दैत्यव्याघ्रम् ।**
**प्रालेयाद्रेः प्रान्ते प्राज्ञः पाणेर्लीलालेशेनास्यन् ॥ २३ ॥**

**सत्येति** ॥ प्राज्ञः सर्वज्ञः श्रीमध्वः । प्रालेयाद्रेर्हिमाचलस्य । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका चाथ'त्यमरः । प्रान्ते समीपे सत्यस्य सत्यतीर्थस्योच्छेदे संहारे । देवं संगृह्याग्रतो गच्छतः सत्यतीर्थस्य हिंसायामिति यावत् । इच्छयासहितः सेच्छ आयात आगमनं यस्य तं । व्याघ्रस्याकारइवाकारो यस्य तं, दैत्यव्याघ्रं दैत्यश्रेष्ठं । ('स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूल-नागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरः) पाणेर्हस्तस्य लीलाया लेशेनैकदेशेन । पाणिना किञ्चित्ताडनमात्रेणेत्यर्थः । आस्यन्निराचके । असु क्षेपणे लङ् । तथोक्तम्– मध्वं दुर्विपहं मत्वा देवं संगृह्य चाग्रतः । प्रयान्तं सत्यतीर्थार्थं जिघांसुर्व्याघ्र आपतदिति । [विद्युन्मालावृत्तम् । 'मो मो गो गो विद्युन्माले'त्युक्तेः] ॥ २३ ॥

**प्राप स नारायणतः शुद्धशिलात्मप्रतिमाः ।**
**यासु स पञ्चासहिता दोषसहितः सन्निहितः ॥ २४ ॥**

**प्रापेति** ॥ स श्रीमध्वः । बदरिकाश्रमं प्राप्य नारायणतश्शुद्धाः पवित्रा याः शिलात्मप्रतिमाः शिला आत्मा स्वरूपं यासां ताश्शिलात्मानः ताश्च ताः प्रतिमाश्च ताः प्राप । लेभे । यासु प्रतिमासु, दोषः भगवद्द्वेषादिदोष एषामस्तीति दोषिणस्तैरसहितः

स श्रीनारायण एव पद्मासहितो रमयासहितस्सन्निहितः । [माणवकवृत्तम् । 'भात्तलगा माणवकमि'त्युक्तेः] ॥ २४ ॥

पाराशर्यः परतत्त्वप्रसिद्ध्यै तात्पर्यार्थं परमं भारतस्य ।
व्यक्तं वक्तुं नियुनक्ति स्म साक्षादेनं धन्यं भुवने मन्यमानः ॥ २५ ॥

पाराशर्य इति ॥ पराशरस्यापत्यं पुमान्पाराशर्यः व्यासः । भुवने जगत्येनं श्रीमध्वं साक्षान्मुख्यतो धन्यं मन्यमानःसन् जानन्सन्, परतत्त्वस्य भगवत्स्वरूपस्य प्रसिद्ध्यै सम्यग्ज्ञानाय । भारतस्य महाभारतस्य परमं तात्पर्यार्थं तात्पर्यसिद्धार्थं व्यक्तं स्पष्टं यथा भवति तथा वक्तुमेनं श्रीमध्वं नियुनक्ति स्म । न्ययोजयत् । युजिर् योगे लट् । [वातोर्मीवृत्तम् । 'वातोर्मीयं गदिताम्भौ तगौग' इत्युक्तेः] ॥ २५ ॥

तीर्थेषु तीर्थेषु च सौख्यतीर्थः क्षेत्रेषु च क्षेत्रविदां वरिष्ठः ।
गोविन्दमावन्द्य सहानुगोऽगाद्गङ्गां पुनस्तुङ्गतरङ्गमालाम् ॥ २६ ॥

तीर्थेष्विति ॥ क्षेत्राणि विदन्तीति क्षेत्रविदस्तेषां क्षेत्रपरिज्ञानवतां मध्ये वरिष्ठः सुखमेव सौख्यं सौख्यकरं तीर्थं शास्त्रं यस्मात् स श्रीमध्वः । तीर्थेषु पवित्रेषु । 'तीर्थं मन्त्र्याद्युपाध्याय शास्त्रेष्वम्भसि पावने । पात्रोपायावतारेष्वि'ति वैजयन्ती । तीर्थेषु च क्षेत्रेषु च गोविन्दं श्रीहरिमावन्द्य सहानुगः सशिष्यःसन् पुनस्तुङ्गा उन्नता तरङ्गमालास्तरङ्गपंक्तयो यस्यां । तां गङ्गामगात् । इण् गतौ लुङ् । [इन्द्रवज्रावृत्तम् । 'स्यादिन्द्रवज्रायदि तौ जगौग' इत्युक्तेः] ॥ २६ ॥

प्लवैरपेतामवलोक्य सिंधुं सरोजबन्धुं च तदाप्तसिंधुम् ।
तटे निषण्णानधिकं विषण्णान्निरीक्ष्य शिष्यानतरत्स एताम् ॥ २७ ॥

प्लवैरिति ॥ स श्रीमध्वः । तदा सिन्धुं गङ्गां प्लवैर्नौभिरपेतां रहितामवलोक्य सरोजबन्धुञ्च पद्मबन्धुं सूर्यञ्च । आप्तः प्राप्तः सिन्धुः समुद्रो येन तं । अस्तङ्गतमिति यावत् । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरित् स्त्रियामि'त्यमरः । अवलोक्याधिकं यथा भवति तथा विषण्णान् भीतांस्तटे गङ्गातीरे निषण्णाञ्छिष्यान्निरीक्ष्यैतां गङ्गामतरत् । [उपेन्द्रवज्रावृत्तम् । 'उपेन्द्रवज्रा जतजास्ततो गावि'त्युक्तेः] ॥ २७ ॥

न वानरेन्द्रस्य विलङ्घिताब्धेर्न वा नरेन्द्रस्य विहर्तुरस्याम् ।
इमेऽस्मरंस्तद्वपुषोऽन्यथास्य शक्तस्य शङ्क्येत विपत्कथं तैः ॥ २८ ॥

नेति ॥ इमे श्रीमध्वशिष्याः । विलङ्घितोऽब्धिर्येन तस्य वानरेन्द्रस्य कपिश्रेष्ठस्य हनुमतो नास्मरन् । अधीगर्थदयेति कर्मणि षष्ठी । अस्यां गङ्गायां विहर्तुर्नरेन्द्रस्य राज्ञो भीमसेनस्य वा नास्मरन् । अन्यथा, तीर्णाब्धिं हनुमन्तं वा, कौमारे गङ्गायां विहरन्तं भीमसेनंवास्मरंश्चेत् । हनुमदादितनुरेव श्रीमुख्यप्राणो मध्वनामा प्रादुर्बभूवेति श्रुतमस्मरंश्चेदिति भावः । तर्हि तद्वपुषः पूर्वं हनुमदादिस्वरूपवतश्शक्तस्य गङ्गातरणे समर्थस्यास्य श्रीमध्वस्य विपत्तैश्शिष्यैः कथं शङ्क्येत । शकि शङ्कायां लिट् । तत्स्मरणाभावादस्य विपदमाशङ्किर इति भावः । [उपजातिवृत्तम् । 'अनन्तरोदीरित लक्ष्मभाजौ पादौ यदीया उपजातयस्ताः' इति लक्षणात् । इतःपरं चतुर्दशश्लोकेषूपजातिवृत्तम्] ॥ २८ ॥

जगत्प्रदीपायितगोगणाढ्ये दिवाकरे मध्वदिवाकरे च ।
अव्यक्तरूपे श्रियमत्यजन्द्राक् सहाम्बुजैस्तन्नयनाम्बुजानि ॥ २९ ॥

जगदिति ॥ प्रदीपवदाचरन्तीति प्रदीपायिताः, जगतां लोकानां प्रदीपायिता ये गोगणा रश्मिसमूहास्तैराढ्यः सम्पन्नस्तस्मिन् दिवाकरे सूर्येऽव्यक्तं रूपं यस्य तस्मिन् । अस्तमितेसतीत्यर्थः । जगत्प्रदीपायितगोगणाढ्ये जगत्प्रदीपायितवाक्समूहसम्पन्ने मध्वदिवाकरे च मध्वाख्यसूर्येचाव्यक्तरूपेसति चक्षुरविषयेसति । तेषां शिष्याणां नयनान्यम्बुजानीव तानि । अम्बुजैः पद्मैःसह द्राक्छ्रियं कान्तिमत्यजन । त्यज हानौ लङ् । अयं भावः रवावस्तङ्गतेसति मध्वमदृष्ट्वा विजने तटे बिभ्यतां शिष्याणां नेत्रकान्तिरपगतदिति ॥ २९ ॥

पदं पयोर्वा विनतातनूजस्तीर्त्वा नदीं तामदीनसत्त्वः ।
अनार्द्रवासाः सकुतूहलार्द्रैर्देवभूदेवमुखैर्ववन्दे ॥ ३० ॥

पदमिति ॥ अदीनं सम्पूर्णं सत्वं बलं यस्य स श्रीमध्वः । तां नदीं गङ्गां विनतातनूजो गरुडः पयोर्गोः पदं वा पदमिव तावच्छीघ्रं तीर्त्वा । अनार्द्रं वासो

वस्त्रं यस्य तादृशःसन् । नावाविनापि तां महानदीं तीर्त्वा अनार्द्रवसनःसन्नित्यर्थः । अतएव कुतूहलार्द्रैः कुतूहलपूर्णैः, नृदेवा भूपा, भूदेवा विप्रास्ते मुखा मुख्या येषां तैर्जनैर्ववन्दे । वन्दितोऽभूत् ॥ ३० ॥

भीतैररातेरतिमात्रमत्र न तारकैरप्यथ तारकैः सः ।
स्वतेजसा विस्मितभूपनुन्नैः प्लवेन शिष्यान्निरतारयत्ताम् ॥ ३१ ॥

भीतैरिति ॥ अथ स श्रीमध्वः । अत्र गङ्गातटेऽरातेश्शत्रोरतिमात्रमत्यन्तं भीतैः । अतएव तारका न भवन्तीति नतारकास्तैः । नैकधेत्यादिवन्नसमासोऽयं । स्वतेजसा प्लवादिरहितनदीतरणेऽप्यनार्द्रवस्त्रत्वादिस्वसामर्थ्येन, तद्दर्शनेनेत्यर्थः । विस्मितभूपनुन्नैः-विस्मितनृपप्रेरितैस्तारकैर्दाशैः । कर्तरितृतीया । प्लवेन करणे तृतीया । शिष्यांस्तां गङ्गां निरतारयत् । तारयामास ॥ ३१ ॥

विशङ्कटं स्वस्तटिनीतटं ते दीपप्रदीप्तं जनताभिपूर्णम् ।
सञ्चोदयत्पण्डितमण्डलाढ्यं नाथावलोकोत्कहृदोऽभ्यपश्यन् ॥ ३२ ॥

विशङ्कटमिति ॥ नाथस्य श्रीमध्वस्यावलोकेन दर्शनेन । दर्शने इति वा । उत्कमुत्कण्ठायुक्तं हृन्मनो येषां तादृशास्ते शिष्याः । विशङ्कटं विस्तीर्णं दीपप्रदीप्तं दीपेन प्रकाशमानं, जनानां समूहो जनता तयाभिपूर्णं, सञ्चोदयन्तो विप्रतिपन्नप्रमेयं वेदार्थं वा, पृच्छन्तो ये पण्डिता विद्वांसस्तेषां यन्मण्डलं समूहस्तेनाढ्यं निबिडं । स्वः स्वर्गस्य तटिनी नदी गङ्गा तस्यास्तटमभ्यपश्यन् ॥ ३२ ॥

आम्नायमाम्नायविदां विदग्ध्यं सभावभेदं प्रवदन्तमत्र ।
दैव्यां सभायामिव पद्मयोनिं प्रैक्षन्त साक्षात्सुखतीर्थमेते ॥ ३३ ॥

आम्नायमिति ॥ एते श्रीमध्वशिष्या अत्र गंगातटे, आम्नायविदां वेदविदां विदग्धं चतुरं । भावभेदेनाभिप्रायविशेषेणसहितं यथा भवति तथा सभावभेदमाम्नायं वेदं प्रवदन्तं व्याचक्षाणं सुखतीर्थं श्रीमध्वं । देवानां सम्बन्धिनी दैवी तस्यां सभायां पद्मं योनिः कारणं यस्य तमिव साक्षात् प्रत्यक्षत ऐक्षन्त । ददृशुः ॥ ३३ ॥

प्राप्तस्ततो हस्तिनराजधानीं मासानुवासेद स वासयोग्यान् ।
मठान्तरेऽनन्तगुणान्तरः स्वेकान्तदेशे सरितोऽसमीपे ॥ ३४ ॥

**प्राप्त इति** ॥ ततः हस्तिनाख्याचसा राजधानी नगरी तां प्राप्तः स श्रीमध्वः । सरितो गंगायाः समीपो न भवतीत्यसमीपस्तस्मिन् । एकान्तश्चासौ देशश्च तस्मिन् । मठान्तरं मठविशेषस्तस्मिन् । अनन्तस्य श्रीहरेर्ये गुणास्तेष्वान्तरं मनो यस्य तादृशः सन् । वासयोग्यान् मासानुवास । चातुर्मासानुवासेति भावः ॥ ३४ ॥

भित्वा भुवं देवनदी जगाम शाखाविशेषेण निषेवितुं तम् ।
वाणी च यत्प्रेष्यतया कृतार्था शिवादिवन्द्या न तदत्र चित्रम् ॥ ३५ ॥

**भित्वेति** ॥ देवनदी गंगा तं श्रीमध्वं निषेवितुं शाखाविशेषेण शाखाप्रभेदेन भुवं भित्वा जगाम । यस्माच्छिवादिवन्द्या वाणी सरस्वती च यत्प्रेष्यतया यस्य श्रीमध्वस्य प्रेष्यतया दासीत्वेन, कृतोऽर्थः प्रयोजनं यया तादृशी कृतकृत्या । तस्मादत्र श्रीमध्वे तत् गङ्गा तं सिषेव इत्येतत् चित्रमाश्चर्यं न ॥ ३५ ॥

गुरुप्रवर्हस्य पदारविन्दं विदूरतः सा प्रणनाम मूर्ता ।
औदार्यसौन्दर्यततुं तनुं तामालक्ष्य शिष्यैरतिविस्मितं तैः ॥ ३६ ॥

**गुर्वीति** ॥ मूर्ता प्राकृतदृष्टिगोचररूपा सा गंगा । गुरुप्रवर्हस्य गुरुश्रेष्ठस्य श्रीमध्वस्य पदारविन्दं विदूरतः प्रणनाम । तैः शिष्यैः, औदार्यञ्च सौन्दर्यञ्च, तयोस्ततुं मूर्तिभूतां तां गंगासम्बन्धिनीं तनुं स्वरूपमालक्ष्य दृष्ट्वा अतिविस्मितमत्यन्तं विस्मयः प्राप्तः ॥ ३६ ॥

तेनोपयातेन कदाचनाथ वाराणसीं पापनिवारणेन ।
अवादि वाणी वलिनः स्वशिष्यान् विलोक्य लीलावसरेऽवलिप्तान् ॥ ३७ ॥

**तेनेति** ॥ अथ चातुर्मास्यावसानानन्तरं कदाचिद्वाराणसीं काशीमुपयातेन, पापानां निवारणं निवारकस्तेन । तेन श्रीमध्वेन लीलावसरे क्रीडासमयेऽवलिप्तान दृप्तान्

बलमेषामस्तीति बलिनस्तान् स्वशिष्यान्विलोक्य; इति वक्ष्यमाणप्रकारेण वाणी वागवादि । उक्ता ॥ ३७ ॥

**नियुद्धसिद्ध्यै युगपद्धि वीरम्मन्या भवन्तोऽभिपतन्तु मां द्राक् ।**
**समस्तशक्तिं न युनक्ति यः स्वामत्रास्मदाज्ञां स निराकरोति ॥ ३८ ॥**

**नियुद्धेति ॥** आत्मनो वीरान् मन्यन्त इति वीरम्मन्याः । 'आत्ममाने खश्चे'ति खश् । खित्वाद'रुर्द्विषदजन्तस्यमुमि'ति मुमागमः । भवन्तो नियुद्धसिद्ध्यै बाहुयुद्ध-सिद्ध्यै । 'नियुद्धं बाहुयुद्धंस्यादि'त्यमरः । द्राक्शीघ्रमभिपतन्तु । योऽत्र मयासहनियुद्धे स्वामात्मीयां समस्तशक्तिं न नियुनक्ति न नियोजयति । सोऽस्माकमाज्ञा अस्मदाज्ञा तां निराकरोति । उल्लङ्घयति । नियुद्धे यो मयि समस्तां शक्तिं न नियोजयति तस्य मदाज्ञोल्लङ्घनदोषः स्यादिति भावः ॥ ३८ ॥

**इतीरयन् पञ्चदशैष यूनः प्राप्तान् प्रयुद्धान्युगपन्निपात्य ।**
**उत्थीयतां यस्य समर्थता स्यादिति ब्रुवाणः शनकैर्जहास ॥ ३९ ॥**

**इतीति ॥** एष श्रीमध्वः । इति पूर्वोक्तप्रकारेण, ईरयन्युगपत् प्राप्तान् प्रकर्षेण स्वसमस्तशक्त्या युध्यन्तीति प्रयुद्धास्तान् । प्रकृष्टयुद्धं कुर्वत इत्यर्थः । 'आदिकर्मणि क्तः कर्तरिचे'ति कर्तरि क्तः । ईशन्नियुद्धे गुर्वाज्ञालङ्घनदोषभयात्स्वसमस्तशक्त्या नियुद्धं कुर्वत इति भावः । पञ्चाधिका दश पञ्चदश तान् यूनो युगपन्निपात्य । यस्य समर्थता, उत्थातुं सामर्थ्यं स्यात्तेनोत्थीयतामिति ब्रुवाणःसञ्छनकैर्जहास । हसे हसने लिट् ॥ ३९ ॥

**सौमेरवं गौरवमावहन्ति तवाङ्गमङ्गांगुलयश्च नोऽङ्गे ।**
**पुरा विनश्याम इतो दयालो स्वामिन् विमुञ्चेत्यवदंस्तदाते ॥ ४० ॥**

**सौमेरवमिति ॥** तदा ते शिष्याः । अंग! नाथ! श्रीमध्व! तवाङ्गं हस्तादिकं, अंगुलयश्च प्रत्येकं नोऽस्माकमङ्गे शरीरे सुमेरोः सम्बन्धि सौमेरवं गौरवं गुरुत्वमावहन्ति । इतोऽस्मात्कारणाद्विनश्यामः पुरा नष्टाः स्मणम् अदर्शने लट् । 'यावत्पुरानिपात-योर्लडि'ति लट्प्रत्ययः । हे स्वामिन्! विमुञ्चेत्यवदन् ॥ ४० ॥

**तेनाथ मुक्तैरतिविस्मयस्तैरवाप्यनालोच्य हि तत्स्वरूपम् ।**
**यद्भ्रूविजृम्भेण सशम्भुशक्रं जगत्समस्तं नियतम् निकामम् ।। ४१ ।।**

**तेनेति** ।। अथ स्वामिन्! विमुञ्चेति प्रार्थनानन्तरं । तेन श्रीमध्वेन मुक्तैस्तैः शिष्यैः तत्स्वरूपं श्रीमध्वस्य स्वरूपमनालोच्य हि सम्यगविचार्यैव । 'हि हेताववधारण' इत्यमरः । अतिविस्मयोऽवापि सम्प्राप्तः । सम्यक्तत्स्वरूपविचारेसति नैतावन्मात्रेण विस्मयो युज्यत इति भावः । तथाहि यद्भ्रूविजृम्भेण यस्य श्रीमध्वस्य भ्रूविलासेन सशम्भुशक्रं शम्भुशक्राभ्यां सहितं समस्तं जगन्नितरां कामो यथा भवति तथा । यथेच्छमित्यर्थः । नियतं हि प्रेरितं हि । एवं भूतस्य पञ्चदशयूनां निपातनं नचित्रमिति भावः ।। ४१ ।।

**सदाक्ष्यमाक्षिप्तसमस्तपक्षको यतिः प्रभुं कोऽप्यमरावतीपदः ।**
**जिगीषया ज्ञानसहायकर्मणः प्रसाध्यतां साधनतेत्युदाहरत् ।। ४२ ।।**

**सदाक्ष्यमिति** ।। दक्षस्य चतुरस्य भावो दाक्ष्यं तेन सहितं यथा भवति तथा सदाक्ष्यं । आक्षिप्ता निराकृताः समस्तपक्षाः सर्ववादिनां सिद्धान्ता येन तादृशः अमरावतीत्यमरेन्द्रपुरीति यत्पदं नाम यस्य सोऽमरेन्द्रपुर्याख्य इत्यर्थः । कोऽपि कश्चन यतिः सन्यासी जिगीषया जेतुमिच्छया प्रभुं श्रीमध्वंप्रति । ज्ञानं सहायो यस्य तच्च तत्कर्मच तस्य, साधनता पुरुषार्थसाधनत्वं प्रसाध्यतां । ज्ञानिकृतमेवकर्माक्षयपुरुषार्थमोक्षसाधनमिति प्रसङ्गादभिहितेसति तदेव सम्यग् प्रसाध्यतामित्युदाहरदिति भावः । राधसाधसंसिद्धौ कर्मणि लोट् ।। ४२ ।।

**संसाधितार्थे भगवत्ययुक्तिवित्पप्रच्छ स ज्ञानपदार्थमुग्रधीः ।**
**ज्ञातः स ते ज्ञान्यसि चेन्न चेन्न सः प्रश्नो घटेतेति निराकृतेप तम् ।। ४३ ।।**

**समिति** ।। भगवति श्रीमध्वे संसाधितार्थेसति, सम्यक्साधितः संसाधितोऽर्थो, ज्ञानसहायकर्मणः पुरुषार्थसाधनत्वाख्यंतत्प्रष्टंप्रमेयं येन तस्मिन्सति । युक्तिविन्न-भवतीत्ययुक्तिवित्, श्रीमध्वसाधितार्थे निराकरणयुक्तिमजानन्नुग्रधीः स यतिः । ज्ञानपदार्थं ज्ञानमिति पदस्य वाच्यं पप्रच्छ । एष श्रीमध्वः त्वं ज्ञान्यसिचेत्, स

ज्ञानपदार्थस्ते त्वया ज्ञातः । नचेत्त्वत्प्रश्नो ज्ञानपदार्थः क इति प्रश्नो न घटते । न युज्यते । घट परिवर्तने ल्ट् । इति तं यतिं निराकृत । निराचक्रे । अयं भावः ज्ञानपदार्थं पृच्छंस्त्वं येनकेनापि ज्ञानेन युक्तोऽसि न वा । आद्ये ज्ञानवता त्वया तत्पदार्थो ज्ञातएव, ततश्च सिद्धविषयोऽयं प्रश्नः स्यात् । एवञ्च तवोन्मत्तसाम्यं स्यात् । द्वितीये ज्ञानमात्ररहितस्य प्रश्नः शब्दानां तद्विषयाणामर्थानाञ्च परिज्ञानाभावान्नघटते । ज्ञानमात्राभावाङ्गीकारस्य ज्ञानाविनाभूतप्रश्नस्य च परस्परविरुद्धत्वादिति ॥ ४३ ॥

**विततततमतमोऽन्तं साधयन्त्या नितान्तं सदसि सदसि रेजे व्याख्यया व्यासशिष्यः**
**सकलसमयिहस्ताम्भोजबन्धाभिनन्दी शरदि शरदि चन्द्रश्चन्द्रिकासम्पदेव ॥**

**विततेति** ॥ व्यासशिष्यः श्रीमध्वः । सदसि सदसि सर्वसभासु, अत्यन्तं विततं विततमं तादृशं यत्तमोऽज्ञानं तस्यान्तं नाशं नितान्तमत्यन्तं साधयन्त्या व्याख्यया । चन्द्रश्शरदि शरदि, विततततमतमोऽन्तमतितरां व्याप्तान्धकारनाशं साधयन्त्या चन्द्रिकासम्पदेव कौमुदीसम्पदेव । समयाः सिद्धान्ता येषां सन्तीति समयिनः, सकलाः समस्ता ये समयिनः सर्वशास्त्राभिज्ञास्तेषां हस्ताम्भोजबन्धः हस्ता अम्भोजानीव तेषां बन्धोऽञ्जलिबन्धः तमभिनन्दतीति तादृशः । तेनाभिनन्दितुं शीलमस्यास्तीति वा । चन्द्रोऽपि स्वोदयेनाम्भोजमुकुलीभावाभिनन्दी । रेजे । [मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैरि'त्युक्तेः] ॥ ४४ ॥

**जननं समये समये जगतः प्रथिते समये समयेदमिते ।**
**सनिरासमयेऽसमये स्थितियुक्स्वबभासमयेऽसमयेष्टधिया ॥ ४५ ॥**

**जननमिति** ॥ जननं, समये समये, जगतः प्रथिते, समये, समया, इदं, इते, सनिरासं, अये, असमये, स्थितियुक्, स्वबभासमये, असमया इष्टधियेति पदच्छेदः । साव्याख्या, इत्यादीन् परमानुत्तमानर्थान् प्रकामं सम्यक् प्रकाशयामासेति तृतीयश्लोकेन वक्ष्यमाणेनान्वयः । साव्याख्या, समये वेदान्तशास्त्रे प्रथिते मुख्यतया सर्वशब्दवाच्यतया प्रसिद्धे । नत्ववाच्यतयेति भावः । इदं चेतनजातं समया समीपे । 'अभितः परित' इत्यादिना द्वितीया । इते प्राप्ते । ननु तेनैक्यमापन्न इति भावः । नविद्यते

समयः कालो यस्य सोऽसमयस्तस्मिन् । कालकृतविनाशादिविकाररहित इत्यर्थः । शोभनश्चासाववभासो ज्ञानञ्च स्ववभासः स्वच्छज्ञानं, तद्रूपः स्ववभासमयस्तस्मिन् (तद्रूप्यार्थे मयट्) स्वच्छज्ञानस्वरूपे । नत्वगुद्धेशवलब्रह्मणीति भावः । अये दैवे परब्रह्मणि । 'अयः शुभावहो विधिरि'त्यमरः । असमया एवं भूते परब्रह्मणिवर्तमानयासदृशया, इष्टधिया स्वेच्छाविषयया बुद्ध्या । ननु माययेत्यर्थः । समये समये काले काले निरासेन संहारेण सहितं सनिरासं, स्थित्यापालनेन युक् स्थितियुग्जगतो लोकस्य सृष्टिः प्रवर्तते । इत्यादीन्परमानुत्तमार्थान् प्रकामं सम्यक् प्रकाशयामासेत्युत्तरेणान्वयः । [तोटकवृत्तम् । लक्षणं तूक्तम् ] ॥ ४५ ॥

वर्तस्वाध्यधि सर्वं दीव्येदं सोऽनिशं स्वतन्त्रो विष्णुः ।
उज्जासय दुष्टानां संस्कुरु साधून् गुणाभिपूर्णोऽप्यगुणः ॥ ४६ ॥

वर्तस्वेति ॥ साव्याख्या । स्वतन्त्रः स विष्णुः सर्वं सर्वस्य जगतोऽध्यधि, अत्यन्त समीपे हृदयगुहायां वर्तस्व । वर्तते । अत्र समुच्चयेऽन्यतरस्यामिति लोट् । 'उपर्यध्यधसः सामीप्ये' इति सामीप्यार्थेऽधिशब्दस्य द्विरुक्तिः । तद्योगे 'उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिष्वित्यादिना सर्वशब्दस्य द्वितीया । इदमनेन जगतानिशं सदा दीव्य । दीव्यति । क्रीडत इत्यर्थः । अत्र 'दिवः कर्मचे'ति करणस्य कर्मत्वं । दुष्टानां दुष्टानसुरानुज्जासय । उज्जासयति । हन्तीत्यर्थः । जसुहिंसायामिति धातुः । तेषां हननञ्च तमसि प्रक्षेपणमेव । अत्र 'जासिनिप्रहणनाट' इत्यादिना दुष्टानामिति कर्मणि षष्ठी । साधून् मोक्षयोग्यान् संस्कुरु । संस्कुरुते । निर्दुष्टान्करोतीत्यर्थः । गुणाभिपूर्णोऽप्यानन्दादिगुणसम्पूर्णोऽप्यगुणो न विद्यन्ते गुणाः सत्वरजस्तमांसि यस्य तादृशः । इत्याद्यर्थान् प्रकाशयामासेति सम्बन्धः । [अत्र विरोधाभासालङ्कारः] ॥

असमोत्तमो मतोऽसौ श्रियः पतिर्विश्वतो विभिन्नात्मा ।
परमान्प्रकाममर्थान् प्रकाशयामास सत्यार्दीन् ॥ ४७ ॥

असम इति ॥ सा व्याख्या । असौ श्रियःपतिः समश्चोत्तमश्च समोत्तमौ नविद्येते समोत्तमौ यस्य तादृशः । समाधिकरहित इत्यर्थः । विश्वतः सर्वस्माद्विभिन्नात्मा

विभिन्नोऽत्यन्तविलक्षण आत्मा स्वरूपं यस्य तादृशो मतो ज्ञातः। सर्वदा सदागमैरिति भावः। इत्यादिर्येषां तान्परमानुत्तमानर्थान् प्रकामं सम्यग्यथाभवति तथा प्रकाशयामास। काशृ दीप्तौ लिट्। [चपलाख्यावृत्तम्। 'दल्योर्द्वितीयतुल्यौ गुणौ जनारौ तु यत्र चपलाख्या' इत्युक्तेः] ॥ ४७ ॥

समानया यानमास मायया ततयायमा।
नयाम्ना नास या न यातनालल्नातया ॥ ४८ ॥

समानयेति ॥ समानया, या, अनमा, आस, मायया, ततया, अयमा, नयामना, न, आस, या, न, यातना, अल्लना, अतया इति पदच्छेदः। या व्याख्या समानया मानैः प्रमाणैः सहिता समाना। तथा। 'इन्द्रो मायाभिः पुरुरूप ईयते। मायामात्रमिदं द्वैतं अद्वैतं परमार्थत' इत्यादिमानाभाससहितयेत्यर्थः। ततया व्याप्तया मायया जगन्मिथ्यात्वसाधिकया मायिशास्त्रीयकया मायया। अनमा न विद्यते नमो नम्रता यस्याः सा अनमा। निरावर्तुमशक्या आसेति भावः। इत्थं हि मायिनो माया। गुणादीनां गुण्यादिभिर्भेदोऽभेदो, भेदाभेदो वा। आद्ये भेदपरम्परयानवस्थास्यात्। द्वितीये गुण्यादिमात्रं वा गुणादिमात्रं वा विशिष्यते। तृतीये पूर्वोक्तदूषणं व्याहतिश्चाधिकेति। किञ्च 'मायामात्रं। इन्द्रो मायाभिरि'त्यादिवचनैश्च सर्वस्यापि भेदादिप्रपञ्चस्य मायामयत्वमेव न कस्यापि वास्तवत्वमित्यादिमानाभाससहितया माययानमा आसेत्यर्थः। तथाहि ननावद्गुणगुण्यादीनां वास्तवत्वे भेदादिविकल्पदोषावकाशः। गुणादीनां गुण्यादिभिरभेदाङ्गीकारेणानवस्थाभावात्। नचैवमन्यतरमात्रावशेषप्रसङ्गः। अयं गुणी। अयमस्य गुणोऽयमवयवी। अयमस्यावयव इत्यादिभेदव्यवहारस्य च विशेषबलेनाङ्गीकाराद्यावद्द्रव्यभाविगुणानुसारेण भेदाभेदयोरप्यङ्गीकारादिति। 'मायामात्रमि'त्यादिषु मायाशब्दस्य भगवत्प्रज्ञावाचकत्वेन तदभिमतत्तदसद्विलक्षणार्थत्वाभावादिति। पुनः कथं भूताव्याख्येत्यत आह— अयमेति। अयमा न विद्यते यमं द्वन्द्वं यस्या सा अयमा। 'द्वन्द्वं द्वितयं यमं यमलमि'ति हलः। अमद्वेत्यर्थः। या व्याख्या नयासना, नयो न्यायः। युक्तिरित्यर्थः। आसनमाश्रयो यस्याः सा नयासना नासेति न बभूवेति न। आसैवेत्यर्थः। 'विषयस्तद्विचारश्च हेतुदाहृतिसंगयाः, पक्षौ प्रयोजनञ्चेति

नयोऽष्टाङ्गप्रकीर्तित' इत्यष्टाङ्गो नयः । इयं व्याख्यातु तदाश्रिना बभूवेत्यर्थः । अतया, तद्विरुद्धा असा तया अनया व्याख्यया, अल्लना न विद्यते लल्नं विलासो यस्याः साल्लना । 'लल विलास' इति धातोर्नियमेन सुखरहितेतियावत् । यातना, अन्यन्तमः क्लेशो भवतीति सम्बन्धः । 'यातना तीव्रवेदने'त्यमरः । अथवा, तयेति पदच्छेदः । तया माययाङ्गीकृतया यातना तीव्रवेदना भवति । अन्धन्तमसि यद्दुःखं तद्भवतीत्यर्थः । [विपुलावृत्तम् । 'यस्यां लः सप्तमे युग्मे सा युग्मा विपुला मते'त्युक्तेः] ॥ ४८ ॥

प्राज्ञो राज्ञां त्रिदिवपदवीं कौरवं क्षेत्रमाप्तः
सस्माराथ स्वविहृतिपतद्धस्तियुद्धोत्सवानाम् ।
सत्याद्यार्यैरिह परिवृतो भाविमारीचदर्शि-
विस्मेरैः स्वैर्निजनृपतनूहेतिहृद्यातितुष्टैः ॥ ४९ ॥

प्राज्ञ इति ॥ अथ राज्ञां भारतयुद्धेहतानां राज्ञां त्रिदिवपदवीं त्रिदिवस्य पदवी मार्गरूपां । स्वर्गमार्गभूतमित्यर्थः । कुरुणा कुर्वाख्यभूपेन कृतं कौरवं क्षेत्रमाप्तः प्राप्तः । निजा स्वकीया या नृपतनूर्भीमशरीरं भीमशरीरं तस्या हेतिरायुधं गदा, तस्या दृष्टिर्दर्शनं तयातितुष्टैः । अत एव विस्मेरैर्विस्मयशीलैर्भाविमारीचं भविष्यन्मारीचं द्रष्टव्यं इति भाविमारीचदर्शिभिः । सत्यात्मा सत्यतीर्थ आद्यो येषां तैः स्वैः स्वशिष्यैः परिवृतः प्राज्ञः श्रीमध्वः । इह कुरुक्षेत्रे स्वस्य या विहृतिर्युद्धक्रीडा तया पतन्तो ये हस्तिनो गजास्तैर्यानि युद्धानि तान्येवोत्सवास्तेषां (स्वविहृतिपतद्धस्तियुद्धोत्सवानां) सस्मार । 'अधीगर्थदयेशां कर्मणी'ति षष्ठी । अहमस्मिंस्थले गजैःसह युद्धविनोद-मन्वभूवमित्यस्मरदिति भावः । तपस्विवत् स्थितं दाम्भं ज्ञात्वा मारीचमभ्यधात् । मध्वः परीक्षया चेनं ते विष्णुद्वेषिणं विदुरिति (वचनात्) । योधोऽत्रराजाहमितीरि-तोमुना तवायुधं केति जगादसत्यवाक् । खातेमुनोक्ते कुतले महागदां दृष्ट्वा च वाचं श्रद्दधुर्गुरं हिते'ति चोक्तरीतिद्धम् । अत्र सत्यवादसत्यतीर्थः । कुतले भूतल इत्यर्थः । [मन्दाक्रान्तावृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौताद्गुरूचे'दित्युक्तेः] ॥४९॥

विप्रात्मेशः क्षणार्थं कृतनतिरशितिश्रीर्हृषीकेशदेशे स्पष्टं
दृष्टोऽप्यदृष्टः सपदि विहितवान् विस्मयं देहभाजाम् ।
स्वप्ने स्वप्रेरितान्यस्थलगनिजनरोपाहृतैर्भक्ष्यभोज्यैः
प्राज्यैः प्राभोजयत्तं गुरुमखिलगुरुं वेदयन् वेदबन्धुम् ॥ ५० ॥

विप्रेति ॥ हृषीकेशदेशस्तन्नामकक्षेत्रं तस्मिन् । विप्रस्यात्मा स्वरूपं यस्य स विप्रात्मा ब्राह्मणस्वरूपःसन्, क्षणार्थं भिक्षाक्षणार्थं कृता नतिर्नमस्कारो येन सः । शितिर्नीला न भवतीत्यशितिः शुभ्रा श्रीः कान्तिर्यस्य सः । 'शितिर्धवलमेचक' इत्यभिधानम् । ईशो रुद्रः स्पष्टं सम्यग्दृष्टोऽपि सपदि तत्क्षणादृष्टःसन् । देहभाजां प्राणिनां विस्मयमाश्चर्यं विहितवान् कृतवान्सन् । स्वप्ने स्वप्नावस्थायां स्वप्रेरितः स्वेन प्रेरितः सचासावन्यस्थलगश्च, अन्यस्थलं हृषीकेशक्षेत्रादन्यत् किञ्चिच्छैवस्थानं तद्गः सचासौ निजश्शैवस्थानाधिकारी स्वभक्तः सचासौ नरश्च स्वप्रेरितान्यस्थलगनिजनरः तेनोपाहृतानि हृषीकेशक्षेत्रं प्रत्यानीतानि तैः प्राज्यैर्बहुलैर्भक्ष्याणि च भोज्यानि च तैः । अखिलगुरुमतएव वेदबन्धुं श्रीमध्वाचार्यं स्वमात्मीयं । 'स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । गुरुं वेदयन्सन् तं श्रीमध्वं प्राभोजयत् । 'ततोऽयमायाति तमर्चयेति स्थानाधिकारी जटिनं त्रिशूलिनं । स्वप्ने ब्रुवाणं त्रिरवेक्ष्य दूरतः प्रायादुदन्तञ्च जगादविस्मितः' इति चोक्तमैतिह्यम् । [अत्र स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमि'त्युक्तेः] ॥ ५० ॥

अवाप्तवान् पुनरिपुपातमस्मरद्रमापतिं स परशुराममादरात् ।
सराजकेल्युरुकदलीसहस्रकं तदाददत्यवसितिदत्तमुत्तमम् ॥ ५१ ॥

अवाप्तवानिति ॥ स श्रीमध्वः । पुनरिपुपातं तन्नामकक्षेत्रमवाप्तवांस्तत्क्षेत्राधिपतिं रमापतिं श्रीनाथं परशुराममादरादस्मरत् । स श्रीमध्वस्तदा तत्क्षेत्रस्थितिकालेऽत्तिर्भिक्षाया अवसितिरवसानं अत्त्यवसितिस्तस्यां दत्तमुत्तमं राजकेल्यो राजकेल्याख्या उरुकदल्यः उत्कृष्टकदलीफलफलकानि तेषां सहस्रकं । यद्वा राज्ञा, इषुपाताधिपतिना केल्या क्रीडया परीक्षार्थं दत्तमुरुकदलीसहस्रकं, राजकेल्युरुकदलीसहस्रकं, (अस्मिन्पक्षे

दत्तमिति मध्यमपदलोपीसमासः) आदत् । जग्रास । [रुचिरावृत्तम् । 'जभौ सजौगिति रुचिरा चतुरग्रहैरि'त्युक्तेः] ॥ ५१ ॥

**स शङ्करपदद्विजोपहृतमाप्य गोवाख्यगां गरिष्ठकदलील सद्दशशती वत् कं चरन् ।**
**पयःकलशपञ्चकत्रिकयुगाभिपूर्णं पपावदृष्टगतिरप्यभून्नृपनृमण्डलैरुद्यतैः ॥५२॥**

**स इति ॥ स** श्रीमध्वः । गोवेत्याख्या यस्याः सा गोवाख्या सा च सा गौर्भूमिश्च तामाप । तत्र **शङ्कर** इति पदं नाम यस्य सशङ्करपदस्तादृशो यो द्विजस्तेनोपहृतं दत्तं, गरिष्ठातिस्थूला याः कदल्यः कदलीफलपक्कानि तेषां । लसन्ती या दशशती दशानां शतानां समाहारो दशशती तस्याः सहस्रं । तस्याश्चतुष्कं । चतुःसहस्रमित्यर्थः । चरन् भक्षयन्सन् । चरगतिभक्षणयोरिति धातुः । कलशानां घटानां पञ्चकानि तेषां त्रिकं । पञ्चदशेत्यर्थः । तस्य युगं युगलं । त्रिंशदित्यर्थः । तस्मिन्नभिपूर्णं परिपूर्णं पयः क्षीरं पपौ । उद्यतैर्युक्तैर्नृपनृमण्डलैर्नृपभटसमूहैरदृष्टा गतिर्यस्य तादृशःसन्नप्यभूत् । एवमस्य सामर्थ्यं श्रुत्वानेनात्रैवस्थातव्यमिति मन्वानो राजा गमननिरोधार्थं भटानादिशत् । तदा तैरदृष्टोऽयं जगामेति भावः । इदमत्रैतिह्यम्— 'देवैः समं रहसि देवगृहे प्रवृत्ते राज्ञाकवाटविवृतौ प्रसभोदितोऽसौ । ऊचेऽधुना व्रजसि चेदिह नश्यसीति राजाथ विस्मितमना व्यशृणोत्कवाटं ॥ रक्तेक्षणं पुरुषसिंहमवेक्षमाणः सद्योभयान्निजपुरोहितमाह्वयत्सः । क्षन्तव्यमित्यसकृदानमति द्विजेन्द्रे प्रणाममातुरवदद्गुरुतेदयालुः ॥ राज्ञास्थितोऽत्र वसतावखिलांश्च शिष्यान् प्रस्थाप्य वायुवदगादखिलैरदृष्टः ॥ षष्ठेच मासि परचक्रपराक्रमेण राजा सराज्यनगरो विवशो ननाश' इति । [पृथ्वीवृत्तम् । 'जसौ जसयलावसु ग्रहयतिश्च पृथ्वीगुरुरि'त्युक्तेः] ॥ ५२ ॥

**अयमेव गोविषयतोऽपि कुत्रचित्सदसि जनतार्थितो जवात् ।**
**पुष्पमुत फलमपि विदधे जनस्तुतिदानुपमगानसम्पदा ॥ ५३ ॥**

**अयमिति ॥** अयं श्रीमध्वाचार्यः गोविषयतोऽपि गोविषयेऽपि । सार्वविभक्तिकत्वात्तसेरत्र सप्तम्यर्थः । गोविषयस्य 'पशुपे' इत्यपभ्रष्टभाषा । तत्र कुत्रचित्सदसि जनतार्थितः गानं कर्तव्यमिति जनसमूहेनार्थितःसन् । जनानां स्तुतिः सुगुणिताम्

ददातीति जनमुदिदा । जनसुखदेतियावत् । तादृशी यानुपमगानसम्पदसदृशगानमेव सम्पत्तया जवाच्छीघ्रात् पुष्पमुतफलञ्च विदधे । अनुपमगानेन पूगादावाशु पुष्पफले विदध इति भावः । अहो आश्चर्यं । [उद्गतावृत्तम् । 'चरमयोः स्जसजगा द्वितीये नसजगास्तृतीये भनजलगाश्चेदुद्गते'त्युक्तेः] ॥ ५३ ॥

धन्योऽमह्यत नाकिनामहितहृद्बाणः समोऽजस्य यो
मध्वो ध्वस्तदुरागमोऽग्र्यहिमगुश्रीः काममायामिहृत् ।
विष्णुं विश्वजयप्रदं स हि नमन् सेव्यं सुशौख्यं मुदा
दाक्ष्याच्छ्रीधरमामयादिविरही योगी सुहृत्सर्वदा ॥ ५४ ॥

**धन्य** इति ॥ धन्यो निरपेक्षस्सर्वगुणसम्पूर्णः । 'निरपेक्षो गुणैःपूर्णो धन्यइत्य-भिधीयत' इत्यभिधानं । नाकिनां देवानामहितादशत्रवोऽसुरास्तेषां हृद्हृदयं तस्य बाणः शल्यः । अजस्य ब्रह्मणः समः । 'निर्विशेषो ब्रह्मवाय्वो'रिति वचनात् । ध्वस्तो निराकृतो दुरागमो दुष्टशास्त्रं येन तादृशः । हिमाश्शीता गावः किरणा यस्य स हिमगुः, अग्र्यः पूर्णो हिमगुश्चन्द्रस्तस्य श्रीरिव श्रीः कान्तिर्यस्य तादृशः । विश्वजयप्रदं सर्वेषां जयप्रदं सेव्यं सेवनीयं शोभनं सौख्यं सुखं यस्य तं श्रीधरं । लक्ष्मीकान्तमिति यावत् । विष्णुं मुदा प्रीत्या । भक्त्येतियावत् । दक्षस्य चतुरस्य भावो दाक्ष्यं तस्मात् । अष्टाङ्गविशिष्टत्वात्स्यचातुर्येणेति भावः । साक्षादिति पाठे साक्षात्प्रत्यक्षमित्यर्थः । नमन् । सर्वतीर्थक्षेत्रेषु विष्णुमेव नमस्किति भावः । आमयो रोग आदिर्यस्य क्लेशस्य आमयादिस्तस्य विरहो वियोगोऽस्यास्तीति तादृशः । योगो भक्त्यादियोगोऽस्यास्तीति योगी सर्वदा सुहृद्भगवतः सुहृत् । काममिच्छा यथा भवति तथा कामं । अत्यन्त-मित्यर्थः । आयामो विस्तारोऽस्यास्तीत्यायामि हृच्चित्तं यस्य स आयामिहृत् । सर्वज्ञेतियावन् । यो मध्वः, सोऽमह्यत । अपूज्यत । मह पूजायां कर्मणि लङ् । [शार्दूलविक्रीडितवृत्तम् । लक्षणं तूक्तम्] ॥ ५४ ॥

इति भुवनविभूषणस्य भूयांस्यविगणितानि कृतान्तराणि हन्त ।
श्रवणपथनयनकीर्तनैरघौघं प्रतिददतीत्यपराः प्रकीर्तयन्ति ॥ ५५ ॥

एवं 'भुवनाद्भुतमध्वचेष्टितमि'तिश्लोके, 'अथ शुश्रूषुजनाय वर्ण्यत' इति श्रीमध्वकथावर्णनं प्रतिज्ञाय, क्वचिदीश्वरदेवमेषभूपमि'त्यादिश्लोकैरनुवर्ण्येदानीं दशमनिशिष्य उपसंहरति—

इतीति ॥ भुवनस्य लोकस्य विभूषणमलङ्कारभूतस्तस्य श्रीमध्वस्य, इत्येवं विधानि। इतिशब्दः प्रकारवाचकः । 'इति हेतुप्रकरण प्रकारादि समाप्तिषु'त्यमरः । भूयांसि भूरीण्यविगणितान्यसंख्यातानि । अन्यानि कृतानि कृतान्तराणि । नपुंसके भावे क्त इति क्तः । अस्माभिरिदानीमुक्तेभ्योऽप्यन्यानि कर्मान्तराणीत्यर्थः। श्रवणं गुरुमुखाच्छास्त्रतः श्रवणं तस्य मननं मनसाध्यानं तच्च, कीर्तनं वाचाकथनं तच्च, तैरभीष्टं प्रतिददति । प्रयच्छन्तीत्यमरा देवाः प्रकीर्तयन्ति । हन्त हर्षे । [पुष्पिताग्रावृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रे'त्युक्तेः] ॥ ५५ ॥

इति विविधगोधारावारैर्विशारदवारिदो
हरिपदरतो विद्याविद्युत्प्रदीपितदिङ्मुखः ।
भवभयमहाघर्मोत्तप्तं सदंघ्रिपमण्डलं
सफलसुमनः सान्द्रानन्दं व्यधादविपल्लवम् ॥ ५६ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के दशमः सर्गः ॥

---

दशमतिशिष्य इत्यादिनोक्तमुपसंहरति काव्यकारः —

इतीति ॥ हरेः पदं पादस्तस्मिन्रतो निरतः । विद्या एव विद्युतस्ताटितस्ताभिः प्रदीपितानि प्रकाशितानि दिङ्मुखानि येन तादृशः । विशारदो विद्वानेव वारिदो विशारदवारिदो विद्वन्मेघः। मध्वाख्यमेघइत्यर्थः। भवस्य संसारस्य भयं तदेव महाघर्मो महोष्णं तेनोत्तप्तं सन्तप्तं भवभयमहाघर्मोत्तप्तं । सन्तः सज्जना एवांघ्रिपा वृक्षास्तेषां मण्डलं समूहं (सदंघ्रिपमण्डलं)। विविधा नानाविधा ये गोधारावारा वचनधारासमूहास्तैः। सन्तोषयित्वेति शेषः । फलं ज्ञानविशेषादिरूपं फलं तच्च, सुमनश्शोभनमनस्तच्च

फलकुसुमनसी ताभ्यां सहितं सफलसुमनः । अतएव सान्द्रः सम्पूर्ण आनन्दो यस्य तादृशं, विपदो लव एकदेशो विपल्लवः । न विद्यते विपल्लवो यस्य तादृशं व्यधाच्चकार । वारिदो विष्णुपदरतो विद्युत्प्रदीपितदिङ्मुखःसन्, घर्मोत्तप्तमंघ्रिपमण्डलं जलधारैरभिषिच्य पुष्पफलयुक्तमविपल्लवमविगतपल्लवं । सपल्लवमित्यर्थः । यथाकुर्यात्तद्वदिति भावः । [अत्र श्लेषानुप्राणितो रूपकालङ्कारः । हरिणीवृत्तम् । 'नसमरसलगैः षड्वेदैर्हयैर्हरिणीमते'त्युक्तेः] ॥ ५६ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां दशमः सर्गः ॥



## एकादशः सर्गः

**प्रचुरान्तरप्रवचनं फणिराडुपशुश्रुवान्ससनकादिमुनिः ।**
**गगनेऽल्पदृष्टवपुरत्र जनैस्त्वरितं निलीनरुचिराप पदम् ॥ १ ॥**

**प्रचुरान्तरेति ॥** अत्र रूप्यपीठपुरे । जनैर्भूमिष्ठैर्जनैर्गगने व्योम्न्यल्पं किञ्चिद्दृष्टं वपुर्यस्य तादृशः ससनकादिमुनिः सनकादिमुनिसहितः फणिराट् सर्पराट् शेषः । प्रचुरं पूर्णमान्तरं ज्ञानं यस्य तस्य प्रवचनं व्याख्यानमुपशुश्रुवाञ्छ्रुतवान्सन् । त्वरितं शीघ्रं यथा भवति तथा निलीना अदृष्टा रुचिः कान्तिर्यस्य तादृशःसन् पदं निजस्थानमाप । 'विचन्द्रायां क्षपायान्तु चन्द्रिकाभ्रमिणो जनाः । शेषस्य तेजस्यथतं यान्तं मध्वोऽह्यदर्शयदि'त्यैतिह्यम् । [अस्मिन् सर्गे प्रायः प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरा सजससैर्गदिते'त्युक्तेः] ॥ १ ॥

**अतिचित्रधाम्नि निजधाम्निरतं ससहस्रमस्तकमनन्तममुम् ।**
**मुनयोऽभिवाद्य विनयाभरणाः वरमन्वयुञ्जत तदर्थमिमम् ॥ २ ॥**

**अतीति ॥** विनय आभरणं येषां तादृशा मुनयस्सनकादयोऽतिचित्रं धाम तेजो यस्य तस्मिन्निजधाम्नि स्वकीयमन्दिरे निरतमवस्थितं । 'धामनी गृहतेजसी'त्यमरः । सहस्रसंख्याकानि च मस्तकानि च तैस्सहितममुमनन्तं शेषमभिवाद्याभिवन्द्येमं वक्ष्यमाणं वरमुत्तममर्थं तदान्वयुञ्जत । अपृच्छन् ॥ २ ॥

**भगवत्तमस्य विपुलप्रमतेः समयं मनोहरतमं जगति ।**
**महितं भवद्भिरपि लोकपते पठतां मुहुः फलमुदेष्यति किम् ॥ ३ ॥**

**भगवदिति ॥** हे लोकपते शेष! जगत्यत्यन्तं मनोहरं मनोहरतमं भवद्भिरपि महितं पूजितं । अतिशयेन भगवान् भगवत्तमस्तस्य । षड्गुणवतामुत्तमस्येत्यर्थः । विपुला पूर्णा प्रमतिर्यस्य तस्य श्रीमध्वस्य समयं शास्त्रं मुहुः पठतां किं फलमुदेष्यति? सेत्स्यति । इण् गतौ लृट् । इत्यन्वयुञ्जतेति सम्बन्धः ॥ ३ ॥

अधिकारिणां फलमलं विदुषां भवति प्रवृत्तिरतिवीर्यवती ।
इति तत्फलं सकलसंकथनोभगवान्प्रपञ्चयतु भूरिदयः ॥ ४ ॥

अधिकारिणामिति ॥ अधिकारा एषां सन्तीत्यधिकारिणस्तेषामपि । श्रीमध्वशास्त्रश्रवणपठनादावधिकारिणामपीत्यर्थः । फलं श्रवणपाठादिजन्यं फलमलं सम्यक् विदुषां जानतां सतां प्रवृत्तिः, श्रीमध्वशास्त्रश्रवणादिरूपा क्रिया । अतिवीर्यं महाफलमस्यास्तीत्यतिवीर्यवती भवति । ज्ञानपूर्वकं कृतस्य कर्मणः फलाधिक्यसद्भावादिति भावः । इति तस्माद्धेतोरस्माकं तत्फलज्ञानपूर्वकं प्रवृत्त्यर्थं सफलं सत्यं सङ्कथनं सम्भाषणं यस्य तादृशो भूरिर्भूयसी दया यस्य तादृशो भगवान् भवान् तत्फलं, श्रीमध्वशास्त्रश्रवणपाठादिजन्यं फलं प्रपञ्चयतु । विस्तरेण ब्रवीतु । इत्यन्वयुङ्क्तेति पूर्वेण सम्बन्धः ॥ ४ ॥

इति तैरुदीरितमुदारमतिर्वचनं निशम्य स जगाद गिरम् ।
शृणुतादरेण महनीयतमं महनीयपादसमयस्य फलम् ॥ ५ ॥

इतीति ॥ उदारमतिरुत्तममतिः स शेषस्तैर्मुनिभिरुदीरितमुक्तं वचनं निशम्य । महनीयतमं पूज्यतमं, महनीयः पूज्यः पादः स्वरूपं यस्य तस्य श्रीमध्वस्य समयः शास्त्रं तस्य फलं श्रवणादिजन्यं फलमादरेण भक्त्या शृणुतेति गिरं जगाद ॥५॥

त्रिदिवादिलभ्यमपि नास्य फलं कथितं कृषेरिव पलालकुलम् ।
स्वफलं तु मुक्तिपदमुक्तिपदं शुकशारदादिपरमार्थविदाम् ॥ ६ ॥

त्रिदिवादीति ॥ त्रिदिवं स्वर्ग आदिर्यस्य तत्त्रिदिवादि, लभ्यमपि सुलभमप्यस्य श्रीमध्वशास्त्रस्य फलं मुख्यफलं कृषेः कर्षकव्यापारस्य पलालकुलमिव शुष्कतृणसमूह इव न कथितं ज्ञानिभिर्नप्रोक्तम् । स्वफलं तु स्वस्य मुख्यफलं तु शुकः शुकमुनिः सच शारदा सरस्वती त आदौयेषां तादृशाः, ते च ते परमार्थविदश्च, परम उत्तमो योऽर्थो भगवांस्तं विदन्तीति तेषां । शुकशारदादिपरतत्त्वज्ञानिनामित्यर्थः । उक्तिपदं प्रशंसारूपवचनास्पदं । तैः स्तुत्यमिति भावः । मुक्तिपदं मोक्षस्थानं । तत्र 'न वर्तते

यत्र रजस्तमस्तयोः सत्वञ्च मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता' इत्यादिशुकोक्तिः । 'धानापूपा मांसह्रदाः सदापायसकर्दमा' इति शारदोक्तिः ॥ ६ ॥

परमागमार्थवरशास्त्रमिदं भजतामपमानवकलारचितम् ।
व्रजतामहो परमवैष्णवतां रतये स्वलोकमजितो दिशति ॥ ७ ॥

**परमेति** ॥ मानवो मनुष्यो न भवतीत्यमानवः श्रीमुख्यवायुस्तस्य या कला अंशः श्रीमध्वमुनिस्तेन रचितं कृतमिदं, परमा उत्तमा य आगमा वेदादयस्तेषामर्था येन शास्त्रेण तत्परमागमार्थं, तादृशं यद्वरशास्त्रमुत्तमशास्त्रं भजतां श्रवणमननादिकुर्वतां । अतएव विष्णोर्भक्ता वैष्णवा, परमवैष्णवो मुख्यवैष्णवस्तस्य भावस्तत्ता तां व्रजतां सतां रतये क्रीडाया अजितः श्रीकृष्णः स्वलोको वैकुण्ठस्तं दिशति । ददाति । अहो विस्मये ॥ ७ ॥

ननु तत्र विश्वविभवैकपदं परिभाति पूर्णपुरुषस्य पुरी ।
उपलभ्यते यदुपमानपदं प्रतिबिम्बमेव मणिवप्रगतम् ॥ ८ ॥

भगवल्लोके कोऽस्त्यतिशय इत्यपेक्षायामाह—

**नन्वित्यादिना** ॥ तत्र भगवल्लोके विश्वे समस्ता ये विभवा ऐश्वर्याणि तेषामेकं मुख्यं यत्पदमास्पदं । 'धनं हिरण्यञ्च वसु विभव' इति हलः । 'पदं व्यसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वि'त्यमरः । पूर्णपुरुषस्य श्रीहरेः पुरी परिभाति ननु । लसतिहि । मण्यात्मको वप्रः प्राकारस्तं गतं प्राप्तं प्रतिबिम्बमेव यदुपमानपदं यस्या उपमानस्थानं उपलभ्यते । ज्ञायते । मणिमयवप्रगतं प्रतिबिम्बमेव तस्याः पुर्या उपमानभावं भजते नान्यदिति भावः ॥ ८ ॥

सितसौधसन्ततिरुचा स्फुरिता परितोरुणाश्मगृहपंक्तिरुचिः ।
इदमच्छरीरवलये लसितामनुयाति मूर्तिमसुरासुहृतः ॥ ९ ॥

सितेति ॥ परितः सिता शुभ्राः ये सौधाः प्रासादास्तेषां सन्ततिः समूहस्तस्या रुक्कान्तिस्तया स्फुरिता लसिता । अरुणानि रक्तानि यान्यश्मानि पद्मरागमणयस्तन्म-यानि यानि गृहाणि मन्दिराणि तेषां या पंक्तिस्तस्या रुचिः कान्तिः, इहास्मिन् मम शरीरमेव वलयो मण्डलं तस्मिन् । मच्छरीरात्मक शय्यामण्डल इत्यर्थः । इह मच्छरीरवलय इति शेषवाक्यं । तथाच शेषात्मकशय्यामध्य इतियावत् । लसितां शोभमानामसुरासूनसुरप्राणान् हृतवानित्यसुरासुहृत्तस्य श्रीहरेर्मूर्तिमनुयाति । विडम्बते । शुभ्रे मच्छरीरवलय उद्यदादित्यवर्णस्य श्रीहरेर्मूर्तिर्यथा शोभते तद्वत्सितसौधसन्तति-मध्यगतारुणाश्मगृहपंक्तिः शोभत इति भावः ॥ ९ ॥

शबलावलीकघटितस्फटिकद्युतिभिर्हरिन्मणिमयी वलिभी ।
प्रतिसद्म भाति यमुना मिलिता सितसौरसैन्धवपयोभिरिव ॥ १० ॥

शबलेति ॥ वलीकघटितस्फटिकद्युतिभिर्वलीकं गृहाच्छादनाग्रे । 'नीध्रं वलीकं पटलान्तमाहुरि'ति हलः । 'वलीकनीध्रे पटल' इत्यमरश्च । पटलमिति गृहाच्छादन-मुच्यते । 'पटलंछदिरि'त्यमरः । तथाच गृहाच्छादनभूतफलकादीनामग्रभागे घटिता याः स्फटिकद्युतयः स्फटिकानां कान्तयस्ताभिः शबला मिश्रा हरिन्मणिमयी इन्द्रनीलरत्नमयी वलभी गृहाणामाच्छादनं । 'आच्छादनं स्याद्वलभी गृहाणामि'ति हलः । 'वलभीच्छादने वक्रदारुणी'त्यमरश्च । सद्म सद्मप्रति प्रतिसद्म प्रतिमन्दिरं सुरसिन्धोः गङ्गायाः सम्बन्धीनि सौरसैन्धवानि तानि च तानि पयांसि च । सितानि श्वेतानि च तानि सौरसैन्धवपयांसि च, तैर्मिलिता यमुनेव यमुनानदीव भाति । शोभते । सौरसैन्धवेति 'हृद्भगसिन्ध्वन्तेभ्यः पूर्वपदस्य चे'त्युभयपदवृद्धिः । सौभाग्यं सौहार्दमितिवत् ॥ १० ॥

यदि नाभविष्यदिह विभ्रमतानियमो जनस्य निलयावलिषु ।
विकटा विटङ्कृतपत्रिततिः कृतकेत्यवैक्ष्यत कथञ्चन नो ॥ ११ ॥

यदीति ॥ इह वैकुण्ठे, जनस्य यदि विगतो भ्रमो भ्रान्तिज्ञानं येषां ते विभ्रमा-स्तेषां भावो विभ्रमता तस्या नियमो नाभविष्यत् । तर्हि निलयावलयो मन्दिरपङ्क्तयस्तासु

विकटा श्रेष्ठा । दर्शनीयेत्यर्थः । विटङ्के कपोतपालिकायां कृता रचिता या पत्रिततिः पक्षिसमूहः । 'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकमि'त्यमरः । कृतकेति कृत्रिमेति कथञ्चन नोऽवैक्षत । लिङ् निमित्ते लृङ् क्रियानिपत्ताविति लृङ् । अयं भावः । वैकुण्ठे वर्तमानजनानां यदि विभ्रमनानियमो भ्रान्तिराहित्यनियमो नस्यात्तर्हि विटङ्ककृतपत्रिततिं पश्यतां तेषां कृत्रिमत्वप्रतीतिर्निस्यात् । किन्त्वकृत्रिमा एते पक्षिण इति प्रतीतिर्भवेत् । 'अस्तिचात्रविगतभ्रान्तित्वनियमः' । मुक्तानां भ्रान्तिलेशस्याप्यसम्भवात् । तस्माद्विटङ्ककृतपत्रिततिं दृष्ट्वा कृतकत्वेनैव व्यज्ञासिषुरिति ॥ ११ ॥

**विविधरत्नतुलोपगतचित्रपटीसुवितानलम्बिमणिदामगणः ।**
**शरणान्तरेष्वधिकपूरणतः प्रचकास्ति विभ्रम इवावगलन् ॥ १२ ॥**

**विविध इति** ॥ विविधो नानावर्णः । तुलायां मन्दिरान्तस्थतुलायामुपगतं सम्बद्धं यच्चित्रपटीसुवितानं चित्रपटात्मकशोभनवितानं तस्माल्लम्बी लम्बमानो यो मणिदामगणो मणिमालासमूहः । शरणान्तेषु मन्दिरान्तःप्रदेशेष्वधिकपूरणतोऽतिपूर्णताया अवगलन् स्रवन् विभ्रमइव कान्तिरिव प्रचकास्ति । शोभते । ॥ १२ ॥

**विमलाकृतिः प्रकृतिरेव महामणिहेममय्यखिलवस्तुमयी ।**
**इह सम्भवेत्सकलकान्तिरसः कथितोऽधिकोक्तिभिरतः कविभिः ॥ १३ ॥**

'ननु तत्र विश्वविभवैकपदमि'त्यादिनोक्तं नासम्भावितमित्याह—

**विमलाकृतिरिति** ॥ इह वैकुण्ठे, विमला आकृतिः स्वरूपं यस्यास्तादृशी प्रकृतिरेव रमैव, यतो महामणयश्च हेमानि च तेषां स्वरूपा महामणिहेममयी । किं बहुना? अखिलानि यानि वस्तूनि तदात्मिकाखिलवस्तुमयी । अतः कविभिरधिका आपाततोऽत्युक्तितया प्रतीयमाना या उक्तयो वचांसि ताभिः कथितः, सकलानां समस्तपदार्थानां कान्तिरसः शोभातिशयः । सकलवस्तुनिष्ठत्वेनोच्यमानः शोभातिशय इत्यर्थः । सम्भवेद्घटतएव । मणिहेमाद्यखिलवस्तूनां निर्दोषकान्तिरूपरमात्मकत्वान्नासम्भावनं विमर्षीति भावः ॥ १३ ॥

**तदनादिकालमितमुक्तिरतेरगणय्य शम्भुमुखसङ्घततेः ।**
**नगरैर्महापुरमसंहतिमल्लसतिप्रभोरयमहो महिमा ॥ १४ ॥**

**तदिति** ॥ न विद्यते आदिर्यस्य सोऽनादिः सचासौ कालश्च तं । 'कालाध्व-नोरि'ति द्वितीया । अनादिकाल इत्यर्थः । इता प्राप्ता मुक्तिरतिर्मुक्तिसुखं यया तादृशी तस्या, अगणय्या अगणिता ये शम्भुमुखसङ्घाश्शम्भुर्ब्रह्मा, रुद्रोवा, मुखं प्रधानो येषां देवानां ते शम्भुमुखास्तेषां सङ्घास्तेषां ततिः पंक्तिस्तस्याः । 'शम्भुर्धातृहरा-र्हत्स्वि'ति वैजयन्ती । नगरैः पुरैः, संहतेरभावोऽसंहतिः सास्यास्तीत्यसंहतिमत् संबाधरहितमित्यर्थः । तत् महापुरं महानगरं लसति । अयं संहत्यभावः, अनादितः प्रतिकल्पं मुक्तानामनन्तानां ब्रह्मरुद्रादीनां नगरसमूहैः पूर्णेऽपि तस्मिन्नगरे संहत्यभाव इत्यर्थः । प्रभो श्रीनारायणस्य महिमा सामर्थ्यम् । अहो एतदाश्चर्यम् ॥ १४ ॥

**भवनं विभाति भुवनैकपतेर्भुवनत्रयाद्भुतगुणातिशयि ।**
**वरमन्दिरप्रकरमध्यगतं द्विजमण्डलस्थशशिमण्डलवत् ॥ १५ ॥**

**भवनमिति** ॥ भुवनानां लोकानां त्रयं, तस्य येऽद्भुतगुणास्तानतिशयितुं शील-मस्येति तादृशं । भुवनत्रयगतसर्वैश्वर्यगुणातिशयिष्विवत्यर्थः । वरमन्दिराण्युत्तममंदिराणि तेषां ये प्रकरास्समूहास्तेषां यन्मध्यं तत् गतं प्राप्तं । भुवनानामेकपतिर्मुख्यपतिस्तस्य श्रीहरेर्भवनं मंदिरं । द्विजमण्डले नक्षत्रसमूहे तिष्ठतीति तादृशं यच्छशिमण्डलं चन्द्रबिम्बं तद्वद्विभाति शोभते ॥ १५ ॥

**स्वयमिन्दिरैव पतिमानकरी गृहकर्म यत्र कुरुते सुतराम् ।**
**अपि किङ्करीदशशतीमहिता श्रियमत्र वर्णयति वेश्मनि कः ॥ १६ ॥**

**स्वयमिति** ॥ यत्र भगवन्मन्दिरे । पत्युः स्वभर्तुर्मानः सम्भावना तं करोतीति तादृशी इन्दिरा स्वयमेव किङ्करीणां दासीनां दशशत्या सहस्रेण महितापि सम्पूजि-तापि सुतरामत्यन्तं गृहकर्म सम्मार्जनलेपनादिगृहकृत्यं कुरुते । अत्रेतादृशे वेश्मनि श्रियं शोभां को वर्णयति' न कोऽपीत्यर्थः ॥ १६ ॥

कमलापतिः कमलयामलया कमनीयया कमललोचनया ।
अमृताहिराजमृदुभोगगतः स्वरतोऽपि तत्र रमते परमः ॥ १७ ॥

कमलेति ॥ परमः सर्वोत्तमः कमलापतिः श्रीपतिः स्वेनरतः स्वरतस्तथापि, तत्र उक्तगुणविशिष्टे स्वमन्दिरे । अमृतो मुक्तो योऽहिराजः, सर्पराजः शय्यात्मकः शेषस्तस्य यो मृदुभोगो मृदुशरीरं तं गतः प्राप्तःसन् । 'अहेः शरीरं भोगः स्यादि'ति हलः । न विद्यते मलं दुःखस्पृष्टत्वादिदोषो यस्यास्तया, कमनीयया मनोहरया, कमलवल्लोचने यस्यास्तया, कमलया रमया रमते ॥ १७ ॥

तरुणप्रभाकरसहस्ररुचं कनकाम्बरं मणिमयाभरणम् ।
हसिताननेन्दुमरविन्ददृशं तमरीन्द्रधारिणमनुस्मरत ॥ १८ ॥

तरुणेति ॥ तरुणा उद्यन्तो ये प्रभाकराः सूर्यास्तेषां यत्सहस्रं तस्य रुगिव रुक्, दीप्तिर्यस्य तं । कनकवर्णमम्बरं यस्य तं, पीताम्बरमित्यर्थः । मणिमयानि रत्नमयान्याभरणानि यस्य तं । आननमेवेन्दुः, हसितो मन्दस्मितोपेत आननेन्दुर्यस्य तं । अरविन्दवद्दृशौ यस्य तं । अरीन्द्रं चक्रश्रेष्ठं धर्तुं शीलमस्येति तं श्रीहरिमनुस्मरत चिन्तयत । इदं सनकादीन्प्रति शेषवचनम् ॥ १८ ॥

गणयेद्रमास्य न गुणानखिलांश्चतुराननश्चतुरवागपि नो ।
न वयं सहस्रवदना अपि तानपरोदितानतिवदेम पुनः ॥ १९ ॥

गणयेदिति ॥ रमा अस्य भगवतो गुणानखिलान् सर्वानपि नगणयेत् । गण संख्याने लिङ् । सर्वगुणान् गणयितुमशक्तेति भावः । चतुरा वाग्यस्य तादृशः, चत्वार्याननानि यस्य स चतुराननो ब्रह्मापि नो गणयेत् । सहस्रं वदनानि येषां तादृशा वयमप्यखिलान्नगणयामः । पुनरप्यथापि, अपरैरन्यैरीशशङ्करादिभिरुदितान् प्रोक्तान् गुणानतिवदेम । अतिशयेन वदेम ॥ १९ ॥

त्रिधयो विहङ्गपतयोऽगणिता रमणीयुताश्च फणिपेन्द्रमुखाः ।
परयोगभूरिसुखभोगमिता अवलोक्य तं दधति मोदरसम् ॥ २० ॥

**विधय इति** ॥ परे सर्वविलक्षणे भगवति योगो मनोयोगस्तेन ध्यानेनेति यावत् । भूरिसुखभोगो भूरि स्वयोग्यतयापूर्णं यत्सुखं तस्य भोगोऽनुभवमिता. प्राप्ताः। अथवा परमयोग उत्तमभक्त्याख्योपायस्तेन भूरिसुखभोगं मोक्षे पूर्णानन्दानुभवमिताः प्राप्ताः । अगणिता असंख्याता विधयो ब्रह्माणः, अगणिता विहंगपतयः पक्षिपतयो गरुडाः, फणिनो नागान् पातीति फणिपः शेषः सच, इन्द्रश्च तौ मुखे मुख्यौ येषां तादृशास्तैःसहिता देवाः, रमणीयुता स्वस्वभार्यायुक्ताः सन्तः भगवन्तमवलोक्य मोदरसं सन्तोषसारं, भगवद्दर्शनजनितमुत्तममानन्दं दधति धारयन्ति ॥ २० ॥

**सचतुर्भुजा वनजपत्रदृशो वरवेषिणोऽत्र सपिशङ्गपटाः ।**
**अरुणप्रभाश्च तरुणाभ्ररुचो विचरन्ति नाथरुचयः पुरुषा ॥ २१ ॥**

**सचतुर्भुजेति** ॥ चत्वारश्च ते भुजाश्च तैः सहिताः । वने जले जातं वनजं पद्मं तस्य, यत्पत्रं दलं तद्वद्दृशौ दृष्टी येषां तादृशाः । 'जीवनं भुवनं वनमि'त्यमरः । वर उत्तमो यो वेषोऽलङ्कारः स एषामस्तीति वरवेषिणः, पिशङ्गपटः पीताम्बरं तेन सहिताः, अरुणा रक्ता प्रभा येषां तादृशाः । केचिदुद्यदादित्यवर्णा इत्यर्थः । तरुणं यदभ्रं मेघो नीलमेघस्तद्वद्रुचयो येषां तादृशाः, केचिन्नीलमेघश्यामा इत्यर्थः । अतएव नाथस्य सर्वमुक्ताधिपस्य श्रीहरेः रुगिव रुग्येषां तादृशा भगवत्सारूप्यं प्राप्ता इति भावः । ते मुक्ताः पुरुषा विचरन्ति । यथासुखमितस्ततः पर्यटन्ति । सचतुर्भुजेत्यादिविशेषणैर्नाथ रुचित्वं तेषामुपपादितं । चतुर्भुजत्वादिरूपेणैव हरिसारूप्यं तेषां ननु सर्वसाम्येनेति ॥

**भगवत्समीपमुपयातवतां प्रमदो न केवलमलब्धतुलः ।**
**अपि तस्य लोकमतिलोकगुणं भजतां सुदुर्लभमभूरिशुभैः ॥ २२ ॥**

**भगवदिति** ॥ केवलं भगवत्समीपं हरिसमीपमुपयातवतां प्राप्तवतां प्रमद आनन्दोऽलब्धा तुला साम्यं येन तादृशः असदृश इत्यर्थः । न केवलं भगवत्सामीप्यं भजतामेवानन्दोऽसदृशः, किन्त्वतिक्रान्ता लोकगुणा ब्रह्मादिलोकगुणा येन तं, नविद्यते भूरिशुभं बहुसुकृतं येषां तैः सुदुर्लभं प्राप्तुमशक्यं, हरेर्लोकं भजतामप्यानन्दोऽतुलः । 'एवं सचतुर्भुजाः' 'भगवत्समीपमि'ति च श्लोकद्वयेनोक्तानां सारूप्य, सालोक्य-

सामीप्य, लक्षणत्रिविधमोक्षिणामप्यानन्दः स्वस्वयोग्यतानुसारेण, पूर्णः करकः, पूर्णो घटः, पूर्णः शरावः इतिवदिति भावः । सायुज्यभाजां तु पूर्णानन्दत्वं कैमुत्यन्यायसिद्धम् ॥ २२ ॥

**न भवन्ति यत्र मृतिजन्मजरास्त्रिविधं भयं किमुत दुःखगणः ।**
**अपरं च किञ्चिदशुभं न भवेन्नगुणादि तत्प्रभवमूलमपि ॥ २३ ॥**

नेति ॥ यत्र यस्मिन् वैकुण्ठे । मृतिर्मरणं, जन्मोत्पत्तिः, जरा च मृतिजन्मजरा न भवन्ति । तिस्रो विधाः प्रकारा यस्य तादृशमाध्यात्मिकमाधिभौतिकमाधिदैविकं चेति त्रिविधमित्यर्थः । भयं न भवति । दुःखगणोऽन्यदुःखगणो न भवतीति किमुत । न भवत्येवेति भावः । अपरञ्च किञ्चिदशुभममङ्गलं न भवेत् । तस्य मृतिजन्मादेः प्रभव उत्पत्तिस्तस्य मूलं कारणभूतं तत्प्रभवमूलं, गुणाः सत्वरजस्तमांस्यादयो यस्य तादृशं गुणादि । सत्वादिगुणत्रयं वा । आदिशब्दसंगृहीतः कश्चिददृष्टविशेषो वा न । मृत्यादेः कारणाभावात्कार्यं मृत्यादिकं च न भवतीति भावः । एवं भूतं लोकं भजतामिति पूर्वेण सम्बन्धः । यत्र मृतिजन्मजरा न भवंति तत्रानन्तसखैः सुखमनुभूयत इत्युत्तरत्रवा (सम्बन्धः) ॥ २३ ॥

**अनुभूयते सुखमनन्तसखैः सकलैरलम्मतिपदं सततम् ।**
**अपि तारतम्यसहितैः स्वगुरुप्रवणैः परस्परमुरुप्रणयैः ॥ २४ ॥**

अन्विति ॥ तारतम्यसहितैरपि सुखादिविषये तारतम्ययुक्तैरपि परस्परमुरुर्महान् प्रणयः स्नेहो येषां तैः । मत्सरवर्जितैरिति भावः । स्वगुरुषु स्वोत्तमेषु प्रवणैर्विनयवद्भिः स्वोत्तमेषु भक्तिमद्भिरित्यर्थः । 'अन्येऽपि स्वात्मनो मुख्या क्रमाद्गुरव ईरिता' इति वचनात् । अनन्तस्य श्रीहरेः सखायः अनन्तसखास्तैः । 'राजाहः सखिभ्यष्टजि'ति टच् । सकलैः सारूप्यादिचतुर्विधमोक्षिभिः सततमलं सम्यक्, मतिपदं बुद्धेर्विषयभूतं सुखं स्वरूपसुखमनुभूयते ॥ २४ ॥

**अतिसुन्दराः सुरभयः पुरुषा हरिचन्दनेन नवचन्द्ररुचा ।**
**चलचारुचामरधरानुचरा विचरन्ति नित्यतरुणा इह ते ॥ २५ ॥**

अतीति ॥ अतिसुन्दरा अतिसुरूपिणः, नवो नूतनः पूर्वपक्षोदित इत्यर्थः। यश्चन्द्रस्तस्य रुगिव रुक्कान्तिर्यस्य तेन हरिचन्दनेन अङ्गलेपभूतश्रीचन्दनेन सुरभयः सुगन्धिनः। चलानि यानि चारुचामराणि मनोहरचामराणि धारयन्तीति चलचारुचामरधराः तादृशा अनुचरा भृत्या येषां तादृशाः। नित्यतरुणा नित्ययुवानः। जरावर्जिता इत्यर्थः। तं उक्तलक्षणः पुरुषा मुक्तपुरुषा इह, उक्तलक्षणे भगवल्लोके विचरन्ति ॥

सविलासलास्यपरितुष्टदृशो मृदुगीतवाद्यमुदितश्रवणाः।
अनुरञ्जयन्ति नवकञ्जदृशो रमणा अमी स्वरमणीस्तरुणीः ॥ २६ ॥

सविलासेति ॥ विलासेन सहितं सविलासं यल्लास्यं नृत्यं तेन परितुष्टा दृशो लोचनानि येषां तादृशाः, सविलासलास्यदर्शनेन परितुष्टदृश इत्यर्थः। मृदुगीतं मनोहरगानं तच्च वाद्यं च ताभ्यां मुदितानि श्रवणानि श्रोत्रेन्द्रियाणि येषां तादृशाः। मृदुगीतवाद्यश्रवणेन मुदितश्रवणेन्द्रिया इत्यर्थः। अमी वैकुण्ठस्था रमणा भर्तारो नवकञ्जं नूतनकमलं तद्वत् दृशो लोचनानि यासां तादृशीस्तरुणीस्तरुणवयसिस्थिता स्वरमणीः स्वभार्या अनुरञ्जयन्ति। तदिच्छानुसारप्रवृत्त्या स्वेष्वनुरागयुक्ताः कुर्वन्ति ॥

परिणायकानुपवनाभिमुखा ननु निस्सरन्ति हरिणीनयनाः।
विमलाद्विमानवलयाच्छनकैः शशिमण्डलादिव रुचो रुचिराः ॥ २७ ॥

परिणायकानिति ॥ हरिणीनयनवदेणीनयनवन्नयनानि यासां तादृश्यः, हरिणीनयनवदायतलोचना इत्यर्थः। नार्य उपवनस्याभिमुखान् गन्तुमुद्यतान् परिणायकान् स्वपतीन् विमलान्निर्मलाद्विमानवलयाद्विमानमण्डलाच्छनकैश्शशिमण्डलाच्चन्द्रमण्डलात् रुचिराः शोभमाना रुचयइव कान्तयइवानुनिस्सरन्ति अनुगच्छंति। उद्यच्छशिमण्डलाद्यथा रुचो निर्गच्छन्त्येवं विमानमण्डलान्नार्यो निर्गच्छन्तीति भावः। शनकैरिति तासां गतिस्वभावकथनम् ॥ २७ ॥

अरुणाश्मवर्णितनवस्तनवः शुभहारनिर्मलरुचोऽत्र पराः।
हरिनीलनीलरुचयोऽप्यपराः प्रकटीभवन्ति विविधाभरणाः ॥ २८ ॥

अरुणेति ॥ काश्चन अरुणाश्मनः पद्मरागमणेर्वर्णइव वर्णो यासां तादृश्यस्तनवो देहा यासां तादृश्यः । अपरा अन्याः शुभहारस्य शोभनहारस्य सन्निभा समाना रुक्कान्तिर्यासां तादृश्यः शुभ्रकान्तय इत्यर्थः । अपरा अन्या हरिनीलवदिन्द्रनीलवन्नीलरुचिर्नीलकान्तिर्यासां तादृश्यः । विविधान्याभरणानि यासां तादृश्यस्तनवो नार्योऽत्र अस्मिंल्लोके प्रकटीभवन्ति विमानान्निर्गमनानन्तरं प्रकाशन्ते ॥ २८ ॥

सुचिरद्युतीर्दधति सूक्ष्मतरं स्वयमम्बरं च खलु बिभ्रति याः ।
शुकनिस्स्वना ध्रुवमिमा अपराः सुपयोधरा जलधरावलयः ॥ २९ ॥

सुचिरेति ॥ या नार्यः सुचिराधिरकालस्थायिन्यो द्युतयः कान्तयस्ता दधति वहन्ति । मेघावलयश्च सुचिरद्युतीर्दधति, सूक्ष्माम्बरं सूक्ष्मवस्त्रं बिभ्रति । मेघावलयश्चाम्बरेण धार्यन्ते । याः शुकस्य निस्वनइव निस्वनो यासां तादृश्यः । शुकध्वनिवत्कोमलध्वनय इत्यर्थः । मेघावलयो गम्भीरस्वनाः । शोभनौ पयोधरौ स्तनौ यासां ताः सुपयोधरा इमा जलधरावलयः, द्व्यष्टवर्षा नार्यः । 'द्व्यष्टवर्षान् या योषिच्छ्यामाजलधरावलिरि'त्यभिधानं । अपराः जलधरावलिनामभाग्भ्यो मेघजालेभ्योऽन्याः । द्व्यष्टवर्षा नार्यश्च जलधरावलय इत्युच्यन्ते, मेघावलयश्च जलधरावलय इत्युच्यन्ते । एवं नामसाम्येऽप्युक्तरीत्या विरुद्धधर्मवत्त्वादिमानार्यो मेघजालेभ्यो विलक्षणाः ध्रुवं नात्र संशयोऽस्ति ॥ २९ ॥

समतीतविद्रुमभुवां सुदृशां पदपल्लवाग्र्यनखरक्तरुचीः ।
परभागतः स्फटिककुट्टिमभूः प्रकटीकरोति न पुरा प्रकटाः ॥ ३० ॥

समतीतेति ॥ स्फटिकेन कुट्टिमा अवनद्धा साचसा भूश्च स्फटिककुट्टिमभूः, समतीता अतिक्रान्ता विद्रुमभुवो विद्रुमबद्धभूमयो याभिस्तासां सुदृशां शोभननयनानां नारीणां पुरा विद्रुमावनद्धस्थलातिक्रमात्पूर्वं न प्रकटा अस्पष्टाः, पदानि पादाः पल्लवा इव किसलयाइव पदपल्लवास्तेषामग्र्यनखा उत्तमनखास्तेषां रक्तरुचयो रक्तकान्तयः, परभागतः वर्णान्तरसंयोगात् प्रकटीकरोति स्पष्टीकरोति । अयं भावः । विद्रुमस्थल-

सञ्चारावसरे नखानां विद्रुमस्य च समानकान्तित्वान्नवकान्तिर्विविच्य न ज्ञाता स्फटिक-सञ्चारे नवकान्तिरतिस्पष्टाभूदिति ॥ ३० ॥

हरिणीदृशां सुवसनानि बृहत्सुनितम्बबिम्बरुचिरोरुरुचा ।
शवलद्युतीनि मदनस्य जगज्जयवैजयन्त्य इति निश्चिनुमः ॥ ३१ ॥

हरिणीति ॥ बृहन्महद्यत् सुनितम्बबिम्बं सुशोभनं नितम्बस्य स्त्रीकट्याः पश्चाद्भागस्य बिम्बं मण्डलं तस्य रुचिरा मनोहरा या उरुरुक् उत्कृष्टकान्तिस्तया शवला मिश्रा द्युतिः कान्तिर्येषां तादृशानि । योषिन्नितम्बसम्बन्धान्नितरां शोभमानानीति भावः । हरिणीनां मृगीणां दृशइव दृशो दृष्टयो यासां तासां निवसनानि वस्त्राणि मदनस्य कामस्य जगज्जयः स्त्रीजगद्विजयस्तस्य वैजयन्त्यो लक्षणभूताः पताका इति निश्चिनुमो निश्चयं कुर्मः । 'वैजयन्ती पताकायां जयन्त्यां केशवस्रजी'त्यभिधानम् ॥

करपल्लवैस्तरलितैर्ललितैरसकृत्क्वणत्कनककङ्कणकैः ।
नवरोमराजिवलिवल्गुमृदुभ्रतनूदरैरतिमनाक्तरलैः ॥ ३२ ॥

करेति ॥ 'तरुणा भवन्त्यथनिवृत्तमुखा' इत्यन्तं कलापकमेतत् । तत्रेत्थमन्वयः— – अथ तासु विमानान्निर्गतासु नारीषु प्रगतासु गच्छन्तीषु सतीषु, रणितैः क्वणितैः रशनाः काञ्च्यो मणिनूपुराः मणिखचितमञ्जीरास्तैः । 'स्त्रीकट्यां मेखलाकाञ्ची सप्तकी रशना तथा' इत्यमरः । 'मञ्जीरो नूपुरोऽस्त्रियामि'ति च । इमं विलासं स्वगमनविलासं अनुवीक्षितुं द्रष्टुं गदिता इवोक्ता इव तरुणा युवानो भर्तारः, निवृत्तानि मुखानि येषां तादृशाः भवन्तिपुरा ननु । 'यावत्पुरानिपातयोर्लडि'ति लट् । पुरस्ताद्गच्छन्तो युवान आवृत्य पश्चाद्ददृशुरिति भवः ।

तरलितैश्चलितैर्ललितैः कोमलैरसकृन्निरन्तरं क्वणन्ति रणन्ति कनककङ्कणानि स्वर्णात्मककरभूषणानि येषां तैः । 'कङ्कणं करभूषणमि'त्यमरः । कराः पल्लवा इव तैरुपलक्षितासु । एवं सर्वत्र । 'इत्थं भूतलक्षणे' इति तृतीया । अतिमनागत्यल्पं तरलैश्चञ्चलैः पादचारेण गमनावसरे किञ्चिचञ्चलैरिति भावः । 'किञ्चिदीषन्मनागल्प' इत्यमरः । नवा नूतना या रोमराजयो रोमपंक्तयस्ताश्च वलयश्च ताभिर्वल्गूनि भद्राणि

मृदुप्रतनूदराणि तैर्नवरोमराजिवल्गुत्वं, मृदुत्वं, प्रतनुत्वञ्चोदरविशेषणानि । तैश्चोपलक्षितासु नारीषु गच्छन्तीषु निवृत्तमुखा भवन्ति पुरेत्यन्वयः ॥ ३२ ॥

कुचकुम्भपूर्णतरकान्तिसुधारसशेषबिन्दुविसरच्छविभिः ।
वरहारराजिभिरुतानुपदं प्रतिलोडिताभिरशनैरुरसि ॥ ३३ ॥

**कुचकुम्भेति** ॥ कुचाः कुम्भा इव तेषु पूर्णतरं अतिपूर्णो यः कान्तिसुधारसः कान्त्याख्यसुधाजलं तस्य यः शेषस्तस्य बिन्दवस्तेषां विसरः प्रसारस्तस्य छविरिव छविः कान्तिर्यासां ताभिः कुचाख्यकुम्भान् कान्त्याख्यसुधामयजलेन पूरयित्वा पुनरप्यवशिष्टस्य कान्तिसुधाजलस्य बिन्दूनां प्रसरवत् प्रकाशमानाभिरिति भावः । पदेपदे अनुपदं प्रतिपदमुरस्यशनैर्जवेन परिलोडिताभिः गतिवशाच्चालिताभिः । वरहारा इतं उत्तमहारास्तेषां राजयः समूहास्ताभिरुतोपलक्षितासु तास्वित्यादि पूर्ववदन्वयः ॥

अपि लीलया कुवलयोल्लसितैरपरैः करैः सहचरीनिहितैः ।
वदनैः शुचिस्मितकटाक्षरसैश्चलकुण्डलोल्लसितगण्डयुगैः ॥ ३४ ॥

**अपीति** ॥ लीलया विनोदेन कुवलयैरुत्पलपुष्पैरुल्लसिताः शोभमानास्तैः करैः । 'स्यादुत्पलं कुवलयमि'त्यमरः । क्रीडार्थं गृहीतकुवलययुक्तदक्षिणकरैरित्यर्थः । सहचरीषु किङ्करीषु निहितैर्निक्षिप्तैरपरैः करैर्वामकरैश्चोपलक्षितासु । चलंति गतिवशाच्चलंति यानि कुण्डलानि ताटङ्कानि तैरुल्लसितानि गण्डयुगानि कपोलयुगानि येषां तैः । शुचीनि स्मितानि कटाक्षरसाश्च येषां तानि शुचिस्मितकटाक्षरसानि तैर्वदनैरुपलक्षितासु । शुचिस्मितानि कटाक्षरसाश्च तैरुपलक्षितास्विति वा । तास्वित्यादि पूर्ववदन्वयः ॥

प्रगतासु तासु रणितैरशनामणिनूपुरैरिव पुरा गदिताः ।
अनुवीक्षितुं तनुविलासमिमं तरुणा भवन्त्यथ निवृत्तमुखाः ॥ ३५ ॥

**प्रगतास्विति** ॥ श्लोकोऽयं 'करपल्लवैरि'ति श्लोकव्याख्यानावसरे व्याख्यातः ॥

अनुपालिताः स्वदयितैर्दयिताः कथमप्युपेत्य कुचभारनताः ।
शनकैः पुनस्तदवलम्बबलात्किल ता विशन्ति परमोपवनम् ॥ ३६ ॥

अन्विति ॥ स्वासां दयितास्तैः स्वभर्तृभिरनुपालिताः प्रतीक्षिताः, कचानां ये भारास्तैर्नता नम्रा दयिता नार्यः कथमपि स्तनजघनभाराच्चलितुमशक्ताः सत्यः कथञ्चिदुपेत्य स्वभर्तृसमीपं प्राप्य पुनः पश्चात्तेषामवलम्ब आश्रय एव बलं तस्माच्छनकैः परममुत्तमं यदुपवनं विशंति । किलेत्यपरमार्थे । वस्तुतः श्रमादिदोषाभावेऽपि तत्र तत्प्रदर्शनं विडम्बनमात्रमेवेति भावः ॥ ३६ ॥

हसितप्रसूननिकरोरुभरप्रणमत्सुवर्णमणिसर्वतरून् ।
उपगूहयन्नमृतसिन्धुसखः पवनो न कस्य सुखमेधयति ॥ ३७ ॥

हसितेति ॥ हसितानि विकसितानि यानि प्रसूनानि तेषां निकरस्य समूहस्योरुभरेणोत्कृष्टभारेण प्रणमन्तो नम्रीभावं भजन्तो ये सुवर्णमणिसर्वतरवः सुवर्णमया मणिमयाश्च ये सर्वतरवस्तानुपगूहयन्नाश्लिषन् । अनेन पवनस्य सौरभ्यमुक्तं । अमृतमयौ च तौ सिन्धू समुद्रौ च तयोः सखाऽमृतसिंधुसखः । ('राजाहः सखिभ्यष्टजि'ति टच्) अनेन शैत्यमुक्तं भवति । एवंविधः पवनः कस्य सुखं नैधयति? सर्वेषामपि सुखं एधयत्येव । तत्र सुधासमुद्रौ स्त इत्यत्र 'अरश्च ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमत प्रदौ तौ' । 'अरश्च ण्यश्चार्णवौ ब्रह्मलोके' इति प्रमाणम् ॥ ३७ ॥

उपचारनन्दनमिदं भुवनं नियमेन नन्दयति यन्नजनम् ।
परमेव नन्दनमुपेन्द्रवनं सकलं सदा यदभिनन्दयति ॥ ३८ ॥

(श्लोकस्यास्य व्याख्या लिखितपुस्तके न दृश्यते) ॥ ३८ ॥

वरपारिभद्रकसुकल्पतरुव्रजपारिजातहरिचन्दनवन् ।
सहितं समादिपदतानननगैः परिभूषयन्ति तदहो ऋतवः ॥ ३९ ॥

वरेति ॥ ऋतवो वरा उत्तमा पारिभद्रकाः (शक्रपादपा 'शक्रपादपः पारिभद्रकः' इत्यमरः) ते च सुकल्पतरवः शोभनकल्पवृक्षास्तेषां ये व्रजाः समूहास्ते च पारिजाताश्च हरिचन्दनाश्च तेऽस्मिन् सन्तीति तद्वत् । पुनश्च 'समि'तिपदमादिर्यद्येषां तादृशा ताननगा तानवृक्षाश्च तैः । सन्तानाख्यैर्वृक्षैरित्यर्थः । सहितं तद्वनं परिभूषयन्ति । अहो आश्चर्यम् । भूष अलङ्कार इति धातुः ॥ ३९ ॥

स्मितमाधवीकुसुमरम्यतरौ नवचम्पकादिकुसुमोल्लसितौ ।
मधुमाधवौ मधुपगीर्मधुरौ मधुजित्प्रियान्प्रमदमानयतः ॥ ४० ॥

**स्मितेति** ॥ स्मितानि विकसितानि यानि माधवीकुसुमानि तै रम्यतरौ मनोहरौ, चम्पकाः चम्पकवृक्षा आदयो येषां तेषां कुसुमानि, नवानि यानि चम्पकादिकुसुमानि तैरुल्लसितौ शोभितौ । अत एव मधुपगीर्मधुरौ भ्रमरस्वरमनोहरौ मधुमाधवौ चैत्रवैशाखमासौ । 'स्याच्चैत्रे चैत्रिको मधुः' । 'वैशाखे माधवो राध' इत्यमरः । मधुं जितवानिति मधुजिन्मधुसूदनस्तस्य प्रियान् भक्तान् प्रमदं सुखमानयतः । प्रापयतः ॥

नवमल्लिकास्रजमभीष्टतमः शुचिसम्भवां प्रणयिनीशिरसि ।
कलयन् स्वयं न कुशलेति किल प्रतिघट्टयत्युरुकुचावुरसा ॥ ४१ ॥

**नवमल्लिकेति** ॥ अभीष्टतमः पतिः । शुचौ ज्येष्ठमासे संभव उत्पत्तिर्यस्यास्तां । 'ज्येष्ठे शुक्रः शुचिस्त्वयमि'त्यमरः । नवा नूतना या मल्लिकास्रक् मल्लिकामाला तां, नकुशलेति, त्वं शिरसिसम्यङ्माल्यं बद्धुं न जानासीत्युक्त्वा किल स्वयं प्रणयिनी शिरसि भार्याशिरसि कलयन्नभिमुखं स्थित्वा बध्ननसन् । उरसा निजवक्षसा । 'उरो वत्सं च वक्षश्चे'त्यमरः । उरुकुचौ तस्या उरस्तनौ प्रतिघट्टयति । दृढं ताडयति । घट्ट चलने इति धातुः । अयं भावः । नवमल्लिकामालां कबर्यां बद्धुमुद्यतां रमणीं प्रेक्ष्यमाणः प्रियस्त्वं नजानासीत्युक्त्वा स्रजमादाय तस्या अभिमुखं स्थित्वा स्वयं तत्कबर्यां बाहुभ्यामबध्नात् । तत्राङ्गेनोरुकुचौ प्रतिघट्टयतीति ॥ ४१ ॥

मधुरस्वरास्ततपतत्रततिप्रकटान्तपंक्तिधृतनेत्ररुचः ।
शिखिनोऽनुयान्ति हि सहस्रदृशं जलदर्तुलक्ष्म निजनृत्तमहे ॥ ४२ ॥

**मधुरेति** ॥ मधुरो मनोहरः स्वरः केकाध्वनिर्येषां तादृशाः । तता विस्तृता या पतत्रततयो बर्हसमूहास्तासां प्रकटाः स्पष्टा अन्ता अग्रभागा यासां ताः प्रकटान्ताः तादृश्यो याः पंक्तय आवलयस्तासु धृताः नेत्ररुचयो नेत्रकान्तयो यैस्तादृशा शिखिनो मयूराः । 'केकी शिखी शिखण्डी'ति हलः । जलं ददातीति जलदः सचासौ

ऋतुश्च जलदर्तुर्वर्षर्तुस्तस्य लक्ष्म लक्षणभूतं यन्निजनृत्तं स्वकीयनर्तनं तदेव मह उत्सवस्तस्मिन्, सहस्रं दृशो दृष्टयो यस्य तं इन्द्रमनुयान्तिहि । अनुकुर्वन्तिहि । वर्षकाले मेघध्वनिं श्रुत्वा मयूरा नृत्यन्तीति प्रसिद्धम्, नृत्ते बर्हाणां विस्तृतत्वात्तदग्र नयनसदृशानि बहूनि वर्तुलानि प्रकटीभवन्ति, तैः सहस्रदृशमिन्द्रमनुयान्तीति भावः ॥ ४२ ॥

**शारदोल्लसत्कुवलयेक्षणया विकचारविन्दरुचिराननया ।**
**प्रियया च शोभनशुकस्वनया रमते जनो मुखरहंसकया ॥ ४३ ॥**

**शरदेति** ॥ जनो मुक्तजनः । उल्लसत्कुवलयं शोभमानोत्पलमेवेक्षणं चक्षुर्यस्यास्तया, विकचानि विकसितानि यान्यरविन्दानि पद्मानि तान्येव रुचिराननं मनोहरमुखं यस्यास्तया, शोभना ये शुकास्तेषां स्वन एव स्वनो ध्वनिर्यस्यास्तया । शोभनः शुकस्वनो यस्यास्तयेति वा । मुखराः कूजन्तो हंसका हंसा यस्यास्तया । स्वार्थे कः । शरदा शरदृतुना । उल्लसत्कुवलयेक्षणया, शोभनोत्पलसदृशेक्षणया, विकचारविन्दरुचिराननया विकसितारविन्दवद्रुचिराननया, शोभनशुकस्वनया शोभनशुकस्वनवत्स्वनयुक्तया, मुखरहंसकया कणत्पादकटकया । 'हंसकः पादकटकः' इत्यमरः । प्रियया भार्यया च रमते ॥ ४३ ॥

**अभिनन्दयन् हिमऋतुं सुसखा स्फटिकाचलच्छलहिमाधिकृतम् ।**
**फलिनीकुलं कुसुमयञ्छिशिरो हसतीव फुल्लनवकुन्दरुचा ॥ ४४ ॥**

**अभीति** ॥ स्फटिकात्मकश्चासावचलः पर्वतश्च स्फटिकाचलः स इति छलं, व्याजः, तच्च तत् हिमञ्च तेनाधिकृतं व्याप्तं । स्फटिकपर्वतवत्प्रतीयमानहिमेन व्याप्तमित्यर्थः । हिमऋतुं हेमन्तऋतुं । 'ऋत्यक' इति प्रकृतिभावान्नगुणः । अभिनन्दयन् सुसखा हिमर्तोः शोभनसखा । 'नपूजनादि'ति निषेधान्नटच् । फलिनीनां कुलं समूहं । फलिनी 'गजगे'ति प्रसिद्धः कश्चन गुल्मविशेषः । 'प्रियंगु फलिनी श्यामे'ति हलः । कुसुमयन् पुष्पितं कुर्वञ्छिशिरः शिशिरऋतुः । फुल्लानि विकसितानि नवकुन्दानि नूतनकुन्दकुसुमानि तेषां रुक्कान्तिस्तया हसतीवास्ति । कुन्दकुसुमानां धवलत्वेन

हासोऽपि धवल इति कविसमयत्वाद्धवलकुन्दकुसुमविकासं दृष्ट्वा हास इत्युत्प्रेक्षेति भावः। अनेन श्लोकेन ऋतुद्वयं वर्णितं भवति ॥ ४४ ॥

हिमशीतवर्षपरितापपुरस्सरदोषमूलमिह नर्तुगुणः।
प्रियमेव साधयति नित्यमहो स विमुक्तिमानिति विमुक्तिमताम् ॥ ४५ ॥

हिमेति ॥ इह भगवल्लोके ऋतुगणः वसन्तादिऋतुसमूहः। हिमं तुषारः, शीतं वर्षं, परितापश्च ते पुरस्सरा आद्या येषां ते च ते दोषाश्च तेषां मूलं कारणभूतं। 'तुषारस्तुहिनं हिममि'त्यमरः। न भवति, किन्तु विमुक्तिरेषामस्तीति तेषां नित्यं प्रियमेव सुखमेव साधयति। इत्यस्माद्धेतोः स ऋतुगणो विमुक्तिमान् मोक्षवान् निर्दोषत्वादिति भावः। अहो एवमाश्चर्यमात्रं लोक इति भावः ॥ ४५ ॥

अमृतस्रगुत्तमफलप्रसवानमृताय तत्र जनतार्पयति।
उपभोक्तुमप्यविधिबन्धवशा प्रकृतिं प्रयाति सकलोऽपि सदा ॥ ४६ ॥

अमृतेति ॥ तत्र वैकुण्ठलोके। जनानां समूहो जनता, विधिरेव बन्धो विधिबन्धस्तस्य वशा अधीना तादृशी न भवतीत्यविधिबन्धवशा। एवं कुर्यादिति श्रौतस्मार्तविधिनामकबन्धस्य वशेऽवर्तमानापीत्यर्थः। उपभोक्तुमात्मन उपभोगायामृतश्च स्रजो मालास्ताश्चोत्तमफलानि च प्रसवाः पुष्पाणि च तान्। 'प्रसवः पुष्पफलयोरपत्ये गर्भमोचन' इति हेमचन्द्रः। अमृताय नित्यमुक्ताय हरयेऽर्पयति। समर्पयति। ऋगतौ। अमृतादिकं सर्वमपि हरये समर्प्योपभुंक्त इत्यर्थः। तस्य मुक्तजनस्य तदुपपन्नमेव। तथाहि सकलोऽपि सर्वोऽपि जनः सदा प्रकृतिं स्वभावं प्रयात्यनुवर्तते। भगवति सर्वसमर्पणस्य तत्स्वभावत्वात्तथापि तथा वर्तत इति भावः। [अत्रार्थान्तरन्यासालङ्कारः] ॥ ४६ ॥

प्रमदातिरेकमुपयातवता प्रमदागणेन चरतोपवने।
उपगीयते स्म मधुरं मधुजिच्चरितं सकान्ततातिना सततम् ॥ ४७ ॥

**प्रमदेति** ॥ प्रमदस्य सुखस्यातिरेकमाधिक्यमुपयातवता प्राप्तवता । उपवन आरामे । 'आरामः स्यादुपवनमि'त्यमरः । चरता सकान्ततिना भर्तृसमूहसहितेन स्वस्वभर्तृसहितेनेतियावत् । प्रमदागणेन, सन्ततं निरन्तरं मधुजिच्चरितं श्रीहरिचरितं मधुरं श्रोत्रमनोहरं यथा भवति तथोपगीयते स्म ॥ ४७ ॥

ललना ललन्त्यभिवरं प्रवरा ललिता लुनन्ति कुसुमानि पराः ।
इतराः स्रजो विरचयन्ति पतीननुरञ्जयन्ति न हि काश्चन नो ॥ ४८ ॥

**ललना इति** ॥ प्रवरा उत्तमा ललना नार्यो वरं वरमभि, अभिवरं । स्वस्वभर्त्राभिमुख्येनेत्यर्थः । ललन्ति नृत्यन्ति । लल ईप्सायां लट् । ललिता अतिकोमलाः परा अन्याः कुसुमानि लुनन्ति । लूञ् छेदने लट् । इतराः स्रजो माला विरचयन्ति । रच प्रतियत्ने । काश्चन पतीन्नानुरञ्जयन्तीति नो न रञ्जयन्तीति नो सर्वाश्च स्वस्वपतिसेवया तान् सुखयन्त्येव ॥ ४८ ॥

वनलीलया विविधया मुदितास्तरुणा घनस्तननतास्तरुणीः ।
सुलतालयेषु परिरभ्य रतिं वदनारविन्दमधुपा दधति ॥ ४९ ॥

**वनेति** ॥ विविधया नानाविधया वनलीलया वनक्रीडया मुदिताः सन्तुष्टास्तरुणा युवानः सु शोभना ये लतालया लतागृहाणि तेषु घनौ निबिडौ यौ स्तनौ ताभ्यां नता नम्रास्तास्तरुणीः परिरभ्य वदनमेवारविन्दं तस्य यन्मधु तत्पिबन्तीति तादृशा अधरसुधां पिबन्तःसन्तो रतिं रतिक्रीडां दधति कुर्वन्ति ॥ ४९ ॥

रसिकाः सुधासु सरसीषु ततो रुतनूपुरानुकृतसारसकाः ।
विहरन्ति साकमवगाह्य धवैर्जलमड्डुकोत्सवहसद्वदनाः ॥ ५० ॥

**रसिका इति** ॥ ततो वनक्रीडानन्तरं रुतानि क्वणंति यानि नूपुराणि पादभूषणानि तैरनुकृता विडम्बिताः सारसकाः सारसाख्यपक्षिविशेषा याभिस्ताः । 'सारसा जलकुक्कुटा' इत्यमरः । रसिका विलासिन्यो धवैः पतिभिः साकं सुधारसिका आपो यासु तासु सरसीषु । 'कासारः सरसी सर' इत्यमरः । अवगाह्यावतीर्य जलमेव मड्डुको

मद्दलविशेषस्तस्य य उत्सवस्ताडनोत्सवस्तेन, हसन्ति हासयुक्तानि वदनानि यासां तादृश्यः सत्यः। 'वाद्यप्रभेदा डमरु मड्डुडिण्डिमझर्झराः' इत्यमरः। विहरन्ति क्रीडन्ति ॥ ५० ॥

विविधा विधाय विहृतीः सलिले विकटेषु विद्रुमतटेषु गताः।
सुरभि सुवर्णकमथ वर्णकमाददते सखीकरगतं महिलाः ॥ ५१ ॥

विविधा इति ॥ महिला नार्यः सलिले विविधा विहृतीः क्रीडा विधाय। अथ जलविहारानन्तरं विकटेषु श्रेष्ठेषु। विशालेष्विति वा। 'विशङ्कटं विशालं स्यात्करालं विकटं तथे'ति हलः। विद्रुमतटेषु विद्रुमावबद्धतीरेषु गताः स्थिताः सत्यः, सखीकरगतं सखीहस्तस्थितं सुरभि शोभनपरिमलाढ्यं सुशोभनो वर्णो यस्य तं वर्णकमङ्गरागं। 'वर्णको विलेपने मलयजे नटे चे'ति हेमचन्द्रः। आददते प्रतिगृह्णन्ति। डुदाञ् दाने लट् ॥ ५१ ॥

जघनांशुकैरवयवाभरणैः कुचकुंकुमैश्च कचमाल्यवरैः।
नयनाञ्जनैरपि मिथोऽब्जदृशां घटितैरलंकृतिरलं क्रियते ॥ ५२ ॥

जघनेति ॥ मिथः परस्परं घटितैः सम्बद्धैरब्जदृशां पद्मलोचनानां नारीणां जघनांशुकैः जघनानिचांशुकान्यम्बराणि तैः। अवयवा हस्तपादादयश्चाभरणानि कटकनूपुरादीनि च तैः। कुचाश्च कुंकुमानि च तैः। कचाः केशबन्धास्ते च माल्यवराणि माल्यश्रेष्ठानि तैः। नयनानिचाञ्जनानि च तैरप्यलं सम्यगलंकृतिरलङ्कारः क्रियते। जघनादिसम्बन्धादंशुकादीनामंशुकादिसम्बन्धाज्जघनादीनामेवं मिथोलङ्कारोऽभूदिति भावः ॥ ५२ ॥

तनुमध्यमा निजगृहाणि गताः सममात्मनामसुभगैरसमैः।
अमृतं पिबन्त्यसुलभं भविभिश्चपकैर्महारजतरत्नमयैः ॥ ५३ ॥

तन्वीति ॥ निजगृहाणि स्वकीयगृहाणि गताः प्राप्तास्तनुकृशं मध्यमं मध्यप्रदेशो यासां तास्तनुमध्यमा नार्यः। समा न भवन्तीत्यसमास्तैरुत्तमैरित्यर्थः। नार्यपेक्षया

भर्तुरुत्तमत्वादिति भावः । आत्मनामसुभिः प्राणैः समा असुसमास्तैः पतिभिः समं साकं, महारजतं सुवर्णं । 'महारजतकाञ्चन' इत्यमरः । रत्नानि च तेषां स्वरूपाणि महारजतरत्नमयानि (तादात्म्यार्थे मयट्प्रत्ययः) तैश्चषकैः पानपात्रैः । 'चषकोऽस्त्री-पानपात्रमि'त्यमरः । भवः संसार एषामस्तीति भविनः संसारिणस्तैरसुलभमलभ्यममृतं पिबन्ति ॥ ५३ ॥

मृदुकम्रशय्यमनुरागवतां मणिमञ्चमञ्चितदृशोऽवसरे ।
अपि चोदिता अधिरुहन्ति शनैर्विनयो हि भूषयति सर्वरसम् ॥ ५४ ॥

**मृद्विति** ॥ अञ्चिताः पूजिता दृशो दृष्टयो यासां तादृश्यः । शोभनदृश इत्यर्थः । नार्योऽनुरागः स्नेह एषामस्तीति तेषां भर्तॄणां । मृदुः कम्रशय्या मनोहरशय्या यस्मिंस्तं, मणिमयोमञ्चस्तमवसरे, सुरतक्रीडार्थं मञ्चारोहणावसरे प्राप्तेऽपि चोदिता मञ्चारोहणाय स्वरमणैः प्रेरिताः सत्यः शनैरधिरुहन्ति । शनैरिति विनयो दर्शितः । सचाधिकगुण इत्याह— विनयोहीति । हियये विनयः शृङ्गारादिसर्वरसं भूषयति । शृङ्गारादिसर्वरसानां विनय एव भूषणमिति भावः । [अर्थान्तरन्यासालङ्कारः] ॥

अभिकान्तमुन्नमितकान्तकुचा किल बध्नती सकुसुमां कबरीम् ।
सुमुखी सुलक्ष्यभुजमूलवलिः परिरभ्यते प्रणयिनातिरसात् ॥ ५५ ॥

**अभीति** ॥ कान्तमभ्यभिकान्तं कान्ताभिमुख्येनेत्यर्थः । स्थिता, उन्नमितावूर्ध्वीकृतौ कान्तकुचौ मनोहरस्तनौ यया तादृशी, शोभनानि कुसुमानि यस्यां तां कबरीं केशपाशं बध्नती बन्धनं कुर्वन्ती किल । किलेत्यपरमार्थे । पुष्पैःसह, कबरीबन्धव्याजेनाभिकान्तं कुचोन्नमनं, भुजमूलवलिप्रदर्शनञ्च गूढाभिप्रायः । भुजयोर्मूले भुजमूले तयोर्वलयः, सुलक्ष्याः सम्यक् परिदृश्यमाना भुजमूलवलयो यस्यास्तादृशी भुजाभ्यां स्वकबरीबन्धनसमये स्पष्टतया परिदृश्यमानकक्षमूलरेखासतीत्यर्थः । सुमुखी नारी प्रणयिना भर्त्रातिरसादतिरागात् । 'रसो रागे विषेवीर्य' इति वैजयन्ती । परिरभ्यते । आलिङ्ग्यते ॥ ५५ ॥

पृथुवृत्ततुङ्गकठिनोरसिजद्वयवारितायतनिजान्तरयोः ।
भुजयोर्युगेन रमणो रमणीं परिरभ्य कोऽत्र सुखयेन्नसुखी ॥ ५६ ॥

पृथ्विति ॥ अत्र भवल्लोके । सुखी रमणो भर्ता पृथू स्थूलौ, वृत्तौ वर्तुलौ, तुङ्गावुन्नतौ, कठिनौ, चोरसिजौ स्तनौ तयोर्द्वयं तेन वारितं पूरितमायतं निजान्तरं विस्तीर्णस्वकीयमध्यं ययोस्तयोर्भुजयोर्हस्तयोर्युगेन परिरभ्य रमणीं भार्यां को न सुखयेत् । न रमयेत् । सुखदुःख तक्रियायां लिङ् । सर्वोऽपि रमयत्येवेत्यर्थः । ययोर्भुजयोरायतमन्तरं मध्यं वक्षः पृथुवृत्ततुङ्गकठिनस्तनद्वयेनपूरितं ताभ्यां भुजाभ्यां परिरभ्य सर्वोऽपि रमणो रमणीं रमयेदिति भावः ॥ ५६ ॥

स्मितफुल्लमुल्लसितझिल्लिल्लसन्मणिकुण्डलं मृदुकटाक्षपटु ।
निभृतो निरीक्ष्य सुचिरं सुतनोः प्रतिचुम्बति प्रियतमो वदनम् ॥ ५७ ॥

स्मितेति ॥ प्रियतमः पतिः । स्मितफुल्लं स्मितेन विकसितं । उल्लसितौ चिल्लिनावस्य स्तइत्युल्लसितचिल्लि । उल्लसितगण्डस्थलयुक्तमित्यर्थः । लसती मणिकुण्डले ताटङ्के यस्य तल्लसन्मणिकुण्डलं, मृदुः कोमलो यः कटाक्षस्तेन पटु चतुरं, सुतनोः प्रियाया वदनं निभृत एकाग्रचित्तःसन् सुचिरं निरीक्ष्य प्रतिचुम्बति । चुबि वक्रसंयोगे लट् ॥ ५७ ॥

नतमुन्नमय्य मुखचन्द्रमसं परिरम्भसम्भृतमुदा सुदृशः ।
उपरम्यते न तरुणेन चिरं मधुराधरामृतरसं पिबता ॥ ५८ ॥

नतमिति ॥ शोभने दृशौ यस्यास्तस्याः परिरम्भेणालिङ्गनेन सम्भृता सम्पूर्णा मुत सन्तोषो यस्य तेन तरुणेन नतं ह्रियावनतं मुखचन्द्रमसमुन्नमय्योद्धृत्य । मधुरो योऽधरामृतरसोऽधरोष्ठामृतरसस्तं । 'ओष्ठाधरौतु रदनच्छदावि'त्यमरः । पिबतासता चिरं नोपरम्यते न विरम्यते ॥ ५८ ॥

सुरतोत्सवोत्सुकतया त्वरयन् करपल्लवं निवसनग्रहणे ।
कररुद्धमायतदृशः सहसा त्वरयत्यथ द्विगुणमिष्टतमः ॥ ५९ ॥

(अस्य व्याख्या लिखितपुस्तके न दृश्यते) ॥ ५९ ॥

रभसात्रपातितपृथूरसिजः परिरभ्य तत्क्षणवियाततरः ।
मणितादिसौरतवितानपटू रमयत्यमून्युवतिसङ्घ उत ॥ ६० ॥

**रभसेति** ॥ रभसा सम्भ्रमेणावपातितावनामितौ पृथूरसिजौ बृहत्कुचौ येन तादृशः । स चासौ क्षणश्च तत्क्षणस्तस्मिन् वियाततरोऽतिधृष्टः । 'वियातो धृष्ट उच्यते' इति हलः । रतिकालेऽतिधृष्ट इत्यर्थः । 'पराक्रमः परिभवे वैयात्यं सुरतेष्वपी'त्युक्तेः । सुरते वैयात्यं गुण एव । मणितं रतिकालिकध्वनिविशेषः । 'मणितं रतिकूजित'मित्यमरः । तदादिर्यस्य स मणितादिस्तादृशो यः सौरतस्सुरतसम्बन्धीव्यापारस्तस्य वितानो विस्तारस्तस्मिन् पटूश्चतुरो युवतिसङ्घ उत नारीसमूहोप्यमून् रमणान् परिरभ्य आलिङ्ग्य रमयति । अनेन रमणीकर्तृकमुपरिसुरतं वेदितव्यम् ॥ ६० ॥

अतिलौकिकान् रमयतो रमणान् रमयन्त्यलौकिकगुणा ललनाः ।
अनुरूपरूपमतिलोकसुखं तदलौकिकं निधुवनं लसति ॥ ६१ ॥

**अतीति** ॥ अलौकिका इतरलोकविलक्षणा गुणा यासां ता ललना नार्यः । लोकेषु इतरलोकेषु वर्तमाना लौकिकाः पुरुषास्तानतिक्रम्यवर्तमाना अतिलौकिकास्तान् रमयत आत्मनं रमयतो रमणान् पतीन् रमयन्ति । अनुरूपं परस्परमनुकूलं रूपं स्वरूपं यस्य तादृशं लोकानामितरलोकानां सुखं तदतिक्रम्यवर्तमानमतिलोकसुखं. अलौकिकं स्वयञ्चलोकविलक्षणं निधुवनं रतिक्रीडा । 'संवेशनं निधुवनं सम्प्रयोगो रते रतिरि'ति हलः । लसति शोभते ॥ ६१ ॥

न रतिः श्रमादिखचिता नियमाद्विरहव्यथापि न वधूवरयोः ।
प्रतिकापनीप्रणयतः कलहो न समस्तदोषरहिते हि पदे ॥ ६२ ॥

अलौकिकत्वमेव स्पष्टयति—

**नेति** ॥ समस्तदोषरहिते पदे भगवल्लोके रती रमणं श्रम आदिर्यस्य तेन खचिता सम्बद्धा सहचरिता, श्रमेण तज्जन्यस्वेददौर्गन्ध्याग्लान्यादिना युक्तेत्यर्थः नियमान्नियते

नास्ति। तत्र रतेः श्रमादिरहितत्वाभावो नियमादेवेति भावः। वधूवरयोर्दम्पत्योः विरहव्यथापि परस्परवियोगनिमित्तक्लेशोऽपि न। प्रतिकामिनीप्रणयतः सपत्नीस्नेहात् (पत्युः पत्नीपक्षपातात्कलहः) पतिः सपत्नीप्रणयवान् वर्तत इति कोपेन प्रेमकलहोऽपि न सम्भवति। एवमुक्तलक्षणदोषराहित्यमेवालौकिकत्वे कारणं हीत्यनेन सिद्धम्॥

सुखसंविदात्मकतया वपुषां सुरभित्वमेव बहिरन्तरपि।
हरिधाम्नि दम्पतिगणस्य ततो ननु मान्यतेऽपि मुनिभिः सुरतम्॥ ६३॥

दोषराहित्यं श्रुत्यादिप्रसिद्धमित्याह—

सुखेति॥ हरिधाम्नि हरिलोके दम्पतिगणस्य वधूवरसमूहस्य वपुषां, सुखञ्च, संवित् ज्ञानञ्च, त आत्मा स्वरूपं यस्य तस्य भावस्तत्ता तया। अप्राकृतत्वादिति भावः। बहिरन्तरपि सुरभित्वमेव सुगन्धित्वमेव ततोननु तस्माद्धि सुरतं मुक्तसुरतं मुनिभिरपि मान्यते श्लाघ्यते॥ ६३॥

शृणुताप्यलोकविषयं विषयं सकलस्य मुक्तनिकरस्य दृशाम्।
वपुरिन्दिरापतिरमन्दरसं ननु सुन्दरं प्रकटयत्यनिशम्॥ ६४॥

शृणुतेति॥ सकलस्य समस्तस्य मुक्तनिकरस्य मुक्तसमूहस्य दृशां, लोकानामितरलोकानां विषयो गोचरो नभवतीत्यलोकविषयस्तं। भगवल्लोकेतरलोकस्थजनानामगोचरमित्यर्थः। विषयमपि गोचरमपि (आदरेण) शृणुत। कोऽसौ सकलमुक्तनिकरदृशां गोचरः पदार्थ इत्यत आह— इन्दिरापतिरिति। इन्दिरापतिः, अमन्दः परिपूर्णो रसो बलवीर्याद्यनन्तगुणनिकरो यस्य तादृशं सुन्दरं मनोहरं वपुरनिशं सदा प्रकटयति ननु। कटेवर्षावरणयोः लट्। 'शृङ्गारादौ बले वीर्ये गुणे रागे द्रवे रस' इत्यमरः॥

मणिराजिराजितमहामकुटं शितिकान्तकुन्तलसहस्रतयम्।
अलिकार्धचन्द्रविलसत्तिलकं श्रवणोल्लसन्मकरकुण्डलयुक्॥ ६५॥

कीदृशं तद्वपुरित्यतो 'नवभानुभा' इत्यतः प्राक्तनैः श्लोकैर्वर्णयति—

**मणिराजीत्यादिना** ॥ मणीनां रत्नानां राजिभिः समूहैः राजितं प्रकाशितं महामकुटं महाकिरीटं यस्य तादृशं । शितयो नीला ये कान्तकुन्तलाः मनोहरालका-स्तेषां तहस्ततयं सहस्रं यस्य तादृशं । 'संख्याया अवयवे तयबि'ति सहस्रशब्दात्तयप् प्रत्ययः । अलिकं ललाटमेवार्धचन्द्रस्तस्मिन् विलसत् तिलकं यस्य तादृशं । श्रवणयोः कर्णयोरुल्लसती मकरकुण्डले मकराकारकुण्डले ताभ्यां युनक्तीति युक् युक्तमित्यर्थः। तादृशं वपुः प्रकटयतीति सर्वत्र पूर्वेणान्वयः ॥ ६५ ॥

**परिपूर्णचन्द्रपरिहासिमुखं जलजायताक्षमरुणोष्ठपुटम् ।**
**हसितावलोकललितैरतुलैरभिनन्दयत्प्रणतमात्मजनम् ॥ ६६ ॥**

**परीति** ॥ परिपूर्णो यश्चन्द्रस्तं परिहसितुमपहसितुं शीलमस्येति तादृशं मुखं यस्य तादृशं । परिपूर्णचन्द्रादप्यतिकान्तिमदित्यर्थः । जलजवत् पद्मवदायतेऽक्षिणी यस्य तादृशं । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजि'ति षच् । अरुणमोष्ठपुटं यस्य तादृशं। नविद्यते तुला उपमा येषां तैर्हसितेन मन्दहासेन युक्ता अवलोका निरीक्षणानि हसितावलोकास्तएव (तेषामिति वा) ललितानि विलासास्तैः प्रणतमात्मनो जनं भक्तजन-मित्यर्थः । अभिनन्दयत् सन्तोषयद्वपुरित्यादि पूर्ववत् ॥ ६६ ॥

**नवकम्बुकण्ठमहिमांशुमहोमहिमोपलेन्द्रवरहारधरम् ।**
**रमणीयरत्नगणविद्धलसद्वलयाङ्गुलीयकवराङ्गदवत् ॥ ६७ ॥**

**नवेति** ॥ नवो नूतनो यः कम्बुः शङ्खस्तद्वत्कण्ठो यस्य तादृशं । तद्वद्रेखात्रययुक्त-मित्यर्थः । अहिमा उष्णा अंशवो यस्य सोऽहिमांशुरादित्यस्तस्य महस्तेजस्तद्वन्महिमा तेजो यस्य सोऽहिमांशुमहोमहिमा, सचासावुपलेन्द्रो रत्नराजः कौस्तुभः स च वरहारश्च तौ धारयतीति तादृशं । रमणीयानां रत्नानां गणेन विद्धानि खचितानि लसन्ति च तानि वलयांगुलीयकवराङ्गदानि वलयाश्च, अंगुलीयकानिच, वराङ्गदानिचास्य सन्तीति तादृशं वपुरित्यादिपूर्ववदन्वयः ॥ ६७ ॥

**रविचक्ररुक्मकरचक्रकरं विधुबिम्बकम्बुमधुराम्बुरुहम् ।**
**ज्वलनज्वलद्गदमुदारधनुः पृथुवृत्तहस्तमतिताम्रतलम् ॥ ६८ ॥**

**रवीति** ॥ रविचक्रं रविसमूहस्तद्वद्रुक्प्रकरस्तेजःसमूहो यस्य तद्रविचक्ररुक्प्रकरं तादृशं **चक्रं** सुदर्शनं **करे** यस्य तादृशं । रविनिकरतेजोवत्तेजोयुक्तचक्रधरमित्यर्थः । विधुबिम्बवत् कम्बुः शङ्खो यस्य तादृशं । चन्द्रमण्डलवद्धवलपाञ्चजन्यधरमित्यर्थः । 'कम्बुर्नावलये शङ्ख' इत्यमरः । मधुरं मनोहरमम्बुरुहं पद्मं यस्य तादृशं । ज्वलनवद्‌ग्निवत् ज्वलन्ती गदा कौमोदकी यस्य तादृशं । उदारमुत्तमं धनुः शार्ङ्गं यस्य तादृशं **पृथवो** दीर्घा पुष्टा इत्यर्थः । वृत्ता वर्तुला हस्ता यस्य तादृशं । अतिताम्राणि तलानि हस्ततलानि यस्य तादृशं वपुरित्यादिपूर्ववदन्वयः ॥ ६८ ॥

**वरपीवरांसमधिराजदुरोमणिमण्टपाग्र्यविलसत्कमलम् ।**
**सजगद्विसप्तकतनूदरकं शुभनाभिकञ्जगतकालिनुतम् ॥ ६९ ॥**

**वरेति** ॥ वरौ श्रेष्ठौ पीवरांसौ पुष्टस्कन्धौ यस्य तादृशं । 'स्कन्धो भुज शिरोंऽसोऽस्त्रीत्यमरः । अधिकं राजद्विराजमानमधिराजदुरश्च तदुरश्च तदेवमणिमण्टपाग्र्यो रत्नमयमण्टपश्रेष्ठस्तस्मिन् विलसन्ती कमला रमा यस्य तादृशं, जगतां लोकानां यद्विसप्तकं चतुर्दश तेन सहितं सजगद्विसप्तकं तादृशं तनूदरं सूक्ष्मजठरं यस्य तादृशं । बहुव्रीहौ कः । शुभो यो नाभिस्तस्य यत्कञ्जं कमलं, तत् गतः प्राप्तः कश्चतुर्मुखः स एवालिर्भ्रमरस्तेन नुतं स्तुतं वपुरित्यादिपूर्ववदन्वयः ॥ ६९ ॥

**अतिकान्तकाञ्चिपदकान्तिमिलत्तपनीयभङ्गरुचिपिङ्गपटम् ।**
**वरहस्तिहस्तसदृशोरुयुगं क्रमवृत्तचारुतरजङ्घमुत ॥ ७० ॥**

**अतीति** ॥ अतिकान्तमतिमनोहरं काञ्चिपदं काञ्चिस्थानं कटिप्रदेशस्तस्य या कान्तिस्तया मिलन् सम्बध्यमानः । तपनीयभङ्गरुचिपिङ्गपटः तपनीयभङ्गस्य स्वर्णच्छेदस्य रुचिवत् कान्तिवत् पिङ्गः पीतः पटो यस्य तादृशं । 'ङ्यापोः संज्ञा छन्दसोर्बहुलमितिसंज्ञायां विकल्पेन पुंवद्भावविधाना'त्काञ्चिपद'मित्यत्र पुंवद्भावः । 'काञ्चीपदं कलत्रं जघनं श्रोणी'ति हलः । वर उत्तमो यो हस्तिहस्तस्तस्य सदृशावूरू तयोर्युगं युगलं यस्य तादृशं । क्रमेण वृत्ते वर्तुले । ईषत्कृशइतियावत् । तादृशे चारुतरजङ्घे यस्य तादृशं चारुतरजङ्घम् । उत वपुरित्यादिपूर्ववदन्वयः ॥ ७० ॥

वरनूपुरं परमरुक्प्रपदं नवविद्रुमद्युतिनखांगुलिमत् ।
अरिवारिजध्वजकलङ्कलसत्पदपांसुपावितजगत्त्रितयम् ॥ ७१ ॥

वरेति ॥ वरे नूपुरे पादभूषणे यस्य तादृशं । परमा, रुक्कान्तिर्ययोस्ते परमरुची तादृशे प्रपदे पादाग्रे यस्य तादृशं । 'पादाग्रं प्रपदमि'त्यमरः । नवो यो विद्रुमस्तस्य द्युतिरिव द्युतिः कान्तिर्येषां तादृशा नखा यासां ता अंगुलयस्ता अस्मिन् सन्तीति तादृशं । अरिश्चक्रं, वारिजं पद्मं, ध्वजश्च तेषां ये कलङ्का लाञ्छनानि तैर्लसती शोभमाने पदे पादौ तयोः पांसवस्तैः पावितं पवित्रीकृतं जगत्रितयं त्रैलोक्यं येन तादृशं । 'कलङ्काङ्कापवादयोरि'त्यमरः । वपुरित्यादिपूर्ववत् ॥ ७१ ॥

निखिलागमावगमितैरमितैः सुखसंविदादिभिरनन्तगुणैः ।
प्रपदादिकान्तसकलावयवाकृतिभिः सदैक्यवददोषलवम् ॥ ७२ ॥

निखिलेति ॥ निखिला य आगमा वेदास्तैरवगमिता ज्ञाता उदिता इतियावत् । तैरमितैः प्रत्येकमपरिमितैः । सुखञ्च संविच्च त आदी येषां तैरनन्तगुणैः, प्रपदं पादाग्रमादिर्येषां ते प्रपदादयः । कं शिरोऽन्तं अवसानं येषां ते कान्तास्तेचते सकलावयवाश्च प्रपदादिकान्तसकलावयवाः, तेचाकृतयः सकलजीवगतसकलप्रादुर्भाव-गतस्वरूपाणि ताश्च ताभिः सदा ऐक्यमस्यास्तीति ऐक्यवत् । ज्ञानानन्दाद्यनन्तगुणैः करचरणादिसकलावयवैः प्रादुर्भावादिगतस्वरूपैश्च सदाभेदरहितमिति भावः । 'देह-देहीविभागश्च न क्वचित्परमेश्वरे । गुणैस्तद्वद्विभागो वा नेहनाने'ति स्मृतिश्रुति सिद्धमेतत् । नविद्यते दोषलव दोषैकदेशो यस्य तादृशं दोषैकदेशेनापिरहितमित्यर्थः । वपुरित्यादिपूर्ववदन्वयः ॥ ७२ ॥

अधिकारिणां गुणविशेषवशाद्विपदाद्यनन्तचरणान्ततया ।
अतिभासितं घनगुणाघनैरितरैश्च तत्तदुचितै रुचिरैः ॥ ७३ ॥

अधिकारिणामिति ॥ अधिकारिणां मनुष्यादिब्रह्मान्तानां भगवदुपासनाधिकारिणां गुणेषु ज्ञानभक्त्यादिगुणेषु विशेषवशात्तारतम्यविशेषवशाद्विपदे यस्य तद्विपदं रूपं

तदादिर्यस्य तद्द्विपदादि, अनन्ताश्चरणा यस्य तदनन्तचरणं रूपं, तदन्ते यस्य तदनन्तचरणान्तं । द्विपदादिच तत् अनन्तचरणान्तञ्च तस्य भावस्तत्ता तया । द्विपदं रूपमारभ्यानन्तचरणरूपावसानतयेत्यर्थः । ये द्विपदरूपदर्शनाधिकारिण तान्प्रति द्विपदतयातिभासितं, एवमुत्तरोत्तरं ये ये यद्यद्रूपदर्शनाधिकारिणस्तांस्तान्प्रति तथा तथावभासितं । न केवलं द्विपदादित्वमेव रूपाणां किन्त्वितरैः पादातिरिक्तैः, घनाः प्रत्येकं परिपूर्णा गुणा ज्ञानानन्दाद्यनन्तगुणास्तदात्मका अवघनाः शिरोनयनाद्यवयवा-स्तैरपि, तस्य तस्योदितास्तत्तदुदितास्तैः द्विपदादितत्तद्रूपाणामुदितै रुचिरैर्मनोहरैरवय-वैरवभासितं, अत्र तत्तदुचितैरितितारतम्यस्थितानां तत्तदधिकारिणां द्रष्टुमुचितैरेक त्र्यादि शिराद्यवयवैश्च अवभासितमिति वा । एतादृशं वपुरित्यादिपूर्ववदन्वयः ॥

**नवभानुभाः कनककान्तिपरं वरहारहारिहरिनीलहरित् ।**
**शबलप्रभादिविविधद्युतिमत्सुखबोधसौरभसुरूपगुणम् ॥ ७४ ॥**

नवेति ॥ नवभानोरुद्यद्भानोर्भासइव भासः दीप्तयो यस्य तन्नवभानुभाः, परमन्यत् । 'परं रूपान्यमुख्येषुपरोऽरि परमात्मनोरि'त्यभिधानं । कनकवत् सुवर्णवत् कान्तिर्यस्य तत्कनककान्ति, वरहार उत्तमहारस्तद्वद्धारि मनोहरं । 'हृद्यं हारि मनोहरञ्च रुचिर-मि'ति हलः । अन्यद्धरिनील इन्द्रनीलमणिः तद्वद्धरित् नीलमपरं शबलाच सा प्रभाच सा आदिर्यासां ता शबलप्रभादयस्तादृशा या विविधद्युतयो नानाकान्तयस्ता अस्य सन्तीति । अन्यत् सुखञ्च बोधश्च सुखबोधौ तदात्मकाः सौरभसुरूपगुणाः सौरभं परिमलस्तच, सुरूपं गुणाश्च यस्य तादृशं रूपमिह वैकुण्ठे मोक्षिणो मुक्तानानन्द-यतीत्युत्तरश्लोकेनसम्बन्धः । एतादृशं वपुः प्रकटयतीति पूर्ववद्वान्वयः ॥ ७४ ॥

**आश्चर्यरत्नेष्वधिकं जगत्त्रयेऽप्याश्चर्यमाश्चर्यमहो मुहुर्मुहुः ।**
**सौन्दर्यसारैकरसं रमापते रूपं समानन्दयतीह मोक्षिणः ॥ ७५ ॥**

आश्चर्यमिति ॥ जगतां त्रयं जगत्त्रयं तस्मिन्, आश्चर्येष्वद्भुतेषु वस्तुषु रत्नानि श्रेष्ठानि तेषु । 'रत्नं स्वजातिश्रेष्ठेपी'त्यमरः । अधिकमत्यन्तमाश्चर्यमद्भुतं मुहुर्मुहुः पुनःपुनः दर्शनेऽप्याश्चर्यं महदाश्चर्यं, सौन्दर्येण साराः श्रेष्ठास्तेष्वेकरसं परमसुन्दरं

रमापते रूपं स्वरूपमिह मोक्षे मोक्षिणः समानन्दयति । अहो अद्भुतं । यद्वा जगत्त्रय आश्चर्यलेष्वप्यधिकमाश्चर्यं, आश्चर्यं महः तेजो यस्य तदाश्चर्यमहः सौन्दर्यसारैकरसं रमापते रूपं मोक्षिण आनन्दयतीति । [इन्द्रवज्रावृत्तम् । 'स्यादिन्द्रवज्रा यदितौजगौग' इत्युक्तेः] ॥ ७५ ॥

इज्यते यज्ञशीलैः स यज्ञः प्राज्ञमध्ये परः प्रोच्यतेन्यैः ।
गीयते गेयकीर्तिः सुगीतैर्विध्यबद्धैः सदानन्दसान्द्रैः ॥ ७६ ॥

इज्यत इति ॥ इज्यत इति, याति जानातीति वा यज्ञः, तन्नामकः स भगवान् विधिना विधिनिषेधशास्त्रेणाबद्धा विध्यबद्धास्तैः, सदानन्दो निर्दुष्टानन्दस्तेन सान्द्रैः पूर्णैः, यज्ञेषु शीलमेषां ते यज्ञशीलास्तैः । पूर्वं यज्ञकर्माणि प्राचुर्येणकृतवद्भिरित्यर्थः, यज्ञा राजसूयाश्वमेधादय इज्यते, । अन्यैः पूर्वं प्रवचननिरतैः पुरुषैः प्राज्ञमध्ये विद्वन्मध्ये परः सर्वोत्तमः प्रोच्यते । व्याख्यां कुर्वद्भिः सर्वोत्तमत्वेन समर्थ्यत इति भावः । गेया कीर्तिर्यस्य स श्रीहरिः सु शोभनं गीतं गानविद्या येषां तैर्गीयते । किमेतं प्रत्यवायपरिहारार्थमेवं कुर्वंति, आनन्दातिशयार्थं वेत्याशङ्कायां क्रमेणोभयमपि परिहर्तुं 'विध्यबद्धैः' 'सादनन्दसान्द्रै'रित्युक्तं । विधिबद्धत्वाभावान्नप्रत्यवायपरिहारार्थं, आनन्दपूर्णत्वान्नानन्दातिशयार्थश्चेति भावः ॥ ७६ ॥

वैकुण्ठे ते श्रीविशेषा जनानामत्याश्चर्यं चित्तवाचामभूमिः ।
वैकुण्ठेते श्रीविशेषाजनानामुक्तश्लाघ्ये युक्तमेतादृशत्वम् ॥ ७७ ॥

वैकुण्ठ इति ॥ वैकुण्ठे जनानामुक्ता श्रीविशेषाः शोभाविशेषा ऐश्वर्यविशेषा वा, अत्याश्चर्यमतिचित्रं चित्तानिच वाचश्च तासां, इतरेषां चित्तवाचाञ्चाभूमिः आस्पदं नभवति । 'भूमिः क्षितौ स्थानमात्र' इत्यभिधानं । तथाहि वैकुण्ठेन श्रीहरिणा इते प्राप्ते तत्सन्निहित इतियावत् । 'वैकुण्ठाविन्द्रकेशवा'वित्यभिधानं । श्रीः लक्ष्मीः विः पक्षी गरुडः शेषः अजश्चतुर्मुखः श्रीविशेषाजास्तेचते नानामुक्ताश्च तैः श्लाघ्ये श्लाघनीये वैकुण्ठलोक एतादृशत्वं एवं विधत्वं युक्तमुपपन्नं । असम्भावितं न भवतीति भावः । [शालिनीवृत्तम् । 'मत्तौ गौ चेच्छालिनी वेदलोकै'रित्युक्तेः] ॥ ७७ ॥

यं यं सुखी कामयतेऽर्थमत्र सङ्कल्पमात्रात्सकलः स स स्यात् ।
इत्येव वेदा अपि वेदयन्ति मुक्तिं ततः को विभवातिरेकः ॥ ७८ ॥

**यंयमिति** ॥ सुखमस्यास्तीति सुखी मुक्तः । सहितनिर्दुःखपरमानन्दत्वात्सुखीत्युच्यते । अत्र वैकुण्ठे यं यं, अर्थ्यत इत्यर्थस्तं विषयादिकं कामयते । इच्छति । स सः सकलोविषयः केवलं सङ्कल्पः सङ्कल्पमात्रं तस्मात्स्यात् । वेदा अपि 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्यपितरः समुत्तिष्ठन्ते । स यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति, स यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति' । इत्याद्युक्त्या मुक्तिं मोक्षं वेदयन्ति ज्ञापयन्ति प्रतिपादयन्तीत्यर्थः । ततः सङ्कल्पमात्रसुलभार्थयुक्तमुक्तेरन्यो विभवातिरेको विभवातिशयः कः ? न कोऽपीत्यर्थः । [इन्द्रवज्रावृत्तम्] ॥ ७८ ॥

महानन्दतीर्थस्य ये भाष्यभावं मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।
सुराद्या नरान्ता मुकुन्दप्रसादादिमं मोक्षमेते भजन्ते सदेति ॥ ७९ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के एकादशः सर्गः ॥

**महानन्देति** ॥ सुरा आद्या येषां तादृशा, नरा अन्तेऽवसाने येषां तादृशा येऽधिकारिणस्ते, महान् य आनन्दतीर्थस्तस्य भाष्यभावं भाष्यार्थं मनांसि च वाचश्च ताभिः सशक्त्या आवर्तयन्ते श्रवणमननव्याख्यारूपामावृत्तिं कुर्वन्ति । एते मुकुन्दप्रसादाद्भगवदनुग्रहादिमं मोक्षं सदा भजन्ते प्राप्नुवन्ति । सदेत्यपुनरावृत्तिरुच्यते । इति शब्देन 'इतितैरुदीरितमुदारमतिरि'त्यादिशेषवाक्यपरिसमाप्तिर्द्योत्यते । इति हेतुप्रकरणप्रकारादिसमाप्तिष्वि'त्यमरः । [भुजङ्गप्रयातंवृत्तम् । 'भुजङ्गप्रयातं चतुर्भिर्यकारैः' इत्युक्तेः] ॥ ७९ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकात्रिवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां एकादशः सर्गः ॥

तत्रानन्तस्वान्तवेदान्तिसिंहे मुख्यव्याख्यानिस्वने जृम्भमाणे ।
सद्यो माद्यद्वादिदन्तीन्द्रभीमे भेजे क्षोभो मायिगोमायुयूथैः ॥ १ ॥

**तत्रेति** ॥ मुख्यव्याख्या उत्तमव्याख्यानं तद्रूपो निस्वनो ध्वनिर्यस्य तस्मिन् । सद्यो व्याख्यानिस्वनमात्रश्रवणकालएवमाद्यन्तो विद्वत्ताभिमानेनमदभावं प्राप्ता वादिन एव दन्तीन्द्रा गजश्रेष्ठास्तेषां भीमे भयङ्करे । अनन्तं स्वान्तं मनो यस्य सोऽनन्तस्वान्तः श्रीपूर्णप्रज्ञः । वेदान्तोऽस्यास्तीति वेदान्ती वेदान्तशास्त्राभिज्ञ इति भावः । अनन्तस्वान्तश्चासौ वेदान्ती च स एव सिंहस्तस्मिन् । तत्र रत्नपीठे जृम्भमाणे शोभमाने सति । 'जृम्भणं जृम्भितोत्फुल्लविवृद्धेपुविचेष्टित' इत्यभिधानं । मायिनएव गोमायवः सृगालास्तेषां यूथैः समूहैः क्षोभो भयाच्चपलत्वं भेजे । सिंहगर्जित श्रुत्वा सृगालानां यथा चपलत्वं भवेत्तद्वन्मध्वव्याख्यानिनादश्रवणमात्राद्भीता मायिनश्चपलत्वं भेजुरिति भावः । [सर्गेऽस्मिन् प्रायः शालिनीवृत्तम् । लक्षणं तूक्तम् ] ॥ १ ॥

सम्भूयामी चोलजद्वीपिपुर्योः पार्श्वे पापा मन्त्रयामासुरुग्राः ।
मासूया भूभूषणे वायुदेवे मूढा यद्वद्धार्तराष्ट्रान्तिके प्राक् ॥ २ ॥

**सम्भूयेति** ॥ पापा, उग्रा, अमी मायिनः । चोलजः पद्मतीर्थः द्वीपिपुरिः पुण्डरीकमुनिस्तयोः । द्वीपिशब्दः पुण्डरीकपर्यायः । 'व्याघ्रो द्वीपी पुण्डरीकस्तरक्षुरि'ति हलायुधः । पार्श्वे समीपे सम्भूय मिलित्वा भुवो भूषणमिव भूषणस्तस्मिन् वायुश्चासौ देवश्च तस्मिन् श्रीमध्वनाम्निवायुदेवे सासूया मात्सर्योपेताःसन्तः । प्राक्पूर्वं मूढा राजपुत्रादयः धृतराष्ट्रस्यापत्यं पुमान् धार्तराष्ट्रो दुर्योधनस्तस्यान्तिके समीपे यद्वद्वायुदेवे भीमसेने सासूया मन्त्रयामासुस्तद्वन्मन्त्रयामासुः । मन्त्रिगुप्तभाषणे लिट् ॥

मन्मात्सर्यं वद्धमूलेऽशुभानां वाचालोलं कोपि गां धारकस्य ।
मध्ये तेषां नीचनीत्या समानां वाचालोऽलं कोऽपि गान्धारकस्य ॥ ३ ॥

सर्दिति ॥ सन्मात्सर्यं, वक्तुं, ऊचे, अशुभानां, वाचा, अलोलं, कोपि गान्धार-कस्य, मध्ये, तेषां, नीचनीत्या, समानः, वाचालः, अलं, कः, अपि, गान्धारकस्य । तेषां मिलितानां मायिनां मध्ये अलमतितरां वाचालो बहुभाषी । 'आलजाटचौ बहुभाषिणी'त्यालच् । नीचनीत्या कुत्सितनीत्या गान्धारकस्य शकुनेः समानः कोऽपि कश्चित् । वाचा स्ववचनेनाशुभानां दुष्टपुरुषाणां धारकस्य आश्रयभूतस्य पद्मतीर्थ-नाममायिभिक्षोः कोपोऽस्यास्तीति कोपि कोपविशिष्टं सत्सु मात्सर्यं अलोलः स्थिरो यथा भवति तथा अलोलं वाचा स्ववचनेन वक्तुमुत्पादयितुं गां वाचमूचे ॥ ३ ॥

एकं तत्वं वक्ति मायामयीयं वाक्यैः प्राच्यैरप्यवाच्यं विधत्ते ।
पूर्वापूर्वा हन्त दौर्घट्यभूषा चित्रं चित्रं दर्शनाचार्यनीतिः ॥ ४ ॥

एकमिति ॥ पूर्वा पुरातनी, अपूर्वा दुर्लभा, दुर्घटस्य भावो दौर्घट्यं तद्भूषा अलङ्कारो यस्यास्तादृशी । अतएव मायाया विकारभूता मायामयी मायाविलासमूले-त्यर्थः । इयं दर्शनाचार्यनीतिर्दर्शनाचार्यस्य अस्मच्छास्त्राचार्यस्य शङ्करस्य नीतिः शास्त्रं चित्रं चित्रमत्याश्चर्यं । इयं नीतिः तत्वं ब्रह्माख्यं वस्तु, एकं, अद्वितीयं, निर्विशेषञ्च, वष्टि ब्रूते । वश कान्तौ लट् । प्रतिपादयतीत्यर्थः । तथापि प्राच्यैः पुरातनैर्वाक्यै-र्वेदवचनैः । 'यतो वाचो निवर्तन्त' इत्यादिभिरवाच्यमपि विधत्ते । हन्त हर्षे । तत्वं ब्रह्माख्यं वस्त्वद्वितीयं निर्विशेषं 'सत्यंज्ञानमि'त्यादिरूपेण समर्थ्यापि तद्ब्रह्मावाच्य-मितिच ब्रूते । तस्माद्दौर्घट्यमस्य भूषणमित्यर्थः ॥ ४ ॥

मर्त्यामर्त्यामर्त्यविद्विट्पुरोगं विश्वं दृश्यं विप्रचण्डालपूर्वम् ।
भेदापेतं भेदिमानैः समानैः साधीयः कः साधयेत्तामलब्ध्वा ॥ ५ ॥

मर्त्येति ॥ समानैः । 'जगत्प्रवाहः सत्योऽयं पञ्चभेदसमन्वितः । सत्यं भिदा सत्यं भिदा सत्यं भिदा पञ्चभेदा इमे सत्याः सर्वावस्थासु सर्वदा' इत्यादिभेदप्रति-पादकवेदादिप्रमाणसहितैर्मानैः प्रत्यक्षादिप्रमाणैः । भेदोऽस्यास्तीति भेदि, भेद-विशिष्टतया प्रसिद्धं । समानैः प्रत्यक्षादिप्रमाणसहितैः मानैः भेदप्रतिपादकवेदादि प्रमाणैर्भेदीति वा योजना । मर्त्या मनुजाः, अमर्त्या देवाः, अमर्त्यविद्विषो देवद्विषो

दैत्यास्ते पुरोगाः पुरःसरा यस्य तादृशं दृश्यं प्रतीयमानं, विप्राश्च, चण्डालाश्च पूर्वे यस्य तादृशं विश्वं जगत् भेदापेतं भेदरहितमिति को विद्वान् तामसद्दर्शनाचार्यनीतिमलब्ध्वा साधीयः दृढतरं यथा भवति तथा साधयेत् । न कोऽपीत्यर्थः । अत्र साधीय इति दृढार्थस्य बाढशब्दस्य 'अन्तिकबाढयोर्नेदसाधौ' इति साधादेशः ईयसुन् प्रत्ययश्च । प्रत्यक्षादिप्रमाणैर्भेदस्यैव प्रतीयमानत्वात्तद्विरुद्धसर्वाभेदसमर्थनमसद्दर्शनाचार्योक्तनीतिं विना न शक्यमिति भावः ॥ ५ ॥

सत्यं सत्यं व्यावहार्यं विधत्ते सर्वं मोहे सर्वनिर्वाहिणी सा ।
ज्ञाने जाते दग्धवस्त्रप्रतीतं पश्चे तस्मिन्नस्तमद्वैतवादिन् ॥ ६ ॥

सत्यमिति ॥ सा दर्शनाचार्यनीतिः । मोहेऽज्ञानेसति । अज्ञानदशायां सत्यामित्यर्थः । सत्यं पारमार्थिकसत्यतया प्रतीयमानं सर्वं, व्यवहारविषयो व्यावहार्यं । व्यावहारिकमित्यर्थः । सत्यं विधत्ते ब्रूते । 'सन् घटः, सन् पट' इत्यादिप्रत्यक्षस्य विमतं सत्यं अर्थक्रियाकारित्वात् यन्नसत्यं नतदर्थक्रियाकारि यथा शुक्तिरजतं, न तथाचेदं तस्मान्नतथेत्याद्यनुमानस्य, 'विश्वं सत्यं मघवाना' इत्याद्यागमस्य च तत्सत्यत्वप्रतिपादकस्य व्यावहारिकसत्यताविषयत्वं विधत्त इति भावः । तस्मात्सा नीतिः सर्वनिर्वाहिणी सर्वस्यापि प्रमाणजातस्य निर्वाहिणी परस्पराविरोधेन विषयस्य व्यवस्थकल्पिकेत्यर्थः । तथाहि 'सन् घट' इत्यस्य सत्यत्वविषयप्रमाणस्य व्यावहारिकसत्यत्वं विषयः । विमतं मिथ्या दृश्यत्वाच्छुक्तिरजतवदित्याद्यनुमानानां 'नेहनानास्ति किञ्चन' इत्यागमनाञ्च ब्रह्मातिरिक्तप्रपञ्चमिथ्यात्वपराणां परमार्थतः सत्वनिषेधो विषय इति भिन्नविषयत्वव्युत्पादनेन परस्परविरोधपरिहारात्सर्वनिर्वाहिणीत्युच्यते । वस्तुतो विचार्यमाणे विश्वं कथं भूतमित्यपेक्षायामाह– ज्ञान इत्यादि । ज्ञाने 'नेहनानास्ति किञ्चने'त्याद्यागमजनितापरोक्षज्ञानेसति, दग्धवस्त्रप्रतीतं दग्धं यद्वस्त्रं तद्वत्प्रतीतं ज्ञानं । दग्धवस्त्रं पश्यतो यथा भस्मैवेदं नवस्त्रमिति दृढनिश्चयेसत्यपि चूर्णभावपर्यन्तमातानवितानात्मकप्रतीतिरनिवार्या, तद्वद्विमतं मिथ्या दृश्यत्वाच्छुक्तिरजतवदित्याद्यनुमानैर्नेहनानेत्याद्यागमैश्च परोक्षतो ब्रह्मातिरेकेण प्रपञ्चमिथ्यात्वनिश्चये सत्यपि सर्वात्मनाविद्यास्तमयपर्यन्तं 'सन् घट' इत्यादिप्रतीतिरनिवार्या । तस्माद्दग्धवस्त्रप्रतीतमिदं । तस्मिन्

'विमतं मिथ्या दृश्यत्वादित्याद्यनुमानैर्नेहनानास्तिकिञ्चन'त्याद्यागमैश्चोत्पादिते ज्ञाने पक्वेसति परिपक्वेसति । अपरोक्षत्वं गतेसतीतियावत् । ततं यल्लोहं तदाग्रं यद्वाः जलं तद्वत्ततलोहासवावर्तत् भवतीति सम्बन्धः । नप्तलोहस्थं वारि यथा लोहान्नपृथक्प्रतीयते । एवं जीवजडात्मकप्रपञ्चमिथ्यात्वलक्षणब्रह्मात्मैक्यज्ञाने परिपक्वेसति ब्रह्मातिरेकेण न किञ्चित्प्रतीयत इति भावः । अयमत्रान्वयप्रकारः- मोहेसति सर्वं सत्यं व्यावहार्थसत्यं बिभ्रत इति यस्मात्सा सर्वनिर्वाहिणी, ज्ञाने जातेसति दग्धवस्त्रप्रतीतं सर्वं, तस्मिन् परिपक्वेसति ततलोहासवावर्त् भवतीति ॥ ६ ॥

**ज्ञानिश्रेष्ठश्रेष्ठविज्ञानिवर्गे नैर्गुण्यस्थे साम्प्रतं नाथभूताः ।**
**आक्रन्दं मे हन्त शृण्वन्तु सोऽयं हा हा मायावाद उत्सादमेति ॥ ७ ॥**

**ज्ञानीति** ॥ ज्ञानिश्रेष्ठश्रेष्ठविज्ञानिवर्गे ज्ञानिश्रेष्ठस्तन्नामकः कश्चनमायिप्रवरः सएव श्रेष्ठ उत्तमो यस्मिन् तादृशो विज्ञानिनां वर्गः । ज्ञानिश्रेष्ठश्चासौ विज्ञानिवर्गश्च तस्मिन् । निर्गता गुणा यस्मात्तन्निर्गुणं तस्य भावो नैर्गुण्यं निर्गुणब्रह्मभावस्तस्मिन् स्थितो नैर्गुण्यस्थस्तस्मिन्सति, निर्गुणब्रह्मतादात्म्यलक्षणमुक्तिं गतेसति । साम्प्रतमिदानीं नाथभूताः अस्माकं स्वामिभूताः सर्वे भवन्तो मे ममाक्रन्दमाक्रोशं शृण्वन्तु । सोऽयं मायावादो मायाकल्पितं सर्वामिति वादः उत्सादं नाशमेति गच्छति । हा! हा! कष्टं कष्टं ॥

**भ्रष्टा भाट्टा न प्रभाकृत्प्रभाभूत्त्रस्ता माहायानिकायाश्च यत्र ।**
**दुर्गे मायावादसत्रं दिधक्षुर्नोपेक्ष्या नस्तत्त्ववादाग्निजिह्वा ॥ ८ ॥**

**भ्रष्टा इति** ॥ यत्र मायावादाख्यवने । भट्टेन भट्टाचार्येण प्रोक्तं भाट्टं तस्मिन्निपुणा भाट्टा भाट्टशास्त्रकुशला भीमांसका इत्यर्थः । भ्रष्टा निरुत्तरीकृताः । यथा वनपरिचयरहिता भट्टशिष्याच्छत्रपुस्तकादिमन्तो मार्गवशाद्वनं प्रविश्य भ्रष्टा भवेयुस्तद्वदिति श्लेषाभिप्रायः । यत्र पूर्वोक्तवने प्रभाकृत्प्रभा प्रभाकृतः प्रभाकराख्यवादिनः प्रभासामर्थ्यं नाभूत् । सोऽपि निराकर्तुमशक्त इति भावः, किञ्च यत्र भास्कराख्यवादिनोऽपि सामर्थ्यं नाभूदिति च व्याख्येयं । अविरलद्रुमेवने यथा सूर्यप्रकाशो न भवति तद्वदिति श्लेषाभिप्रायः । यत्र पूर्वोक्तवने माहायानिका बौद्धा आद्या येषां तादृशाः

त्रस्ताः । न मायावादिप्रत्यर्थिभावं भजन्त इति भावः, वनेषु यथा महाशरभकादि-सन्तस्त्रस्तास्युरेवमिति श्लेषाभिप्रायः । दुर्गं दुर्गमं मायावादसत्रं मायावादाख्यञ्च तत् सत्रं वनञ्च, 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपिचे'त्यमरः । दग्धुमिच्छुर्दिधक्षुः, तत्त्वमिति वादः सर्वं सत्यमिति वादः, सएवाग्निस्तस्य जिह्वा ज्वाला । 'जिह्वावाग्रसना-र्चिष्वि'ति वैजयन्ती । नोऽस्माकमुपेक्ष्या, उपेक्षितुं योग्या न भवति । नन्विरामे प्रयतितव्यमेवेति भावः ॥ ८ ॥

यं यं प्रापद्भूरिचित्तः प्रदेशं तस्मात्तस्मादागतेरन्तरायः ।
प्रत्यज्ञायि व्यक्तमार्येण सोऽपि प्राप्नोत्पार्श्वं हा वयं भाग्यहीनाः ॥ ९ ॥

**यंयमिति** ॥ भूरि पूर्णं चित्तं यस्य स श्रीपूर्णप्रज्ञः यं यं प्रदेशं प्रापज्जगाम । आप्लृ व्याप्तौ लुङ् । आर्येण सज्जनेन पद्मतीर्थेन 'आर्यौ सज्जनसंविदावि'ति हेमचन्द्रः । तस्मात्तस्मात्प्रदेशादागतेरागमनस्यान्तरायो विघ्नो व्यक्तं स्पष्टं यथा भवति तथा प्रत्यज्ञायि प्रतिज्ञाकृता । सोऽपि श्रीमध्वोऽपि पार्श्वमस्मत्समीपं प्राप्नोत् प्राप । हा! कष्टं वयं भाग्यहीनाः । अयमार्यः किं करोतु वयमेव भाग्यहीना इत्यर्थः । अयं भावः श्रीमध्वाचार्यस्य बदरिकाश्रमादागमनं, श्रीमद्भाष्यनिर्माणञ्च गोदावरीतटे सर्ववादिनिराकरणञ्च श्रुत्वा, पुनः गोदावरीमतीत्य रजतपीठपुरं प्रत्यागच्छतीति च वार्तां श्रुत्वा, क्षुभ्यतो बिभ्यतश्च मायिनो दृष्ट्वा पद्मतीर्थेनेत्थं प्रतिज्ञा कृता भूरिचित्त इदानीं यस्मिन् देशे तिष्ठति तस्माद्देशादितः परमिमं देशं प्रत्यागमनं निरोत्स्यामीति । पुनश्च समीपमागतं श्रुत्वाथ तत्र आगमनविघ्नं करोमीति । पुनःपुनरेवं तस्माद्देशादा-गतेरन्तरायप्रतिज्ञा कृता । तथाप्यसौ समीपमागतस्तदस्मद्दौर्भाग्यमिति ॥ ९ ॥

प्रश्नः पृष्टः खण्ड्यते तेन नूनं युक्तां युक्तिं वक्ति चाप्यखण्ड्याम् ।
वादित्रातं लज्जयेन्नो विशेषादाक्षेप्तेति श्रूयते किं नु कुर्मः ॥ १० ॥

**प्रश्न इति** ॥ तेन श्रीमध्वाचार्येण पृष्ट आक्षिप्तः प्रश्नः खण्ड्यते निराक्रियते नूनं निश्चये । 'नूनं तर्केऽवधारणे' इत्यमरः । असौ श्रीमध्वाचार्यो युक्तामुपपन्नामखण्ड्यां युक्तिं वक्ति । अतएव वादिव्रातो निरुत्तरीकृतवादिसमूहस्तं लज्जयेत् । लज्जायुक्तं

कुर्यात् । ओलस्जी व्रीडायां लिङ् । नोऽस्माकं विशेषादाक्षिप्ता निराचक्रेति श्रूयते । किं नु कुर्मः, एतत्प्रतीकारं किं वा कुर्मः ॥ १० ॥

प्राच्यं शास्त्रं यत्सपादं तु लक्षं वाक्येनैकेनाक्षिपद्धर्षतीर्थः ।
इत्थं पान्थैर्वर्णितं शृण्वतः प्राग्युष्मान्माप्नूयमानं मनो मे ॥ ११ ॥

प्राच्यमिति ॥ हर्षतीर्थो हर्षकरं तीर्थं शास्त्रं यस्मात्स श्रीमदानन्दतीर्थः । प्राच्यं पुरातनं सपादं पादसहितं लक्षं लक्षसङ्ख्याकं यच्छास्त्रं तदेकेन वाक्येनाक्षिपत् । निराचक्र इत्यर्थः । इत्थं प्राक् पान्थैः पथिकैर्वर्णितं शृण्वतो मे मम मनो दूयमानं सत् वो युष्माकं प्रापत् । सपादलक्ष्यपरिमितमस्मच्छास्त्रमाक्षेप्तुं पद्मतीर्थादय एव समर्था इति दूरस्थान् युष्मान् मे मनो जगामेति भावः ॥ ११ ॥

वेदव्यासो न्वेष वेदो नु मूर्तो दिव्या मूर्तिर्यस्य सा सुस्मितस्य ।
तद्दृष्टॄणां चेति वाणी कृपाणी नूनं मायापक्षमूलं छिनत्ति ॥ १२ ॥

वेदव्यास इति ॥ शोभनं स्मितं यस्य तस्य श्रीमध्वस्य सा मूर्तिस्तनुः दिव्या अलौकिकी । अतः स एष श्रीमध्वाचार्यो वेदव्यासो नु? वेदव्यासो वा? मूर्तः मूर्तिमान् वेदो नु? वेदो वा । 'प्रश्ने विकल्पे नुस्विच्चे'ति वैजयन्ती । इति तद्दृष्टॄणां श्रीमध्वाचार्यं दृष्टवतां जनानां वाणीकृपाणी वचनखड्गलता मायावादिनः पक्षः सिद्धान्तो मायापक्षस्तस्य मूलं छिनत्ति खण्डयति ॥ १२ ॥

अक्लिष्टं तत्सूत्रभाष्यं बलीयो मानोपेतं का क्षतिर्नस्तथा चेत् ।
आस्माकाः केऽप्येवमुक्त्वा विलज्जा लज्जासिन्धौ दुःसहेऽमज्जयन्नः ॥ १३ ॥

अक्लिष्टमिति ॥ तेनकृतं सूत्रभाष्यं, तत्सूत्रभाष्यमक्लिष्टं ऋजुमार्गेण सूत्रार्थवर्णनपरं बलीयांसि यानि मानानि प्रमाणानि तैरुपेतं । स्वोक्तार्थे बलवत्प्रमाणसहितमिति भावः । इति केचिद्वदन्ति, तथाचेन्नः का क्षतिः? का हानिः? अस्तुनाम तत्तथा विगता लज्जा येषां ते विलज्जाः, अस्माकं सम्बन्धिन आस्माका अस्मद्यूथ्या इत्यर्थः । केऽपि केचिदेवं तद्भाष्यप्रशंसारूपं वाक्यमुक्त्वा नोऽस्मान् दुःसहेऽसह्ये लज्जासिन्धा-

वमजयन् । टु मस्ज्शुद्धौ लङ् । अस्मद्व्याख्यानां केषाञ्चि[ तत्परं गुरूपं वाक्यं श्रुत्वा वयमतितरां लज्जिता वर्तामह इति भावः ॥ १३ ॥

**तस्य व्याप्तैः शिष्यजालैस्तु गौणैः संसत्सिन्धौ शंखचक्रादिभृद्भिः ।**
**मा गृह्वेरन् विश्वसत्वान्तराणि क्षेमाप्त्यै नस्तत्र नीतिं विधत्त ॥ १४ ॥**

तस्येति ॥ गुणानां सम्बन्धीनि गौणानि तैर्माधुर्यादिगुणवद्भिरित्यर्थः । व्याप्तैः सर्वदेशेषु विततैः । शङ्खश्च चक्रञ्च त आदी येषां तानि बिभ्रतीति तादृशैः पाञ्चजन्यसुदर्शनादिभगवल्लाञ्छनयुक्तैरित्यर्थः । तस्य श्रीमध्वाचार्यस्य शिष्यजालैः शिष्यसमूहैः संसत्सिन्धौ सभासमुद्रे तत्रतत्र सभास्थानाख्यसमुद्र इत्यर्थः । विश्वानि यानि सत्वानि प्राणिनस्तेषां, नराणामितियावत् । अन्तराणि मनांसि । 'द्रव्यासु व्यवसायेषु सत्वमस्त्रीतु जन्तुष्वि'त्यमरः । यथा मागृह्वेरन् न वशीकियेरन् तथा तत्र नीतिमुपायं नोऽस्माकं क्षेमाप्त्यै क्षेमप्राप्त्यै । अस्माच्छास्त्रादिरक्षासिद्ध्य इत्यर्थः । प्राप्तपरिपालनं हि क्षेममित्युच्यते, विधत्त कुरुत । श्लेषार्थेतु गौणैस्तन्तुमयैः व्याप्तैर्जलेप्रसृतैः शङ्खचक्रादिभृद्भिः कम्बुसमूहादिनानाजलचरचारिमद्भिर्जालैर्जलचरबन्धनैः । 'जालं समूह आनायो गवाक्ष क्षारकावपी'त्यमरः । सिन्धौ समुद्रे विश्वसत्वान्तराणि नानाप्राणिविशेषानिवेति । मागृह्वेरन्नित्यत्र न माङ् । अतो लिङ् ॥ १४ ॥

**गौणैस्तर्कैर्गौणवाक्याभिगुप्तैर्गौणीं बुद्धिं वर्धयन्ते नृणां ते ।**
**हंसानां नो वाग्विघातप्रवीणाः सिंधुं भूयो वारिवैर्वारिवाब्दाः ॥ १५ ॥**

गौणैरिति ॥ हंसानां परमहंसाश्रमिणां नोऽस्माकं वाचां ब्रह्मणो निर्गुणत्वप्रतिपादकवाक्यानां विघातो निराकरणं तस्मिन् प्रवीणा दक्षास्ते श्रीमध्वशिष्याः । गुणानां प्रतिपादकानि गौणानि तादृशानि यानि वाक्यानि 'यस्यानन्तगुणेनन्ते, अथकस्मादुच्यते ब्रह्मेति बृहन्तोऽह्यस्मिन् गुणा' इत्यादीनि भगवतोऽनन्तगुणत्वसम्पादकवाक्यानि, तैरभिगुप्तै रक्षितैः । गुणानां प्रतिपादका गौणास्तैः ब्रह्मणः सगुणत्वसाधकैरित्यर्थः । तर्कैः 'ब्रह्म सगुणं' भवितुमर्हति वस्तुत्वाद्घटवदित्याद्यनुमानैरित्यर्थः । नृणां पुरुषाणां गौणीं ब्रह्मणः सगुणत्वविषयिणीं बुद्धिं । अपो जलानि ददतीत्यब्दा मेघास्तेच

हंसाना हंसपक्षिणां वाग्विचातप्रवीणा नो नहि सति वर्षे हंसरवः श्रूयते । भूयांसि बहुलानिच तानि वारीणि च तेषां वर्षे 'वर्षाऽस्त्री भारताद्यन्दवृष्टिषु प्रावृषिस्त्रियां' इत्यभिधानम् । सिन्धुमिव समुद्रमिव नदीमिवेति वा वर्धयन्ते । नचात्र दस्तत्वात् भानस्य कश्चित्क्षुद्रोपद्रवः 'मथ्यनन्तगुणे' 'अथकस्माद्दुच्यते' इत्याद्यनन्तगुणत्वोपपादकागमानुग्रहीतत्वादिति भावेन गौणवाक्याभिगुंफैरित्युक्तम् ॥ १५ ॥

बाहुल्येन ह्येतदुक्त्वा खलु द्रागेते विश्वं व्याप्नुवन्ति प्रकामम् ।
अस्मिन्नस्मद्दर्शनापायकाले यद्वल्लोकापायकाले लयापः ॥ १६ ॥

**बाहुल्येनेति** ॥ एतत् विपक्षोत्कर्षकथनपरं वाक्यं बाहुल्येन विस्तरेणोक्त्वा खलु न वक्तव्यं हि । 'अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वे'ति प्रतिषेधवाचिनः खलुशब्दप्रयोगे क्त्वाप्रत्ययः । एतद्बाहुल्येनोक्तुं प्रयोजनाभावात्तवक्तव्यमिति भावः । अस्मिन् वर्तमानतया सन्निहितेऽस्माकं दर्शनं शास्त्रसम्मद्दर्शनं तस्यापायस्य परिक्षयस्य काल एते तत्त्ववादिनो द्राक् शीघ्रं विश्वं जगल्लोकापायकाले लोकक्षयकाले । प्रलयकाल इत्यर्थः । लयापः प्रलयजलानि यद्वत् तद्वत् प्रकामः प्रकृष्टेच्छा यथा भवति तथा प्रकामं व्याप्नुवन्ति ॥ १६ ॥

आकर्ण्येत्थं तस्य वाणीमथान्यो मानी तेषां मानिनां चित्तवेत्ता ।
स्वानां चेतो नन्दयन् मन्दचेता धृष्टामुच्चैर्वाचमाचष्ट कष्टः ॥ १७ ॥

**आकर्ण्येति** ॥ अथेत्थं तस्य वाणीमाकर्ण्य मानोऽभिमान एषामस्तीति मानिनस्तेषां पद्मतीर्थादीनां चित्तवेत्ताभिप्रायवेत्ता मानी स्वयञ्च वैदुष्यादिमानीसन् मन्दं स्वल्पं चेतो बुद्धिर्यस्य सोऽन्यः कष्टस्तन्नामकः कश्चिन्मायी स्वानां स्वयूथ्यानां चेतः । जातावेकवचनं चेतांसीतियावत् । नन्दयन्सन् धृष्टां धैर्योपेतां वाचमुच्चैराचष्ट । उवाच । चक्षिङ्व्यक्तायां वाचि लङ् ॥ १७ ॥

तेजः शङ्कामात्रतो यद्विलीनं धिग्भीरूणां मानसं मानहीनम् ।
एकान्तेन प्राप्ततेजोविलीनं स्थैर्यो यस्माद्भाति ह्यशङ्कनीनम् ॥ १८ ॥

तेज इति ॥ यन्मानसं, तेजोऽस्तीति शङ्का तेजःशङ्का, केवलं तेजःशङ्का तेजःशङ्कामात्रं तस्मात् । प्रतिवादिनः सामर्थ्यातिशयो वर्तत इति शङ्कामात्रतएवेत्यर्थः विलीनं द्रवीभूतं भवति भयशीलं भवतीत्यर्थः । भीरूणामधीराणां मानहीनमभिमानरहितं तन्मानसं मनो धिक् । यस्मात् भीरूणां मानसात् एकान्तेन नियमेन प्राप्तं सम्बद्धं यत्तेजोऽग्निस्तेन विलीनं द्रवीभूतं हैयङ्गवीनं नूतनघृतं । 'तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमि'त्यमरः । स्थेयोऽतिस्थिरं भाति प्रकाशते । अयंभावः हैयङ्गवीनमपि सम्यगग्न्यादितेजः सम्बन्धे सत्येव विलीयते नतु तेजः शब्दमात्रेण । भीरूणां मनस्तु विपक्षशब्दमात्रश्रवणाद्बिभेति । तस्माद्धैयङ्गवीनादपि भीरूणां मानसमतिचपलमिति । स्थेय इत्यत्र 'प्रियस्थिरे'त्यादिना स्थिरशब्दस्य स्थः । द्विवचनेत्यादिना ईयसुन्प्रत्ययश्च ॥ १८ ॥

येषां विद्या शाङ्करी शङ्करी नो देवादीनां वाध्यतां साधयन्ती ।
शौक्रीवालं लज्जयेद्देवपूज्यं तेषामेषां सन्निधौ को विषादः ॥ १९ ॥

येषामिति ॥ नोऽस्माकं शं सुखं करोतीति शङ्करी, देवा आदयो येषां तेषां मनुष्यतिर्यगादीनां बाध्यतां बाधज्ञानगोचरतां । अनिर्वाच्यतामित्यर्थः । साधयन्ती. ब्रह्मैकमेवाबाध्यमन्यत्सर्वं ब्रह्मापरोक्षज्ञानेन बाध्यत इति हि मायिना स्वशास्त्रे समर्थितं । या शाङ्करीविद्या, देवपूज्यं बृहस्पतिं शौक्रीव शुक्रसम्बन्धिनीव । देवदेवानुगादीनां पीड्यतां साधयन्ती कृत्याप्रयोगादिरूपा शुक्रविद्या देवगुरुं देवादीनां पीड्यताभावविधानाक्षमं यथा लज्जयेत् । तद्वल्लज्जयेत् । देवगुरुविद्यापि न शङ्करविद्यात्तदशीत्यर्थः । सा शङ्कराचार्यसम्बन्धिनीविद्या, तत्कृतशारीरकभाष्यादिरूपशास्त्रं येषां पद्मतीर्थादीनामस्ति तेषामेषां पद्मतीर्थादीनां सन्निधावस्माकं को विषादः? किं भयं ॥ १९ ॥

यद्द्वैतं कर्कशैर्गौणतर्कैः रुद्धं साध्यं नैव भात्यस्तु तावत् ।
षट्कर्मज्ञैर्दिव्यमन्त्रौषधाद्यैरेतैर्गुप्मान्नो न जेता हि कोऽपि ॥ २० ॥

यदिति ॥ कर्कशैर्निराकर्तुमशक्यैर्गुणानां सम्बन्धिनो गौणास्तादृशा ये तर्का अनुमानानि तैः । ब्रह्म सगुणं भवितुमर्हति वस्तुत्वाद्घटवदित्याभिर्ब्रह्मणः सगुणत्व-

साधकानुमानैरित्यर्थः । इद्धं प्रतिरुद्धमद्वैतमैक्यं यदि साध्यं साधयितुशक्यमिति नैव भाति नैव प्रकाशते । विपक्षतर्कोणामति प्रबलत्वादद्वैतसमर्थनमशक्यमित्यस्मदूथ्यानां प्रतीयते यदीत्यर्थः । अस्तु तावत्, तत्तथास्तु । तर्ह्यद्वैतसमर्थनाभावेऽस्माकं पराजयः स्यादिति चेन्नैवमाशंक्यं । षट्कर्मज्ञैः षट् च तानि कार्माणि च तानि जानन्तीति तैः पालनवशीकरणस्तम्भनविद्वेषणोच्चाटनमारणलक्षणषट्कर्मज्ञैरित्यर्थः, दिव्यानि यानि मन्त्रौषधानि मन्त्राश्चौषधानि च तैराढ्यैः सम्पन्नैरेतैः पद्मतीर्थाद्यैः गुप्तान् रक्षितान् नोऽस्मान् विजेता कश्चिन्नहि ॥ २० ॥

यद्यप्येवं न ह्युपेक्ष्यो विपक्षः किन्तु प्राप्तो नाधुनाक्रन्दकालः ।
अप्यद्वन्द्वस्वात्मबोधप्रतीतैराचार्यैर्यच्छक्यते शङ्कराद्यैः ॥ २१ ॥

यद्यपीति ॥ यद्यपि, एवं षट्कर्मज्ञैस्तैर्गुप्तानस्मान् कश्चिद्विजेता न । तथापि विपक्षो विरुद्धसिद्धान्त उपेक्ष्यः, उपेक्षार्हो नहि । यथाशक्ति नानोपायैस्तन्निराकरणे प्रयत्नः कर्तव्य एव । तर्हि विपक्षो नोपेक्ष्यश्चे'दाक्रन्दं मे हन्त शृण्वन्त्वि'त्यादिवदन् 'तेजःशङ्कामात्रतो यद्विलीनमि'त्यादिना किमित्याक्षिप्यत इत्याशङ्क्य परिहरति— किन्त्वित्यादिना । किन्तु तथाप्यधुना इदानीं, अतिलमर्थानां पद्मतीर्थादीनामुज्जीवनकाल इत्यर्थः । आक्रन्दकालो न प्राप्तः, तस्मात्तद्दर्शने आक्रन्दं कुर्वन्नाक्षिप्यत इति भावः । विपक्षः कुतो नोपेक्ष्यत इत्यपेक्षायामाह— अपीत्यादि भेदसमर्थनदक्षो विपक्षः, अद्वन्द्वस्वात्मबोधप्रतीतैर्नविद्यते द्वन्द्वं सदृशं यस्य सोऽद्वन्द्व उत्तमस्तादृशो यः स्वात्मबोधः शोभनात्मज्ञानं जीवब्रह्मैक्यज्ञानमितियावत् । तेन प्रतीतैः ख्यातैः । 'प्रतीतः प्रथितं ख्यात' इत्यभिधानं । शङ्कराद्यैराचार्यैर्यद्बलाच्छक्यते । अद्वैतज्ञानबलेन प्रसिद्धैः शङ्कराचार्यप्रभृतिभिरपि विपक्षो निराकर्तुं शक्यते नवेति शङ्क्यते, तस्मात्प्रबलत्वाद्विपक्षो नोपेक्ष्यत इत्यर्थः । यद्वा अद्वन्द्वस्वात्मबोधप्रतीतैरित्यस्य, अद्वन्द्वो द्वितीयरहितो विगलिताशेषभेदादिप्रपञ्चस्तस्य स्वात्मनः शुद्धस्य निर्गुणात्मनो बोधेन प्रतीतैरितिवार्थः । तथाहि मायिनो निर्गुणसगुणभेदेन ब्रह्मद्वैविध्यमङ्गीकुर्वन्ति । तत्र विगलिताशेषभेदादिप्रपञ्चं निर्विशेषब्रह्मैव शुद्धं, तदपरोक्षज्ञानमेव मोक्षसाधनमितिचाहुः (तेन प्रतीतैरिति वा) अथवा अद्वन्द्वोऽसदृशः स्वः स्वतन्त्र आत्मा स्वामी

श्रीहरिस्तस्य बोधो यस्य स श्रीपूर्णप्रज्ञाचार्यैः, प्रतीतैः प्रसिद्धैः शङ्कराद्यैराचार्यैर्ब्रह्मा-च्छङ्क्यते जेतुं शक्यते वा नवेति शङ्क्यते । तस्मात्प्रबलत्वाद्विपक्षो मध्वाचार्यो नोपेक्ष्य इति । अद्वन्द्वः स्वात्मबोधः प्रतीतैरितिपदविभागेनास्मिन्पक्षेऽन्वयः ॥२१॥

पारम्पर्येणागतं तत्त्वशास्त्रं हन्तोत्सन्नं नूतनेनेत्युदीर्य ।
तेषां दोषा वर्णनीया विबुधैः सन्तोऽसन्तो वापि मध्यस्थलोके ॥ २२ ॥

पारम्पर्येणेति ॥ विदग्धैश्चतुरैरस्मदीयैः पुरुषैर्मध्यस्थः, तेषुचास्मासुचोदासीनं यो लोको जनस्तस्मिन् । तेषां श्रीमध्वादीनाञ्च सन्तो विद्यमाना असन्तोऽविद्यमाना वा दोषा, नूतनेनेदानीन्तनेन तेन श्रीमध्वेन पारम्पर्येणानादितः परम्परयेत्यर्थः । आगतं तत्त्वशास्त्रं, अद्वैतलक्षणतत्त्वनिर्णयाख्यं यच्छास्त्रं शङ्कराचार्यशास्त्रमुत्सन्नं नाशितं । हन्तेत्युदीर्य पूर्वमेवमुक्त्वा, वर्णनीया पश्चात्तद्दोषा वर्णनीयास्तर्हि मध्यस्थानां तेषां तेष्वनादरोऽस्मास्वादरश्च भवेदिति भावः ॥ २२ ॥

स्वाभिप्रायो ब्रह्मवत्स्यादवाच्यो मायाशक्त्या सर्वनिर्वाहसिद्धिः ।
इत्थं नीत्या शास्त्रनीत्यैव बाध्यः सर्वो लोकः स्वात्मनो यः परः स्यात् ॥२३॥

स्वाभिप्राय इति ॥ यस्मान्मायाशक्त्या छद्मसामर्थ्येन सर्वनिर्वाहः परमलीकरणास्मदुत्कर्षाद्यखिलनिर्वाहस्तस्य सिद्धिः । तस्मात्तेषां श्रीमध्वादीनां दोषान् वदद्भिर्भवद्भिरस्मदीयैः स्वाभिप्रायोऽस्मानेव भजध्वं न तानित्यादिरूपात्माभिप्रायः ब्रह्मवदवाच्यः स्यात् । यथा ब्रह्मास्मन्मतेऽवाच्यं तद्वदिति भावः । इत्थमेवं नीत्या उपायेन यदा स्वात्मनः परः प्रतिकूलः स्यात्, स सर्वोऽपि लोकः शास्त्रनीत्यैव स्वशास्त्रयुक्त्यैव बाध्यः स्यात् । यथा शास्त्रयुक्त्या स्वप्रतिकूलवादिजनो बाध्यो निराकर्तव्यस्तद्वदिति भावः ॥ २३ ॥

ग्रामे ग्रामे वार्यतां माननैषां पूर्वं पूर्वं सामपूर्वैरुपायैः ।
सम्प्राप्तानां मानभङ्गाय कार्यं ग्रन्थाकर्पाद्युद्यतैस्सर्वदायैः ॥ २४ ॥

ग्राम इति ॥ ग्रामे ग्रामे । वीप्सायां द्विर्वचनं, प्रतिग्राममित्यर्थः । एषां तत्ववादिनां साम पूर्वं येषां तैः सामदानभेददण्डाख्यैरित्यर्थः । उपायैः पूर्वपूर्वं ग्रामप्रवेशात्पूर्वमेव मानना सम्भावना वार्यतां । आगमन, नमस्कार, भिक्षाप्रदानादि सम्भावनं न कर्तव्यमिति निवार्यतामित्यर्थः । सम्प्राप्तानां येनकेनाप्युपायेन ग्रामं प्राप्तानां तेषां मानभङ्गोऽभिमानखण्डनं तस्माद्युक्तैः सन्नद्धैरस्मदीयैर्ग्रन्थाकर्षो ग्रन्थानामाकर्षणमादिर्यस्य तादृशं ग्रन्थाकर्षणदण्डखण्डनताडनादिकमित्यर्थः । कार्यं ॥ २४ ॥

इत्याद्योः कार्यमालोच्य काले चक्रप्रथकाथक्रिभक्तप्रतीपम् ।
योग्या मंक्तुं तेऽन्यथा स्युः कथं वा दुःखोग्राम्भस्यन्धतामिस्रसिन्धौ ॥२५॥

इत्यादीति ॥ वक्रा वक्रद्वय एते मायिनः काले तस्मिन्काले । इति आदिश्य वृदित्यादि 'पारम्पर्यमागतं' 'स्वाभिप्रायो ब्रह्मत्वात्' 'ग्रामेग्रामे वार्यतामि'ति श्लोकत्रयेण कर्तव्यतयोक्तं कार्यमालोच्य पुनरपिविचार्य । चक्रमस्यास्तीति चक्री श्रीकृष्णस्तस्य भक्तस्य मध्वस्य प्रतीपं विरोधं दोषवर्णन, सम्भावनानिवारणादिकं, चक्रुः । अन्यथा तत्प्रतीपकरणाभावे ते मायिनः दुःखमेवोग्राम्भो यस्मिंस्तस्मिन्नन्धतामिस्रमेव सिन्धुस्तस्मिन् मंक्तुं मज्जनाय कथं वा योग्याः स्युः? तमो योग्यानां तेषां तमसिमज्जनं तावदावश्यकं । तच्च श्रीहरिमुख्यप्राणद्वेषैकसाध्यं । 'द्वेषादते नहि हरौ तमसिप्रवेशः प्राणेचे'त्युक्तेस्तत्प्रतीपकरणं तेषां युक्तमिति भावः ॥ २५ ॥

व्रत्याकारं वासुदेवद्विषं तं प्राज्ञम्मन्यं पुण्डरीकाभिधानम् ।
वादव्याजाक्षेपकामाः कुमन्त्राच्चक्रुर्यत्तं रूप्यपीठालयेऽमी ॥ २६ ॥

व्रत्याकारमिति ॥ रूप्यपीठालये रूप्यपीठाख्यान्यदेवनाख्ये मिलिता इति शेषः । वक्रा वक्रद्वयस्तेऽमी मायिनः कुमन्त्रात् कुत्सितालोचनात् वाद इति व्याजस्तेनाक्षेपाय निराकरणाय कामं इच्छा येषां तादृशाःसन्तः । वादं कर्म इति श्रीमध्वनिराकरणकामास्सन्त इत्यर्थः । व्रतिनो यतेराकारो वेषो यस्य तं वासुदेवद्विषं प्राज्ञमात्मानं मन्यत इति प्राज्ञंमन्यस्तं । 'आत्ममाने खश्' इति खश्मुमागमः ।

तं प्रसिद्धं पुण्डरीक इत्यभिधानं नाम यस्य तं पुण्डरीकपुर्याख्यमित्यर्थः । यत्तं वादाय सन्नद्धं चक्रुः ॥ २६ ॥

यद्वत्सिंहं ग्रामसिंहोऽशुचीच्छो हंसं काको यद्वदेवैकदृष्टिः ।
यद्वन्मायी भूरिमायुस्तरक्षुं तद्वद्धिष्ण्यमाह्वास्त मूढः ॥ २७ ॥

यद्वदिति ॥ मूढः पुण्डरीकपुरी । विप्रुदर्थं विजिगीषुं श्रीमध्वाचार्यं अशुचौ अपवित्रेविष्ठादाविच्छा यस्य स तथा ग्रामसिंहः शुनकः सिंहं यद्वत् । अयमप्यशुचीच्छुः वेदादिप्रमाणविरुद्धत्वादशुचावात्मनो ब्रह्मतादात्म्येऽनुसन्धानवत्वात् । एकादृष्टिर्यस्य स तथा काको हंसं यद्वत् । अयमप्येकदृष्टिः, ब्रह्मैकमेव सत्यमन्यत्सर्वं मिथ्येतिदर्शनात् । माया छद्म अस्यास्तीति मायी भूरिमायुः सृगालः । 'स्त्रियां शिवा भूरिमायु गोमायु मृगधूर्तक' इत्यमरः । तरक्षुं शार्दूलं यद्वत् । 'शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तुमृगादन' इत्यमरः । अयमपि मायी सर्वप्रपञ्चोपादानत्वेनेश्वराश्रिताप्रामाणिकमायाया अभ्युपगमात् । तद्वदाह्वास्त । स्पर्धायामाङ, इत्याङ् पूर्वाह्वयतेरात्मनेपदम् ॥ २७ ॥

अप्यल्पोऽसौ नह्यपेक्षाम्बभूवे लोलात्मेवाप्यक्षपक्षः पतङ्गः ।
मध्वेनाहो दुस्तरेण स्वभासा तेजोराजीराजितेनाग्निनेव ॥ २८ ॥

अपीति ॥ पतङ्ग इव शलभ इव लोलश्चञ्चल आत्मा मनो यस्य स तथा । अदक्षः पक्षो यस्य सः अदक्षपक्षः शलभो यथा, आशुगमनेऽसमर्थपतत्रवानित्यर्थः । तद्वत् स्वपक्षसमर्थने परपक्षनिराकरणे चासमर्थपक्षः । अतएवाल्पोऽप्यसौ पुण्डरीकपुरी, स्वभावान्मन्त्रौषधतपोवेदविद्याजनितसामर्थ्यमनपेक्ष्य केवलस्वरूपसामर्थ्यादेव दुस्तरेणात्येतुमशक्येन मध्वेन तेजोराजिस्तेजःसमूहरूपया राजित उद्भासितस्तेन अग्निनेव नोपेक्षांबभूवे नोपेक्षितः । अग्निमभिपतन्नल्पोऽपि पतङ्गः यथाग्निना नोपेक्ष्यते किन्तु दह्यतएव । एवमसावपि मध्वेन नाल्प इत्युपेक्षित इति भावः ॥ २८ ॥

मानैर्मान्यैर्भासमानोऽप्रमानैरान्मिश्चैनं स्वं मतं साधयित्वा ।
प्रीत्यैर्विष्णोरुत्तमप्रीतितीर्थो वेदव्यासश्री वेदवेदी चकार ॥ २९ ॥

मानैरिति ॥ न विद्यते समानं सदृशं प्रमाणं येषां तान्यसमानानि तैः प्रबलैरित्यर्थः । अतएव मान्यैः मानैर्वेदादिप्रमाणैर्नासमानः विवक्षितार्थे वेदादिप्रबलप्रमाणोदाहरणेन शोभमान इत्यर्थः । वेदं वेत्तीति वेदवेदी वेदज्ञ इत्यर्थः । उत्तमश्चासौ प्रीतितीर्थ आनन्दतीर्थश्च उत्तमप्रीतितीर्थ एवं स्वप्रत्यर्थिभूतं मायिनमाक्षिप्य निराकृत्य पुनः स्वं स्वकीयं मतं सिद्धान्तं साधयित्वा पुनश्च विष्णोः प्रीत्यै वेदव्याख्यां चकार ॥ २९ ॥

आम्नायं ये पेठुराम्नायपूर्वं प्राप्ता विप्रास्तत्र कौतूहलेन ।
पर्यासीनास्तावदाचार्यवर्यं प्रेक्ष्यं प्रेक्षाञ्चक्रिरेऽनेकसंख्याः ॥ ३० ॥

आम्नायमिति ॥ ये, आम्नायोऽनन्यथापाठः पूर्वः पुरस्सरो यथा भवति तथाम्नायपूर्वं स्वरवर्णादीनामन्यथापाठराहित्येन सहितं, सत्सम्प्रदायपूर्वकमितियावत् । आम्नायं वेदं पेठुः पठितवन्तः । पठ पठने लिट् । तावत्तदा वेदव्याख्यानसमय इत्यर्थः । तत्र कौतूहलं कौतुकं तेन, प्राप्ता अनेका भूयसी सङ्ख्या येषां ते तथोक्तास्ते विप्रवर्याः पर्यासीनाः परित उपविष्टाःसन्तः प्रेक्ष्यं दर्शनीयमाचार्यवर्यं प्रेक्षांचक्रिरे ददृशुः ॥

उक्ताङ्गेभ्यः कादिकान् व्यञ्जयन्तं तत्तन्मात्राव्यञ्जनादौ प्रवीणम् ।
तिस्रोवस्थास्तद्गुणैर्भावयन्तं देवा दृष्ट्वा व्यस्मरन् देवदेवम् ॥ ३१ ॥

उक्तेति ॥ देवा उक्तानि यान्याङ्गानि तेभ्यः । 'अकुहविसर्जनीयानां कण्ठ' इत्यादिना ककारादिवर्णोच्चारणस्थानत्वेनोक्तकण्ठाद्यङ्गेभ्य इत्यर्थः । कः ककार आदिर्येषां ते यथा तान् वर्णान् व्यञ्जयन्तमुच्चारयन्तं तत्तन्मात्राव्यञ्जनादौ तेषां तेषां मात्रास्तत्तन्मात्रास्तासां व्यञ्जनमुच्चारणं तदादिर्यस्य स तथोक्तस्तस्मिन् । ककारादि तत्तद्वर्णानामुचितैकद्व्यादिमात्राव्यञ्जने , आदिशब्देन व्यक्तत्वेन, अपरुषत्वेन चोच्चारणेचेत्यर्थः । प्रवीण चतुरं । तथोक्तं 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतोज्ञेयो व्यञ्जनन्त्वर्धमात्रक'मिति । व्यक्तत्वेनापरुषत्वेनोच्चारणप्रकारश्च सदृष्टान्त उच्यते— 'यथा व्याघ्री हरेत्पोतं दंष्ट्राभ्यां नतु पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत' । एवञ्चायमभिप्रायः— अर्धमात्रत्वेन

ककारादिहलामुच्चारणसमये तेषां स्थानत्वेनोक्त कण्ठताल्वाद्येभ्य उच्चारणे ककारादीनां यथासम्भवं ह्रस्वदीर्घप्लुतात्मिकाकारादिस्वरशिरस्कत्वेनोच्चारणे तत्रापि व्यक्तत्वेनापरुषत्वेनचोच्चारणेचतुरमिति। तिस्रोऽवस्थाः, पश्यन्ती मध्यमा वैखरीनाम तिस्रोऽवस्थास्तासां गुणास्तद्गुणास्तैस्तासां पृथक्पृथगुक्तदेवताध्यानात्मकैरित्यर्थः । भावयन्तमुत्पादयन्, पश्यन्त्यादीनामुक्तदेवताध्यानाख्यगुणयुक्तत्वेन पश्यन्त्याद्यवस्थाश्चोत्पादयन्तमिति भावः। वेदव्याख्यानसमय एवं भूतं श्रीमध्वाचार्यं दृष्ट्वा, उक्ताङ्गेभ्यः—ब्रह्मा शिरसि ललाटे रुद्रः, 'चन्द्रमा मनसो जातश्चक्षो सूर्यो अजायत, मुखादिन्द्रश्चाग्निश्चे'त्यादि श्रुतिभिर्ब्रह्माद्युत्पत्तिस्थानत्वेनोक्त शिर आद्यङ्गेभ्यः कादिकान् ब्रह्मादीन् व्यञ्जयन्तं सृजन्तं तत्तन्मात्राव्यञ्जनादौ आकाशादिभूतानां तत्तन्मात्रगुणभूतशब्दादिसृष्टौ। आदिशब्देन, आकाशादिपञ्चभूतसृष्टौ च प्रवीणं। तिस्रोवस्थाः सृष्टिस्थितिसंहारलक्षणास्तिस्रोऽवस्थाः तत्तद्गुणैः सृष्ट्यादावङ्गभूतैः सत्वादिगुणैर्भावयन्तमुद्भावयन्तं देवदेवं श्रीनारायण व्यस्मरन् ॥ ३१ ॥

आदौ ह्रस्वत्वेन वत्सानुवृत्त्या मात्रापादौ वर्तयन् दृश्यमानः ।
कुर्वन्नन्याश्चाग्र्यरूपा विवृत्तीर्गोविन्दश्रीरास गोविन्दभक्तः ॥ ३२ ॥

आदाविति ॥ शब्दरूपविशेषो विवृतिरित्युच्यते। तत्र, आदिह्रस्वाविवृतिर्वत्सानुसृतिरित्युच्यते । अन्त्यह्रस्वाविवृतिर्वत्सानुसारिणीत्युच्यते । आद्यन्तह्रस्वा पाकवतीत्युच्यते । तथाह्युक्तं शिक्षायां— 'आदिह्रस्वानुसृतिरन्त्यावत्सानुसारिणी। पाकवत्युभयह्रस्वा दीर्घमध्या पिपीलिके'ति । एवञ्चसति, आदौ ह्रस्वत्वेन हेतुना वत्सानुसृत्यां वत्सानुसृत्याख्यायां विवृत्तौ मात्रापादौ मात्राया मात्राख्यपरिमाणवतः कालस्य पादौ चतुरंशवतः समुदायस्य द्वावंशौ यवर्तनुच्चारणेन वर्तयन् दृश्यमानो देवादिभिर्दृश्यमानः । अग्र्यं रूपं यासां ता अग्र्यरूपास्ताः अन्याश्च पाकवत्याद्यविवृत्तीश्च कुर्वन्नुच्चारणेन प्रकटीकुर्वन् गोविन्दभक्तः श्रीकृष्णभक्तः श्रीमध्वो गोविन्दस्य श्रीरिव श्रीः कान्तिर्यस्य स गोविन्दश्रीः, आस । गोविन्दश्च आदौ बाल्ये ह्रस्वत्वेन सूक्ष्मत्वेन हेतुना वत्सानुवृत्यां गोवत्सानामनुगमने गोवत्सपालकत्वेन तेषामनुगमन इत्यर्थः । पादावंघ्री वर्तयञ्चालयन् । मात्रा यशोदया दृश्यमानः

सञ्चारणक्षमोऽभून्ममशिशुरिति सन्तोषेण दृश्यमानः । अग्र्यरूपा उत्तमरूपा अन्याश्च गोपाङ्गना विगताभृविरन्यविषयकमनोवृत्तिर्ज्ञानं यासां तास्तथा ताः स्वलीलादर्शनासक्तया विषयान्तरास्मरणेन विगतवृत्त्यन्तरा इत्यर्थः वर्तयन् कुर्वंश्च आस ॥ ३२ ॥

**माङ्गल्याङ्गव्यक्तभावा त्रिलोकीं रङ्गारूढा विस्मयं प्रापयन्ती ।**
**कृष्णेवान्या मान्यविन्यासपादा रेजे माध्वी सुस्वरा वेदवाणी ॥ ३३ ॥**

**माङ्गल्येति** ॥ माङ्गल्यानि श्रेयस्कराणि यान्यङ्गानि शिक्षाद्यङ्गानि तैर्व्यक्तः भावोऽभिप्रायो यस्याः सा तथोक्ता कृष्णा च माङ्गल्याङ्गेषु मङ्गलावयवेषु व्यक्तः स्पष्टो भावो विलासो यस्याः सा तथोक्ता त्रिलोकीं विस्मयं प्रापयन्ती । कृष्णाच तादृशी रङ्गारूढा अनुनासिकतयाक्रियमाणाः वर्धिता मात्राः स्वराः रङ्गास्तैरारूढा युक्ता रङ्गाख्यस्वरविशेषैर्विशिष्टेत्यर्थः । कृष्णाच स्वयंवरप्राङ्गणारूढा । मान्यः सम्भाव्यो विन्यासः समापनं येषां ते मान्यविन्यासास्तादृशाः पादा ऋचां पादा यस्याः सा मान्यविन्यासपादा, ऋगुच्चारणसमये यस्य पदस्य यत्स्वरवर्णान्ततया विन्यासो भवेत्तथा तत्पादविन्यासयुक्तेत्यर्थः । कृष्णा च शोभनचरणन्यासयुक्तपादा । सुशोभनस्वरः उदात्तानुदात्तादिस्वरो यस्याः सा सुस्वरा । कृष्णाच शुकहंसस्वरवत् सुस्वरा । मध्व च सम्बन्धिनी माध्वी वेदवाणी वेदवागन्या कृष्णेव द्रौपदीव रेजे ॥ ३३ ॥

**गाम्भीर्याद्यैर्युक्तमौदार्यकार्यैर्नानानादश्लाघ्यमुच्चारणं तत् ।**
**शिक्षाशिक्षालक्षणानां हि लक्ष्यं मान्यं मन्ये धन्यबुद्धेरतुल्यम् ॥ ३४ ॥**

**गाम्भीर्येति** ॥ औदार्यस्य कार्याण्यौदार्यकार्याणि तैरौदार्यजन्यैरित्यर्थः । गाम्भीर्यमाद्यं येषां धर्माणां तानि तथोक्तानि तैर्युक्तं । नाना प्रकारा नादाः नानानादास्तैः श्लाघ्यं प्रशस्यं शिक्षाशिक्षालक्षणानां शिक्षायाः शिक्षाख्याङ्गस्य शिक्षोच्चारणशिक्षा तस्याः लक्षणानि तेषां, शिक्षाख्यवेदाङ्गभूतग्रन्थे प्रतिपाद्यमानयोच्चारणशिक्षया प्रकटितानां लक्षणानामित्यर्थः । लक्ष्यमुदाहरणभूतमतएव मान्यं सुरादिभिरपि माननीयं धन्यबुद्धेः श्रीपूर्णप्रज्ञस्य तत्, उच्चारणं वेदोच्चारणमतुल्यमसदृशं मन्ये ॥ ३४ ॥

कालीः क्लृप्तीर्व्यञ्जयञ्छादसीश्च व्यक्तं शाब्दं शास्त्रमुद्भाव्य भूयः ।
स व्याचख्यावुक्तनैरुक्तमार्गो ज्यायाञ्ज्योतिर्वेदिनां वेदमित्थम् ॥ ३५ ॥

कालीरिति ॥ स श्रीमध्वः कल्पे कल्पाख्यवेदाङ्गग्रन्थे प्रतिपादिताः काल्प्यस्ताः क्लृप्तीर्वेदार्थनियमान् व्यञ्जयन् प्रकटयन्सन् । छन्दसः सम्बन्धिन्यः छान्दस्यस्ताश्च छन्दोनामके वेदाङ्गे कथिताश्चेत्यर्थः । क्लृप्तीर्व्यञ्जयन् । शब्दानां सम्बन्धि शाब्दं शास्त्रं व्याकरणं भूयोऽञ्जसा । अव्ययानामनेकार्थत्वाद्भूयःशब्द आञ्जस्येऽपि वर्तते । व्यक्तं यथा भवति तथा व्यक्तमुद्भाव्य तत्र तत्र प्रकृतशब्दस्य स्वोक्तार्थवाचकत्वेन प्रकटय्य, उक्तः अभिहितः नैरुक्तः निरुक्ताख्यवेदाङ्गसम्बन्धी यो मार्गः, वैदिकशब्द-निर्वचनप्रकारो येन स तथोक्तः । स नकेवलमेवंभूतएव, ज्योतिर्ज्योतिश्शास्त्रं विदन्तीति ज्योतिर्विदस्तेषां मध्ये ज्यायान् श्रेष्ठःसन्, वेदाङ्गभूतज्योतिश्शास्त्राभिज्ञ-ताञ्च प्रकटयन्नित्यर्थः । इत्थं, उक्त वक्ष्यमाणप्रकारेण वेदं व्याचख्यौ । शिक्षादि-षडङ्गानुसारेण वेदं व्याचख्याविति भावः ॥ ३५ ॥

श्रौते व्याख्योच्चारणे चारुणी ते मादृग्देही वर्णयेदस्य को नु ।
वागीशानैर्वाग्विहङ्गेशजीवैर्भूयश्चर्यैर्वर्णिते ये प्रणम्य ॥ ३६ ॥

श्रौत इति ॥ मादृक् मत्सदृशो देही पुरुषः कोऽस्य श्रीमध्वस्य चारुणी मनोहरे श्रौते श्रुतिसम्बन्धिनी व्याख्याचोच्चारणञ्च व्याख्योच्चारणे वर्णयेत् । न कोऽपि वर्णयितुं समर्थ इत्यर्थः । वर्णस्तुताविति धातुः । कुतः येऽमुष्य व्याख्योच्चारणे वागीशानैः सर्ववचसामभिमानिभिर्भूरि बहु आश्चर्यं येषां तैरतिविस्मययुक्तैरीत्यर्थः । वाग्विहङ्गेशजीवैः सरस्वतीगरुडबृहस्पतिभिः प्रणम्य श्रीमध्वं नत्वा वर्णिते स्तुते । 'जीवआङ्गीरसो वाचस्पतिरि'त्यमरः ॥ ३६ ॥

छन्दःसार्थं सार्थनत्राऽमुनेत्थं प्रोक्तं श्रुत्वा ब्राह्मणा ब्रह्मणेव ।
सर्वे सौम्या जिष्णुजिज्ञासयामी प्राप्य प्रोचुश्चित्रकायाभिधानम् ॥ ३७ ॥

छन्द इति ॥ सौम्याः सुप्रसन्नसुमनमानसा अमी सर्वे ब्राह्मणा अत्र मिलिताः विद्वत्सभायां ब्रह्मणेव चतुर्मुखेनेवामुना श्रीमध्वेनेत्थमुक्तप्रकारेण सार्थमर्थसहितं

यथा भवति तथा प्रोक्तं छन्दःसार्थे वेदसमूहं श्रुत्वा जिष्णुजिज्ञासया श्रीमध्व-पुण्डरीकयोर्मध्ये जेता क इति ज्ञातुमिच्छया चित्रो नानावर्णः कायः देहो यस्य स चित्रकायो व्याघ्रस्तस्य अभिधानं पुण्डरीक इति नाम यस्य स चित्रकायाभिधानस्तं ; पुण्डरीकनामकमितियावत् । 'व्याघ्रो द्वीपी पुण्डरीकस्तरक्षुः शार्दूलः स्याच्चित्रकायो मृगारिरिति हलः । प्राप्य स्थलान्तरवर्तिनं प्राप्य प्रोचुः ॥ ३७ ॥

**प्राज्यप्रज्ञः प्राज्यया प्रज्ञयासौ हन्तावोचन्मन्त्रवर्णाभिधेयम् ।**
**तत्प्रत्यर्थी प्रार्थ्यते वक्तुमेतत् प्राज्ञास्माभिः श्रोतुकामैर्भवांश्च ॥ ३८ ॥**

**प्राज्य इति** ॥ असौ प्राज्या पूर्णा प्रज्ञा यस्य स तथोक्तः श्रीमध्वः प्राज्यया सम्पूर्णया प्रज्ञया मन्त्रवर्णो वेदस्तस्याभिधेयोऽर्थस्तमवोचत् । हन्त हर्षे । हे प्राज्ञ! हे विद्वन्! तस्य श्रीमध्वस्य प्रत्यर्थी प्रतिवादितयाविरोधी तत्प्रत्यर्थी भवांश्च, श्रोतुं कामो येषां तैः त्वद्व्याख्यानप्रकारं श्रोतुकामैरस्माभिरेतत् मन्त्रवर्णाभिधेयं मन्त्रवर्णकथनं कर्तुं प्रार्थ्यते ॥ ३८ ॥

**इत्युक्तस्तैरेष विस्तारिबुद्धेः साम्यं प्राप्तुं सम्प्रवृत्तो दुरात्मा ।**
**हास्योऽत्राभूद्वासुदेवप्रभार्थी यद्वत्पूर्वं पौण्ड्रको वासुदेवः ॥ ३९ ॥**

**इतीति** ॥ तैर्विप्रैरित्युक्तः । विस्तारिणी पूर्णा बुद्धिर्यस्य स विस्तारिबुद्धिः श्रीमध्वस्तस्य साम्यं वेदव्याख्यानेन साम्यं प्राप्तुं सम्प्रवृत्तो दुरात्मा दुर्बुद्धिरेष पुण्डरीकपुरिनामा । अत्र संसदि पूर्वं वासुदेवस्य श्रीकृष्णस्य या प्रभा गरुडवाहनत्व श्रीवत्सधारित्वादिकान्तिस्तामर्थितुं शीलमस्येति तथोक्तः पुण्ड्रकस्यापत्यं पौण्ड्रकः । पुत्रिकापुत्रधर्मेण पुण्ड्रकपुत्र इत्युच्यते । वासुदेवो यद्वत्तद्वद्धास्यः परिहासविषयोऽभूत् । [अत्रोपमालङ्कारः] ॥ ३९ ॥

**आज्यादेशाद्युत्तरं रादिशब्दं श्रुत्वा नारेत्युक्तमन्तं पदं तम् ।**
**व्याख्यालौल्यादैतरेयादिसूक्ते पृथ्वीदेवा निन्दनीयं निनिन्दुः ॥ ४० ॥**

**आङिति** ॥ पृथ्वीदेवा ब्राह्मणाः । ऐतरेयाद्या ऐतरेयशाखाया आदिसूक्ते आदौ भवं सूक्तं प्रथमसूक्तं तस्मिन् । 'अग्निमीळे पुरोहितमि'त्यस्मिन् सूक्त इत्यर्थः । तत्रा'प्यग्निनारयिमश्नवत्पोषमेव दिवेदिव' इत्यस्मिन्नर्धर्चे श्रूयमाणादाङादेशात् । आङिति तृतीयैकवचनं । आङस्तृतीयैकवचनस्य आदेश आङादेशः, 'अग्निने'त्यत्र 'ना' इत्येतत् । तथाहि 'आङोनास्त्रियाम्' 'घेरुत्तरस्याङो 'ना' इत्ययमादेशो भवत्य-स्त्रियामि'त्याङो 'ना' इत्यादेशविधानात् । एवञ्च अग्निनेत्यत्राङादेशभूत'ने'त्यस्मादाङा-देशादित्यर्थः । उत्तरं रादिशब्दं र आदिर्यस्य रादिः रादिश्चासौ शब्दश्च रादिशब्दस्तं संहितायां 'रयिमि'त्येतं रादिशब्दं श्रुत्वा, व्याख्यातौऽयमेतत्सूक्तव्याख्यानोत्कण्ठ्यं तस्मात् । अग्निमीळ इत्यादेः पदविभागसमये अग्निना रयिमित्यत्र, अग्नीतिपदं विभज्य पश्चान्नार इति पदमुक्तवन्तमतएव निन्दनीयं तं निनिन्दुः । शाब्दिकोऽयं पुण्डरीकपुरी कथमेवं ब्रूयादिति नशङ्कनीयं । दशमतिकिंकर्या शारदया श्रितिगिरस्तथा वचनसम्भवात् । तथाह्युक्तं— 'अनधीतवानिवहि पुण्डरीकपूर्ननु शाब्दिकः कथमिदं वदेदिति । अतिशाङ्कि मा दशमतेर्हि किङ्करी सकलस्य चोदयति शारदा गिरः' इति ॥ ४० ॥

> शार्दूलाख्यां प्राप्य सम्भावितः प्राक् लोके धूर्तो मायिगोमायुरेषः ।
> वादिद्वीपिध्वंसिनं मध्वसिंहं प्राप्तो हीत्थं शब्दशेषो बभूव ॥ ४१ ॥

**शार्दूलेति** ॥ धूर्तो विप्रलम्भक एष मायिगोमायुः मायिसृगालः शार्दूलाख्यां शार्दूल इति संज्ञां प्राप्य प्राक् श्रीमध्वप्राप्तेः पूर्वं लोके सम्भावितो मानितः । तदानीं वादिनो दुर्वादिन एव द्वीपिनो व्याघ्रास्तान् ध्वंसयितुं विजेतुं शीलमस्येति तथा तं मध्वसिंहं श्रीमध्वाख्यसिंहं प्राप्तःसन्नित्थं शब्देन शेषोऽवशेषो यस्य स तथा शब्द-मात्रेणावशिष्ट इत्यर्थः । बभूव । हि । कष्टमेतत् । अयमभिप्रायः— यथा कश्चि-च्छृगालो व्याघ्रोहमित्युक्त्वा भीषयन् कदाचित्सिंहं प्राप्य तन्निनादमात्रेण पलायन्नयं व्याघ्रोऽपितु सृगाल एवेति निश्चितोऽपि नाममात्रेण शार्दूल इत्युच्यते नतु पूर्ववद्ब-हुमानविषयः, एवमयं पुण्डरीकपुरी, इत्यन्तं कालं लोके महाप्राज्ञोऽयमिति पूजितोऽपि

तदा सर्वविद्वच्छ्रेष्ठं सर्वदुर्वादिभञ्जनं श्रीमध्वाचार्यं प्राप्य भग्नदर्पो भूत्वा पुण्डरीकपुरीति नाममात्रेणावशिष्टोऽभूदिति ॥ ४१ ॥

**कृष्णाभीष्टा शास्त्रविस्पष्टसंज्ञा या स्वीया श्रीः पालिता सद्द्विजेन ।**
**पद्माख्यासत्सैन्धवेनाहृतां तां शुश्रावाद्ध्यानन्दतीर्थाख्यपार्थः ॥ ४२ ॥**

**कृष्णेति** ॥ आग्र्यानन्दतीर्थ इति, उत्तमानन्दतीर्थ इत्याख्या यस्य सोऽग्र्यानन्दतीर्थाख्यः सचासौ पार्थोऽर्जुनश्च सः, या कृष्णाभीष्टा कृष्णस्य श्रीवेदव्यासस्य अभीष्टा, **शास्त्रविस्पष्टसंज्ञा** शास्त्रमिति विस्पष्टा प्रसिद्धा संज्ञा नाम यस्याः सा तथोक्ता, **सद्द्विजेन** सतां निर्दोषेण द्विजेन लिकुचकुलश्रेष्ठेण शङ्करार्यनाम्ना विप्रेण पालिता रक्षिता, या स्वीया स्वसम्बन्धिनी श्रीर्लोके स्वकीर्तिप्रतानहेतुभूता स्वकृतशास्त्रपुस्तकावलिस्तां । पद्मतीर्थ इत्याख्या यस्य स पद्माख्यः सचासावसत्सैन्धवश्च दुष्टजयद्रथश्च तेन हृतामपहृतां शुश्राव । स्वकीयशास्त्रात्मकं पुस्तकजातं लिकुचवंशोद्भवशङ्करार्यकरात्पद्मतीर्थेन हृतं शुश्रावेति भावः । पार्थो यथा जयद्रथेन हृतां द्रौपदीं शुश्राव तद्वदिति भावः । साच कृष्णाभीष्टा, कृष्णस्याभीष्टा, कृष्णचसाभीष्टा चेति वा । शास्त्रविस्पष्टसंज्ञा शास्त्रे भारते प्रसिद्धसंज्ञा, सद्द्विजेन धौम्येन पालिता, पार्थेषु मृगयां गतेषु धौम्येन पालिताहि । स्वीया स्वकीया श्रीः सम्पद्रूपा भार्या (तां यथा पार्थः सैन्धवहृतां शुश्राव तद्वदिति भावः) ॥ ४२ ॥

**तूर्णं तीर्णादभ्रमार्गोऽथ सार्यः सम्प्राप्तोऽसौ गोगणैर्भाषयित्वा ।**
**संयम्यान्तर्यन्तृकामेन हास्यं सम्प्राप्तश्रीर्निर्जितं तं जहास ॥ ४३ ॥**

**तूर्णमिति** ॥ अथ पुस्तकाहरणश्रवणानन्तरं तूर्णमाशु तीर्णोऽतीतोऽदभ्रमार्गो बहुयोजनमार्गो येन स तथोक्तः सार्यः श्रेष्ठः यतिसहितोऽसौ श्रीमध्वः । तं पद्मतीर्थं सम्प्राप्तःसन् गोगणैर्वचनसमूहैर्भाषयित्वा, संयम्य निरुध्य निरुत्तरीकृत्येत्यर्थः । सम्प्राप्तश्रीः सम्प्राप्तजयश्रीःनिर्जितं पराजितं पद्मतीर्थं । अन्तर्यन्ता नियामकोऽन्तर्यामी तस्य काम इच्छा तेन एतत्सर्वमन्तर्यामी वेदेतिवचनेनेति भावः । हास्यं परिहासविषयं पद्मतीर्थं जहास । पार्थो यथा तूर्णतीर्णादभ्रमार्गः सार्योऽर्येण ज्येष्ठेन भीमसेनेन

सहितस्तं जयद्रथं प्राप्तवान्। अन्तर्यन्तृकामेन, अन्तः प्रेरकेण कामेन मन्मथेन हास्यं परदारापहाराख्यकुकर्मणापहासविषयं तं जयद्रथं जहास तद्वदिति भावः ॥

दुष्टात्मासौ भद्रमेकाकिनं यः क्षेप्तुं हेतुः सौख्यदाख्यं बभूव ।
हर्यंशोऽयं तं न चक्षाम भूयस्तोके सन्ने सूकरं केसरीव ॥ ४४ ॥

दुष्टेति ॥ अयं हर्यंशो वाय्वंशः श्रीमध्वः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशु वाजिषु । शुकाहि कपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । योऽसौ दुष्टात्मा दुष्टबुद्धिः पद्मतीर्थः । भद्रं मनोवाक्कायकर्मभिः शोभनमेकाकिनमसहायं सन्तं सुखमेव सौख्यं तद्ददातीति सौख्यदः स इत्याख्या यस्य स तथा तं । शङ्कराख्यमित्यर्थः । द्विजं क्षेप्तुं निराकर्तुं हेतुर्बभूव । तं पद्मतीर्थं तोके शिशौ सन्ने मृते सति केसरी सिंहः सूकरमिव भूयः पुनर्नचक्षाम । तद्विषये क्षमावान्नाभूत्। सूकरेण सिंहं वञ्चयित्वा सिंहशिशौ नाशितेसति सिंहः सूकरं न क्षाम्यति, किन्तु हन्त्येव। तद्वदयं मध्वोऽपि तं न चक्षामेति भावः। श्लेषार्थेतु यं जयद्रथमेकाकिनं सौख्यदाख्यं स्वकीयानां युधिष्ठिरादीनां सुखप्रदनामानं सौभद्रं सुभद्रातनयं क्षेप्तुं हन्तुं हेतुर्बभूव। पद्मव्यूहद्वारि पाण्डवनिरोधात्तस्य तद्धेतुत्वं । तं जयद्रथं हर्यंश इन्द्रांशोऽर्जुनः यथा भूयो मरणावधि न चक्षाम तद्वदिति । [अत्रोपमालङ्कारः] ॥ ४४ ॥

तस्य त्रासात्पृष्ठतोऽस्तिष्ठतोऽभूत् क्षेमापेक्षी यो जनः प्राग्जितोऽपि ।
मध्येऽन्येषां गोततीरतत्प्रयुक्ताः सोऽद्याज्जिष्णुः पञ्चषैर्गोविशेषैः ॥ ४५ ॥

तस्येति ॥ जिष्णुर्जयशीलः स श्रीमध्वाचार्यः । प्राग्जितोऽपि पराजितोऽपि यो जनः पुण्डरीकपुर्याख्यो जनस्त्रासात् श्रीमध्वभयात् । 'दरस्त्रासश्च साध्वसं' इति हलः । पृष्ठतः पश्चाद्भागे तिष्ठतस्तस्य पद्मतीर्थस्य क्षेमापेक्षत इति क्षेमापेक्ष्यभूत् । अन्येषां मध्ये तत्प्रयुक्तास्तेन पुण्डरीकपुर्याख्येनप्रयुक्ता गोततीरुपन्यासरूपवाक्ततीः, पञ्चच षट्च पञ्चषास्तैर्गोविशेषैस्तत्कृतोपन्यासस्यापशब्दादिदोशप्रकाषकैर्वचनविशेषैरद्यत् । अखण्डयत् । 'दो अवखण्डने' इति धातुः । स जिष्णुः पार्थो यथा प्राक् जितोऽपि यो जनो द्रोण्यादिजनत्रासादर्जुनभयात् पृष्ठतस्तिष्ठतः पार्थाभिमुख्यमप्राप्य द्रौण्यादीनां

पृष्ठतो वर्तमानस्य तस्य जयद्रथस्य क्षेमापेक्षी मरणाभावापेक्षयभृत् । अन्येषां मध्ये नप्रयुक्तास्तेन जयद्रथक्षेमापेक्षिद्रौण्यादिना प्रयुक्ता गोततीः शरततीः पञ्चपैर्गोविशेषैः शरविषेषैर्यद्वदखण्डयत् तद्वदिति भावः ॥ ४५ ॥

**त्रिष्णोर्भूयः शोभयद्भिः पदान्तं पारम्पर्येणेर्यमाणैरवार्यैः ।**
**गोत्रातैस्तं दारयित्वा न्यगृह्णात्कञ्जाख्यानं सिन्धुपं मध्वपार्थः ॥ ४६ ॥**

**विष्णोरिति** ॥ मध्वपार्थो भूयो विष्णोः पदान्तं, पद्यत इति पदं स्वरूपं यस्यान्तो निर्णयो यस्मात्तत् पदान्तं विष्णुस्वरूपनिर्णायकवेदवेदान्तादिकं, शोभयद्भिः वेदादेरपव्याख्यां निराकृत्य यथावद्व्याख्यानात्मकैरित्यर्थः । पारम्पर्यं नैरन्तर्यं तेनेर्यमाणैरुच्यमानैरवार्यैर्वाधन्तरेणानिवार्यैः । गोत्राता उपन्यासरूपवचनसमूहास्तैः तं कञ्जतीर्थइत्याख्यानं नाम यस्य स कञ्जाख्यानस्तं पद्मतीर्थनामकमित्यर्थः । सिन्धून् सिन्धुदेशान् पातीति सिन्धुपस्तं । 'देशेनदविशेषेऽब्धौ सिन्धुर्नासरिति स्त्रियामि'- त्यमरः । जयद्रथं दारयित्वा निराकृत्य पराभाव्येत्यर्थः । न्यगृह्णन्निग्रहस्थानं प्राप्तमकरोत् । स्वकृतमुपन्यासमखण्डयित्वा तूष्णीस्थितं तमनुक्तयाख्यनिग्रहस्थानं प्राप्तं चकारेति भावः । पार्थो यथा विष्णोः पदान्तमाकाशप्रदेशान्तं शोभयद्भिः पारम्पर्येणेर्यमाणैरवार्यैर्गोत्रातैः शरसमूहैस्तं सिन्धुपं दारयित्वा विदार्य न्यगृह्णाज्जघान । तद्वदिति श्लेशाभिप्रायः ॥ ४६ ॥

**आस्तामास्तामेष वो विश्वमोपो रेरे मायावादिचोरा द्रवेत ।**
**द्रष्टा द्रष्टा निग्रहीता ध्रुवं वः प्राप्तः कालो द्रागुहान्तं प्रवेष्टुम् ॥ ४७ ॥**

कृष्णाभीष्टेत्यादिश्लोकोक्तं प्रमेयं ग्रन्थकृता स्वयमेव संगृह्याप्युक्तं भावप्रकाशिकायां विष्णुमङ्गलेत्यादिना - तदस्माभिरुदाह्रियते— 'विष्णुमङ्गलदेशान्ते हृतां कपलिकां निजां । श्रुत्वा रजतपीठस्थ एकवाटं ययौ गुरुः । तत्रस्थं चोलजं दृष्ट्वा स्वशिष्यैर्न्नं रुरोध सः । त्वच्छास्त्रं साधयसिचेत् प्राश्निकानाह्वयेत्यसौ । मध्वस्तेनोदितः प्रोचेऽत्राप्येच्छसि चेदिति । कृतकृत्योऽस्मि मे शास्त्रं व्याप्तमित्युदितेऽमुना । प्रोचे मध्वो ममव्याप्तं त्रैलोक्ये शास्त्रमित्यमुं । अन्तर्यामी हन्त वेद तवेदं शाठ्यभाषितं । इति

ब्रुवाणं तं प्रोचे मध्वः स्मितमुखाम्बुजः । व्यासं त्वय्येव मच्छास्त्रं किमुतान्यत्र बालिश । अन्तर्यामी नियम्यश्च त्वयैवाङ्गीकृताविति । मिलितेष्वथ सभ्येषु प्राश्निकेश्वभवत्कथा । तत्र माध्व उपन्यासो ग्रन्थो वादाह्वयोऽभवत्' इति । पुनरपि वादस्य सभ्याभिहिताबसरात्पूर्वं त्रस्तेषु चोलजातिषु विद्रुतेषु सत्सु वादावसानेसति श्रीमध्वमहाविजयमहामहेन कुतूहलिभिः सद्भिर्निगदितानां वादाख्यप्रकरणान्तेऽभिनिवेशितानां— 'आनन्दतीर्थपुंसिंहो मायावादि दितेःसुतान् । विदार्यशुक्तिनखैरप्रतीपो विभासते । पलायध्वं पलायध्वं त्वरया मायिदानवाः । सर्वज्ञहरिरायाति तर्कागम दरारिभृत् । द्रवत द्रवताशु मायिनः प्रविशध्वमतन्द्रिता गुहाः । कमलारमणाग्रराश्रयः समुदेत्यखिलज्ञभास्करः । नृहरिः सकलज्ञनामकः समुदेतिहि मायिदानवान् । प्रपलायनमत्र तक्षमं त्वरया वो वसतिर्गुहासुच । जयत्यानन्दतीर्थेष्टदेवता नरकेसरी । विपाटिताज्ञानतमः कपाटोऽस्युरुहुंकृतः । जयत्यमितपौरुषः स्वजनतेष्टचिन्तामणिस्व-जेशमुखवन्दितो गुणगणार्णवः श्रीपतिः । सर्वज्ञ सन्मुनीन्द्रोच सन्मनः पङ्कजालयः । अजितो जयतीशानो रमाबाहुलताश्रयः' । इति सप्तपद्यानामभिप्रायः प्रपञ्चयते नारायणार्यैः । तत्र द्रवत द्रवतेत्यस्यचाभिप्राय—

आस्तामिति ॥ रेरे 'हीनसम्बोधनेतु रे' इत्यमरः । र इत्यव्ययम् । सम्भ्रमे द्विरुक्तिः । मायावादि चोरा मायाकल्पितं जगदिति वादिन एव चोरा वो युष्माकं एष विश्वमेषो भेदाद्यखिलप्रपञ्चस्य चौर्यमास्तामागतां । तिष्ठतु तिष्ठतु । इतः परमलमिति भावः । संभ्रमे तात्पर्ये वा द्विरुक्तिः । तर्हि किमस्माभिः कार्यमिति चेत्तत्राह द्रवेतेति । द्रवेत पलायध्वं । कुतः द्रष्टा द्रष्टा पश्यन् पश्यन् पुरुषो ध्रुवं निश्चयेन वो निग्रहीता, निग्रहस्थानं प्रापतान् करिष्यतीत्यर्थः । ग्रह उपादाने लुट् । युष्माभिः किमुक्तं चेदपि भवदुक्तं सत्यं मिथ्यावेति विकल्प्य सत्यं चेदपसिद्धान्तः मिथ्या चेद्भवदुक्तेः प्रमितत्वात्तन्मिथ्यात्वं प्रमाणविरुद्धमित्याद्युक्त्वा द्रष्टा वादी निरुत्तरान् कुर्यादित्यर्थः । तस्माद्युष्माकं द्रागाशु गुहान्तो गुहाप्रदेशस्तं प्रवेष्टुं कालः प्राप्तः । यथा कश्चिचोरान् दृष्ट्वा, एतच्चौर्यमागतां, द्रष्टा द्रष्टा पुरुष वोऽयुष्मान् हन्ता तस्मात्पलायध्वं । द्राग्गुहां प्रविशतेति ब्रूयात्तद्वदिति भावः । एतेषां श्लोकानां 'इति निगदति मायावादिविद्वेष वेप' इति सर्गान्त्यश्लोकेन सम्बन्धः ॥ ४७ ॥

**तेजोविद्वच्चक्रचन्द्रस्य लीनं विध्वस्तालं वादिनक्षत्रलक्ष्मीः ।**
**विश्वव्याप्तं यत्तु तद्दीप्तिमूलं युष्मत्प्रेष्ठं तन्निरस्तं तमश्च ॥ ४८ ॥**

इह गुहां प्रवेष्टुं काल इत्याह—

**तेज इति** ॥ विदुषां चक्रं समूहस्तदेव चन्द्रस्तस्य तेजः सामर्थ्यं लीनं निरस्तम् । दुर्विदुषां विद्यामदो निरस्त इति भावः । वादिन एव नक्षत्राणि तेषां लक्ष्मीर्जयश्री-रप्यलं विध्वस्ता निरस्ता, कुवादिनां जयश्रीरपि नष्टेत्यर्थः । नकेवलमेतावन्मात्रं किन्तु विश्वव्याप्तं लोकेव्याप्तं तयोर्दीप्तिमूलं दीप्तिकारणं तद्दीप्तिमूलं, विद्वच्चक्रचन्द्रस्य वादिनक्षत्र शोभायाश्च कारणमित्यर्थः, युष्मत्प्रेष्ठं प्रत्यक्षादिप्रमाणसिद्धभेदादिप्रपञ्चचोराणां युष्मा-कमतिप्रियं यत्तु तमोऽज्ञानं तच्च निरस्तं । यदज्ञानमवलम्ब्य इयन्तं कालं विदुषां वादिनां च प्रसरो लोके, तदज्ञानं नष्टं । भवतामतिप्रियञ्च तदज्ञानं । 'मायाशक्त्या सर्वनिर्वाहसिद्धिरिति सर्वनिर्वाहहेतुत्वाङ्गीकारात्तस्य । चन्द्रदीप्तेर्नक्षत्रदीप्तेश्च कारणं ध्वान्तं चोराणामतिप्रियं, तमसिहि चोराश्चोरयन्ति । तस्मिन् ध्वान्ते नष्टेसति यथा कश्चिच्चोरान् वदेत् । हे चोराः! तमो नष्टमाशु द्रवतेति तद्वदिति भावः ॥ ४८ ॥

**पूर्वाशामापूर्य विश्वप्रकाशी गोसन्दोहः सप्तविद्याख्यवाहः ।**
**युष्माभिः किं नैक्षि देदीप्यतेऽसौ देवः साक्षात्सर्ववित्सर्वदीपः ॥ ४९ ॥**

विद्वच्चक्रचन्द्रादेस्तेजो भङ्गः कुतः? कुतश्च तमो नष्टमिति चेदत्राह—

**पूर्वेति** ॥ सप्तविद्याख्यवाहः सप्तच ता विद्याश्च सप्तविद्याः, ऋगाद्याश्चत्वारो, मूलरामायणं, भारतं, पञ्चरात्रञ्चेति सप्तविद्याः, ता इत्याख्या नाम येषां ते तथोक्ता-स्तादृशा वाहा अश्वा यस्य स तथोक्तः । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय' इत्यमरः । अतएव विश्वस्मिन् सर्वस्मिँल्लोके प्रकाशत इति विश्वप्रकाशी । अथवा विश्वस्य प्रपञ्चस्वरूपस्य ब्रह्मस्वरूपस्य च प्रकाशी, उपदेशेन प्रकाशनशीलः । देवः क्रीडादि-गुणकोऽसौ सर्ववित्सर्वदीपः सर्वं दीपयति प्रकाशयतीति सर्वदीपः सूर्यः सर्वविदेव श्रीपूर्णप्रज्ञ एव सर्वदीपः श्रीमध्वाख्यसूर्य इत्यर्थः । गोसन्दोहा वचनसमूहास्तैः पूर्वाशां पूर्वेषां ब्रह्मादीनामाशां सज्जनाज्ञाननिरासविषयं मनोरथमित्यर्थः । आपूर्य

पूरयित्वा ब्रह्मादीनां मनोरथं सम्यक्साधयित्वेति भावः । साक्षात्सर्वेसमक्षं । साक्षात्प्र-त्यक्षतुल्ययोरि'त्यमरः । देदीप्यते प्रकाशते । श्रीमध्वाचार्यः सूर्यवत्सर्वेसमक्षं प्रकाशते ; असौ युष्माभिर्नेक्षि किं? नदृष्टः किं? श्रीमन्मध्वाचार्यं दृष्ट्वाप्येवमवस्थानं भवतामत्यनुचितं । शीघ्रं प्रपलायध्वमिति भावः । श्लेषार्थेतु सप्तवाहः सप्ताश्वः विश्वप्रकाशी सर्वप्रकाशको देवः सर्वविस्सर्वज्ञः सर्वदीपः सूर्यः पूर्वाशां प्राचीदिशं गोसन्दोहैः किरणसन्दोहैः देदीप्यते । असौ युष्माभिर्नेक्षि किं ? हे बालिशा! शीघ्रं प्रपलायध्वमितियथा कश्चिच्चोरान् वदेत्तद्वदिति भावः ॥ ४९ ॥

सर्वाधारं ब्रह्मसंज्ञं विहायो रम्याकारं शारदेन्दीवराभम् ।
सन्निर्णीतं गुणवत् शब्दभेदैर्मध्वादित्यं संश्रितं कोऽपि धत्ते ॥ ५० ॥

एवं भूतोऽसौ केनाप्याच्छादयितुमशक्य इत्याह—

**सर्वाधारमिति ॥** सर्वाधारं सर्वेषामाश्रयं शरदिभवं शारदं यदिन्दीवरं तद्वदाभा यस्य तत्तथोक्तं । अतएव रम्य आकारो यस्य तत्तथा । शब्दभेदा वेदविशेषास्तैरले सम्यक् गुणा अस्य सन्तीति गुणि ज्ञानानन्दादिगुणवदिति निर्णीतं निश्चितं सत् निर्दोषं, ब्रह्मेति संज्ञा यस्य तद्ब्रह्मसंज्ञं विहायो नभः संश्रितं मध्वादित्यं श्रीमध्वार्यं कोऽपिधत्ते । आच्छादयेत् । सर्वाधारत्वादिगुणयुक्तं परंब्रह्म सम्यगाश्रितं श्रीमध्वं कः पुमानाच्छादयेत् निराकुर्यान्नकोऽपीत्यर्थः । यथा सर्वाधारं सर्वप्राणिनामाश्रयं शारदे-न्दीवराभं नीलवर्णं रम्याकारं शब्दभेदैश्शब्दविशेषैर्ध्वनिभिः गुणि ध्वन्याख्यगुण-युक्तत्वेननिर्णीतं विहायः आकाशमाश्रितमादित्यं न कश्चिदाच्छादयेत्तद्वदिति श्लेषा-भिप्रायः ॥ ५० ॥

विद्रावत विधावत त्वरितमत्रिवादासुरा
अदभ्रधिषणाभिधो नरहरिर्हि जाज्वल्यते ।
मयुक्तिनखरैः खरैर्मुखरमूर्खदुःखांकुर-
विदारणनि दारुणप्रकटनप्रणादोऽप्रयान् ॥ ५१ ॥

'आनन्दतीर्थपुंसिंहो मायावादि दितेः सुतानि'त्यस्य पद्यस्य, 'नृहरिः सकलज्ञ-नामकः' इत्यस्य च प्रपञ्चो—

**विधावतेत्यादि** ॥ हे अत्रिवादासुरा त्रयाणां वादस्त्रिवादः न विद्यते त्रिवादो येषां तेऽत्रिवादा मायिनस्त एवासुराः । अत्रिवादा इति मायिन उच्यन्ते त्रिवादरहितत्वात् । वादो वचनं त्रयाणां वादस्त्रिवादो जीवेश्वरजगद्विषयं वचनमित्यर्थः । (जीवेश्वरजगद्विषयवादः, वचनं वेदादिकश्च तद्रहितत्वादत्रिवादा इति मायिन उच्यन्ते । वेदरहितत्वञ्च तेषां वेदवचनतत्त्वावेदकत्वानङ्गीकारादित्यर्थः) हि यस्माद्दभ्रापूर्णा धिषणा बुद्धिर्यस्य सोऽदभ्रधिषणः पूर्णप्रज्ञः स इत्यभिधा नाम यस्य स तथोक्तः नरश्चासौ हरिः सिंहश्च नरहरिर्नृसिंहो जाज्वल्यतेऽतितरां ज्वलति, स श्रीमध्वाख्यसिंहो मुखरा वाचाला ये मूर्खाः कुवादिनस्तेषां यानि दुःखानि तेषामङ्कुर उत्पत्तिर्येभ्यस्ते तथोक्तास्तैः खरैः क्रूरैर्युक्तय एव नखरा नखास्तैर्दारुणं दुष्टानामसह्यं यत् प्रवचनं व्याख्यानं तद्रूपः प्रणादः सिंहनादो यस्य स तथा सन्नप्रियाञ्छत्रून् विदारयति । दारुणप्रणादो नरसिंहो नखरैर्यथा शत्रून् विदारयति । एवमेवादभ्रधिषणः श्रीपूर्णप्रज्ञाचार्यो दारुणप्रवचनःसन् युक्तिभिः प्रतिवादिनो निराकरोतीत्यर्थः । तस्मात्त्वरितं यथा भवति तथा विधावत विधावत पलायध्वं पलायध्वं । [पृथ्वीवृत्तम् । 'जसौ जसयलावसुग्रहयतिश्च पृथ्वीगुरुरि'त्युक्तेः] ॥ ५१ ॥

धत्ते रूपाण्यनन्तान्यपि भुवनपतेर्यो हृदाप्येकपक्षो
दक्षः सङ्घ्योऽखिलेभ्योऽप्यमृतमिह ददौ केवलं यो न मात्रे ।
पक्षिश्रेष्ठोऽपरः सन्नमितमतिददोऽसम्पदे स्यादयं वो
मा दर्पं मायिसर्पा भजत भजत तास्ता गुहा द्राग्द्विजिह्वाः ॥ ५२ ॥

**धत्त इति** ॥ द्वे जिह्वे येषां ते द्विजिह्वाः मायिनामनृतवादित्वाद्द्विजिह्वत्वं सर्पाणां द्वे जिह्व इति प्रसिद्धमेव । हे मायिसर्पाः! मायिन एव सर्पाः, अयं श्रीमध्वः पक्षिश्रेष्ठः सन्नपरः पक्षिश्रेष्ठाद्गरुडादन्यः तद्विलक्षण इतियावत् । तथाहि गरुडः पक्षिणां विहगानां श्रेष्ठत्वात्पक्षिश्रेष्ठ इत्युच्यते । अयं तु न तथा किन्तु पक्षिणां सिद्धान्तवतां वादिनां श्रेष्ठः, तस्मात्पक्षिश्रेष्ठसन्नप्यपर इत्यर्थः । इतश्चाप्यपरोयमित्याह— धत्त

इत्यादिना । अयं श्रीमध्वो हृदापि हृदयेनापि भुवनपतेस्त्रैलोक्यनाथस्य हरेरनन्तान्यपरिमितानि रूपाणि धत्ते धारयति । सर्वदाप्यनन्तरूपाणि ध्यायतीत्यर्थः । गरुडस्त्वसेनाप्येकमेवरूपं धत्ते । अयं श्रीमध्व एकः प्रधानः पक्षः सिद्धान्तो यस्य स तथा सर्वोत्तमसिद्धान्तवानिति भावः । गरुडस्तु द्विपक्षः । अयं श्रीमध्वो दक्षः सर्वविषये चतुरः । गरुडस्त्वदक्षो न दक्षप्रजेश्वरः, किन्तु दक्षदौहित्र एव । यः श्रीमध्व इह जगत्यखिलेभ्यः सद्भ्योऽप्यमृतं मोक्षं ददौ केवलं मात्रे स्वजनन्यैव, किन्तु स्वजनन्यै स्वजनस्याखिलेभ्यः सद्भ्यश्चामृतं मोक्षं ददावित्यर्थः । गरुडस्तु केवलं मात्रेऽमृतं सुधां ददौ । एवमयं पक्षिश्रेष्ठ इति नामभागपि गरुडादपर इत्यर्थः । एवं भूतोऽयममितमतिपदोऽमितमतिरिति पूर्णप्रज्ञ इति पदं नाम यस्य स तथोक्तो वो युष्माकमसम्पदेऽभूतये स्याद्भवेत् । तस्माद्यूयं, दर्पो गर्वस्तं मा भजत न कुरुत । वैदुष्यगर्वं त्यक्त्वा विनीता भवत इत्यर्थः । मानित्वाद्गर्वत्यागे समर्था वयं किंकुर्म इति चेदत्राह द्रागिति । द्रागाशु तास्ताः युष्मादिष्टा गुहा भजत विशत । गरुडमापतन्तं दृष्ट्वा कश्चित्सर्पान् प्रत्येवं यथा ब्रूयात् तद्वचोलादीन्प्रति सन्निकरोवददित्यर्थः । [स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेय'मित्युक्तेः] ॥

वेदव्रातसुदर्शनः परिलसत्तर्काख्यशङ्खध्वनि-
र्विभ्राजिष्णुपुराणसंहतिगदः श्लोकौघशाङ्गान्वितः ।
सत्सूत्रैष्वितिहासनन्दककरो मध्वाख्यनारायणः
प्राप्तो वो निजघृभया द्रवत हे मायाविदैत्यद्विपः ॥ ५३ ॥

'पलायध्वं पलायध्वं त्वरया मायिदानवाः, सर्वज्ञहरिरायाति तर्कागमदरारिधृक्' इत्यस्य प्रपञ्चो—

वेदव्रातेति ॥ वेदव्रातो वेदसमूहः स एव सुदर्शनं सुदर्शनचक्रं यस्य स तथोक्तः परिलसन्तो वेदानुसारित्वेन शोभमाना ये तर्कास्त इत्याख्या यस्य स तथोक्तः तादृशः शङ्खध्वनिर्यस्य स तथोक्तः । विभ्राजिष्णुर्विशेषेण शोभनशीला या पुराणसंहतिः पुराणसमूहः सैव गदा यस्य स तथोक्तः । श्लोकौघ एव श्लोकरूपपञ्चरात्रवृन्दमेव शार्ङ्गं शार्ङ्गाख्यं धनुस्तेनान्वितो युक्तः । मिताक्षरं श्लोकरूपं पञ्चरात्रं श्लोकशब्दवाच्यं

गद्यरूपं पञ्चरात्रं मिताक्षरं विधेयमुच्यते । 'अमिताक्षरं पञ्चरात्रं विधेयमाहुर्मनीषिणः मिताक्षरं श्लोकाख्यमुभयं वेद इत्युच्यते' इति ब्रह्माण्डे सन्ति निर्दोषाणि च तानि सूत्राणि च सत्सूत्राणि तान्येवेषवश्शरास्तेचेतिहासमन्त्र भारतमेव नन्दकः खड्गः सच सत्सूत्रेष्वितिहासनन्दकास्त्रैश्च गश्चतुरः । भगवतः खड्गस्य नन्दकाख्या । 'खड्गोऽस्य नन्दक' इति हलः । मध्वाख्यनारायणः, हे मायाविद्वद्विषः! माया एषामस्तीति मायाविनो मायावादिनस्त एव देवद्विषो दैत्या वो युष्माकं निगृहीतुमिच्छा निजिघृक्षा निग्रहणेच्छा तया प्राप्तः । अतो द्रवत पलायध्वं । [शार्दूलविक्रीडितवृत्तम् । 'सूर्याश्वैर्मसजा तत सगुरवः शार्दूलविक्रीडितमि'त्युक्तेः । अत्र रूपकालङ्कारः] ॥ ५३ ॥

इति निगदति मायावादिविद्वेषवेषे शुभजननिकरे स्वारामतोऽस्मात्प्रयातः ।
न्यवसदमरधिष्ण्ये प्राग्र्यवाटाभिधाने गुरुमतिरभिनन्दन् देवमानन्दमूर्तिम् ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के द्वादशः सर्गः ॥

इतीति ॥ मायावादिषु विद्वेषः स एव वेषोऽलङ्कारो यस्य स मायावादिविद्वेषवेषस्तस्मिन् मायावादिविषये सम्पूर्ण द्वेषयुक्त इत्यर्थः । शुभा ये जनास्तेषां निकरः समूहस्तस्मिञ्श्रीमध्वमहाविजयमहोत्सव सकुतूहलिनि सज्जनसमूह इत्यर्थः । इति 'आस्तामास्तामि'त्यादिनिगदतिसति । तस्मादत्र पद्मतीर्थो दुष्टो निरुद्धो वादेपराजितश्च । अस्मात्स्वारामतः 'कावु' इत्यपभ्रष्टसंज्ञकाद्ग्रामात्प्रयातो गुरुमतिः पूर्णप्रज्ञः प्राग्र्यश्च तद्वाटश्चोपवनश्च प्राग्र्यवाटं तदित्यभिधानं नाम यस्य तत्तथोक्तं तस्मिन् । अपभ्रष्टसंज्ञायां 'कोडिपाडी'ति संज्ञकेऽमरधिष्ण्यं देवस्थानं तस्मिन् । आनन्दो मूर्तिः शरीरं यस्य स तथा तं देवं तत्राधिष्ठितमानन्दरूपं जनार्दननामानं भगवन्तं दृष्ट्वा अभिनन्दन् सन्तुष्टःसन् न्यवसत् । चातुर्मास्यमुवास । [मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैरित्युक्तेः] ॥ ५४ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां द्वादशः सर्गः ॥

पृथुदर्शनमुत्थितं कृतार्थं पृथिवीभृत्प्रणतिं गृहीतवन्तम् ।
निजशिष्यमुदेऽथ सह्यमासं पुरुषः कश्चिदुपाययौ कदाचित् ॥ १ ॥

**पृथ्विति** ॥ उत्थितं कृतचातुर्मास्योत्थानं, कृतः अर्थः प्रयोजनं येन स तथा तं। चोळजं पद्मतीर्थे पौर्णमास्यामुत्थाय निशीथ एव स्वारामतो गतं श्रुत्वा ऋत्विग्ग्रामजनैर्दत्तं चोलजाहृतं पुस्तकजातं स्वयमगृहीत्वा कस्यचिन्मध्यस्थस्य करे स्थापितवन्तमिति भावः। पृथिवीभृत्प्रणतिं पृथिवीं बिभर्तीति पातीति पृथिवीभृत् जयसिंहाख्यभूपस्तस्य प्रणतिर्नमस्कारस्तां गृहीतवन्तमङ्गीकृतवन्तं निजाः स्वकीया ये शिष्यास्तेषां मुत् सन्तोषस्तस्यै, सह्यः सह्यगिरिस्तमासं। सह्योपरिविद्यमानानां निजशिष्याणां सन्तोषाय तत्र गन्तुं मार्गवशात्सह्यगिरिमासमिति भावः। पृथु महत् दर्शनं ज्ञानं यस्य तं श्रीपूर्णप्रज्ञं कदाचित् कश्चित्पुरुष उपाययौ। [सर्गेऽस्मिन् प्रायश्चन्द्रिकावृत्तम् । 'विषमे ससजा गुरू यदि स्युः सभरायश्च युजीह चन्द्रिकामे'त्युक्तेः] ॥ १ ॥

भगवानिह नः स्वकिङ्कराणामचिरेणाव्रजतादनुग्रहार्थम् ।
इति कार्यचिकीर्षयार्थयत्त्वां नृप इत्यभ्यर्थितेप तं प्रणम्य ॥ २ ॥

**भगवानिति** ॥ एष समागतः पुरुषस्तं श्रीमध्वं प्रणम्य स्वकिङ्कराणां नोऽस्माकमनुग्रहार्थं, अचिरेण शीघ्रादिह, अस्मद्देश आव्रजताद्‌आगच्छतु । इति नृपो जयसिंहाख्यः कार्यचिकीर्षया, चोलजाहृतपुस्तकापहारस्य प्रतिक्रियापूर्वकं त्वां क्षमापयित्वा मध्यस्थकरे स्थापितपुस्तकदानात्मककार्यकरणेच्छया, त्वामार्थयत् प्रार्थयामास । अर्थ उपयाच्ञायां लङ् । इत्यभ्यर्थित । जगाद ॥ २ ॥

अथ माघवतीमपास्य काष्ठां व्रजता प्रेषिततेजसा प्रतीचीम् ।
परिशोधयता स्वपादसङ्गात् पृथिवीं प्राज्ञदिवाकरेण रेजे ॥ ३ ॥

**अथेति** ॥ अथ, इत्थं तद्वचनानन्तरं । मघोन इन्द्रस्य सम्बन्धिनी माघवती नागेन्द्रीमितियावत् । काष्ठां दिशमपास्य त्यक्त्वा प्रतीचीं पश्चिमां दिशं व्रजता.

मपादौ स्वचरणौ तयोः सङ्गः संसर्गस्तस्मात् पृथिवीं परिशोधयता प्रेमिनं परिपूर्णं तेजो यस्य स तथा तेन प्राज्ञदिवाकरेण श्रीपूर्णप्रज्ञाख्यसूर्येण रेजे । ऐन्द्रीमाशां हित्वा प्रतीचीं दिशं व्रजन् स्वकिरणसङ्गात्सर्वं पावयन् दिवाकरो यथा प्रकाशते तदुक्तलक्षणकोऽयं श्रीमध्वाचार्यो रराजेति भावः ॥ ३ ॥

**अशुभानपहाय मायिजुष्टानधमार्द्रानिव गोत्रनिम्नगौघैः ।**
**सुजनैस्तरसाभिगम्यमानः परमस्नेहतया क्रमप्रसन्नैः ॥ ४ ॥**

अशुभानिति ॥ अयं परमानन्दाख्यविद्वच्छ्रेष्ठः मायिजुष्टान् मायावादिभिर्वशीकृतानशुभान् दुर्जनानपहाय हित्वा परम उत्तमः स्नेहो यस्य स परमस्नेहस्तस्य भावस्तत्ता तया, क्रमप्रसन्नैः क्रमेण श्रीमध्वसन्दर्शनादिना प्रसन्नैर्मनःप्रसादमाप्नुवद्भिः, अर्थान्तरे परमस्नेहतयोत्तमद्रवद्रव्यत्वेन क्रमप्रसन्नैः क्रमेण कार्श्यं त्यजद्भिः । 'आपः सांसिद्धिका द्रवा' इत्युक्तेरपामेव स्वाभाविक द्रवत्वं । लोहादीनां मूषाग्निसंयोगेन द्रवीभावादौपाधिकत्त्वं । तत्र परमस्नेहत्वं नाम स्वाभाविकद्रवत्वं विवक्षितं । स्वाभाविकद्रवस्यैव कदाचित्कलुषस्य ततः क्रमेण प्रसन्नत्वं निर्मलत्वं भवति । तस्मात्परमस्नेहतया क्रमप्रसन्नैर्वर्षासु कलुषैः क्रमेण शरत्काले प्राप्ते प्रसन्नैर्निर्मलैरित्यर्थः । सुजनैः सज्जनैर्मायिजुष्टान् मायिभिस्तस्करादिभिः सेवितानधमाद्रीन् क्षुद्रपर्वतानपहाय गोत्राणां पर्वतानां निम्नगा गोत्रनिम्नगास्तासां ओघास्तैरिव पर्वतोत्पन्ननदीसमूहैरिवेत्यर्थः । तरसा त्वरयाभिगम्यमानःसन् प्रयाणे यात्रायां सुरसिन्धोर्देवनद्या गङ्गायाः सन्ततं प्रवाह इवातिवेलमत्यन्तं विबभौ । शुशुभे । [अत्यन्तकुलकमेतत्] ॥ ४ ॥

**सुमनः फलशोभिनोऽत्र पुंसो नमयन् गोभिरनोकहानिवोच्चान् ।**
**अपि भङ्गमुपानयन्ननम्रान् दृढभावादपरानवार्यवीर्यः ॥ ५ ॥**

सुमन इति ॥ अयं परमानन्दसुतीर्थसूरिराजोऽत्रभुव्युच्चानुन्नमान् । मुक्तियोग्यानिति भावः । सुमनःफलशोभिनः सु शोभनं यन्मनस्तस्य फलानि फलभूतानि ज्ञानभक्तिवैराग्यादीनि तैः शोभिनः शोभमानान् । मनोनैर्मल्यजन्यत्वेन मनसः फलभूतैर्ज्ञानादिगुणैः शोभमानानित्यर्थः । पुंसः पुरुषान् सत्पुरुषानितियावत् ।

गोभिर्वचनैः, सुरसिन्धुप्रवाहो गोभिर्जलैः सुमनःफलशोभिनः सुमनांसिपुष्पाणि फलानि च तैः शोभिनः शोभमानानुच्चानुन्नताननोकहानिव वृक्षानिव नमयन्नात्मानि प्रवणीकुर्वन्सन् । 'अनोकह कुटः शालः पलाशी द्रुद्रुमागमाः' इत्यमरः । दृढस्य भाव दृढभावस्तस्माद्दृढत्वादित्यर्थः । कठिनमानसादितियावत् । अनम्रानविनीतान् । अपरान् पुंसोऽन्यान् पुरुषान् भङ्गमपि तिरस्कारमपि । प्रवाहमुखे तिर्यक् पतितान् दृढत्वाद-नम्रान् वृक्षान् सुरसिन्धुप्रवाहइवोपानयन् प्रापयन्सन् । 'शुष्ककाष्ठानि मूर्खाश्च भज्यन्ते न नमन्ति च' इतिहि भाषितं । अवार्यं दुर्वादिभिर्निवारयितुमशक्यं वीर्यं वादसामर्थ्यं यस्य स तथा सन् । नहि केनचिन्निवार्यते मध्वोऽखिलदुर्वादिनिराकरणसंरम्भ इत्यर्थः । (सुरसिन्धुप्रवाहसंरम्भप्रवाह इव) श्रीमध्व एतादृशःसन् प्रयाणे सुरसिन्धोः गङ्गायाः सन्ततप्रवाहइवातिवेलमत्यन्तं विबभौ । रेज इत्यन्वयः ॥ ५ ॥

**गमनोत्सवविस्मितैर्निषेव्यो विविधैर्जानपदैर्जनैरजस्रम् ।**
**परिसत्वरकीर्तिरार्तिमुक्त्यै पुरुषैर्दूरभुवश्च गम्यमानः ॥ ६ ॥**

**गमनेति** ॥ अयं परमानन्दसुतीर्थसूरिराजो गमनोत्सवो गमनमेवोत्सवो महत्त्वेन विस्मितास्तैर्विविधैर्जनपदेषु ग्रामेषु भवा जानपदास्तैर्जनैरजस्रं निषेव्यःसन् । गङ्गाप्रवाहश्च समुद्रंप्रति गमनोत्सवविस्मितैर्जानपदैर्जनैर्निषेव्यः । नानाविधजनसं-संवृतमेनं गमनसमये द्रष्टुं नानाजनपदाज्जना आगच्छन्तीत्यर्थः । परिसृत्वरा प्रसरिष्णुः कीर्तिर्यस्य स तथासन् गङ्गाप्रवाहोऽप्येतादृशः । आर्तिनिवृत्यै सांसारिक-दुःखनिवृत्यर्थं पुरुषैः दूराचसा भुवः प्रदेशश्च दूरभूस्तस्याः गम्यमानः प्राप्यमानःसन् । गङ्गौघोऽप्येतादृशः, प्रयाणे सुरसिन्धोः सन्ततप्रवाह इवातिवेलं विबभावित्यर्थः ॥

**अमरैरमरानुगैर्मुनीन्द्रैरपरेक्षाविषयैश्च सेव्यमानः ।**
**हरिपादसरोजसङ्गसागो भुवने पावनपावनो निकामम् ॥ ७ ॥**

**अमरैरिति** ॥ अयं परमानन्दसुतीर्थसूरिराजः । अपरेषां मनुष्यादीनामीक्षा चाक्षुषज्ञानं तस्या अविषया अगोचरास्तैरमरैर्देवैः, अमरानुगैर्देवभृत्यैर्गन्धर्वादिभिर्-र्मुनीन्द्रैश्च सेव्यमानःसन् । सुरसिन्धुप्रवाहोऽप्येवमेव निकाममत्यन्तं हरेः पादः स

एव सरोजं पद्मं तस्य सङ्गस्तेन सार उत्तमः । अतएव भुवने पावनात्पवित्रात् पावनः पावनपावनोऽत्यन्तं शुद्धःसन् । मार्गे तत्रतत्र गमनेऽपि हरिपादसन्ततस्मरणात् सदाप्यतिशुद्धःसन्नेवेत्यर्थः । एवमेव गङ्गाप्रवाहोऽपि । प्रयाणे सुरसिन्धोः सन्तत प्रवाह इवातिवेलं विबभावित्युत्तरश्लोकेनान्वयः ॥ ७ ॥

अयमप्रतिवारणः प्रयाणे परमानन्दसुतीर्थसूरिराजः ।
विबभावतिवेलमच्छरूपः सुरसिन्धोरिव सन्ततप्रवाहः ॥ ८ ॥

अयमिति ॥ अच्छं निर्दोषं रूपं यस्य स तथा । सुरसिन्धुप्रवाहोऽपि धवलस्वरूपः । न विद्यते प्रतिवारणं प्रतिद्वन्द्वो यस्य स तथा गमनेऽसदृश इत्यर्थः । सूरीणां विदुषां राजा सूरिराजः परमानन्दतीर्थएवोत्तमानन्दतीर्थ एव सूरिराजो ज्ञानिश्रेष्ठः । प्रयाणं गमनं तस्मिन् सुरसिन्धोः देवनद्या गङ्गायाः । 'देवो नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामि'त्यमरः । सन्ततः सार्वकालिकश्चासौ प्रवाहश्च सन्ततप्रवाहः स इव । अतिक्रान्ता वेला मर्यादा यथा भवति तथातिवेलमत्यन्तमित्यर्थः । विबभौ विरेजे ॥ ८ ॥

समयेन गतो महीयसाऽसौ विषयं स्तम्भपदोपसर्जनाख्यम् ।
मदनाधिपतेः सुधामधाम प्रविवेशाखिललोकवन्दनीयम् ॥ ९ ॥

समयेनेति ॥ असौ श्रीमध्वः महीयान् नभवतीत्यमहीयांस्तेनामहीयसा अल्पेनेत्यर्थः । समयेन कालेन स्तंभ इति पदं स्तंभपदं तदुपसर्जनमगुख्यं । उपपदमिति यावत् । यस्याः सा स्तंभपदोपसर्जना सैवाख्या नाम यस्य स स्तंभपदोपसर्जनाख्यस्तं विषयं जनपदं । 'कवेनाडि'त्यपभ्रष्टसंज्ञा । तथाच कवेनाडितिसंज्ञाया स्तम्भपदोपसर्जनत्वं सम्भवति । गतः प्राप्तःसन् सु शोभनं धाम तेजो यस्य तत्सुधाम, मदनाधिपतेः मदनेश्वरनाम्नोदेवस्य, अखिललोकाः समस्तजनास्तैर्वन्दनीयं नमस्कार्यं धाम आलयं प्रविवेश, मदनाधिपतिनाम्नो 'मधूरि'त्यपभ्रष्टसंज्ञा ॥ ९ ॥

क्षणदामिह तावदुषित्वासं विहिताह्निकयोग्ययोगमेनम् ।
गमनोद्यमलक्षणैर्विजानन् गमनायोद्यतमाशु शिष्यसङ्घः ॥ १० ॥

**क्षणदामिति** ॥ इह मदनाधिपतिधाम्नि क्षणदां रात्रिं तावदुषित्वा । अत्यन्त-संयोगे द्वितीया । अहर्मुखस्य प्रातःकालस्य योग्योऽहर्मुखयोग्यः सचासौ योगः कर्मचाहर्मुखयोग्ययोगः । विहितः कृतोहर्मुखयोग्ययोगो येन स तथोक्तम् । कृत प्रातःस्नानादिकर्माणमितियावत् । 'प्रत्यूषोऽहर्मुखं कल्यमि'त्यमरः । एनं श्रीमध्वं शिष्यसङ्घा गमनस्य प्रयाणस्योद्यमः प्रयत्नस्तस्य लक्षणानि चिह्नानि तैराशु गमनं प्रयाणं तस्मादुद्यतं सन्नद्धं व्यजानन् । ज्ञा अवबोधने लङ् ॥ १० ॥

पुरतो विसृताः समाधिशुद्ध्यै यतयस्तत्र पटीः कषायवेषाः ।
सहसोदहरन् स्वयोग्यमुद्रायुतदण्डादिकधारणोद्यमेन ॥ ११ ॥

**पुरत इति** ॥ यतयः श्रीमध्वशिष्यास्तत्र, अमरसदने समाधेर्भगवद्ध्यानस्य शुद्धिश्चित्तविक्षेपाभावलक्षणसौष्ठवं तस्यै पुरतोऽग्रतो विसृता विस्तृता यवनिकात्वेनकृतेति यावत् । कषायो वेषः स्वरूपं यासां ताः कषायवेषाः पटीः पटान् । स्वेषां परमहंसानां योग्याः स्वयोग्यास्तादृशा या मुद्राः मुरभिदरथादिमुद्राः ताभिर्युता युक्ता ये दण्डादिकाः दण्डपुस्तककमण्डल्वादयस्तेषां धारणं ग्रहणं तस्योद्यमः प्रयत्नस्तेन सह, सहसा झटिक् उदाहरन्नुद्धृतवन्तः ॥ ११ ॥

अवधार्य विशेषकारिशंखप्रकटाङ्कान् सुधिया गतार्द्रभावान् ।
लसिता तुलसीस्रगस्य कण्ठे हरिनिर्माल्यतयोचिता न्यधायि ॥ १२ ॥

**अवधार्येति** ॥ शोभना धीर्यस्य स सुधीस्तेन केनचिद्यतिना । अस्य श्रीमध्वस्य विशेषका वक्षोभुजादिगतास्तिलकास्तेच, अरिश्चक्रं सच शङ्खश्च तयोर्ये प्रकटाः स्पष्टा अङ्का लाञ्छनानि तान् । 'तिलकं तमालपत्रं चित्रकमुक्तं विशेषकः पुण्ड्रमि'ति हलः । गत आर्द्रभावो येषां ते तथा ताञ्छुष्कानितियावत् । अवधार्य ज्ञात्वा लसिता शोभना हरेर्निर्माल्यं हरिनिर्माल्यं तस्य भावस्तत्ता तया, उचिता धर्तुमुचिता तुलसीस्रक् तुलस्या माला अस्य श्रीमध्वस्य कण्ठे गले न्याधायि निहिता ॥ १२ ॥

यतयोगुरुचक्रिमूर्तिपूर्णं यतनिश्वाससरुचा विशोध्य पाणी ।
गुणकुण्डलमण्डितं विमानं गुणवद्धं कवचाहृतं बभार ॥ १३ ॥

यतधीरिति ॥ निश्वासश्च वचश्च निश्वासवचसी यते नियमिते निश्वासवचसी येन स तथोक्तो यतधीर्वशीकृतमना । यतिरित्यर्थः । पाणी हस्तौ विशोध्य प्रक्षाल्य चक्राण्यस्य सन्तीति चक्रिण्यन्ताश्चता मूर्तयश्चक्रिभूर्तयः, गुरूणां श्रीमध्वाचार्याणां चक्रिमूर्तयस्ताभिः पूर्णं । गुणेन तन्तुना कृते कुण्डले गुणकुण्डले ताभ्यां मण्डितमलंकृतं गुणबद्धं कवचावृतं कवचेनाच्छादनवस्त्रेणावृतमाच्छादितं विमानं देवपेटीं बभार ॥ १३ ॥

सकमण्डलुमण्डलावलम्बं स्वयमेवालघुपुस्तकादिभारम् ।
युवशिष्यगणो दधे नयज्ञान्न हि दाक्ष्यस्य समोऽपरो गुणोऽस्ति ॥१४॥

सकमण्डल्विति ॥ युवानश्च ते शिष्याश्च युवशिष्यास्तेषां गणः समूहः । कमण्डलूनां जलपात्राणां मण्डलं समूहस्तस्य अवलम्बोऽवलम्बनं तेन सहितः सकमण्डलुमण्डलावलम्बस्तं । अलघुर्गुरुर्यः पुस्तकादिभारः पुस्तकान्यादीनि येषां तानि तेषां भारस्तं स्वयमेवोद्धरणादावन्यापेक्षां विनैव, नयज्ञाभावो नयज्ञस्तस्मात् । नैकधेन्यादिवन्नसमासोऽयं । दधे । उवाह । तथाहि दक्षस्य समर्थस्य भावो दाक्ष्यं तस्य समोऽपरोऽन्यो गुणो नास्तिहि । दक्षत्वमेव सर्वगुणेषु प्रधानमिति भावः । हीति प्रसिद्धिं सूचयति । [अत्रार्थान्तरन्यासालङ्कारः] ॥ १४ ॥

अतिसम्भ्रमतः परिभ्रमन्तं भरदामानवलोकिनं चिराय ।
अनुयोगपरं मुहुः प्रमत्तं जहुसुर्नूतनशिष्यमत्र केचित् ॥ १५ ॥

अतीति ॥ अत्र, अस्मिन्काले केचित् शिष्याश्चिराय चिरकाले भरस्य स्वेनानेतव्यस्य पुस्तकादिभारस्य यद्दामबन्धनपाशस्तदनवलोकिनमपश्यन्तं । अतएवातिसम्भ्रमतः परिभ्रमन्तं ।गमनकालात्ययशङ्कयेति भावः । मुहुः पुनःपुनरनुयोगे 'केन दृष्टं किमि'ति पुनःपुनः प्रश्ने, परः परायणस्तं प्रमत्तं विस्मृतनिहितस्थलं नूतनशिष्यं जहसुः ॥

अथ तत्क्षणवादितोरुघण्टाघननादव्यपदेशतः परेण ।
अमितप्रमतिः प्रचोदितोऽसावित्ति निर्यत्सु निजेषु निर्जगाम ॥१६॥

**अथेति** ॥ अथासावमितप्रमतिः श्रीपूर्णप्रज्ञाचार्यः । निजेषु स्वशिष्येषु इति, एवं निर्यत्सु निर्गच्छत्सु । सचासौ क्षणश्च तत्क्षणस्तस्मिन्निर्गमनसमय इत्यर्थः । घट्टिना ताडिता या उरुघण्टा तस्या यो घननादः स एव व्यपदेशो व्याजस्तस्मादिति नरः । परेण मदनाभिपतिना देवेन प्रचोदितःसन्निर्जगाम । निर्गच्छतो घण्टानाद एव शोभनं निमित्तमभूदिति भावः ॥ १६ ॥

**धृतमातपवारणं वरेण्यं व्रतिराजं तमुपर्युपर्युदारम् ।**
**उदयन्मिहिरोपरिष्ठपूर्णद्विजराजश्रियमाययावभूताम् ॥ १७ ॥**

**धृतमिति** ॥ वरेण्यं श्रेष्ठं व्रतिनां यतीनां राजा व्रतिराजस्तं श्रीमध्वमुपर्युपरि, उपरिभागे समीपभाग इत्यर्थः । धृतमुदारमुत्तममातपवारणं श्वेतच्छत्रं । अभूतां कुत्राप्यजातां कुत्राप्यदृष्टामितियावत् । उदयन्नुद्यन्यो मिहिरः सूर्यस्तस्योपरिष्ठ उपरिवर्तमानो यः पूर्णद्विजराजः पूर्णचन्द्रस्तस्य श्रीः कान्तिस्तामाययौ प्राप । श्रीमध्वस्योद्यदादित्यवर्णत्वात्तदुपरि ध्रियमाणस्य छत्रस्य पूर्णचन्द्रवच्छ्वेतत्वादुद्यदादित्योपरिभागस्थ पूर्णचन्द्रशोभां लेभ इत्यभूतोपमेयं । व्रतिराजमित्यत्र 'उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु द्वितीये'त्यनेन द्वितीया ॥ १७ ॥

**भुवनत्रयभारिणं मुकुन्दं दधदन्तः स दधे गुरुः स्वयं च ।**
**अपि केनचिदित्यदो न चित्रं ननु स प्राणपतिर्बभार तं च ॥ १८ ॥**

**भुवनेति** ॥ भुवनत्रयं लोकत्रयं बिभर्ति, तच्छील इति भुवनत्रयभारी तं । 'भुवनत्रयधारिणमि'ति क्वचित्पाठः । मुकुन्दं अन्तः स्वहृदये दधत् स गुरुः श्रीमध्वः स्वयञ्च केनचित्केनापि पुरुषेण दध्रे अंसाभ्यां धृतः । इत्यत इत्येतच्चित्रमाश्चर्यं न भवति । कुत इत्यत आह–प्राणपतिरिति । स प्राणपतिर्मुख्यप्राणस्तञ्च वाहक पुरुषञ्च चशब्दादात्मानमपि स्वयमेवान्तर्यामी भूत्वा बभार ननु । अतो न चित्रमिति भावः ॥

**यतयो गृहिणोऽथ वर्णिमुख्याः अनिगारस्त्यक्तनिषिद्धकाम्यभावाः ।**
**इह मूर्तिधरा इव स्वधर्माः शतसंख्याः शतसंख्यमन्वगच्छन् ॥ १९ ॥**

**यतय इति ॥** श्रुतिं वेदं गच्छन्तीति श्रुतिगाः वेदगतत्वं नाम वेदपाठादिनिरतत्वं वेदोक्ताचारनिष्ठत्वञ्च । स्वधर्माश्च श्रुतिगा वेदसिद्धाः । काम्ये कर्मणि भावः । काम्यभावः काम्यकर्मविषयं मन इति यावत् । निषिद्धश्चासौ काम्यभावश्च, त्यक्तो निषिद्धकाम्यभावो यैस्तैः त्यक्तनिषिद्धकाम्यभावाः केवलनिवृत्तविषया इत्यर्थः । 'तस्मान्नेष्टियायजूकः स्या'दित्यादिना काम्यकर्मणो निषिद्धत्वात्, त्यक्तनिषिद्धकाम्यकर्माण इत्यर्थः । धर्माश्च तादृशाः । शतं सङ्ख्या येषां ते शतसङ्ख्या यतयः । शतसङ्ख्या गृहिणे गृहस्थाः, अथ वर्णिमुख्या ब्रह्मचारिषु श्रेष्ठाः । 'ब्रह्मचारी भवेद्वर्णी'ति हलः । मूर्तिं शरीरं धारयन्तीति मूर्तिधराः स्वधर्मा इव स्वस्ववर्णाश्रमधर्मा इव, इह गमनसमये शतं सङ्ख्या ज्ञानं यस्य स तथा तं श्रीपूर्णप्रज्ञाचार्यमन्वगच्छन् ॥

परिवारजना न मार्गदुःखं प्रययुः पूरुषरत्नमीक्षमाणाः ।
इति नाद्भुतमस्य हि प्रयान्ति स्मृतिमात्राद्भविनो भवापवर्गम् ॥ २० ॥

**परिवारेति ॥** पूरुषेषु रत्नं पूरुषरत्नं पुरुषश्रेष्ठमित्यर्थः । 'रत्नं स्वजातिश्रेष्ठेऽपी'त्यमरः । श्रीमध्वमीक्षमाणाःसन्तः परिवाराश्च ते जनाश्च परिवारजनाः शिष्यजना मार्गस्य दुःखं मार्गदुःखं । मार्गगमननिमित्तकश्रममित्यर्थः । न प्रययुः । इत्यद्भुतमाश्चर्यं न । कुत इत्यत आह--- भविन इति । भवः संसार एषामस्तीति भविनः संसारिणः । अस्य स्मृतिमात्रात् स्मरणमात्राद्भवात्संसारादपवर्गो मोक्षस्तं प्रयान्ति हि । एतादृश माहात्म्यवतः सङ्गेन श्रमेणाभजनानामित्येतन्नाद्भुतमिति भावः ॥ २० ॥

मदनेश्वरवल्लभप्रदेशे प्रभुमायान्तमथाभ्यपश्यत द्राक् ।
जयसिंह इमं नृसिंहवर्यः शुभधीः स्तम्भविशिष्टसिंहनामा ॥ २१ ॥

**मदनेति ॥** अथ शुभधीः शोभनचित्तः स्तम्भेन स्तम्भपदेन विशिष्टं सहितं स्तम्भविशिष्टं तादृशं सिंहनाम यस्य स तथोक्तः । स्तम्भसिंहनामवानित्यर्थः । तैलव भाषायां 'कंबसिंहनामे'त्यर्थः । 'कंब' इति तैलवभाषायां स्तम्भविशेष उच्यते । जयसिंहस्तन्नामकः, एवं नामद्वयविशिष्टो नृसिंहवर्यो नृसिंहेषु राजसु वर्यः श्रेष्ठः ।

मदनेश्वरवल्लभो मदनेश्वरप्रियो यः प्रदेशस्तस्मिन्, आयान्तं प्रभुमिमं श्रीमध्वं द्राक् अभ्यपद्यत ॥ २१ ॥

अवतीर्य पुरैव वाहनात्स्वादपि मार्गादपसार्य सैनिकान् सः ।
सह कैश्चन भूसुरैरवात्त्रिजगत्पूज्यपदान्तिके ननाम ॥ २२ ॥

अवतीर्येति ॥ पुरैव श्रीमध्वसमीपगमनात्पूर्वमेव स्वात् स्वकीयाद्वाहनाद्गजादेरवतीर्य सैनिकानपि सेनायां भवाञ्जनानपि मार्गादध्वनोऽपसार्य कैश्चन भूसुरैर्विप्रैः सह साकमवाप्तः स राजा त्रिजगत्पूज्यस्य श्रीमध्वस्य पदान्तिके पादसन्निधौ ननाम ॥

पृथिवीपतिनानुगम्यमानो विनयाद्भक्तिरसार्द्रमानसेन ।
अचिरेण स विष्णुमङ्गलस्य प्रययावायतनोत्तमस्य पार्श्वम् ॥ २३ ॥

पृथिवीति ॥ भक्तिरेव रसस्तेनार्द्रं क्लिन्नं पूर्णमितियावत् । तादृशं मानसं मनो यस्य स तथोक्तस्तेन पृथिवीपतिना जयसिंहेन विनयात् प्रश्रयादनुगम्यमानः स श्रीमध्वः । चिरं न भवतीत्यचिरेण शीघ्रेण विष्णुमङ्गलं तन्नामकं तस्य, आयतनोत्तमस्य देवालयश्रेष्ठस्य पार्श्वमन्तिकं प्रययौ प्राप ॥ २३ ॥

नरदेवदिदृक्षया समेता उभयग्रामजना जनाः परे च ।
उपयान्तमनन्तमानसं तं मुहुरैक्षन्त कुतूहलाब्धिमग्नाः ॥ २४ ॥

नरदेवेति ॥ नरदेवदिदृक्षया जयसिंहाख्यनृपतिदर्शनेच्छया समेता मिलिता उभयश्च तौ ग्रामौच तयोर्जनाः तौलवभाषया 'पाडिकुडे' इत्यपभ्रष्टसंज्ञकग्रामीणजना इत्यर्थः । ('वाटः समुदाय' नामक ग्रामद्वयमिति भावप्रकाशिकायां) उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचनान्तं रूपं । परेऽन्ये जनाश्चोपयान्तमुपगच्छन्तं । अनन्तं मानसं ज्ञानं यस्य स तथा तं श्रीपूर्णप्रज्ञं कुतूहलमेवाब्धिस्तस्मिन् मग्नाःसन्तः कुतूहलपूर्णाः सन्तो मुहुः पुनःपुनरैक्षन्त ॥ २४ ॥

पुरतो मधुरस्वरैर्वदद्भिः स्वकृताः कर्णसुखा मुकुन्दगाथाः ।
धृतपङ्कजबीजकण्ठिकैः कृतनृत्यैश्चतुरैर्निषेव्यमाणम् ॥ २५ ॥

पुनःपुनः कथं भूतमैक्षन्त इत्यपेक्षायामाह—

**पुरत इत्यादिना** ॥ आदिकुलकमेतत् । उभयग्रामजनाः परे जनाश्च पुरतोऽग्रतः स्वकृताः स्वेनरचिताः कर्णयोः सुधा याभ्यस्ताः कर्णसुधाः मुकुन्दस्य गाथाः । मुकुन्दविषयगाथा इत्यर्थः । वदद्भिर्मधुरो मनोहरः स्वनो ध्वनिर्येषां तैः, कृतं नृत्तं यैस्तैः, पङ्कजबीजानि, चक्रचिह्नानि च, धृतानि पङ्कजबीजचक्रचिह्नानि यैस्तैः बाह्वोश्चक्रचिह्नानि, कण्ठे कमलमणिमालाञ्च धृतवद्भिरित्यर्थः । चतुरैः सर्वकार्येषु विदग्धैः पुरुषैर्निषेव्यमाणं श्रीमध्वं मुहुरैक्षन्तेति पूर्वेणान्वयः ॥ २५ ॥

कलिताञ्जलिना स्फुटानुयातं जनसम्बाधसहेन भूमिभर्त्रा ।
करुणाविषयं चिकीर्षुणा स्वं व्रजता किङ्करतामकैतवेन ॥ २६ ॥

**कलितेति** ॥ पूर्वोक्तजनाः कलितो बद्धोऽञ्जलिरञ्जलिपुटं येन स तथोक्तस्तेन । जनसंबाधो जनसंमर्दस्तं सहत इति तथोक्तस्तेन, जनसंमर्दसहिष्णुनेत्यर्थः । स्वमात्मानं करुणाविषयं सेवया श्रीमध्वकृपाविषयं चिकीर्षुणा कैतवस्याभावोऽकैतवं तेन निर्व्याजेनेतियावत् । किङ्करतां श्रीमध्वसेवकतां व्रजता भूमिभर्त्रा राज्ञा जयसिंहेन स्फुटं स्पष्टं यथाभवतितथानुयातः स्फुटानुयातस्तं श्रीमध्वं मुहुरैक्षन्तेति पूर्वेणान्वयः ॥

इदमित्थमितीक्षणैर्नराणामपरिच्छेद्यमहिष्ठधामरूपम् ।
अधिकं धरणीमलञ्चिकीर्षुं स्फुटमुद्यन्तमिव द्युनाथमन्यम् ॥ २७ ॥

**इदमिति** ॥ पूर्वोक्तजना नराणामीक्षणानि नयनानि तैरिदं दृश्यमानं स्वरूपमित्थमेवंभूतमित्यपरिच्छेद्यमनिर्धार्यं महिष्ठधाम बहुलतेजो यस्य तदपरिच्छेद्यमहिष्ठधाम तादृशं रूपं यस्य स तथोक्तस्तं धरणीं भुवमधिकमलं चिकीर्षुमलङ्करणेच्छावन्तं । एवं भूतत्वात् स्फुटं सम्यगुद्यन्तमन्यं द्वितीयं द्युनाथमिव सूर्यमिव मुहुरैक्षन्तेत्यन्वयः ॥

अशनैः शनकैरिवाव्रजन्तं गुरुसिंहप्रवरप्रगल्भयानम् ।
अतिपाटलपादपल्लवाभ्यामवनीं पावनतामलं नयन्तम् ॥ २८ ॥

अशनैरिति ॥ पूर्वोक्तजना शनैर्नभवतीत्यशनैः शीघ्रमित्यर्थः । अतिजवमपि शनकैरात्रजन्तमिव, युवाचासौ सिंहप्रवरश्च युवसिंहप्रवरस्तद्वत्प्रगल्भं श्रेष्ठं यानं गमनं यस्य स तथा तं, अतिपाटलौ अतिरक्तौ यौ पादौ तावेव पल्लवौ किसलयौ ताभ्यामवनि भुवमलं सम्यक् पावनतां नयन्तं श्रीमन्तं मुहुरैक्षन्तेत्यन्वयः ॥ २८ ॥

नखनिर्जितपद्मरागरागं वरकूर्मप्रपदं निगूढगुल्फम् ।
सुरवर्यकराग्रसेव्यजङ्घं द्विरदोदारकरोपमोरुयुग्मम् ॥ २९ ॥

नखेति ॥ पूर्वोक्तजना नखनिर्जितः स्वपादनखैर्निर्जितः पद्मरागरागः पद्मरागमणीनां लौहित्यं येन स तथा तं, निगूढौ गुल्फौ पादग्रन्थी यस्य स तथा तं । 'पादाग्रं प्रपदं पादः पदंघ्रिश्चरणोऽस्त्रियाम् । तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । सुरवर्याणां देवश्रेष्ठानां कराग्राणि करतलानि तैः सेव्ये जङ्घे यस्य स तथा तं । वरश्चासौ कूर्मश्च वरकूर्म उत्तमकूर्मः तद्वत्प्रपदं पादाग्रं यस्य स तथा तं, द्वौ रदौ दन्तौ यस्य स द्विरदो गजस्तस्योदारकर उत्तमहस्तस्तस्योपमा ययोस्तौ, तादृशौ यावूरू तयोर्युग्मं युगलं यस्य स तथा तं मुहुरैक्षन्तेत्यन्वयः ॥ २९ ॥

शुभशुद्धनितम्बबिम्बराजन्नवकौशेयविशेषबाह्यवस्त्रम् ।
तनुकुक्षिगलालिकेषु रेखात्रितयेन प्रकटेन शोभमानम् ॥ ३० ॥

शुभेति ॥ पूर्वोक्तजनाः शुभः शोभनो यः शुद्धनितम्बो निर्मलनितम्बप्रदेशस्तस्य बिम्बं मण्डलं तस्मिन् राजमानः शोभमानो यो नवकौशेयविशेषः, नवं नूतनं यत् कौशेयं तस्य विशेषस्तद्रूपं बाह्यवस्त्रं बाह्यवासो यस्य स तथा तं, तनुश्चासौ कुक्षिश्च तनुकुक्षिस्तनूदरं स च गलः कण्ठः स चालिकं ललाटं तच्च तेषु प्रकटेन स्पष्टेन रेखा त्रितयेन रेखात्रयेण शोभमानं श्रीमन्तं मुहुरैक्षन्तेत्यन्वयः ॥ ३० ॥

मृदुसूक्ष्मघनारुणाविकारिप्रकटप्रावरणेन भासमानम् ।
अतिनूतनतिग्मभानुभासां निकरेणेव सुवर्णशैलमन्तम् ॥ ३१ ॥

मृद्विति ॥ पूर्वोक्तजना मृदुच तत् सूक्ष्मं लघुच घनं निविडं तच्चारुणं रक्तं तच्चाविकमूर्णात्मकं तच्चाच्छं निर्मलं प्रकटं शोभमानं यत्प्रावरणमाच्छादनवस्त्रं तेन । (प्रवर प्रावरणेनेति क्वचित्पाठः) अतिनूतनः मयूखोद्यन् यस्तिग्मभानुः सूर्यस्तस्य भासः किरणास्तासां निकरः समूहस्तेन भासमानं, सुवर्णमयानि च तानि सानूनि शृङ्गाणि च सुवर्णशृङ्गानि तान्यस्य सन्तीति तथोक्तमलमिव महामेरुपर्वतमिवेत्यर्थः । उद्यद्दिनकरस्यातिरोहितरश्मिनिकरेण भासमानं मेरुमिवेति भावः । भासमानं श्रीमध्वं मुहुरैक्षन्तेति पूर्वेणान्वयः ॥ ३१ ॥

पृथुवक्षसमुन्नतांसभित्ति गुरुवृत्तायतहृद्यबाहुदण्डम् ।
परमारुणपाणिपल्लवान्तः स्फुरितोर्ध्वध्वजलाञ्छनादिमन्तम् ॥ ३२ ॥

पृथ्विति ॥ पूर्वोक्तजना पृथु विशालं वक्षो यस्य तं, अंसाविव भित्ती अंसभित्ती । उन्नतेऽसभित्ती यस्य स तथा तं, गुरू स्थूलौ वृत्तायतहृद्यबाहुदण्डौ वर्तुलदीर्घमनोहर भुजदण्डौ यस्य स तथा तं, परमारुणपाणिपल्लवान्तः परमारुणावतिलोहितौ यौ पाणिपल्लवौ पाणी पल्लवाविव तयोरन्तरन्तर्भागे हस्ततलयोरितियावत् । अन्तरित्यव्ययं । स्फुरितानि विलसन्ति च तान्यूर्ध्वध्वजलाञ्छनादीनि च । ऊर्ध्वध्वजरेखारूपं लाञ्छनं, तदादि येषां चक्रादिचिह्नानां तान्यस्य सन्तीति स्फुरितोर्ध्वध्वजलाञ्छनादिमान् तं, श्रीमध्वमैक्षन्तेत्यन्वयः ॥ ३२ ॥

परिपूर्णशशाङ्कबिम्बशङ्काविषयं प्राक् सहसावलोकनेन ।
अकलङ्कतया परं विविक्तं वदनं बिभ्रतमच्छविभ्रमाढ्यम् ॥ ३३ ॥

परीति ॥ पूर्वोक्तजनाः प्राक् प्रथमं सहसावलोकनं दर्शनं तेन परिपूर्णं यच्छशाङ्क-बिम्बं चन्द्रमण्डलं तदीया या शङ्का तस्या विषयस्तं, परं पश्चाद्विविक्तं कलङ्को लाञ्छनं यस्य तत्तथा तस्य भावस्तत्ता तया विविक्तं चन्द्रमण्डलात्पृथक्कृतं, अच्छो निर्मलो यो विभ्रमः कान्तिस्तेनाढ्यरिवाढ्यम् । निर्मलकान्तिपरिपूर्णमित्यर्थः । वदनं बिभ्रतं । अयं भावः सहसा श्रीमध्वमुखं पश्यतां पुंसां कान्त्याधिक्योपलंभादिदं चन्द्रमण्डलमितिप्रतीतिर्जायते । पश्चाद्विवेकपूर्वकं दर्शनेऽपि तत्र कलङ्कमपश्यतां

तेषां नेदं चन्द्रमण्डलं सत्यपि कान्त्याधिक्ये कलङ्काभावात् । तस्मादकलङ्कमेतद्वदनं सकलङ्काच्चन्द्रमण्डलात्पृथगेवेति बुद्धिर्जायते । एवमविवेकदशायां चन्द्रमण्डलत्वशङ्काविषयं, विवेकदशायां चन्द्रमण्डलादन्यत्वबुद्धिविषयं वदनं बिभ्रतमिति । तं श्रीमध्वं मुहुरैक्षन्तेत्यन्वयः ॥ ३३ ॥

अतिसुन्दरमन्दहासराजन्नवकुन्दाभरदं शुभारुणोष्ठम् ।
कमलायतलोचनावलोकैरपि लोकान् सकलान् प्रहर्षयन्तम् ॥ ३४ ॥

अतीति ॥ पूर्वोक्तजना अतिसुन्दरो यो मन्दहासस्तेनराजन्तो नवकुन्दाभरदा नवानि नूतनानि यानि कुन्दानि कुन्दकुसुममुकुलानि तेषामामेवाभा कान्तिर्येषां ते तथा तादृशा ये रदा दन्तास्ते यस्य स तथोक्तस्तं, शुभावरुणोष्ठो यस्य स तथा तं, कमलवदायते विशाले लोचने ताभ्यामवलोका दर्शनानि तैः सकलान् लोकान् प्रहर्षयन्तं सन्तोषयन्तं श्रीमध्वं मुहुरैक्षन्तेत्यन्वयः ॥ ३४ ॥

अतिभासुरकर्णभासितश्रीतुलसीगुच्छमतुच्छकान्तिगण्डम् ।
भुवनत्रयभूत्यभूतिदाने चतुरभ्रूवरविभ्रमं सुमौलिम् ॥ ३५ ॥

अतिभासुरेति ॥ पूर्वोक्तजना अतिभासुरावतिसुन्दरौ यौ कर्णौ तयोर्भासितो विराजितः श्रीतुलसीगुच्छः श्रीतुलसीस्तबको यस्य स तथा तं । 'स्तबको गुच्छको गुच्छो गुलिच्छः परिकीर्तित' इति हलः । अनुच्छा पूर्णा कान्तिर्ययोस्तौ तथोक्तौ तादृशौ गण्डौ यस्य स तथा तं, भुवनत्रयं लोकत्रयं तस्य ये भूत्यभूती सृष्टिप्रलयौ तयोर्दानं प्रदानं तस्मिंश्चतुरः समर्थो भ्रूवरविभ्रमो भ्रुवोः श्रेष्ठविलासो यस्य स तथा तं । सु शोभनो मौलिर्मस्तकं यस्य स तथा तं श्रीमध्वं मुहुरैक्षन्तेत्यन्वयः ॥ ३५ ॥

सकलावयवान् स्फुटं मिमानाः प्रतिमालक्षणदर्शनाय लक्ष्यम् ।
चतुरा विदधुर्यदीयगात्रं स मुदैक्षमेत्यधुना निगद्यते नो ॥ ३६ ॥

सकलेति ॥ चतुराः पुरुषलक्षणविचारविदग्धाः पुरुषाः सकलावयवाञ्छ्रीमध्वस्य हस्तपादादिसर्वावयवान् स्फुटं सम्यक् मिमाना मानीकुर्वन्तःसन्तः । यस्य सम्बन्धि

यदीयं तच्च तद्गात्रञ्च यदीयगात्रम् । श्रीमध्वदेहं प्रतिमालक्षणानि शिलादिप्रतिमालक्षणानि तेषां लक्षणं ज्ञानं तस्मै लक्ष्यं निदर्शनं विदधुः । पुरुषलक्षणविचारविदग्धाः पुरुषा श्रीमध्वस्य सकलावयवान् मिमानाः सन्तस्तदवयवेषु लक्षणशास्त्रसंवादं दृष्ट्वा एतदङ्गोपाङ्गवदेव सर्वप्रतिमाङ्गोपाङ्गानि भवेयुरिति निश्चितवन्त इति भावः । स श्रीमध्वः सु शोभनं लक्ष्म लक्षणं यस्य स सुलक्ष्मा । शोभनलक्षणोपेत इत्यर्थः । इत्यधुना अद्य नो निगद्यते मया विशिष्य न वर्ण्यत इति कविवचनम् ॥ ३६ ॥

अतिलोलदृशां समीक्षितुं स्वं जनसम्बाधभयेन दूरभाजाम् ।
समदर्शयदूर्ध्वमोरसोऽसौ दययैवोरुजनौघमध्यगोऽपि ॥ ३७ ॥

अतीति ॥ असौ श्रीमध्वः । उरुजना बहुलजनास्तेषामोघः समूहस्तस्य यन्मध्यं तद्गच्छतीति तथोक्तस्तथापि स्वमात्मानं समीक्षितुं द्रष्टुमतिलोला अत्यन्तलोलुपा दृशो दृष्टयो येषां ते तथा तेषां । तथापि जनसम्बाधो जनसंमर्दस्तस्माद्भयेन दूरं दूरप्रदेशं भजन्तीति दूरभाजस्तेषां जनानां दययैव, आ उरसः उरस्थलमारभ्योर्ध्वमूर्ध्वभागं समदर्शयत् । स्वयमुरुजनौघमध्यगोऽपि पूर्वमानादुच्चोभूत्वात्मानमुरस्थलादारभ्योर्ध्वभागं तेभ्यो दर्शयमासेत्यर्थः ॥ ३७ ॥

सविकाशदृशां कृताञ्जलीनां जनतानां परमादरान्नतानां ।
वलयेन वृतः प्रियं मुरारेः प्रविवेशायतनं प्रवर्हबोधः ॥ ३८ ॥

सविकासेति ॥ विकासेन सहिताः सविकासास्तादृशा दृशो यासां तास्तथा तासां, स्वमुखारविन्ददर्शनेन सविकासनयनानामित्यर्थः । कृता अञ्जलयो हस्तमुकुलीभावा याभिस्तास्तथा तासां, परमादरः परमभक्तिस्तेनानता नम्रास्तासां जनतानां जनसमूहानां वलयं मण्डलं तेन वृतो युक्तः, प्रवर्हः श्रेष्ठः बोधो ज्ञानं यस्य स तथा श्रीमध्वो मुरारेः श्रीविष्णुमङ्गलाभिवासिनो हरेः प्रियमायतनं देवालयं श्रीविष्णुमङ्गलाख्यं देवगृहं प्रविवेश ॥ ३८ ॥

विविधप्रभुमध्यसन्निषण्णो नरदेवेन समं स गूढदेवः ।
त्रिभानुडुराडिवोडुमध्ये सह मद्यास्तवयेन पूर्णबिम्बः ॥ ३९ ॥

**विविधेति ॥** नरदेवेन जयसिंहभूपेन समं साकं विविधा ये प्रभवः खण्डाधिपतयस्तेषां मध्यं तस्मिन् सन्निषण्ण उपविष्टः स गूढः मानुषरूपेण गूढश्चासौ देवश्च गूढदेवः श्रीमुख्यवायुदेवः । पूर्णः बिम्बो मण्डलं यस्य स तथा, उडूनां नक्षत्राणां राट् राजोडुराट् चन्द्रः । 'नक्षत्रमृक्षं भं तारा तारकाप्युडवा स्त्रियामि'त्यमरः । मह्या भुवस्तनयेन पुत्रेणाङ्गारकेन सह । 'अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुत' इत्यमरः । उडुमध्यं नक्षत्रमध्यं तस्मिन्निव विबभौ विशेषेण शुशुभे । (यद्वा गूढदेवः मह्यास्तनयेन सह उडुमध्ये पूर्णबिम्ब उडुराडिव विबभाविति) [अत्रोपमालङ्कारः] ॥

**अवदत्स कथां रथाङ्गपाणेर्भगवान् भागवते भवापहन्त्रीम् ।**
**अनुरूपगुणस्वरादिभाजा निजशिष्यप्रवरेण वाच्यमाने ॥ ४० ॥**

**अवददिति ॥** भगोऽस्यास्तीति भगवान् षड्गुणैश्वर्यवान् स श्रीमध्वोऽनुकूलाः पुराणार्थवक्तृ श्रीमध्वाचार्यस्वरानुकूला गुणा गाम्भीर्यश्राव्यत्वादिगुणा येषां तेऽनुकूलगुणास्तादृशा ये स्वरादयः स्वराकृत्यादयस्तान् भजतीत्यनुकूलगुणस्वरादिभाक् तेन गाम्भीर्यश्राव्यत्वादिगुणस्वराकृत्यादिभाजेत्यर्थः । निजशिष्याः स्वकीयशिष्यास्तेषु प्रवरः श्रेष्ठस्तेन हृषीकेशतीर्थेन भागवतं भागवतपुराणं तस्मिन् वाच्यमानेसति । भवापहन्त्रीं संसारनाशिनीं रथाङ्गं चक्रं पाणौ यस्य स तथा तस्य श्रीकृष्णस्य कथामवदत् ॥

**कथनं तदुदारधैर्यसारं मधुरं पुष्कलभाववत्प्रसन्नम् ।**
**विदुषोऽविदुषोऽपि शृण्वतोऽलं व्यधितानन्दरसाम्बुधौ निमग्नान् ॥४१॥**

**कथनमिति ॥** उदारधैर्यमुत्तमधैर्यं तस्य सारं सारभूतं । उदारधैर्यस्य सारो यस्मिन् तदिति वा । मधुरं श्रोतृजनमनोहरं पुष्कलः सम्पूर्णो भावोऽभिप्रायः सोऽस्यास्तीति तथोक्तं प्रसन्नं शब्दतोऽर्थतश्चाकठोरं कथनं पुराणकथनं शृण्वतः श्रवणं कुर्वतो विदुषः पण्डितानविदुषोऽपण्डितानपि आनन्द एव रसो यस्मिन् स तथा सचासावम्बुधिश्च तस्मिन् निमग्नान् व्यधित । अकरोत् ॥ ४१ ॥

**गमनासनसङ्कथादिलीलाः स्मृतिमात्रेण भवापवर्गदात्रीः ।**
**कथमप्यमराः प्रपञ्चयेयुर्ननु मध्वस्य न माहृशोऽल्पबोधाः ॥ ४२ ॥**

**गमनेति** ॥ केवला स्मृतिः स्मृतिमात्रं तेन भवादपवर्गो मोक्षस्तस्य दाच्यम्नाः श्रीमन्नस्य गमनमागमनं तच्चासनमुपवेशनं सङ्कथा श्रीभागवतार्थसङ्कथनं साच गमनासनसंकथास्ता आदयो यासां तास्तादृशाश्च ता लीलाश्च ता अमराः कथमपि भारतीरुद्राद्यनुग्रहबलादेव प्रपञ्चेयुर्वर्णयेयुः । मादृशो मद्विधा अल्पबोधा अल्पज्ञानिनो न प्रपञ्चयेयुर्ननु । सामर्थ्याभावादिति भावः । पचि विस्तारवचने लिङ् ॥ ४२ ॥

सुतपः कवितादिसद्गुणानां लिकुचानां कुलजोऽङ्गिरोन्वयानाम् ।
अभवद्गुहनामको विपश्चित्कविवर्योऽखिलवादिवन्दनीयः ॥ ४३ ॥

**सुतप इति** ॥ सुतपश्च कविता गद्यपद्यात्मककविता आदिर्येषां ते कवितादयस्तेच सुतपःकवितादयः सद्गुणा ज्ञानभक्तिवैराग्यादिसद्धर्मा येषां ते तथा तेषां । अङ्गिरसोऽन्वयो गोत्रं येषां ते तथा तेषां लिकुचानां लिकुचसंज्ञककुलजन्मनां द्विजन्मनां कुलजः कविवर्यः कविश्रेष्ठोऽखिलवादिवन्दनीयोऽखिलवादिभिः स्तुत्यः, गुह इति सुब्रह्मण्य इति नाम यस्य स गुहनामको विपश्चित् पण्डितोऽभवत् ॥ ४३ ॥

दयितास्य सती गुणानुरूपा विधिवीर्येण मुहुर्मृतप्रजापि ।
अभजद्भुवनप्रभू हरीशौ सुतकामा वसुदेवसूनुभक्ता ॥ ४४ ॥

**दयितेति** ॥ सती पतिव्रता गुणानुरूपा पत्युर्गुणानुकूला वसुदेवसूनुभक्ता श्रीकृष्णभक्ता, अस्य सुब्रह्मण्यपण्डितस्य दयिता भार्या विधिवीर्यं दैवसामर्थ्यं तेन मुहुः पुनःपुनः मृतप्रजा मृताः प्रजा अपत्यानि यस्याः सा तथापि सुते काम इच्छा यस्याः सा तथासती भुवनप्रभू सर्वलोकेश्वरौ हरीशौ हरिहरावभजत् ॥ ४४ ॥

परमेश्वरयोः प्रसादयोगात्सुतरत्नं तदसूत सूरिपत्नी ।
परिषत्पदपत्तनेषु नार्घो विविदे यस्य समः परीक्षकाग्र्यैः ॥ ४५ ॥

**परमेति** ॥ सूरिपत्नी सुब्रह्मण्यपण्डितपत्नी, परमेश्वरयो हरिहरयोः प्रसादयोगात्सेवाजन्यानुग्रहसम्बन्धात्, यस्य सुतरत्नस्य परिषदां विदुषां पदानि स्थानानि सभास्तान्येव पत्तनानि तेषु परीक्षकाग्र्याः सुतरत्नपरीक्षकश्रेष्ठास्तैः समः उचितोऽर्घो

मूल्यं न विविदे न ज्ञातः । अनर्घत्वादनर्घमेतदित्येवोच्यते । तथा तत्तनय विद्वत्सभारूढस्य तस्य सर्वविद्यावैदग्ध्यादिगुणजातं पश्यद्भिर्विद्वज्जनैस्तस्य गुणानामियत्ता नावधारितेति भावः । तदेतादृशं सुतरत्नं सुताख्यं रत्नमसूत सुषुवे ॥४५॥

वदनेन्दुमवेक्ष्य नन्दनस्य स्वकुलोत्तारणदक्षलक्षणस्य ।
कृतकृत्यतया क्रियाः प्रकुर्वन् कविराख्यादुचितां त्रिविक्रमाख्याम् ॥४६॥

वदनेति ॥ स्वस्य सुब्रह्मण्यविपश्चितो यत्कुलं लिकुचसंज्ञकं कुलं तस्य यदुत्तारणं समस्तव्रजिनसमुद्रसन्तरणं तस्मिन् दक्षाणि चतुराणि लक्षणान्यङ्गसम्बन्धो यस्य स तथा तस्य । नन्दनस्य वदनेन्दुमवेक्ष्य, कृतं कृत्यं कार्यं येन स तथा, तस्य भावस्तत्ता तया क्रिया जातकर्मादिक्रियाः प्रकुर्वन् कविः सुब्रह्मण्यपण्डित उचितां त्रिविक्रम इत्याख्या त्रिविक्रमाख्या तामाख्यात् । अवदत् । ख्या प्रकथन इति धातुः । त्रिषु वेदे कवितायां वेदान्ते चेति त्रिषु विक्रमोऽवगतिरस्येति त्रिविक्रम इत्यन्वर्थत्वादुचितां त्रिविक्रसंज्ञां पिता चकारेति भावः ॥ ४६ ॥

कलभाषण एव सूरिपोतः कविरासीदनवद्यपद्यवादी ।
अवभाति ननु प्रभाप्रभावी भगवान् बालतरोऽपि तिग्मभानुः ॥४७॥

कलेति ॥ सूरिपोतः पण्डितशिशुः । कलमव्यक्तमधुरं भाषणं यस्य स तथा, बाल्येऽव्यक्तभाषादशापन्नएवेत्यर्थः । अनवद्यानि पद्यानि निर्दोषपद्यानि वक्तुं शीलमस्येत्यनवद्यपद्यवादी, तथासन् कविरासीत् । तथाहि तिग्मभानुरुष्णकिरणो भगवान् सूर्यः बालतरोऽपि प्रभाप्रभावः प्रभासामर्थ्यमस्यास्तीति तथोक्तःसन्नवभाति ननु । शोभते खलु ॥ ४७ ॥

सकलाङ्गयुतावभातशाखः समये प्राप्य उदारपक्षिसेव्यः ।
स ससर्ज सदध्वगोपकृत्यै लिकुचः काव्यफलं रसाभिरामम् ॥ ४८ ॥

सकलेति ॥ सकलाङ्गानि शिक्षाकल्पनिरुक्तादिसर्वाणि वेदाङ्गानि तैर्युताः सकलाङ्गयुताः सकलाङ्गयुतत्वयावभाता ज्ञाता सकलाङ्गयुतावभातास्तादृशाः शाखाः ऋगादि-

शाखा येन स तथोक्तः, समयः शास्त्रं तस्मिन् प्राप्ते ज्ञातेसति, उदाराः पूर्वापरविवेकादि गुणोदारा ये पक्षिणः नानाविधशास्त्रवन्तस्तैः सेव्यः । नानाविधशास्त्रसिद्धान्ताभिज्ञै-स्तत्तत्समयविशेषजिज्ञासया निषेव्य इत्यर्थः । लिकुचो लिकुचकुलजन्मा स त्रिविक्रमार्यः। सन्तएवाध्वगाः पान्थास्तेषामुपकृतिरुपकारस्तैस्सैरसाभिरामं शृङ्गारादिरसैरभिरामं काव्य-मेव फलं काव्यफलं तत् । उदाहरणाख्यकाव्यात्मकफलमित्यर्थः । ससर्ज उत्पादया-मास । श्लेषार्थेतु - सकलाङ्गयुताविभातशाखः पल्लवान्तरशाखादिसकलवृक्षाङ्गयुक्ततया विराजमान बृहच्छाखोपेतः । अतएवोदारपक्षिसेव्यः, एवं स्वस्वजातौ यथा योग्यतया प्रौढ नानाविहङ्गमसेव्यःसँल्लिकुचो लिकुचाख्य वृक्षविशेषः समये प्राप्तेसति फलनि-ष्पत्तिकाले प्राप्तेसति पान्थानामुपकाराय यथा फलति तद्वदित्यभिप्रायः ॥ ४८ ॥

**प्रतिभावितमात्मना यथार्थं पृथुमायासमयस्य दुर्घटत्वम् ।**
**स्वगुरौ परिहर्तुमक्षमेऽपि श्रुतवान्तत्स्ववयस्य बोधितोऽलम् ॥ ४९ ॥**

प्रतीति ॥ आत्मना स्वेन प्रतिभावितमुद्भावितं यथार्थं विचार्यमाणेसति परमार्थतो विद्यमानमेव, पृथुर्महान् मायासमयो मायावादशास्त्रं तस्य दुर्घटत्वं पूर्वापरविरुद्धत्वं-मानुपपन्नत्वं, स्वगुरौ परिहर्तुमक्षमेऽपि स त्रिविक्रमार्यस्तच्छास्त्रश्रवणेच्छारहितोऽप्यलं सम्यक् मवयस्यबोधितःसन् सखिबोधितःसंस्तं मायासमयं श्रुतवान् । शुश्रावेति भावः ॥ ४९ ॥

**भगवत्युदिते सर्गोविलासे वटुभावं त्यजति त्रिविक्रमार्ये ।**
**अपि भानुपुरस्सराः समस्ताः प्रययुः कीटमणिप्रभत्वमाशु ॥ ५० ॥**

भगवतीति ॥ गोविलासो वचनविलासस्तेनसहितः सगोविलासस्तस्मिन् त्रिविक्रमार्ये त्रिविक्रमनाम्निवटुभावं त्यजतिसति, भगवति हरावुदितेसति वेदशास्त्रपुरस्सरं प्रति-पादितेसति, भानुः पुरस्सरो येषां ते तथा समस्तवादिनः कीटमणिप्रभेव खद्योतप्रभेव प्रभा येषां ते कीटमणिप्रभास्तेषां भावस्तत्वमाशु प्रययुः । अतिप्रभाणामपि भानुपुरस्सराणां वैदुष्यं त्रिविक्रमार्यवैदुष्यापेक्षयात्यल्पमभूदिति भावः । यथादौ

वामनरूपे त्रिविक्रमाख्ये भगवति क्रमेणवटुभावं त्यक्त्वा व्यासरूपे भवतिसति तत्तेजसा प्रतिमुष्टतेजसः सूर्यादयः खद्योतसदृशा अभवंस्तद्वदिति श्लेषार्थः ॥५०॥

· अतिदक्षमतिं सपादलक्षे समये मायिजनस्य युक्तिशूरम् ।
महितं हि महीतले महिम्ना जनको नन्दनमब्रवीदुपांशु ॥ ५१ ॥

अतीति ॥ जनकः पितासुब्रह्मण्यपण्डितः पादेन सहितं सपादं लक्षं लक्षसङ्ख्या यस्य स सपादलक्षस्तस्मिन् सपादलक्षग्रन्थात्मक इत्यर्थः । मायिजनस्य समये शास्त्रे विषयेऽतिदक्षमतिमतिचतुरमतिं युक्तिशूरं स्वपक्षसाधने परपक्षदूषणेच युक्तिभिर्विदग्धं । अतएव महिम्ना सामर्थ्येन महीतले तस्मिन् महितं पूजितं नन्दनं त्रिविक्रमाचार्यमुपांशु रहस्यब्रवीत ॥ ५१ ॥

शृणुवाचमिमां विचारितार्थां न कलौ निर्गुणभावना सुखाय ।
इति गौणविमुक्तये गुणाढ्यं स्मर देवं वसुदेवसूनुमेव ॥ ५२ ॥

शृण्विति ॥ विचारितो विचार्यनिर्धारितोऽर्थो यस्याः सा तथा तामिमां वक्ष्यमाणां वाचं शृणु । कलौ कलियुगे निर्गुण इति भावना निर्गुणभावना परब्रह्मणो निर्गुणत्वध्यानमित्यर्थः । सुखाय मोक्षसुखाय न भवति । इति, अस्माद्धेतोर्गुणैर्मुक्ता गौणी साच सा मुक्तिश्च तस्यै ज्ञानानन्दादिगुणयुक्तमोक्षार्थमित्यर्थः । देवमेव क्रीडादि गुणविशिष्टमेव वसुदेवसूनुं वासुदेवं गुणाढ्यमेव भज । यदि ज्ञानानन्दादिगुणरहितं परंब्रह्मोपास्येत तर्हि तत्फलं मोक्षोऽपि ज्ञानाद्यभावः सुखाय नभवति । मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेदिति मोक्षधर्मवचनात् । तस्मान्निर्गुणोपासनं न सुखाय । यदि ज्ञानानन्दादिगुणं तद्ब्रह्मोपासितं स्यात्तदुपासनफलं मोक्षोऽपि ज्ञानानन्दादिगुणविशिष्टएवस्यात् । एवं विधश्च मोक्षः पुरुषार्थो भवति । निर्दोषज्ञानानन्दाद्यात्मकत्वात् । तस्मादेवंविधगौणमोक्षाय भगवन्तं वासुदेवं निर्दोषज्ञानानन्दाद्यनन्तगुणविशिष्टमेव भजेत्यर्थः ॥ ५२ ॥

इति तातवचो निशम्य किञ्चित्तरलात्मापि विचार्य शास्त्रसारम् ।
परमेव स पारमारुरुक्षुर्विगुणोपास्तिमुपाशृणोत्परेभ्यः ॥ ५३ ॥

**इतीति** ॥ इत्येवमुक्तं तातवचः पितृवचो निशम्यापि किञ्चिच्चलश्चञ्चल आत्मा मनो यस्य स तथा निर्गुणोपासनं मोक्षसाधनं, उत सगुणोपासनमिति चञ्चलमानस इत्यर्थः । स त्रिविक्रमार्यः शास्त्रसारं विचार्य परमन्यत् पारं तीरं । संसारसागरस्य पारमित्यर्थः । आरुरुक्षुर्मुमुक्षुरित्यर्थः । परेभ्यः पितुरन्येभ्यो मायिभ्यो विगता गुणा यस्मात्तद्विगुणं तस्योपास्तिमुपासनं । निर्गुणोपासनप्रकारमित्यर्थः । उपाशृणोत् । निर्गुणोपासनं मोक्षसाधनं नभवति सगुणोपासनमेव मोक्षसाधनमिति तातवचो निशम्यापि किञ्चिच्चञ्चलमानसःसन् येनकेनापिप्रकारेण मुमुक्षोस्तु निर्गुणोपासनं वेदादिप्रमाणसंमतं, अथ सगुणोपासनं वेति सयुक्तिकं सर्वशास्त्राभिप्रायं सम्यग्विचार्य शास्त्रे यदुपासनं वेदादिप्रमाणसम्मतं पुरुषार्थसाधनञ्च तदेवोपासनं करिष्याम इति निश्चित्यादौ तत्प्रकारजिज्ञासया परेभ्यो निर्गुणोपास्तिं शुश्रावेति भावः ॥ ५३ ॥

निजधर्मरतो गृहिप्रवर्हः कलिकालाकुलितान्तरोऽपि हन्त ।
नितरां निशितात्मना निसर्गात्स्फुटमालोचयदित्यमी कदाचित् ॥ ५४ ॥

**निजेति** ॥ निजः स्ववर्णाश्रमोचितो यो धर्मस्तस्मिन् रतो निष्ठो गृहिप्रवर्हो गृहस्थश्रेष्ठोऽसौ त्रिविक्रमार्यः । कलेर्यः कालस्तेनाकुलितं विलोडितमन्तरं मानसं यस्य स तथापि निसर्गः स्वभावस्तस्मान्नितरामत्यन्तं निशितात्मना युक्तायुक्तविचारचतुरेण मनसा स्फुटं सम्यक्, इति वक्ष्यमाणप्रकारेणालोचयत् । विचारयामास । लोचृ दर्शने । परेभ्यो विगुणोपास्तिं श्रुत्वापि तत्रापरितुष्टमनाःसन् स्वयमेवेत्थं विचारयामासेति भावः ॥ ५४ ॥

रचितं ननु सूत्रमत्र मानं विदुषा सत्यवतीसुतेन साक्षात् ।
अपरस्परसङ्गतानि भाष्याण्यपि सर्वाणि न मानतां व्रजेयुः ॥ ५५ ॥

**रचितमिति** ॥ अत्र तत्त्वनिर्णयविषये विदुषा सर्वज्ञेन सत्यवतीसुतेन रचितं निर्मितं सूत्रं ब्रह्मसूत्रं साक्षान्मुख्यतः मानं प्रमाणं ननु । अपरस्परसङ्गतानि परस्परसम्बन्धरहितानि परस्परविरुद्धानीतियावत् । सर्वाणि भाष्याणि, भारतीविजय सच्चिदानन्दब्रह्मघोषादिभीरचितान्येकविंशतिसङ्ख्याकानि सर्वाण्यपि ब्रह्मसूत्रभाष्याणि मानतां

प्रमाणतां न व्रजेयुः । अयमत्राभिप्रायः । ब्रह्मस्वरूपनिर्णये तावत् ब्रह्मसूत्रमेव मुख्यं प्रमाणं । सर्वश्रुत्यादिविरोधपरिहारमुखेन सर्वज्ञेन भगवता रचितत्वात् । एवञ्चाति प्रमाणतमब्रह्मसूत्रस्य तन्मूलभाष्याणां परस्परविरोधेसति सूत्रविरुद्धभाष्याणामेवाप्रामाण्यं न्याय्यं । भाष्येषु सर्वेष्वपि विचार्यमाणेषु सत्सु तानि सूत्रविरुद्धानि न पुरुषार्थसाधनानीति । अथवा अपरस्परसङ्गतानि परस्परं समस्तभाष्यान्तरविरुद्धानीति नैकमपि भाष्यं प्रमाणं । आप्ततमप्रणीतं सूत्रमेव प्रमाणमितियावत् । (अपरस्परसङ्गतानि, एकैकशः पूर्वापरविरुद्धानीति वा) ॥ ५५ ॥

**यदि तेषु निराग्रहान्तराः स्मः सुघटं नोपलभामहे हि किञ्चित् ।**
**न तथापि परम्परोपयातं न पठामः प्रणयेन साङ्करीयम् ॥ ५६ ॥**

तर्हि सर्वाण्यपि भाष्याणि सूत्रविरुद्धानीति कृत्वा न तेष्वादरोऽपि कर्तुं शक्यत इत्याह—

**यदीत्यादिना** ॥ यदि तेषु भाष्येषु निराग्रहं आग्रहरहितमान्तरं मनो येषां ते निराग्रहान्तराः स्मो भवामः । तर्हि सु शोभना घटा घटना यस्य तत्सुघटं सूत्रार्थविरुद्धमित्यर्थः । किञ्चित् सूत्रार्थविवरणरूपं किमपि निबन्धनं नोपलभामहे हि न पश्यामो हि । तर्हि का चिकीर्षितेत्यत आह— नेत्यादि । तथापि सूत्रविरुद्धतया प्रतीयमानत्वेऽपि परम्परोपयातं परम्पराप्राप्तं सङ्करेण प्रणीतं साङ्करीयं भाष्यं प्रणयेनादरेण न पठाम इति न । किन्तु पठाम एव । सर्वेषां भाष्याणां सूत्रविरुद्धत्वसाम्येऽपि किमिति साङ्करीये पक्षपात इत्याशङ्कायामुक्तं– 'परम्परोपयातमि'ति । अस्मत्पूर्वैरादृतत्ववैशेष्यादिति भावः ॥ ५६ ॥

**घटनोपनिपत्सु नाल्पबुद्धेः सुघटेत्यभ्युपगम्य चिन्तयामः ।**
**न विमुक्तिमुपैति कोऽपि मुक्त्वा समयांस्कामिह यामिमामुपास्महे ॥५७॥**

**घटनेति** ॥ अल्पाचसा बुद्धिश्च तस्या उपनिपत्सु घटना सम्बन्धः । तद्विचारसामर्थ्यमितियावत् । सुघटा न किन्तु दुर्घटेत्यर्थः । अल्पबुद्धिरुपनिपद्विचारे न प्रसरतीति भावः । अल्पा बुद्धिर्यस्येति बहुव्रीहिर्वा । तथात्वे अल्पबुद्धेः पुरुषस्य

उपनिषद्विचारो दुर्घट इत्यर्थः । इत्यभ्युपगम्य ज्ञात्वा इहोपनिषत्सु यामुपास्तिं मुक्त्वा विना कोऽपि कश्चिदपि विमुक्तिं नोपैति, समयोक्तां सकलसच्छास्त्रोक्तां तामिमामुपास्तिं चिन्तयामो विचारयामः । अयमत्राभिप्रायः । अल्पबुद्धेरुपनिषद्विचारो दुर्घट इत्यभ्युपेत्य वयमल्पबुद्धयःसन्तः साक्षादुपनिषद्विचारं परित्यज्य भारतपञ्चरात्रब्रह्मसूत्रादिसकलसच्छास्त्रेषु या भगवदुपासना मोक्षसाधनत्वेनोच्यते ययाच विना न मोक्षस्तामुपास्तिमेव सम्यग्विचारयाम इति ॥ ५७ ॥

> विततः सुखसच्चिदद्वयात्मा समुपास्यो विहितो हि तत्वविद्भिः ।
> स च नावयवी निरूप्यते चेद्द्युतिमात्रं च नहीत्यदो रहस्यम् ॥ ५८ ॥

विचारप्रकार एव श्लोकत्रयेणोच्यते—

**वितत इत्यादिना** ॥ तत्वं विदन्तीति तत्वविदस्तैर्भगवत्तत्वनिर्णयविद्भिरित्यर्थः । भगवान् विततो व्याप्तः । सुखसचित्, सतीचसा चिच्च सचित् सुखञ्च सच्चिच्च सुखसचित् सुखरूपो निर्दोषज्ञानरूपश्चेत्यर्थः । न विद्यते द्वयं समानं अधिकं वा वस्तु यस्य सोऽद्वयस्तादृश आत्मा स्वरूपं यस्य स तथोक्तः । एवंभूतःसमुपास्य उपासनार्हो विहितोहि श्रुत्यादिष्वभिहितोहि । सएवमुपास्यत्वेनाभिहितोऽप्यवयवा अस्य सन्तीत्यवयवी ज्ञानानन्दाद्यात्मककरचरणादिसुन्दरसकलावयवविशिष्टो न निरूप्यते चेत् । रूप रूपक्रियायां लट् । सर्वात्मना सर्वावयवविशिष्टश्च ननिरूप्यते चेदिति योज्यम् । एवं तर्हि केवला द्युतिः द्युतिमात्रं तेजोमात्रञ्च नहि सम्भवतिहि । इत्यदः इत्येतत्प्रमेयं रहस्यं साङ्करशास्त्रस्य फलितार्थ इत्यर्थः । तत्वविद्भिर्व्याप्तत्वेन निर्दोषज्ञानानन्दाद्यात्मकत्वेनचोपास्यत्वेन विहितो भगवानवयवी न निरूप्यते चेत् स शाङ्करीयशास्त्रोक्तप्रकारेण निरवयवो निर्गुणो निर्विशेषश्चेति निरूप्यतेचेत्तर्हि निरवयवत्वादेव ब्रह्मतेजोरूपमित्येतदपि नस्यादिति सङ्करभाष्यफलितार्थः स्यादिति भावः ॥

> यदि नेदृगुपास्यतेऽस्य रूपं तिमिरत्वेन विभाति पारिशेष्यात् ।
> फलमप्यथ मुक्तिरीदृशी स्यादिति नो नैव भिनोप्युपास्तिरेषा ॥ ५९ ॥

अस्तु तर्ह्येवं भूतमुपास्यं परंब्रह्म का बाधा इत्यत आह—

**यदीति** ॥ अस्य परब्रह्मणो रूपं यदीदृक् द्युतिमात्रविशिष्टं नभवतीत्युपास्यते ध्यायते । तर्हि परिशेषस्य भावः पारिशेष्यं तस्मात् तिमिरत्वेनान्धकारत्वेन विभाति। तद्विरुद्धज्ञानाद्यात्मकत्वं न प्रसज्यतेति भावः । तथात्वेन ब्रह्मोपासने को दोष इत्यत आह– **फलमित्यादि** । अथैवमुपासनानन्तरमुपासकस्य तत्साध्यफलं फलभूतामुक्तिरपीदृशी केवल तिमिराद्यात्मिकास्यात् । नचोपासकस्यैवं भावः पुरुषार्थ इत्यभिप्रायः । इति तस्माद्धेतोरेषोपास्तिर्हि नोऽस्मानैव धिनोति न पुष्णाति । धिन् पुष्टाविति धातुः । एवं विधोपसनं नास्माकं मनःप्रसादमासादयतीति भावः ॥ ५९ ॥

**अथ वेदपुराणभारतानि स्वयमालोच्य यथावबोधमत्र ।**
**गुणवन्तमुपास्महे मुकुन्दं स्मृतिधर्मान् भृशमाचरन्त एव ॥ ६० ॥**

एवं तर्हि सङ्करभाष्योक्तमुपासनं नधिनोति चेत् कथं भगवदुपासनं क्रियत इत्यत आह—

**अथेति** ॥ स्वयं वयं स्वयमेव स्मृत्युक्ता धर्मा स्मृतिधर्मास्तान् मन्वादिस्मृत्युक्तवर्णाश्रमोचितधर्मानित्यर्थः । स्फुटं सम्यगाचरन्तः कुर्वन्त एव सन्तः भृशमिति क्वचित्पाठः । वेदाश्च पुराणानि च भारतञ्च वेदपुराणभारतानि तान्यालोच्य विचार्यात्र वेदादौ, अवबोधमनतिक्रम्य यथावबोधं । अस्मदवबोधानुसारेणेत्यर्थः । मुकुन्दं श्रीहरिं गुणवन्तमुपास्महे चिन्तयामः । तद्दर्शनपक्षपातं विहाय स्वयमेव वेदपुराणादिकं विचार्य तत्र वेदादौ यथा मुकुन्दस्वरूपं प्रतिपाद्यते । प्रतिपादितञ्च तत्स्वरूपमस्माकं यथा ज्ञातुं शक्यते तथा ज्ञानानन्दादिगुणविशिष्टमेव मुकुन्दमुपास्महे, स्वविहितधर्मानुष्ठानस्य चित्तशुद्धिद्वारा भगवदुपासनाङ्गत्वात्तदाचरणपुरस्सरमिति भावः ॥

**अवधार्य यदेति कार्यमार्यः स विवेकादुपचक्रमे विधातुम् ।**
**परिपूर्णमतेर्जगत्सु कीर्ति परिपूर्णामभृणोत्तदा विशुद्धाम् ॥ ६१ ॥**

**अवधार्येति** ॥ स आर्यस्त्रिविक्रमपण्डिताचार्यः कार्यं स्वकर्तव्यं विवेकः पूर्वोत्तरपरामर्शस्तस्मादित्येवमवधार्य निश्चित्य विधातुं वेदादिविचारं कर्तुं यदोपचक्रमे प्रारभत

तदा जगत्सु परिपूर्णा व्याप्तां विशुद्धां निर्दोषां परिपूर्णमतेः श्रीपूर्णप्रज्ञाचार्यस्य कीर्तिं अशृणोत् ॥ ६१ ॥

विहिनस्ति हि नो जनोऽतिवाग्मी समयं कोऽपि परम्परोपयातम् ।
क्षिप तं त्वमुदारयुक्तिशूरो न परे तत्र समर्थतां व्रजेयुः ॥ ६२ ॥

**विहिनस्तीति** ॥ अन्त्यकुलकमेतत् । मायी चासौ जनश्च मायिजनस्तेन मायिमना श्रितजनेनेत्यर्थः । तत्रतत्र दृष्टस्थले स्वश्चासौ जनश्च स्वजनस्तस्य भावस्तत्त्वं तेन स्वयूथ्यजनत्वेन हेतुनेत्यर्थः । इति 'क्षिप तं त्वमुदारयुक्तिशूर' इत्यादिना प्रकारेण श्रीमध्वं क्षेप्तुं निराकर्तुमर्थ्यमानोऽनुकूलं वचो वाक्यं यस्य सोऽनुकूलवचा अर्थयतो मायिजनस्यानुकूलवचन इत्यर्थः । मायिनां परितोषायाहमेकेनैवोत्तरेण श्रीमध्वाचार्यं निराकरिष्यामीति वदन्निति भावः । महिम्नेतिमहान्मानो यस्य स तथोक्तः । बहुप्रमाणोपेत इत्यर्थः । संशयं छिनत्तीति संशयछित् स्वयं सर्वेषां संशयस्य छेत्तेत्यर्थः । एवं भूतोऽपि मनसा संशयमाप श्रीमध्वं क्षेप्तुं शक्नोमि नवेति संशयापन्नोऽभूदित्यर्थः । इति कुलकान्त्यश्लोकेन सम्बन्धः, कथमर्थयमान इत्यत आह— विहिनस्तीति । अत्यन्तं वाग्म्यतिवाग्मी कोऽपिजनः कश्चिज्जनः श्रीमध्वतदन्तेवास्यादिजन इत्यर्थः । परम्परोपयातः परम्पराप्राप्तस्तं पुरातनमितियावत् । नोऽस्माकं समयं शास्त्रं हि यस्माद्विहिनस्ति निराकरोति । हिंसु हिंसायां लट् । तस्मादुदारयुक्तिशूर उत्तमयुक्तिभिः शूरस्त्वं नमस्मत्समयं निराकुर्वन्तं जनं क्षिप निराकुरु परेऽन्ये तत्र निराकरणे समर्थतां शक्ततां न व्रजेयुः ॥ ६२ ॥

तव वेदनदीर्विगाह्य भूयः समयाम्भोधिषु कुर्वतो विहारम् ।
नवकाव्यरसप्रियस्य वादिद्विरदेन्द्रप्रतिवारणो न जज्ञे ॥ ६३ ॥

**तवेति** ॥ वादिद्विरदेन्द्र! सर्ववादिगजराज! वेदा एव नद्यस्ताः विगाह्य प्रविश्य भूयः समया एव शास्त्राण्येवाम्भोदयः समुद्रास्तेषु विहारं क्रीडां कुर्वतः, नवकाव्यानि नूतनकाव्यानि तेषां ये रसाः शृङ्गारादयस्तेषु प्रियस्य । येषु शास्त्रेषु शृङ्गारादि रसोपेतकाव्येषु कृतपरिश्रमस्येत्यर्थः । तव प्रतिवारणः प्रतिवादिगजो न जज्ञे । नव

प्रतिवादी कोऽपि नास्ति, यथा मत्तगजेन्द्रस्य जेता कश्चिदपि गजो न भवति तद्वदिति भावः ॥ ६३ ॥

> उपयाहि यशः शशाङ्कगौरं निजयूथस्य भयं निराकुरु त्वम् ।
> अधुना विधिनोपपादितं त्वं प्रतिवादिप्रतिवारणं निवार्य ॥ ६४ ॥

उपेति ॥ अधुना विधिना दैवेनोपपादितं निष्पादितं तं प्रतिवाद्येव प्रतिवारणः प्रतिगजस्तं निवार्य निराकृत्य शशाङ्कगौरं चन्द्रवद्धवलं यश उपयाहि प्राप्नुहि निजानां स्वकीयानां यूथस्य समूहस्य भयं निराकुर्वित्यर्थ्यमान इत्युत्तरश्लोकेन सम्बन्धः ॥

> इति मायिजनेन तत्र तत्र स्वजनत्वेन स तावदर्थ्यमानः ।
> अनुकूलवचा मदिष्ठमानो मनसा संशयमाप संशयच्छित् ॥ ६५ ॥

पूर्वमेव व्याख्यातोऽयं श्लोकः ॥ ६५ ॥

> शितमध्ववचःसृणिप्रयोक्तॄन् पुरुषानेष विषादयन् कवीभः ।
> विविधोत्तरधूलिपातनेन प्रतिघेनाधिकमन्धयाञ्चकार ॥ ६६ ॥

शितास्तीक्ष्णा मध्ववचांस्येव सृणयोऽङ्कुशास्तासां प्रयोक्तारस्तान् । 'अंकुशोऽस्त्री सृणिः स्त्रियामि'त्यमरः । श्रीमध्वाचार्योक्तयुक्त्यात्मकवचनानि प्रयुञ्जानानित्यर्थः । पुरुषान् श्रीमध्वशिष्यान् विषादयन् भीषयन्नेष कवीभः त्रिविक्रमपण्डिताख्यगजो विविधानि यान्युत्तराणि तान्येवधूलयस्तासां पातनेन प्रक्षेपणेन विविधोत्तरात्मकधूलि-प्रक्षेपात्मकेनेत्यर्थः । प्रतिघेन प्रतिबन्ध्या प्रतिघोनाम प्रतिघातः निवारणमितियावत् । 'प्रतिघः प्रतिघातेऽस्त्र' इत्यमरः । प्रतिघेन कोपेनेति वा । प्रत्युत्तराप्रतिपत्तौ सत्यां कोपाद्यादशताद्दशनानाविधोत्तरात्मकधूलिप्रक्षेपेणेत्यर्थः । 'प्रतिघौ रुट् प्रतीघातौ'विति अधिकं यथा भवति तथा अन्धयाञ्चकार निरुत्तरांश्चकार ॥ ६६ ॥

> क्षणदासु विचक्षणः स वीक्ष्य प्रचुरप्रज्ञमनोज्ञशास्त्रसारम् ।
> अपरार्थविदितः प्रसादगर्भं विदधे विस्मयमान्तरं महान्तम् ॥ ६७ ॥

क्षणदास्विति ॥ विचक्षणो विवेकी स त्रिविक्रमपण्डितः क्षणदासु निशास्वपराविदितोऽन्यैरविज्ञातःसन् प्रसादः प्रसन्नः गर्भोऽभिप्रायो यस्य स तथा तं । यद्वा प्रसादः प्रसन्नता गर्भेऽन्तर्भागेऽभिप्राये यस्य स तथा तं प्रचुरप्राज्ञस्य श्रीपूर्णप्रज्ञस्य मनोज्ञशास्त्रस्य मनोहरशास्त्रस्य सारः फलितार्थस्तं वीक्ष्यान्तरं मानसं महान्तं विस्मयमाश्चर्यं चक्रे विदधे । श्रीमध्वाचार्यशिष्येण त्रिविक्रमार्यसहजेन सङ्करार्येण स्वमन्दिरे निहितं श्रीमध्वाचार्यशास्त्रपुस्तकजातं क्षणदास्वन्यैरविदितो वाचयन् मनोहरं तच्छास्त्राभिप्रायं ज्ञात्वा मनसा महान्तं विस्मयमापेत्यर्थः ॥ ६७ ॥

विदितवान् व्यवहृत्य सुदर्शनं बहुलबोधमवेक्ष्य स निश्चयात् ।
अपि न तस्य मतं सहसाददे ननु विमृश्य कृती कुरुतेऽखिलम् ॥ ६८ ॥

विदितवानिति ॥ स त्रिविक्रमार्यो बहुलबोधं श्रीपूर्णप्रज्ञमवेक्ष्य, व्यवहृत्य विप्रतिपन्न नानाविधप्रमेयविषयव्यवहारं कृत्वा सुदर्शनं प्रबलयुक्त्याऽऽगमादिप्रमाणयुक्तत्वेनैतच्छास्त्रमेव निश्चयान्निर्दुष्टशास्त्रमिति विदितवानपि ज्ञातवानपि तस्य श्रीमध्वस्य मतं सहसा झटिति नाददे नाङ्गीचकार । तथाहि । कृतीनिपुणः पुरुषोऽखिलं कार्यं विमृश्यालोच्य कुरुते ननु । अतो विमृश्यकारित्वादयं सहसा नाङ्गीचकारेति भावः। [अत्रार्थान्तरन्यासालङ्कारः, द्रुतविलम्बितवृत्तं । 'द्रुतविलम्बितमाह नभौभराविरयुक्तेः] ॥ ६८ ॥

तं विष्णुमङ्गलगतं बहुलप्रबोधं प्राप्याभ्यवन्दत तदायुगविक्रमार्यः ।
आनन्ददं स चतुराननहासलक्ष्म्या तत्त्वं प्रवेत्तुममरेन्द्र इवाब्जयोनिम् ॥ ६९ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के त्रयोदशः सर्गः ॥

तमिति ॥ युगं युगलं नभवतीत्ययुगाः । अयुगा विक्रमा यस्य सोऽयुगविक्रम-स्त्रिविक्रमः सचासावार्यश्च । तदा विष्णुमङ्गलं विष्णुमङ्गलाख्य देवालयं गतं प्राप्तं, चतुर भद्रं यदाननं तस्य यो हासस्तस्य लक्ष्मीः श्रीः तया सतामानन्ददं तं बहुलप्रबोधं प्राप्य, अमरेन्द्रा देवेन्द्रास्तत्वं श्रीहरिस्वरूपं प्रवेत्तुं सम्यग् ज्ञातुं चतुराननहासलक्ष्म्या चतुर्णामाननानां हास श्रिया सतामानन्ददमब्जयोनिमिव चतुर्मुखमिवाभ्यवन्दत । त्रिविक्रमार्योऽपि तत्वविविदिषया प्राप्याभ्यवन्दतेत्यभिप्रायः ॥ ६९ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां त्रयोदशः सर्गः ॥



परिवृढघनसङ्घे राजसिंहोर्जशक्त्या त्यजति मलिनभावं नीरसत्वान्निकामम् ।
स्फुटमुदयति तेजस्व्युज्ज्वले मध्वभानौ सुजनजलजकान्त्यै विश्वमासीन्मनोज्ञम् ॥

**परिवृढेति** ॥ परिवृढाः स्तम्भविपर्येद्धवा ग्रामण्यस्त एव घनास्तेषां सङ्घः समूहस्तस्मिन्, राजसिंहो राजश्रेष्ठो जयसिंहाख्यः सएवोर्जो वृश्चिकमासस्तस्य शक्तिः सामर्थ्यं तया निर्गतो रसो बलं यस्मात्स नीरसस्तस्य भावस्तत्वं तस्माद्दुर्बलत्वादित्यर्थः । मलिनभावं मलिनत्वं, पद्मादिषु पक्षपातं श्रीमध्वद्वेषञ्चेत्यर्थः । निकामं नितरां त्यजतिसति, तेजस्वीचासावुज्वलश्च तेजस्व्युज्वलस्तस्मिन् । तेजस्विनां मध्य उज्वलो अधिकं शोभमान इति वा । मध्व एव भानुः सूर्यस्तस्मिन् सुजना एव जलजानि पद्मानि तेषां कान्तिस्तस्यै स्फुटं सम्यगुदयतिसति नृपादिमर्त्यजनपूज्यत्वादिसम्पदं गच्छतिसतीत्यर्थः । विश्वं सकलं कार्यजातं मनोज्ञं मनोहरमासीत् । राजानं श्रीमध्ववशवर्तिनं दृष्ट्वा तद्भयेन ग्रामीणजने श्रीमध्वप्रातिकूल्यं परित्यज्यानुकूल्यं भजतिसति, प्राक् शङ्करार्यकरात् पद्मतीर्थकृतपुस्तकापहारस्य शङ्करार्यसमाननात्मकप्रतिक्रियापूर्वकं राज्ञि श्रीमध्वक्षमापनोन्मुखेसति सर्वं कार्यं मनोहरमासीदित्यभिप्रायः । श्लेषार्थेतु–घनसङ्घे ऊर्जशक्त्या शरत्कालोत्तरस्य वृश्चिकमासस्य सामर्थ्येन निर्जलत्वान्मालिन्यं त्यजतिसति शुभ्रत्वञ्च भजतिसति सूर्येच शरदि मेघावरणरहितत्वेन स्फुटमुदयतिसति विश्वं जगत् सर्वतोदिशं यथा मनोहरं भवेत्तद्वदिति भावः । (अत्र श्लेषरूपकयोः सङ्करः) [सर्गेऽस्मिन् प्रायो मालिनीवृत्तं । 'ननमयययुतेऽयं मालिनीभोगिलोकैरि'ति] ॥

कृतमपकृतमार्यैः क्षम्यतां क्षान्तिभूपैरिति मृदु वदतां सम्प्रार्थनाभिः प्रभूणाम् ।
अपहृतमपरेषां मन्त्रतो ग्रन्थजातं दशहृदयनियोगादर्पयच्छङ्करार्यः ॥ २ ॥

**कृतमिति** ॥ शङ्करार्यः पूर्वं चोलजेन यस्य करात्पुस्तकमपहृतं स इत्यर्थः । अपरेषां मायिनां मन्त्रतः कुमन्त्रादपहृतं ग्रन्थजातं क्षान्तिः क्षमा सैव भूषणं येषां तैरार्यैः पूज्यैर्भवद्भिः, कृतमविवेकिभिर्बालिशैः कृतं, अपकृतं ग्रन्थापहाराख्यापराधः । अत्र

भावे क्तः । क्षम्यतामिति, एवं मृदुसामपूर्वकं यथा भवति तथा वदतां प्रभूणामुभयग्रामस्वामिनां स्तम्भविषयाधीशस्य जयसिंहस्य च सम्प्रार्थनादिभिः, अपिच दशह्रदयनियोगाच्छ्रीपूर्णप्रज्ञाचार्याज्ञात अग्रहीत् । अयमभिप्रायः । चोलजं पद्मतीर्थे पौर्णमास्यामुत्थाय निशिथएव विद्रुतमेव श्रुत्वा तद्ग्रामजनैस्तेनापहृतं ग्रन्थजातं श्रीमध्वाय समर्पितं । सतु तन्मध्यस्थकरे स्थापयित्वा निजशिष्यमुदे सह्यगिरिमगमत् । तच्छ्रुत्वा राजमुखेन प्रार्थिते तस्मिन् श्रीमध्वे विष्णुमङ्गलं गतेसति तत्सन्निधौ राज्ञोभयग्रामपरिवृढजनैश्च क्षमापितः शङ्करार्यः क्षितिपतिना तत्रानाययितं ग्रन्थजातं श्रीमध्वाज्ञया ग्रहीदिति ॥ २ ॥

**परिवृतमवनभ्रैर्ग्रामणीग्राम्यपूर्वैरवनतमुरुचेतःपादपार्श्वे नृसिंहम् ।**
**सहजविजयतोऽयुग्विक्रमार्यः प्रसन्नः कविकुलतिलकोऽसावाशिषाऽतोषयत्तम्॥**

परीति ॥ कवीनां कुलं समूहस्तस्य तिलकभूतः कविकुलतिलकः, सहजः सोदरः शङ्करार्यस्तस्य विजयस्तस्मादिति ततः । सन्मानपूर्वकमपहृतपुस्तकलाभरूपविजयलाभादित्यर्थः । प्रसन्नः सन्तुष्टोऽसावयुग्विक्रमार्यस्त्रिविक्रमपण्डितोऽवनभ्रैर्विनतैर्ग्रामण्यो ग्रामाधिपतयस्तेच ग्राम्या ग्रामोद्भवा विप्रास्तेच, ते पूर्वे येषां ते तथा तैर्नानाजनैः परिवृतं उरुचेतसः श्रीपूर्णप्रज्ञस्य पादपार्श्वे पादसन्निधाववनतं नम्रं नृसिंहं जयसिंहराजमाशिषा पद्यरूपेण वाक्येन । 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोरि'ति वैजयन्ती । अतोषयत् । तच्च पद्यमिदं 'स्वः सुन्दरीभुजलतापरिरंभणी घूः पौरन्दरी भवति त्वं भजतां भुजिष्या । आनन्दतीर्थभगवत्पदपद्मरेणुः स्वानन्ददो भवतु ते जयसिंहभूप' एतदर्थानुवादरूप 'उपचरति नितान्तमि'त्युपरितनश्लोकः ॥ ३ ॥

**उपचरति नितान्तं हन्त पौरन्दरी भूर्भुसदसि भजतो यं दुर्लभा दभ्रभाग्यैः ।**
**दिशतु स परमाप्यानन्दतीर्थाङ्घ्रिरेणुर्धरणिधर सुखं ते सन्ततं स्वान्तरेति ॥**

उपचरतीति ॥ शोभनमान्तरं मनो यस्य स स्वान्तरस्तत्सम्बुद्धिः । धरणीधरः राजन् यमंघ्रिरेणुं भजतः सेवमानान् सत्पुरुषान्, दभ्रमल्पं भाग्यं येषां ते तथा तैर्दुर्लभा, पुरन्दरपदप्राप्तियोग्यत्वलक्षणभाग्यरहितैर्दुर्लभेत्यर्थः । नहि पुरन्दरत्वप्राप्ति-

योग्यमत्सरहितैः पुरन्दरव्यापारो लभ्यः । तस्मादभाग्यैर्दुर्लभाहि । पुरन्दरस्य सम्बन्धिनी पौरन्दरी धूर्व्यापारो द्युसदसि स्वर्गसभायां नितान्तं अत्यन्तं उपचरति सम्भावयति । श्रीमध्वचरणरजः सेवकसम्भावनारूपं व्यापारमिन्द्रः स्वसदसि दर्शयतीत्यर्थः । स तथाविधः परमानन्दतीर्थाख्यांघ्रिरेणुः परमो य आनन्दतीर्थस्तस्य यावङ्घ्री तयो रेणू रजः ते तव सन्ततं सुखं सौख्यं दिशतु ददात्वित्यन्तोपयदिति सम्बन्धः ॥ ४ ॥

अनतिपरिचितस्याप्यस्य सोऽयं कवीन्द्रो गुणरसमतिगूढं ज्ञातवानित्यचित्रम् ।
मधु मधुकरराजो निष्पतन् पौष्पमाप्तुं ननु परिचयहीनः काननेऽपि प्रभुः स्यात्॥

अनतीति ॥ सोयं कवीन्द्रस्त्रिविक्रमार्यः । अत्यन्तं परिचितो नभवतीत्यनतिपरिचितस्तस्यापि श्रीमध्वस्यातिगूढमतिगूहितं पामरैरज्ञेयमित्यर्थः । गुणरसं गुणसारं ज्ञातवानित्येतदचित्रं आश्चर्यं नभवति । तथाहि— कानने वने निष्पतन् सञ्चरन् मधुकुर्वन्तीति मधुकरास्तेषां राजा श्रेष्ठो मधुकरराजः परिचयहीनोऽपि पुष्पस्य सम्बन्धि पौष्पं मधुपुष्परसमप्तुं प्राप्तुं प्रभुः शक्तः स्यान्नु । यथा पुष्परसमन्विष्यन् भ्रमरः काननेऽपि निष्पतन् प्रागदृष्टस्यापि पुष्पस्य मधु प्राप्नोत्येव । पुष्पसन्दर्शनमात्रेण तन्मधुवैलोप्यं ज्ञात्वा स्वीकरोति तद्वदयमपीति भावः । [अत्रार्थान्तरन्यासालङ्कारः] ॥

अखिलखलकुलानां वर्धयन्द्वेषदोषं विदधदपि नराणां कौतुकं मध्यमानाम् ।
स्वगतिसमुचितानां भूतिदायी शुभानां बहुलहृदिह निन्ये शर्वरीः काश्चिदेवम्॥

अखिलेति ॥ बहुलहृत् श्रीपूर्णप्रज्ञार्यः । अखिलाः सर्वे ये खला दुर्जनास्तमोयोग्या इत्यर्थः । तेषां कुलानि समूहास्तेषां द्वेष एव दोषस्तं, आत्मविषयकद्वेषाख्यदोषमित्यर्थः । वर्धयन्सन्, मध्यमानां मध्यमाधिकारिणां नराणां कौतुकमाश्चर्यं विदधत् कुर्वन्सन्, अमानुषैः स्वचरित्रैरिति भावः । स्वस्य स्वतन्त्रस्य श्रीहरेर्गतिः स्वगतिस्तस्याः समुचितानां योग्यानां मुक्तियोग्यानामित्यर्थः । शुभानां सज्जनानां भूतिं ज्ञानभक्त्यादिसम्पद दातुं शीलमस्येति भूतिदायी सन्निह विष्णुमङ्गल एवं वक्ष्यमाणप्रकारेण काश्चित् शर्वरीः रात्रीर्निन्ये गमयामास ॥ ६ ॥

उदयति विनताया नन्दने श्लाघ्यकाले स कृतसकलकृत्यः कृत्यवेदिप्रवेकः ।
अरुणयवनिकान्तर्ब्रह्मनारायणाख्यं गुरुगुणमभिदध्यौ योग्ययोगासनस्थः ॥

उदयतीति ॥ कृत्यं कर्तव्यं विदन्ति तच्छीला इति कृत्यवेदिनस्तेषु प्रवेक उत्तमः । 'अग्र्यं प्राग्रहणं प्रवेकमपरं वर्यं वरेण्यं वरमि'ति हलः । स श्रीमध्वः विनताया विनतादेव्या नन्दने पुत्रेऽरुण उदयतिसति, श्लाघ्यः प्रातःसन्ध्याकर्मणः प्रशस्तो यः कालस्तस्मिन् कृतं सकलकृत्यं कृत्स्नस्नानादिव्यापारो येन स तथोक्तःसन्, अरुणा रक्तावसा यवनिकाच तस्या अन्तर्भागे योग्यं यद्योगासनं तस्मिन्स्तिष्ठतीति तथोक्तः । 'नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरमि'त्युक्तलक्षणवत्तया ध्यानयोग्यासन उपविष्टःसन्नित्यर्थः । गुरवो बहवो गुणा यस्य स तथा तं नारायणाख्यं ब्रह्माभिदध्यौ ध्यायति स्म ॥ ७ ॥

अतिधवलितदन्ता दन्तकाष्ठैः प्रशस्तैरपि युगपदनेके सस्नुरत्र व्रतीन्द्राः ।
गुरुभिरभिहितेष्वाचारभेदेषु निष्ठां स्फुटमवगमयन्तः सौष्ठवात्कर्मणां च ॥ ८ ॥

अतीति ॥ प्रशस्तैः 'कनिष्ठिकासमं स्थौल्ये द्वादशांगुलमायतं । सत्वचं दन्तकाष्ठं स्यात्तस्याग्रेणतु धावयेदि'त्युक्तलक्षणवत्तया प्रशस्तैर्दन्तानां शोधकानि काष्ठानि दन्तकाष्ठानि तैरतिधवलिता दन्ता यैस्ते तथोक्ताः । कर्मणां स्वविहितप्राणायामादि कर्मणां सौष्ठवं सुष्ठुत्वं तस्मात्, नकेवलंयथा कथञ्चिदाचरणमात्रात् किन्तु न्यूनाधिक्य-राहित्यलक्षणसौष्ठवाच्च गुरुभिरभिहितेष्वाचारभेदा आचारविशेषास्तेषु निष्ठामास्थां स्फुटं सम्यगवगमयन्तो ज्ञापयन्तोऽनेके बहवो व्रतीन्द्रा यतिश्रेष्ठा अत्र तटाके युगपत् सस्नुः । ष्णा शौचे लिट् ॥ ८ ॥

चरमसमयसुप्ताः पूर्वमुत्थाय शिष्या गुरुजनपरिचर्यां चक्रिरे दुष्करां च ।
सबहुमति तदाद्यप्यार्धरात्रात्प्रसक्ताः सुगतिरपरथैषां स्यात्कथङ्कारमिष्टा ॥९॥

चरमेति ॥ चरमो गुरुजनसुप्त्यनन्तरं यः समयः कालस्तस्मिन् सुप्ता निद्रिता शिष्याः पूर्वं गुरुजनोत्थानात्पूर्वमुत्थाय । तदादि तदुत्थानमादिर्यथाभवतितथाऽऽर्ध-

रात्रान्निशीथादपि, एष्यदर्धरात्रपर्यन्तमपीत्यर्थः । 'अर्धरात्र निशीथौ द्वावि'त्यमरः । प्रसन्ना अरतिविरहिताःसन्तो दुष्करामल्पभाग्यैः कर्तुमशक्यां गुरुजनपरिचर्यां बहुमत्या बहुमानेनसहितं यथा भवति तथा सबहुमति सादरमित्यर्थः । चक्रिरे । अपरथैवं गुरुजनपरिचर्याकरण एषां शिष्याणामिष्टा अभीष्टा सुगतिः सद्गतिः कथङ्कारं केन प्रकारेण स्याद्भवेत् ? ॥ ९ ॥

**श्रवणमननहेतोः प्राक् चिरायास्तनिद्रः सपदि विवशयन्त्या निद्रया ग्रस्तचेताः।**
**स्वयमपि नयति द्रागङ्गवस्त्रादि पूज्ये झटिति विगतनिद्रः कोऽपि शिष्योऽन्वशेत॥**

**श्रवणेति** ॥ श्रवणस्य श्रुतग्रन्थस्य मननहेतुर्मनननिमित्तं तस्मात्, श्रवणं भागवतादिश्रवणं तच्च मननं श्रुतग्रन्थविमर्शनं तच्च तद्धेतोरिति वा । प्राक् पूर्वरात्रे चिराय बहुकालमस्ता निरस्ता निद्रा येन स तथोक्तः । अतएव सपदि तदानीमरुणोदयकाल इत्यर्थः । विवशयन्त्या परवशयन्त्या निद्रया ग्रस्तमावृतं चेतो बुद्धिर्यस्य स तथासन्, झटिति सहसा विगता निद्रा यस्य स तथा कोऽपि कश्चनशिष्यः पूज्ये स्वगुरावङ्गवस्त्रमादिर्यस्य तदङ्गवस्त्रादि, गुरोः पूर्वमुत्थायात्मना नेतव्यं स्वगुरुस्नानाङ्गमङ्गसंमार्जनवस्त्रपेट्यादिकं । गुरौ स्वयमपि स्वयमेव द्राक् शीघ्रं नयतिसत्यन्वशेत पश्चाच्छतोऽभूत् । शीङ् स्वप्ने लङ् ॥ १० ॥

**विहितमविहितं प्रागेव कस्माद्विनिद्रैरिति गुरुपरिवादाशङ्कया नम्रगात्राः ।**
**चिरमनवतरन्तः श्रावका मुक्तमार्गा गुरुषु जलमकाशस्तेषु तूष्णीमतिष्ठन् ॥**

**विहितमिति** ॥ शृण्वन्तीति श्रावकाः श्रवणकर्तारः शिष्याः प्रागेवास्मत्प्रबोधात्पूर्वमेव विनिद्रैः प्रबुद्धैर्भवद्भिर्विहितमस्माभिर्नियुक्तं श्रुतिस्मृतिविहितं वा कर्म कस्मादविहितं नकृतमिति गुरूणां गुरुजनानां परिवादो भर्त्सनं तस्याशङ्का तया गुरवो भर्त्सयन्तीति शङ्कयेत्यर्थः । नम्राणि गात्राणि येषां ते तथासन्तः गुरुषु जलसकाशस्थेषु सत्सु चिरमनवतरन्तःसन्तः, मुक्तो मार्गो यैस्ते तथासन्तः, स्नानानन्तरं गुरूणामागमनमार्गं मुक्त्वा स्थिताःसन्त इत्यर्थः । तूष्णीं निर्वचनमतिष्ठन् ॥ ११ ॥

विपुलहृदयपार्श्वे दीपदीप्तिप्रदीप्ते दरवरपरिपूर्णैर्वारिभिरर्घ्यादि दत्वा ।
यतिरतियतने शश्वक्रिणोऽर्चानिकायात् कुसुमसमितिमग्र्यामादरादुज्जहार ॥१२॥

विपुलेति ॥ अत्यन्तं यतं नियतमतियतं तादृशं चेतश्चित्तं यस्य स तथा यतिः कश्चिद्यतिः दीपस्य दीप्तिः प्रकाशस्तेन प्रदीप्तः प्रकाशनशीलः तस्मिन् विपुलहृदयस्य श्रीपूर्णप्रज्ञस्य पार्श्वे सन्निधौ दरवरः शङ्खश्रेष्ठस्तस्मिन् परिपूर्णानि तैर्वारिभिरुदकैरर्घ्यमादिर्यस्य तदर्घ्यादि, अर्घ्यपाद्यादिकमित्यर्थः । दत्वा चक्रमस्यास्तीति चक्री श्रीकृष्णस्तस्यार्चानां सालग्रामप्रतिमादीनां निकायः समूहस्तस्मात् । 'अर्चा पूजाप्रतिमयोरि'ति यादवः । अग्र्यां कुसुमसमितिं पुष्पसमूहमादरो भक्तिस्तस्मादुज्जहारोद्धृतवान् । निर्माल्यपुष्पविसर्जनमकरोदित्यर्थः ॥ १२ ॥

अमृतमपिनिरीक्ष्यास्त्राविनिर्माल्यसूने घृतमिदमिति सद्यो भ्रान्तिमन्तोऽपि शिष्याः
श्रदधुरधिकवाक्यैर्विभ्रमास्तच्च पश्चादनुदिनममृताश्नैस्तस्य सेव्यस्य शक्त्या ॥

अमृतमिति ॥ दिने दिनेऽनुदिनं नित्यश इत्यर्थः । अमृतमेवान्नं येषां ते तथा तैर्देवैः सेव्यस्य तस्य श्रीमध्वाचार्यस्य शक्त्या निर्माल्यसूने निर्माल्यपुष्पे स्राविस्रुतममृतं निरीक्ष्यापि सद्यस्तदानीमिदं घृतमिति भ्रान्तिमन्तोऽपि शिष्याः पश्चादुत्तरकालेऽधिकानामुत्तमानां वाक्यानि तैः श्रीमध्वमाहात्म्यविदां नेदमाज्यं किन्त्वमृतमित्यादिवाक्यैरित्यर्थः । विगतो भ्रमो येभ्यस्ते विभ्रमाः सन्तस्तच्चामृतमेवेति च श्रदधुर्विश्वासमगच्छन् । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्ये'त्युक्तेः । श्रत्पूर्वाद्धाञ् धातोर्लुङ् । नैव घृतं किन्त्वमृतमेवेत्युत्तमानां वाक्यैर्विभ्रमाःसन्तो निर्माल्यपुष्पे घृतवत्स्निग्धतया अस्माभिर्दृष्टममृतमेवेति श्रदधुरिति भावः ॥ १३ ॥

अगमदुचितमन्त्रैरत्युदयानां त्रयाणां कृतिभिरनुमतात्मा तत्र पञ्चाङ्गविद्भिः ।
उदयमहिमरोचिश्चक्रवर्ती त्रिशक्तिर्दधदतिबृहदन्तः षड्गुणं स्वात्मतेजः ॥१४॥

अगमदिति ॥ उचितो मन्त्रो येषां ते तथा तैः पुरुषार्थहेतुतया जपोचितगायत्र्यादि मन्त्रयुक्तैरित्यर्थः । पञ्च तान्यङ्गानि च पञ्चाङ्गानि तानि विदन्तीति पञ्चाङ्गविदस्तैः ।

हृदयशिरः शिखाकवचास्त्राख्यपञ्चाङ्गाभिज्ञैरित्यर्थः । त्रयाणामुदयानां, अरुणोदयोषोदय सूर्योदय इति प्रसिद्धानां त्रयाणामुदयानामित्यर्थः । अनुमत आत्मा स्वरूपं यस्य स तथोक्तः । उदयत्रयस्य सूर्यसञ्चारकालावधिनियतत्वादुदयस्य त्रयस्य सूर्योनुमतात्मेत्यर्थः । चक्रवर्तिपक्षेतु—उचितमन्त्रैः मित्राद्युदयोचितगोप्यव्यवहारयुक्तैः, पञ्चाङ्गविद्भिः 'कर्मारम्भोचितोपायः पुरुषद्रव्यसम्पदः । विनिपात प्रतीकारो देशकालावलोकनं । कार्यसिद्धिरि'ति प्रोक्तानामङ्गानां पञ्चकैरित्युक्त पञ्चांगविद्भिरित्यर्थः । मन्त्रिभिस्त्रयाणामुदयानां मित्रोदय, भूम्युदय, कोशोदयाख्यानामुदयानामनुमतात्मा संमतात्मेत्यर्थः । तिस्रः शक्तयो यस्य स तथोक्तः, प्रकाशनतापनाह्लादनाख्यशक्तित्रयोपेत इत्यर्थः । सूर्यस्याह्लादनं नाम वर्षणं 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मृतिसिद्धञ्चैतत् । अर्थान्तरेतु— त्रिशक्तिरुत्साहशक्तिः प्रभुशक्तिर्मन्त्रशक्तिरितिशक्तित्रययुक्त इत्यर्थः । अन्तः स्वमण्डलान्तरत्यन्तं बृहत् पूर्णमतिबृहत् षड्गुणा यस्य तत् षड्गुणं । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे'ति प्रसिद्धैश्वर्यादिषड्गुणयुतमित्यर्थः । स्वात्मा स्वामी श्रीविष्णुस्तस्य तेजः स्वात्मतेजो दधानः । अर्थान्तरे— सन्धिविग्रहयानासनद्वैधीभावसंश्रयलक्षणषड्गुणयुतं, स्वात्मतेजः स्वरूपसामर्थ्यं दधान इत्यर्थः । हिमानि शीतानि नभवन्तीत्यहिमान्युष्णानि नाहशानि रोचींषि दीप्तयो यस्य सोऽहिमरोचिः सूर्यः स एव चक्रवर्ती महानृपः, तत्र तस्मिन्काल उदयमगमत् । महाराजो यथोदयं सम्पदं गच्छेत्तथा सूर्योऽप्युदयमगमदित्यर्थः ॥ १४ ॥

**तिमिरनिकरकुम्भिव्रातमत्यन्ततीव्रं स्थिरतरमखिलानां प्राणिनां रुद्धमार्गम् ।**
**भुवनभवनपूर्णं भानुमानञ्जनाभं हरिरिवनखरैः प्राग्र्यरश्मिजालैर्निरास ॥ १५ ॥**

तिमिरेति ॥ भानवः किरणा अस्य सन्तीति भानुमान् सूर्यः । अत्यन्तं तीव्रो दुस्सहोऽत्यन्ततीव्रस्तं । अत्यन्तं स्थिरः स्थिरतरस्तं भानुतेजोविनान्येनानपोह्यमिति यावत् । अखिलानां प्राणिनां रुद्धो मार्गो येन स तथोक्तस्तं सर्वेषां प्राणिनां मार्गमावृत्यवर्तमानमितियावत् । भुवनमेव भवनं गृहं तस्मिन् पूर्णं व्याप्तमञ्जनवदाभा शोभा यस्य सोऽञ्जनाभस्तं नीलवर्णमितियावत् । तिमिरनिकरोऽन्धकारसमूहः सएव

कुम्भिव्रातो गजसमूहस्तं प्राक् स्वमण्डलाविर्भावात्पूर्वमेव रश्मिजालानि रश्मिसमूहान्येव हरिः सिंहो नखरैर्नखैः, अत्यन्ततीव्रं स्थिरतरमखिलानां प्राणिनां हृद्भमार्गे भुवनपूर्णमञ्जनाभं कुम्भिव्रातमिव निरास निराकरोत् ॥ १५ ॥

**मधुरपतगरावाः शान्तनैशाम्बुबाष्पाः सपदि विपुलरागाः स्वाभिसारात्प्रसन्नाः अरुणतरणिरत्यच्छाम्बरा दिक्पुरन्ध्रीः स्मितसरसिजवक्त्राः स्वैः करैरालिलिङ्ग**

**मधुरेति** ॥ अरुणतरणिरव्यदादित्यः स्वैः स्वकीयैः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन' इत्यमरः । करैः रश्मिभिः, मधुराः श्रोत्रप्रिया पतगरावा विहङ्गकूजितानि यासां दिशां तास्तथोक्ताः । वध्वोऽपि मधुरपतगराव इव मनोहरशुकपिकादिध्वनिरिव रावो ध्वनिर्कासां तास्तथोक्ताः । निशः सम्बन्धीनि नैशानि तादृशानि यान्यम्बूनि जलानि हिमाम्बूनीत्यर्थः । तान्येव बाष्पाः शाका नैशाम्बुबाष्पा यासां तास्तथोक्ताः । स्त्रियोऽपि प्रियदर्शनानन्तरं शान्तप्रियविरहखेदोत्पन्नबाष्पाः । सपदि उद्यद्बिम्बार्कसमय एव विपुलो बहुलो रागः सान्ध्यरक्तिमा यासां तास्तथोक्ताः। स्त्रियश्च प्रियतमाभिसरणादेवाभिव्यक्त विपुलस्नेहाः । स्वाभिसारः स्वेषां सूर्यकिरणानामभिसारो व्याप्तिस्तस्मात् प्रसन्ना शान्तनुपारतया प्रसन्ना इत्यर्थः । स्त्रियः स्वकीय प्रियतमाभिगमनात्प्रसन्ना शान्तकोपाः । अत्यच्छमतिनिर्मलमम्बरमाकाशो यासां तास्तथोक्ताः । स्त्रियश्चातिनिर्मलवसनाः । स्मितसरसिजान्येव विकसितपद्मान्येव वक्त्राणि यासां तास्तथोक्ताः । स्त्रियश्च स्मितसरसिजाभवदनाः । दिक्पुरन्ध्रीर्दिश एव पुरन्ध्रयः स्त्रियस्ता आलिलिङ्ग । लिगि गतौ लिट् । कश्चित्तरुणः स्ववधूमिवेति श्लेषाभिप्रायः ॥ १६ ॥

**प्रणतिरभसधूलीबद्धशोभाविशेषा दधुरुपकृतिमत्तां साधुजालान्तरालाः । समयमुपनतं संवेदयन्तो वयस्या इव दशशतकेतोः केतवः श्रावकाणाम् ॥१७॥**

**प्रणतीति** ॥ प्रणतेः सान्ध्यसूर्यनमस्कारस्य रभसो वेगस्तस्मादुत्पन्ना या धूलयस्ताभिर्बद्ध उत्पादितः शोभाविशेषः कान्तिविशेषो यैस्ते प्रणतिरभसधूलीबद्धशोभाविशेषाः । वयस्याश्च नमस्कारसम्भ्रमेणाङ्गलग्नधूलीकान्तिविशेषाः । साधु भद्रं यज्जालं

गवाक्षस्तस्यान्तरं रन्ध्रमध्यं तेनागता अन्तरागता इत्यर्थः । वयस्याश्च साधुजालान्तरागताः सज्जनसमूहमध्यादागताः । समयं शास्त्रश्रवणसमयमुपस्तनं प्रातं संवेदयन्तो ज्ञापयन्तः । गवाक्षमध्यादागतं सूर्यकिरणं दृष्ट्वा श्रावकाः श्रवणमननोद्यता आसन्नित्यर्थः । वयस्याश्चान्योन्यं श्रवणकालं ज्ञापयन्ति । दश च तानि शतानिच दशशतानि केनवः किरणा यस्य स तथा तस्य सूर्यस्येत्यर्थः । केनवो रश्मयः वयस्या इव सहपाठिन इव श्रावकाणां श्रोतॄणां शिष्याणां, उपकृतिरुपकारो येषामस्तीत्युपकृतिमन्तस्तेषां भावस्तत्ता तां दधुः । स्वयं श्रोतॄणामुपकारं कृत्वा आत्मनामुपकाराख्यधर्मवत्तां दधुरित्यर्थः ॥

**निहितमुचितमुच्चं योगपीठं प्रवक्तुः परिपदि परितोऽमी सत्वराः सत्वभाजः ।**
**द्रुतमवसितकृत्यैर्धन्यसन्यासिवर्गैः श्रवणपरमकृत्यायोपतस्थुः समेताः ॥ १८ ॥**

**निहितमिति ॥** त्वरया वेगेन सहिताः सत्वराः, सत्वं सात्विकगुणं भजन्तीति सत्वभाजः सात्विकाः, बलिन इति वा । स्वविहितकर्मक्षमाबलवन्त इत्यर्थः । अमी श्रोतारो द्रुतं शीघ्रं यथाभवतितथावसितं समापितं कृत्यं जपादिकृत्यं यैस्तं तथोक्ता-स्तैर्धन्या ये सन्यासिनस्तेषां वर्गाः समूहास्तैः समेताः सन्तः, परिपदि व्याख्यामण्डपे निहितं निक्षिप्तमुचितं श्रीमध्वाचार्योचितमुच्चमुत्तमं । उन्नतं वा । प्रवक्तुर्व्याख्यातुः श्रीमध्वाचार्यस्य योगपीठं योगासनं परितः योगासनस्य समन्तादित्यर्थः । 'अभितः परित' इति द्वितीया । श्रवणमेव परमकृत्यमुत्तमव्यापारस्तस्मा उपतस्थुरुपासां चक्रिरे ॥ १८ ॥

**बभुरमलगुणानां शोभनाच्छादनानां मुररिपुनिलयानां सन्नवेदान्तिकानाम् ।**
**सपदि सुविवृतानामन्तरर्थाः श्रियां वा विविधकवलिकानां सञ्चयाः पत्रिकाणाम्**

**बभुरिति ॥** अमला निर्मला गुणाः सूत्राणि यासां तास्तथा तासां, शोभनान्या-च्छादनानि वासांसि यासां तासां, मुररिपोः श्रीकृष्णस्य निलयाः सान्निध्यायतनभूता-स्तेषां । निलयशब्दो नित्यपुल्लिङ्गः । वेदान्तानां वेदान्तशास्त्राणां सम्बन्धिन्यो वैदान्तिकास्तासां, सपदि तदानीमेव सुविवृतानां वस्त्राद्यावरणशून्यानां विविधा नानाविधा याः कवलिका अन्तःपत्रिका यासां तासां पत्रिकाणां पत्राणां सञ्चयाः

समूहाः, अमलगुणानां निर्दोषज्ञानभक्त्यादिगुणयुक्तानां शोभनाच्छादनानां अयोग्येषु भगवत्स्वरूपनिगूहनयुक्तानां मुररिपुनिलयानां मुररिपोरावासभूतहृत्सरोजानां वैदान्तिकानां वेदान्तशास्त्रसम्बन्धयुक्तानां तद्विचारनिरतानामित्यर्थः । सपदि सद्गुरूपदेशमात्रेणैव न्युविवृतानां निरस्ताज्ञानाद्यावरणानां सतामन्तोऽन्तःकरणे धियां बुद्धीनां अर्था वा विषया इव । सतामन्तःकरणे तेषां बुद्धिविषया भगवत्स्वरूपादयो यथा तथा वन् रेजिर इति भावः ॥ १९ ॥

अनतिविरलभावा अप्यनन्योन्यसङ्गा ऋजुतरततनानापंक्तिसाम्याप्तशोभा ।
द्विरदतुरगदेश्या दूरतो वर्जितान्ताः कुशललिखितरूपा रेजिरे तेषु वर्णाः ॥

अनतीति ॥ अत्यन्तं विरलभावोऽतिविरलभावः । नविद्यतेऽतिविरलभावो येषां ते तथा, अन्योन्यं परस्परं सङ्गोऽन्योन्यसङ्गः । नविद्यतेऽन्योन्यसङ्गो येषां ते तथा, परस्परासंस्पृष्टा इत्यर्थः । ऋजुतरा अवक्रास्ताश्च ता तता व्याप्ताश्च ताः या नाना पंक्तयस्तासां साम्यं आद्यन्तयोर्न्यूनाधिक्यराहित्यं तेन सम्प्राप्ता शोभा कान्तिर्यैस्ते तथोक्ताः । द्विरदा गजास्तुरगा अश्वास्तेषां देश्याः सदृशा द्विरदतुरगदेश्या अश्वगजलिपिनामका इति भावः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति सादृश्यार्थे देश्यप्रत्ययः । दूरतो दूरादेव वर्जिता अन्ता यैस्ते तथोक्ताः पत्राद्यन्तयोः पार्श्वाभिद्वयस्य चतुर्दिक्षु च दूरतोवर्जितप्रान्ता इत्यर्थः । एवंभूतत्वादेव कुशलैर्लेखनकर्मणिचतुरैर्लिखितानि स्वरूपाणि येषां ते तथा तेषु पत्रिकाणां सञ्चयेषु वर्णा अक्षराणि रेजिरे ॥ २० ॥

सपदि ददृशुरेके वाचनीयादिभागं परिचयपटुताभ्यां तावदेके चिरेण ।
हरिगुरुनमनं द्राग्यत्नतोऽमी विधाय प्रययुरपरसाम्यं सिद्धये स्याद्धि यत्नः ॥

सपदीति ॥ एके केचन श्रोतारो वाचनीयस्य तदानीं श्रोतव्यत्वेन वाचनीयस्य ग्रन्थस्यादिभागमादिवाक्यं, परिचयो ग्रन्थविषयकपरिचयः पटुता चातुर्यं ताभ्यां सपदि झटिति ददृशुः । तावत्तदा एके चिरेण शनैर्ददृशुः । तात्परिचयपटुताभावादिति भावः । तथाप्यमी चिरेण वाचनीयादिभागं ये ददृशुस्ते यत्नतः प्रयत्नविशेषात

हरिगुरुनमनं द्राग्विधायापरसाम्यं सपदि दृष्टवतां तेषां साम्यं । नमनविषये साम्यं वा प्रययुः । तथाहि यत्नो देशकालोचितप्रयत्नः सिद्धये स्याद्धि । [अत्रार्थान्तरन्यासा-लङ्कारः] ॥ २१ ॥

यतवचसि जनेऽस्मिन्नानते सन्निरस्यन् सिचय यवनिकां तां सान्ध्यजीमूतरक्ताम्
रविरिव रविपूज्यांघ्रिः समाजान्तरिक्षे व्यलसदतिशयालुः सन् सहस्रप्रकाशः ॥

यतेति ॥ आनते कृतनमस्कारेऽस्मिञ्जने श्रोतृजने यतं नियतं वचो यस्य स यतवचास्तस्मिन्सति मौनवतिसतीत्यर्थः । सन्ध्यायां भवः सान्ध्यः सचासौ जीमूतो मेघश्च तद्वद्रक्तां रक्तवर्णां प्राक् स्थापितां सिचयात्मिका वस्त्रात्मिकाचसा यवनिकाच सिचययवनिका तां । 'वस्त्रं सिचयः पटः प्रोक्तः' इति हलः । सन्निरस्यन्नपास्यन् । रविपूज्यावंघ्री यस्य स तथा । अतएवातिशयालुः स्वगुणैः सूर्यमतिशयिष्णुःसन् सहस्र प्रकाशा यस्य स तथोक्तः श्रीपूर्णप्रज्ञः । समाजो व्याख्यानसभा सएवान्तरिक्षं तस्मिन्नविरिव व्यलसच्छुशुभे । अस्मिञ्जने सन्ध्यानुष्ठानं कुर्वति जने यतवचस्यानते सति सहस्रप्रकाशः सहस्रकिरणः सूर्यः सान्ध्यजीमूताख्यां यवनिकामपास्यन्नभसि यथा शोभां भजेत्तद्वदित्यभिप्रायः ॥ २२ ॥

त्रिभुवनवरतेजो व्यक्तवेदार्थशुक्त्रितयरसतया ये वर्णिता वर्णवर्याः ।
पृथुमतिरथ तेषामैक्यमापाद्य सम्यक् प्रवचनपरिशुद्ध्यै स्म प्रणौति प्रवीणः ॥

त्रिभुवनेति ॥ अथ प्रवीणः पृथुमतिः श्रीपूर्णप्रज्ञः ये वर्णवर्या आकारोकारम-काराख्यवर्णश्रेष्ठाः, त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्मिन् वराण्युत्तमानि यानि तेजांस्यग्निवायुसूर्यलक्षणानि तेभ्यो व्यक्ता ये वेदा ऋग्यजुःसामवेदास्तेषामर्थोऽर्थभूतं यच्छुक्त्रितयं भूर्भुवःस्वरिति व्याहृतित्रयं तस्य रसः सारस्तस्य भावस्तत्ता तया वर्णिता श्रुता युक्ताः । तेषां वर्णवर्याणां सम्यगैक्यमानुपूर्व्येण नैरन्तर्यलक्षणं श्लेषमापाद्य सम्पाद्य प्रवचनस्य व्याख्यानस्य परिशुद्धिर्निर्दोषत्वं तस्यै प्रणौति स्म प्रणवोच्चारण-मकरोत् । श्रुतिश्च 'स इमान् लोकानसृजत पृथिवीमन्तरिक्षं दिवं तान् लोकानभ्य-तपत्तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत । वायुरन्तरिक्षा-

दादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त । ऋग्वेद एवाग्नेरजायत । यजुर्वेदो वायोः सामवेद आदित्यात्तान् वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्रान्यजायन्त । भूरित्येव ऋग्वेदादजायत । भुवरिति यजुर्वेदात् । स्वरिति सामवेदात्तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त । अकार उकारो मकार इति । तानेकधा समभरत्तदेतदोमिति' इत्यादि । (ऐतरेयब्राह्मणपञ्चमखण्डिका प्रतिपादित प्रणवप्रकारो द्रष्टव्यः) ॥ २३ ॥

**स्वरमचरमकाले मन्द्रमेवात्यजद्भिः स्फुटमुपनिषदन्ते वाचकैर्वाच्यमाने ।**
**प्रवचनमतिचित्रं प्राणभाजां श्रुतीनाममृतममृतभावस्यैष हेतुं चकार ॥ २४ ॥**

**स्वरमिति ॥** चरमकाल उपसंहारकालः स नभवतीत्यचरमकाल उपक्रमकाल इत्यर्थः । तस्मिन् मन्द्रो मन्दः स्वरस्तमत्यजद्भिः । उपक्रमकाले उच्चैर्ध्वनेर्निषिद्धत्वादङ्गीकृतमन्द्रस्वरैरित्यर्थः । मन्द्रस्वरमत्यजद्भिर्वाचकैरुपनिषदामन्तो निर्णयो यस्मात्स उपनिषदन्तस्तस्मिन् ग्रन्थे । उपनिषद्भाष्ये वा । वेदान्तशास्त्रविषयग्रन्थान्तरेवेत्यर्थः । वाचकैः स्फुटं वाच्यमानेसति मन्त्रं वाचयद्भिरपि स्फुटं वाच्यमानेसतीत्यर्थः । एष श्रीमध्वः प्राणभाजां जीवानां श्रुतीनां कर्णानाममृतममृतायमानं, अमृतभावो मुक्तत्वं तस्य हेतुमतिचित्रं प्रवचनं व्याख्यानं चकार ॥ २४ ॥

**धनमिव सधनायेभ्योऽर्कसूनुः प्रसन्नः शरशतमिव पार्थः संयुगार्थिभ्य उग्रः ॥**
**अरतिविरहितः सोऽनारतं नादिशन्नो प्रतिवचनमदीनं चोदकेभ्योऽखिलेभ्यः॥**

**धनमिति ॥** अरतिविरहितस्तन्द्राराहितः स श्रीमध्वः । चोदकेभ्यो ये मत्सरवर्जिताःसन्तस्तत्वज्ञानबुभुत्सया चोदयन्ति तेभ्यः तत्सन्तोषकरं प्रत्युत्तरं प्रसन्नःसन्, धनाया धनतृष्णा तया सहिताः सधनायास्तेभ्यो धनार्थिभ्य इत्यर्थः । अर्कसूनुः कर्णो धनमिव, अथ ये समत्सरा जिगीषया चोदयन्ति तेभ्यस्तन्निराकरणचतुराणि प्रत्युत्तराणि, उग्रः शत्रुभयङ्करः पार्थोऽर्जुनः संयुगार्थिभ्यो युद्धार्थिभ्यः शत्रुभ्यः शरशतमिवाखिलेभ्यः पृच्छकेभ्योऽदीनमतिप्रौढ प्रतिवचनं प्रत्युत्तरमनारतं सर्वदा नादिशदिति नो नप्रददातीति नो । अदिशदेवेत्यर्थः ॥ २५ ॥

**अथ दशशतशोचिष्यपयाति प्रतीच्यां प्रवचनमवसाय ज्ञातुमायात्तटाकम् ।**
**पृथुमतिरिह तावच्छ्रेष्ठसंसर्गलोलैः समगमि सपदि स्वर्निम्नगाद्यैश्च तीर्थैः ॥२६॥**

अथेति ॥ दश च तानि शतानि च दशशतानि तावन्ति रोचींषि यस्य तस्मिन् सहस्ररश्मौ सूर्य इत्यर्थः । प्रतीच्यां पश्चिमम आ ईषत् प्रतियातिसति मध्याह्नानन्तरमेवेतियावत् । पृथुमतिः श्रीमध्वः प्रवचनं व्याख्यानमवसाय समाप्य ज्ञातुं यावत्तदा तटाकमायाज्जगाम । तावत्तदा श्रेष्ठस्योत्तमस्य मध्वस्य यः संसर्गः सम्बन्धस्तस्मिँल्लोलानि लोलुपानि तैः स्वः स्वर्गस्य निम्नगा गङ्गा आद्या येषां तानि स्वर्निम्नगाद्यानि तैः, तीर्थैस्तटाकं सपदि झटिति समगमि समागतं । गङ्गादितीर्थानि तटाके मिलितानीत्यर्थः ॥ २६ ॥

**घनरसनिकरोऽस्यावन्तरत्यन्तशुद्धो मुनिगण इव भूयः स्नेहवान् प्राग्दधानः ।**
**प्रतिकृतिमखिलज्ञस्यापरोक्ष्येण तावत् स्फुटमलभतरूपं मज्जने सज्जनेष्टम् ॥**

घनेति ॥ अन्तोऽन्तर्भागेऽत्यन्तशुद्धः कर्दमादिशुद्धः, भूयो बहुलो यः स्नेहः स्नेहास्त्यास्मिन्सोगुणो भूयः स्नेहः सोऽत्यास्मीति तथोक्तोऽसौ घनरसनिकरो जलसमूहः । 'नीरक्षीराम्बुशंवरं । मेघपुष्पं घनरस' इत्यमरः । प्राङ्मज्जनात्पूर्वं, अखिलज्ञस्य तटाकसमीपवर्तिनः श्रीमध्वस्य प्रतिकृतिं प्रतिबिम्बं दधानःसन् तावत्तदा मज्जनमवगाहनं तस्मिन् मज्जनसमय इत्यर्थः । सज्जनेष्टं सज्जनप्रियं रूपं श्रीमध्वाचार्यरूपं स्फुटं सम्यगापरोक्ष्यमपरोक्षत्वं तेन मुनिगण इव मुनिसमूहइवालभत प्राप । भूयः स्नेहवशाद्बहुलभक्तिमदन्तःकरणेऽत्यन्तं शुद्धोऽज्ञानादिदोषरहितः प्राक् ध्यानयोगपरिपाकात्पूर्वं प्रतिकृतिं ध्यानकाले मनसि प्रतीयमानभगवत्प्रतिबिम्बमन्तेऽन्तःकरणे दधानो मुनिगणः पश्चात् ध्यानयोगपरिपाकानन्तरं तत्स्वरूपमेव यथा सम्यगापरोक्ष्येण पश्येत्तद्वदिति भावः । तटाकसमीपवर्तिनः श्रीमध्वाचार्यस्य प्रतिबिम्बं दधानो जलसमूहः पश्चान्मज्जनसमये स्वरूपमेवापरोक्ष्येण प्रापेत्यर्थः ॥ २७ ॥

**अपरिमितमनीषस्योल्लसच्छंखचक्र रथचरणशिलानां तत्रतोऽत्राभिषेकम् ।**
**प्रतितनव उदारास्तास्वलं सन्निधातुस्तनव इव विरेजुः पाञ्चजन्याग्रजस्य ॥**

अपरिमितेति ॥ अत्र तटाके रथचरणश्चक्रमस्यास्तीति रथचरणी श्रीहरिः तस्य शिलास्तासां । यद्वा रथचरणाश्चक्राण्यासु सन्तीति रथचरण्यस्ताश्च ताः शिलाश्च तासामिति । सालग्रामशिलानामित्यर्थः । अभिषेकमभिषेचनं तन्वतः कुर्वतः, उल्लसच्छङ्खो बाहौ यस्य स तथोक्तस्तस्य, अपरिमिता मनीषा यस्य स तथा तस्य, उदाराः समीचीनाः प्रतितनवः प्रतिबिम्बास्तासु चक्रिशिलास्वलं सम्यक् सन्निधानं कुर्वतः पाञ्चजन्यः प्रियो यस्य स तथा तस्य श्रीहरेस्तनव इव स्वरूपाणीव तासु चक्रिशिलासु विरेजुः ॥ २८ ॥

अभिदधति मुनीन्द्रा द्वादशाब्दोपवासप्रतिमफलमलं यत्सेवनं भक्तियुक्तम् ।
अधिकममरनद्याद्याप्लवाद्धन्यमान्यादपिददलब्धबोधो विष्णुपादोदकं तत् ॥२९॥

अभीति ॥ मुनीन्द्रा भक्त्या युक्तं सहितं यथा भवति तथा भक्तियुक्तं, यस्य श्रीविष्णुपादोदकस्य सेवनं यत्सेवनं, अलं सम्यक् द्वादश च तेऽब्दाश्च तेषूपवासस्तेन प्रतिमं समानं द्वादशाब्दोपवासप्रतिमं तादृशं फलं यस्य तत्तथोक्तमभिदधति वदन्ति । पुनः कथंभूतमित्यत आह– धन्येति । धन्यमान्यान्महद्भिर्मान्यात्, अमरनदी गङ्गा आद्या यासां तास्वाप्लवात् स्नानादधिकमधिकफलञ्चाभिदधति । अलब्धबोधः पूर्णप्रज्ञाचार्यस्तदेवं महाफलं विष्णुपादोदकं सालिग्रामाभिषेकतीर्थं इत्यर्थः । अपिबत् स्वीकृतवान् । विष्णुपादोदकस्योक्तफलवत्त्वञ्च । 'त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः । समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः । षण्मास फलदा गोदा वत्सरस्यतु जाह्नवी । द्वादशाब्दोपवासस्य विष्णुपादोदसेवनमि'ति प्रमाणसिद्धम् ॥ २९ ॥

तरणिभिरिव गौरैरूर्ध्वपुण्ड्रैर्द्विषड्भिः सदरपरमचक्रोदीर्णतेजा हरीष्टः ।
मुररिपुविमुखानां दुस्सहो देहभाजां लयममय इवान्यो मान्यधीराबभासे ॥

तरणिभिरिति ॥ दरेण शङ्खेन सहितं सदरं तादृशं यत्परमचक्रमुत्तमनुदर्शनं तेनोदीर्णं प्रवृद्धं तेजो यस्य स तथा शङ्खचक्रलाञ्छनेन प्रवृद्धकान्तिविशेष इत्यर्थः । हरेरिष्टो हरीष्टः, मुररिपुविमुखानां भगवद्विमुखानां दुष्टानां देहभाजां प्राणिनां दुःसहोऽसह्योऽत्यप्रिय इत्यर्थः । मान्यधीः श्रीपूर्णप्रज्ञाचार्यः तरणिभिरिव सूर्यैरिव

गौरैः शुभ्रैः द्योचते पट्च तैर्द्वादशभिरित्यर्थः । ऊर्ध्वानिच तानि पुण्ड्राणिच तैः । 'चित्रकमुक्तं विशेषकं पुण्ड्रमि'ति हलः । अन्योऽपरो लयसमय इव प्रलयस्य कालः स इवावभासे । सोऽपि द्विपड्भिः सूर्यैः सहितः, प्रलयकाले द्वादशादित्यानां युगपदुदयात् । सदरपरमचक्रोदीर्णतेजाः शोभनारयुक्तहरिचक्रेण प्रवृद्धतेजा इत्यर्थः । लयसमयोऽपि संहाराङ्गत्वाद्धरीष्टः । मुररिपुविमुखानां देहभाजां दुःसहश्च, तेषामन्त-प्रातिनिमित्तत्वात् । हरिद्वेषपरिपाकवन्तोहि प्रलये तमः प्रविशन्ति ॥ ३० ॥

**समधिकधिपणस्य प्रेक्षमाणो जनौघः प्रकृतिमधुरमास्यव्याजपूर्णेन्दुबिम्बम् ।**
**अमुचदपसरेति श्रावकोक्तेः पुरास्मिन् प्रचलित पदवीं तां प्राञ्जलिस्तूर्णमारात्॥**

**समधिकेति** ॥ समधिका धिषणा प्रज्ञा यस्य स तथा तस्य श्रीमध्वस्य प्रकृतिमधुरं स्वभावेनरमणीयमास्यमेव व्याजो मिषस्तेन पूर्णेन्दुबिम्बं पूर्णेन्दुमण्डलं यस्य स तथोक्तस्तं प्रेक्ष्यमाणः पश्यन् जनौघः । अपसरेति मार्गादपगच्छेति श्रावकोक्तेः श्रोतुः शिष्यस्योक्तेः पुरा पूर्वमस्मिञ्छ्रीमध्वे प्रचलत्यासनाच्चलतिसति प्राञ्जलिःसन् तूर्णं यथा भवति तथा आराद्दूरतस्तां पदवीं मार्गममुचदत्यजत् ॥ ३१ ॥

**गुरुचरणसरोजद्वन्द्वनिर्णेजनाम्भो दधति जननिकाये सर्वमुर्वीगतं च ।**
**अवनिरनभिनन्दिन्यप्यदश्चक्षमेऽसौ कथमपि कथमेव स्यात्क्षमाख्यान्यथास्याः॥**

**गुरुचरणेति** ॥ जननिकाये जनसमूहे गुरोः श्रीमध्वस्य चरणावेव पादावेव सरोजे पद्मे तयोर्द्वन्द्वस्य युगमस्य निर्णेजनं प्रक्षालनं तस्याम्भो जलमुर्वीगतं भुविपतितं सर्वं दधतिसति । असाववनिरनभिनन्दिन्यप्यप्रीयमाणाप्यदश्चरणक्षालनजलधारणं कथमपि कथञ्चिदेव चक्षमे सेहे । अन्यथा नचक्षमेतचेदस्या भुवः क्षमाख्या क्षमेति नाम कथमेव कथं नु स्यात् ? सर्वत्रातिक्षमायुक्तत्वाद्धि क्षमेत्युच्यते । कुत्रचित्क्षमाभावे च क्षमाख्या नस्यादित्यर्थः ॥ ३२ ॥

**अविदितरसभेदं शीतलं लब्धगन्धं विमलममलपाणिः पाणिजरप्रविष्टम् ।**
**वदनपवनभीत्या पार्श्वतो बिभ्रदम्ब्यं कमथ करकपूर्णं संयमीदानिनाय ॥३३॥**

**अवदितेति** ॥ अथ, अमलौ पाणी हस्तौ यस्य स तथोक्तः संयमी निगृहीतेन्द्रियः कश्चिद्यतिः । वदनपवनस्य मुखवायोर्भीत्या भयेन श्वासवायुसम्बन्धभयादित्यर्थः । पार्श्वत एकस्मिन्पार्श्वे बिभ्रत् दधानःसन्नविदितो रसभेदो रसविशेषो यस्य तत्तथोक्तं शीतलं लघुगुरुत्वदोषरहितं नविद्यते गन्धो यस्य तदगन्धं विमलं स्वच्छं पाणिजैर्नखैरप्रविष्टमस्पृष्टं करकपूर्णं कमण्डलुपूर्णं । 'अगन्धमव्यक्तरसं शीतलञ्च तृषापहं । अच्छं लघुच पथ्यञ्च तोयं गुणवदुच्यत' इत्युक्ततोयगुणयुक्तमित्यर्थः । अर्घ्यं श्रेष्ठं कं जलं । अर्घ्योदकमित्यर्थः । इहानिनाय ॥ ३३ ॥

**विहसितबिसभङ्गश्रीप्रकर्षं सितिम्ना जलजममृतपूरैः पूरयामास रम्यम् । समयगुणविशेषालोचकैर्लालनीयः ससुरभिसुमनोभिः स स्फुटं गौरपक्षः ॥३४॥**

**विहसितेति** ॥ गौरः प्रामाणिकत्वेन शोभनः पक्षः सिद्धान्तो यस्य स तथोक्तः । अतएव समयः स्वप्रणीतशास्त्रं तस्य ये गुणविशेषाः श्रुतिस्मृत्यनुगुणत्वादिगुणविशेषास्तेषामालोचकैश्चिन्तकैः सुमनोभिः देवैः स्फुटं सम्यग्लालनीय आदरणीयः स श्रीमध्वः । सितिम्ना शुभ्रतया विहसितो निराकृतो बिसभङ्गश्रीप्रकर्षः मृणालभङ्गकान्त्यतिशयो येन स तथोक्तस्तं । 'मृणालं बिसमब्जादी'त्यमरः । रम्यं जलजं पाञ्चजन्यं सुरभीणि च तानि सुमनांसिच तैः शोभनपरिमलयुक्तप्रसूनैरित्यर्थः । अमृतपूरैर्जलसमूहैः । 'पयः कीलालममृतमि'त्यमरः । पूरयामास पाञ्चजन्यमर्घ्योदकेनापूरयदित्यर्थः । समयविशेषालोचकैः शुक्लपक्षकृष्णपक्षादिकालगुणविशेषपरैर्ज्योतिःशास्त्रविशारदैरित्यर्थः । लालनीयः शुभकर्मसुप्रशस्तत्वेनादरणीयो गौरपक्षः शुक्लपक्षः सितिम्ना विहसितबिसभङ्गश्रीप्रकर्षं । अतएव रम्यं मनोहरं जलजं चन्द्रं ससुरभिसुमनोभिः सुरभ्या सहिताः ससुरभयस्तेचते सुमनसो देवाश्च तैः कर्तृभिरमृतपूरैः अमृतात्मककलासमूहैः किरणैः यथा पूरयेत्तद्वदिति ध्वनितोऽर्थः । तथाहि सुरभ्यादयो देवाः कृष्णपक्षप्रतिपदमारभ्य प्रत्यहं चन्द्रस्यैकैकां कलां दर्शावधिस्वीकृत्य पुनः शुक्लपक्षप्रतिपदमारभ्य यथाक्रमं प्रत्यर्पणेन चन्द्रममृतकलाभिः पूर्णिमावधिपूरयन्ति तथाचोक्तं 'पूरयन्ति दिशः सोमं देवा गाव सरस्वती' इति ॥ ३४ ॥

विमलमलयजाम्भोबिन्दुभिश्चार्चितार्चो नवललिततुलस्याः पुष्पराज्यार्चितश्च ।
स्थलजजलजवल्लीवृक्षवीरुत्समस्तप्रसवविजयलक्ष्म्या मूर्तयेवेन्दिरेशम् ॥३५॥

**विमलेति** ॥ विमलं निर्मलं यन्मलयजं चन्दनं तद्युक्तमंभस्तस्य बिन्दवस्तैर्विमल-मलयजाम्भोबिन्दुभिश्चार्चिता भूषिता अर्चा प्रतिमा येन स तथोक्तः । 'अर्चा तु प्रतिमा प्रोक्ता हरिणी सा हिरण्मयी'ति हलः । स श्रीमध्वो नवा नूतना या ललिततुलसी कोमलतुलसी तया पुष्पराज्या पुष्पसमूहेन मूर्तया मूर्तिमत्या, स्थलजाश्च जलजाश्च वल्लीवृक्षवीरुधः स्थलजजलजवल्लीवृक्षवीरुधस्तासां यानि समस्तप्रसवानि सर्वकुसुमानि तेषां यो विजयस्तस्य या लक्ष्मीः श्रीस्तयेवेन्दिरेशं श्रीकृष्णमार्चिचदर्चयामास ॥

सदददधिकबोधः षोडशात्रोपचारान् व्यरहयदगुणान् द्वात्रिंशदागःपुरोगान् ।
अगणितगुणमुच्चैस्तोषयञ्छार्ङ्गपाणिं षडपि परमभक्त्यानूपचारान्दिदेश ॥३६॥

**स इति** ॥ अत्र षडधिका दश षोडश तेचते उपचाराश्च तान् ददत् प्रयच्छन् अगणिता गुणा यस्य तं, शार्ङ्गं पाणौ यस्य तं श्रीकृष्णं तोषयन् स श्रीमध्वः । अधिकबोधः अधिका त्रिंशत् द्वात्रिंशच्चतान्यागांसिच तानि पुरोगाणि पूर्वकाणि येषां तानगुणान् दोषान् व्यरहयत् वर्जयामास । रहत्यागे लङ् । परमभक्त्या षडनूपचारा-नपि दिदेश ददौ । तत्र षोडशोपचाराः — अर्घ्यपाद्याचमनीय मधुपर्क पुनराचमनीय स्नानवस्त्रभूषणयज्ञोपवीतासनगन्धपुष्पधूपदीपनैवेद्यनमस्कारा इति । द्वात्रिंशदपराधाश्च—
भुक्त्वापीत्वार्चनं दन्तकाष्ठाभक्ष्युपसर्पणं । मैथुनानन्तरं चार्चा शवस्पृष्टोपसर्पणं ॥
अर्चान्तरे मूत्रविष्ठाविसर्गौ सालभाषणं । नीलवस्त्रावृतः स्त्रीराजान्नासिरुपागतिः ॥
उपस्पृश्याविधानैस्तु शुश्रूषोरपिरुष्टता । अकर्मण्यप्रसूनार्चा रक्तकौपीनवस्त्रता ॥
कृष्णवस्त्रैर्हरेः कर्मविधिः स्पृष्टिस्तमस्यपि । कामानुसारिता कृष्णवस्त्रस्यपरिधूननं ॥
श्वस्पृष्टिः कोलमांसादिर्जालपादासनं तथा । उपसर्पः पङ्क्तिलेच चिर्ति स्पृष्टोपसर्पणं ॥
पिण्याकादिश्चोपसर्तुः पोत्रिमांसोपपादनम् । उपयातुर्मद्यपानं कुसुम्भदलभक्षणम् ॥
पुष्पादाने धूपदानं हरिवोदुरुपानहो । अभेरी हन्तुरभ्यासिरजीर्णान्नस्यपूजनम् ॥
द्वात्रिंशदपराधस्तु कथिता गुरुदोषदाः । वसुन्धरार्थे कोलेन विष्णुना प्रभविष्णुना ॥

इत्युक्ताः । षडन्यूपचाराश्च मुखवासश्च— ताम्बूलं दर्पणं छत्रचामरे । पादुकेचेति विज्ञेया उपचाराः परे बुधैरिति ॥ ३६ ॥

**तमरुणमणिवर्णं दिव्यदेहाख्यगेहे स्नपितमतिपृथुश्रद्धानदीचित्तवार्भिः ।**
**ननु स यजति नित्यं हृत्सरोजासनस्थं न तु सकृदिति पुष्टैरष्टभिर्भावपुष्पैः ॥**

तमिति ॥ स श्रीमध्वः । अरुणो रक्तो यो मणिः पद्मरागमणिस्तस्य वर्ण इव वर्णो यस्य तं । दिव्योऽलौकिको यो देहः स इत्याख्या यस्य तत्तथोक्तं तादृशं यद्गेहं गृहं तस्मिन् । अतिपृथुरतिविस्तृता या श्रद्धैव नदी तस्याश्चित्तमेव वारीणि तैः । अतिविस्तृतश्रद्धाख्यनदीगतचित्ताख्यजलैरित्यर्थः । स्नपितमभिषिक्तं । हृत्सरोजमेव हृत्पद्ममेवासनं पीठं तस्मिन् तिष्ठतीति तथोक्तस्तं तं भगवन्तं पुष्टैः पूर्णैरष्टभिर्भावपूर्णैर्नित्यं सर्वदा यजति ननु । इति, इत्थं 'विमलमलयजाम्भोबिन्दुभिः' इत्याद्युक्तप्रकारेण, पुष्पैर्नवलतितुलस्यादिबाह्यपुष्पैः सकृदेकदा ननु यजति । अयं भावः । अष्टभिर्पुष्पैर्भगवन्तं सर्वदा यजत्येव ननु बाह्यपुष्पैः प्रत्यहं सकृदेव यजतीति । 'तमरुणमणिवर्णमितिच'— 'आराधयामि मणिसन्निभमात्मबिम्बं मायापुरे हृदयपङ्कजसन्निविष्टं ॥ श्रद्धानदीविमलचित्तजलाभिषेकं भावाष्टपुष्पविधिना हरिमर्चयामी'ति भीमवचनमनूदितं ज्ञातव्यम् । 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ । शौचं तुष्टिः सर्वसमर्पणमि'त्यष्टभावपुष्पाणि । 'अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः । सर्वभूतदयापुष्पं क्षमापुष्पं विशिष्यते ॥ १ ॥ ज्ञानपुष्पं तपःपुष्पं ध्यानपुष्पं तु सप्तमम् । सत्यमेवाष्टमं पुष्पमेभिस्तुष्यति केशवः ॥ २ ॥ इतिचाष्टौ भावपुष्पाणि ॥ ३७ ॥

**कृतपरमसपर्यः सान्द्रसच्चन्दनाम्भः परिमलितभुजोरोमण्डलांसो मनीषी ।**
**स्मितरुचिरमुखेन्दुः स्निग्धकौशेयवासाः मनुजनिकुरम्बाणां चक्षुषामुत्सवोऽभूत् ॥**

कृतेति ॥ कृता परमसपर्या हरिपूजा येन स तथोक्तः । सान्द्रमविरलं यत् सच्चन्दनाम्भः समीचीनचन्दनजलं तेन परिमलिताः परिमळयुक्ततयाकृता भुजोरोमण्डलांसा भुजौचोरोमण्डलञ्चांसौच यस्य स तथोक्तः । स्मितं मन्दहासयुक्तं

यद्रुचिरमुखं शोभनमुखं तदेवेन्दुर्यस्य स तथा। स्निग्धं मनोहरं कौशेयवासो यस्य स तथा। मनीषी स श्रीमध्वो मुनिसुरनराणां चक्षुषामुत्सवोऽभूत् ॥ ३८ ॥

**परमथ परमान्नं प्राप्तमेवाप्रयासं प्रभुरिह बुभुजेऽसौ वेदवादप्रवीणः।**
**अजितपरमभक्तः सन्ततं मन्यमानः सकलजगदधीशः प्रीयतां शौरिरित्थम्॥**

**परमिति॥** अथ श्रीहरिपूजानन्तरं। प्रभुर्वेदानां वादे कथने प्रवीणश्चतुरः। अजितस्य श्रीहरेः परमभक्तो मुख्यभक्तः। 'सकलजगदधीशः शौरिः श्रीकृष्ण इत्थं प्रीयताम्' इति सन्ततं मन्यमानः स्मरन्नसौ श्रीमध्वः नविद्यते प्रयासो यथा भवति तथाप्रयासं प्राप्तं परं उत्तमं परमान्नं पायसमिह विष्णुमङ्गले बुभुजे। 'भुजोऽनवन' इत्यात्मनेपदम् ॥ ३९ ॥

**सहचरपरिक्लृप्ते सूक्ष्मवस्त्रास्तृतेऽसावविततनुरुहरूपौशीरवर्ये निषण्णः।**
**अरमयदिह नानाहृद्यविद्याविलासैः कविजनपरिवारं मण्डयन् मण्टपाग्र्यम्॥**

**सहचरेति॥** सहचरेण शिष्येण परिक्लृप्ते रचिते सूक्ष्मं यद्वस्त्रं तेनास्तृतेऽविततनुरुहरूपमवीनां मेषाणां तनूरुहरूपं रोमरूपं यदौशीरवर्यं आसनश्रेष्ठं तस्मिन्। रत्नकम्बलाख्यासनवर्य इत्यर्थः। 'औशीरं तनयासन' इत्यमरः। निषण्णो मण्टपाग्र्यं मण्टपश्रेष्ठं मण्डयन् स्वोपवेशेनालंकुर्वन्नसौ श्रीमध्वः। इह मण्टपे कविर्विद्वान् यो जनः सचासौ परिवारश्च तं, नानाविधा या हृद्यविद्या मनोहरविद्यास्तासां विलासैः अरमयत् समतोषयत् ॥ ४० ॥

**अवसरमधिगम्य भ्रूविजृम्भादभीष्टो मुखसततगलक्ष्मीभूतपाणिप्रवालः।**
**स्मितनयनविकासैस्तस्य विज्ञातभावः श्रवसि किमपि कार्यं मन्त्रयामास मंक्षु॥**

**अवसरेति॥** अभीष्टः श्रीमध्वाचार्यप्रियो भ्रूविलासात् श्रीमध्वस्य भ्रूविजृम्भादवसरं समयमधिगम्य ज्ञात्वोपांशु किञ्चिद्विवक्षुरवसरं प्रतीक्षमाणःसन्। कश्चिच्छ्रीमध्वस्य भ्रूविलाससंज्ञयाज्ञातावसर इत्यर्थः। स्मितञ्च नयनविकासाश्च तैर्विज्ञातो भावोऽभिप्रायो येन स तथोक्तः कश्चित्, तस्य श्रीमध्वस्य श्रवसि श्रोत्रे किमपिकार्यं मंक्षु द्राक्,

मुखस्य सततगः पवनो मुखश्वास इत्यर्थः । तस्य लक्ष्मीभूतः सम्भृतः पाणिप्रवालः पाणिपल्लवो यस्य स तथोक्तःसन्, स्वमुखश्वासो यथा मध्वाङ्गे नपतिष्यति तथा मुखपवनव्यवधानभूतपाणिकिसलयःसन्नित्यर्थः । मन्त्रयामासालोचयामास ॥ ४१ ॥

**प्रणतिपरमकृत्याः सन्मतेर्ये जनौघा विबभुरनतिदूरे सङ्गतास्ताननतीत्य ।**
**अहमहमिकयाशु प्राप्य पार्श्वं प्रणेमुर्बहव इह गृहस्थाः पूर्वसेवां विधातुम् ॥**

**प्रणतीति** ॥ इह, अस्यां सदसि बहवो गृहस्थाः पूर्वसेवां विधातुमहमहमिकया. अहमादौ कुर्यां, अहमादौ कुर्यामितिबुद्ध्याशु पार्श्वं प्राप्य, प्रणतिरेव श्रीमध्वनमस्कार एवोत्तमकृत्यमुत्तमव्यापारो येषां ते तथोक्ता ये जनौघाः, सन्मतेः श्रीपूर्णप्रज्ञाचार्यस्यानतिदूरे समीपे सङ्गताः सन्तो विबभुः । ताननतीत्य तेभ्योऽप्यतिसामीप्यं गत्वा प्रणेमुरिति भावः ॥ ४२ ॥

**विविधजनपदस्थाः प्राक् श्रुतेभ्यो गुणेभ्यः शतगुणगुणमेनं विस्मिता वीक्षमाणाः**
**मुकुलितकरपद्मा आस्यतामित्यवाप्ताः प्रचुरतरहृदा सम्भावयाञ्चक्रिरेऽन्ये ॥**

**विविधेति** ॥ अवाप्ता दिदृक्षयागता विविधा नानाविधा ये जनपदा देशास्तेषु तिष्ठन्तीति तथोक्ताः । 'नीवृज्जनपदो देशः' इत्यमरः । अन्ये जनाः प्राग्दर्शनात्पूर्वं श्रुतेभ्यो गुणेभ्यः शतं गुणा गणना येषां ते शतगुणाः शतावृत्तयो गुणा यस्य स तथा तं शतगुणाधिकगुणमित्यर्थः । एनं श्रीमध्वं वीक्षमाणाःसन्तः । अतएव विस्मिताःसन्तः मुकुलितानि करपद्मानि येषां ते तथासन्तः प्रचुरतरहृदा श्रीपूर्णप्रज्ञाचार्येण, आस्यतामिति सम्भावयाञ्चक्रिरे ॥ ४३ ॥

**अलमलमनुवादेनानुवाच्येत पश्चान्ननु गुरव इदानीमुद्यता हि प्रवक्तुम् ।**
**न मननमधुना द्रागात्रजेत्याह्वयत्ताञ्छ्रुतपरिचयसक्ताञ्छ्रावकाञ्छ्रावकाग्र्यः ॥**

**अलमिति** ॥ अनुवादेन प्रमेयानुवादेनालमलं सम्भ्रमे द्विरुक्तिः । पश्चाच्छ्रवणानन्तरमनुवाच्येत । अनुवचनमपि पश्चात्क्रियतां । मननं चिन्तनमप्यधुनेदानीं न । कुत इत्यत आह— गुरव इति । गुरव इदानीं प्रवक्तुं व्याख्यातुं उद्यता हि यस्मात्

तस्मात् द्रागाश्वात्रज । इत्येवं वदञ्छ्रावकाग्र्यः कश्चिच्छ्रोतृषु प्रधानः, श्रुतस्य श्रुतग्रन्थस्य परिचयेऽभ्यासे सक्तान् निरतान् श्रावकान् श्रोतॄनाह्वयत । आव्रजेत्येकैकापेक्षयैकवचनम् ॥ ४४ ॥

**अधिकधिषणमेनं व्याख्यया शोभमानं हरिमिव कविवर्यं सत्यवत्यास्तनूजम् ।**
**सततमनिमिषं सन्दृश्य सानन्दचित्ताः समयमपि गतं संविद्रते न स्म लोकाः ॥**

**अधिकेति** ॥ लोका जना व्याख्यया शोभमानं कविवर्यं ज्ञानिश्रेष्ठं सत्यवत्यास्तनूजं सत्यवतीपुत्रं हरिमिव व्यासमिवैनमधिकधिषणं श्रीपूर्णप्रज्ञाचार्यं सततं नविद्यते निमेषो निमेषणं यथा भवति तथानिमिषं सन्दृश्य दृष्ट्वा सानन्दमानन्दसहितं चित्तं येषां ते तथासन्तो गतमतीतं समयं कालमपि नसंविद्रते स्म न व्यजानन् । स्मातीत । संविद्रत इति 'समोगमृच्छीत्यात्मनेपदं' 'वेत्तेर्विभाषे'ति दस्यरुडागमः ॥ ४५ ॥

**उदयमित इवास्तं यंश्च भानुर्बभासे स्फुटमकलुषरूपो दर्शनीयोऽनुरागी ।**
**शुचिहरिपदमापत्सम्पदोराश्रितानां न हि भवति विशेषः स्वप्रकाशोन्नतानाम् ॥**

**उदयमिति** ॥ अकलुषं प्रसन्नं रूपं यस्य स तथा । अतएव दर्शनीयः सुखेन द्रष्टुं शक्योऽनुरागोऽस्यास्तीत्यनुरागी सन्ध्याकालानुयुक्तामलरागयुक्तो भानुः सूर्यः । अस्तं अस्तगिरिं यन् गच्छंश्च, उदयमुदयपर्वतमितइव प्राप्तइव स्फुटं सम्यग्बभासे शुशुभे । यथा कश्चित्प्रसन्नरूपो दर्शनीयः सुन्दरोनुरागी स्वप्रियेषु स्नेहयुक्तः पुरुषोऽस्तं विपदं गच्छन्नप्युदयं सम्पदमितइव शोभते । ननु तत्र सङ्कोचविकासौ दर्शयति तथेत्यभिप्रायः । तत्तथाहि शुचि निर्मलं हरिपदं विष्णुपदमाकाशमित्यर्थः । आश्रितानां स्वप्रकाशोन्नतानां स्वरूपप्रकाशेनोत्कृष्टानां, आपत्सम्पदोरापत्काले सम्पत्कालेच विशेषः सङ्कोचविकासलक्षणो विकारो नभवतिहि । श्रीहरिचरणाश्रितनां यथाऽऽपत्सम्पदोर्विशेषाभावस्तद्वद्विष्णुपदमाकाशमाश्रितस्य भानोरपीति भावः । [अत्रार्थान्तरन्यासालङ्कारः] ॥ ४६ ॥

**मरकतमणिवर्णे भूतधात्र्या पुरन्ध्र्या लसति जलधिवासस्यर्धलीनः क्षणार्धम् ।**
**अरुणतरणिबिम्बच्छद्मना पद्मरागः कपिशकरकलापोद्भास्यभूत्प्रेक्षणीयः ॥**

मरकतेति ।। भूतधात्रीपुरन्ध्र्या भूतधात्री भूमिरेव पुरन्ध्री स्त्री तस्या । 'रमा वामा वामनेत्रा पुरन्ध्रीति हलः । मरकतश्चासौ मणिश्च तद्वद्वर्णो यस्य तथा तस्मिंल्लसति शोभमाने, जलधिः समुद्र एव वासो वस्त्रं तस्मिन् क्षणार्धं किञ्चित्कालमित्यर्थः । अर्धलीनमर्धनिमग्नमरुणं लोहितं यत्तरणिबिम्बं सूर्यमण्डलं तदेव छद्म व्याजं तेन, कपिशा रक्ता ये करा रश्मयस्तेषां कलापाः समूहास्तैरुल्लसितुं शीलमस्येति तथोक्तः पद्मरागः प्रेक्षणीयो दर्शनीयोऽभूत् । कस्याश्चिद्योषितो नितम्बलग्ननीलवस्त्रेऽर्धनिमग्नः पद्मरागो यथा दर्शनीयो भवति । एवं पृथिव्याख्ययोषितः समुद्राख्यनीलवसनेऽर्धनिमग्नो लोहितसूर्यमण्डलाख्यपद्मरागः प्रेक्षणीयोऽभूदिति भावः । [अत्र रूपकालङ्कारः] ॥ ४७ ॥

अवनिवनवनभुग्वायुखाहम्महत्सु प्रकृतिगुणसमेताव्याकृताकाश एकम् ।
ततमतनुमनाः सोऽचिन्तयत्सत्समाधावसुरसुरनरेभ्यः सद्गुणं नाथमन्यम् ॥

अवनीति ॥ सः । अतन्वसूक्ष्मं मनो यस्य न तथा पूर्णप्रज्ञ इत्यर्थः । सत्समाधिः शोभनसमाधिस्तस्मिन् । समाधिसमय इत्यर्थः । अवनिर्भूमिः सा च, वनं जलं तच्च । 'जीवनं भुवनं वनमि'त्यमरः । वनभुग्वह्निः स च, वायुश्च, खमाकाशं तच्च, अहं अहङ्कारतत्वं तच्च महत् महत्तत्वञ्च, तेषु । प्रकृतिगुणाः सत्वरजस्तमांसि तैः समेतं, तच्च तदव्याकृताकाशञ्च तस्मिंस्ततं व्याप्तमेकं प्रधानं । स्थानभेदाद्भेदरहितं वा । असुराश्च, सुराश्च, नराश्च तेभ्यो जीवराशिभ्य इत्यर्थः । अन्यं भिन्नं सन्तो गुणा यस्य स तथा तं निर्दोषज्ञानानन्दाद्यनन्तगुणमित्यर्थः । नाथं सर्वस्वामिनं भगवन्तं अचिन्तयत् । दध्यौ ॥ ४८ ॥

व्यदधत परिदृष्टज्योतिषः साधु सान्ध्यं नियमवर्निदेया ज्योतिषोप्यावलोकात् ।
विहितमनुसरन्तो धर्मशास्त्रप्रवीणाः सवितरि सवितारं चिन्तयन्तस्त्रिलोक्याः ॥

व्यदधेति ॥ विहितं स्मृत्यादिविहितं सदाचारः सतामाचारस्तमनुसरन्तोऽनुवर्तमानाः 'पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमर्कदर्शनात् । उत्तरान्तु समासीनः सम्यगृक्षविभावनादि'ति स्मृतेः । धर्मशास्त्राणि धर्मप्रतिपादकशास्त्राणि तेषु प्रवीणाश्चतुराः

स्मृतिविचारचतुरा इत्यर्थः । सवितरि सूर्ये, त्रिलोक्याः सवितारं स्रष्टारं हरिं चिन्तयन्तो ध्यायन्तः परिदृष्टानि ज्योतींषि सूर्यकिरणा यैस्ते तथोक्ता अवनिदेवा भूमिदेवा ब्राह्मणा ज्योतिषः, जातावेकवचनं ज्योतिषामितियावत् । अवलोको दर्शनं तस्मात्, आ पर्यन्तं नक्षत्रदर्शनपर्यन्तमित्यर्थः । सन्ध्यायां कर्तव्यः सान्ध्यस्तं नियमं कर्म साधु सम्यग् यथा भवति तथा व्यदधत चक्रुः । सूर्यास्तमयात्पूर्वमारभ्य नक्षत्रदर्शनपर्यन्तं सान्ध्यं कर्माकुर्वन्नित्यर्थः ॥ ४० ॥

**विविदुरतितरां ये देवताः षोडशोक्ता हरहरिहयपूर्वान्त्याः कलाभेदतोऽस्य ।**
**सुहुतमतिसृजन्तोऽग्न्याहितास्तेऽग्निहोत्रं व्यधुरुचितमपूर्वं येन गायत्रलोकः ॥**

**विविदुरिति** ॥ येऽग्न्याहिता आहिता अग्नयो यैस्ते अग्न्याहिताः । 'वाहिताग्न्यादिष्वि'ति सूत्राद्विशेषणस्य परनिपातः । आहिताग्नय इत्यर्थ । अस्याग्निहोत्राख्य कर्मणः, कलानां भेदो विभागस्तेनेति ततः । अवान्तरविभागाभिमानित्वेनेत्यर्थः । उक्ता 'रौद्रं गवीत्या'दि श्रुत्युक्ता हरो रुद्रः सच हरिहयः पुरन्दरः सच तौ पूर्वान्त्यौ यासां तास्तथोक्ता रुद्रपूर्वा हरिहयान्त्या इत्यर्थः । षडधिका दश षोडशदेवता अतितरां सम्यग्विविदुर्ज्ञातवन्तः । त अग्न्याहिता सुहुतमतिसृजन्तोऽतिसर्जनं नाम 'अग्नय इदं नममे'त्युक्तिस्तत्कुर्वन्तःसन्तः । येनाग्निहोत्रेण गायत्रलोको गानत्राणकर्तृत्वेन, गायतिच त्रायतिचेति व्युत्पत्या गायत्रो गायत्रशब्दवाच्यः श्रीहरिस्तस्य लोको भवति । अग्निहोत्रस्य भगवदर्पणबुद्ध्याकृतस्य ज्ञानद्वारा मोक्षहेतुत्वादिति भावः । उचितं स्तेषामुचितमपूर्वं सर्वेषामसाधारणं तमग्निहोत्रं व्यदधुश्चक्रुः । षौडशदेवताश्च— 'रौद्रं गविसद्वायव्यमुपावसृष्टमाश्विनं दुह्यमानं सौम्यं दुग्धं वारुणमधिश्रितं पौष्णं समुदयन्तं मारुतं विष्यन्दमानं वैश्वदेवं बिन्दुमन्मैत्रं शरोगृहीतं द्यावापृथिवीयमुद्वासितं सावित्रं प्रक्रान्तं वैष्णवं ह्रीयमाणं बार्हस्पत्यमुपावसानमग्नेः पूर्वाहुतिः प्रजापतेरुत्तरइन्द्र हुतमि'ति श्रुत्युक्ताः । अस्याश्चायमर्थः – गविसत्, अग्निहोत्रहोष्यं क्षीरं दोहात्पूर्वं गवि वर्तमानं, रौद्रं रुद्रो देवता अस्येति रौद्रं, तदेवपुनरुपावसृष्टं स्तनस्थं सत्, वायव्यं वायुदैवत्यं, दुह्यमानं सत्, आश्विनं आश्विदैवत्यं, दुग्धं निवृत्तदोहं सत सौम्यं सोमदेवत्यं, अधिश्रितं, उष्णिकरणाभिश्रेण्यां निगदितं वारुणं वरुणदेवताकं,

समुदयन्तं पाकानन्तरं सम्यग्गच्छन्तं पौष्णं पूषदैवत्यं, विष्यन्दमानं अतिक्वथनेन पात्रादवगलन्मारुतं मरुद्देवत्यं, बिन्दुमत् विष्यन्दसमये यदा बिन्दुयुक्तं भवति तदा वैश्वदेवं विश्वेदेवा अस्य देवता इत्यर्थः, गृहीतं सम्बद्धं शरः क्षीरस्योपरिवर्तमानो मण्डो मैत्रं मित्रदैवत्यं । उद्वासितं अग्निश्रेण्यामुद्वासितं द्यावापृथिवीयं द्यावापृथिवी तस्य देवत इत्यर्थः । प्रकान्तं होतुं प्रकान्तं सावित्रं सवितृदेवताकं, ह्रियमाणं होतुमग्निसमीपं नीयमानं वैष्णवं विष्णुदैवत्यं, उपावसनं अग्नेः समीपं प्राप्तं बार्हस्पत्यं बृहस्पतिदैवत्यं, पूर्वाहुतिः अग्नेः प्रथमाहुतिः अग्निदैवत्या, प्रजापतेरुत्तरा उत्तराहुतिः प्रजापतिदैवत्या, हुतं ऐन्द्रं, हवनक्रियेन्द्रदैवत्येत्यर्थः ॥ ५० ॥

**विधुरयमकलङ्कः स्याद्यदि स्यादवश्यं ननु निज सहजायाः सुन्दरास्येन्दुकल्पः ।**
**इति सुरललनाभिर्लालितः खेचरीभिः समधिकमधुरिम्णा पूर्णचन्द्रस्तदोदैत् ॥**

**विधुरिति** ॥ खेचरीभिः आकाशचरीभिः सुरललनाभिर्देवस्त्रीभिरयं विधुश्चन्द्रः यदि नविद्यते कलङ्कश्चिह्नं यस्य सोऽकलङ्कः स्याद्भवेत् तर्हि समधिकोऽत्युद्रिक्तो यो मधुरिमा माधुर्यं निजा आत्मीयाचसा सहजा स्वसाच निजसहजा तस्याः श्रीमहालक्ष्म्याः सुन्दरास्यमेवेन्दुस्तस्य सदृशः सुन्दरास्येन्दुकल्पोऽवश्यं स्यान्ननु सर्वथा भवेदिति लालितः श्लाघितः पूर्णचन्द्रः उदैदुदयमगात् । अयं भावः । चन्द्रो निज सहजाया रमायाः सुन्दरवदनमाधुर्यसमानमाधुर्यवान् भवति । तथापि न रमावदनसमानः । सममधुरमाधुर्यवत्वेऽपि सकलङ्कत्वात् । तस्मात्, यद्ययमकलङ्कः स्यात्तर्हि निष्कलङ्क-रमावदनसमानो भवेत् । नचायं निष्कलङ्कः । एवञ्चसति सकलङ्कत्वान्नरमावदनसमानः । एतादृश माधुर्यस्यान्यत्राभावान्नास्य समानस्तस्मादसमान एवेति ॥ ५१ ॥

**इनविरहमसह्यं प्राप्य पद्मैः सचक्रैश्चिरमिह परितप्तं पूर्वतप्तैः सुतुष्टम् ।**
**मृदुकुमुदचकोरैः पादसङ्गेन राज्ञः कमपि सकलहृद्यं कल्पयेन्नैव दैवम् ॥५२॥**

**इनेति** ॥ इह रात्रौ, चक्रैश्चक्रवाकैः सहितानि सचक्रवाकानि तैः पद्मैरसह्यमिन-विरहं सूर्यवियोगं प्राप्य चिरं रात्रिपर्यवसानपर्यन्तं परितप्तं । राज्ञश्चन्द्रस्य पादसङ्गेन किरणसम्बन्धेन पूर्वतप्तैः दिवासूर्यकिरणतप्तैः मृदुकुमुदानि मनोहरकुमुदानि तानि

चकोराश्चकोरपक्षिगणास्ते च तैः सुतृप्तं सुष्ठु सन्तोषं प्राप्तं । तथाहि— दैवं विधिः कमपि पदार्थं सकलहृद्यं सकलमनोहरं नैवकल्पयेत । निर्दोषोऽपि कश्चित् कस्यचिदप्रियो भवतीति भावः ॥ ५२ ॥

दलितेन्द्रनीलमणिनीलविभ्रमं नवकुन्दकुड्मलसितद्विजावलि ।
स्मितया नगोत्तमशिरस्सुजातया वनमालया सुरभिताशयान्वितम् ॥ ५३ ॥

दलितेति ॥ विशेषकमेतत् । 'त्रिभिः श्लोकैर्विशेषकमि'त्युक्तेः । भगवान् स श्रीमध्वो गोभिर्वचनैस्तमांस्यज्ञानान्यपनयन्नाशयन्सन् प्रजानां गतिदं मोक्षदं । आकाशपक्षेतु गमनक्रियाप्रदमित्यर्थः । मार्गदमिति वा । अन्योऽर्थोऽर्थान्तरं श्रीकृष्णाख्यं वस्तु प्रकटीचकार । तच्छास्त्रव्याख्यया तत्त्वरूपं प्रकटीचकारेत्यर्थः । भगवान् चन्द्रोऽपि स्वोदयेनार्थान्तरमाकाशाख्यं वस्तु प्रकटीचकार तत्राप्ययं विशेष इत्याह— परिपूर्णेत्यादिना । परिपूर्णसंविच्छ्रीपूर्णप्रज्ञाचार्यः, आनन्दश्च चिच्चानन्दचितौ ताभ्यां सहिताः सानन्दचितस्तादृशा गुणाः सानन्दचिद्गुणास्तेषां गणः समूहो यस्य तत्तथोक्तमर्थान्तरं श्रीहरिलक्षणं वस्तु प्रकटीचकार । चन्द्रस्तु शब्दः गुणो यस्य तच्छब्दगुणं नभः प्रकटीचकारेत्ययमेव भेदः । एतावानेव विशेष इत्यर्थः ॥

कथंभूतमर्थान्तरमित्यत आह— दलितेति । परिपूर्णसंविच्छ्रीमध्वः । दलितो विपाटितो य इन्द्रनीलमणिस्तस्य नीलविभ्रमइव नीलविभ्रमो नीलकान्तिर्यस्य तद्दलितेन्द्रनीलमणिनीलविभ्रमं । एवं विधं श्रीकृष्णाख्यं वस्तु । गगनमप्येतादृशं । 'आकाशो नीलमोदेतीति' श्रुतेः । नवानि नूतनानि यानि कुन्दकुड्मलानि तानीव सिता धवला ये द्विजा दन्ताः । 'दन्तविप्राण्डजा द्विजा' इत्यमरः । तेषामावलिः पङ्क्तिर्यस्य तत्तथोक्तं । गगनञ्च नवकुन्दकुड्मलवद्धवलनक्षत्रयुक्तं । स्मितया विकसितया नगोत्तमा वृक्षोत्तमास्तेषां शिरांस्यग्राणि तेषु सुजाता रम्यगुरुत्वा तया, सुरभिताः स्वगतपुष्पगन्धेन परिमलिता आशा दिशो यया सा तथोक्ता तया वनमालया वैजयन्त्याख्यया अन्वितं युक्तं । गगनपक्षेतु— नगोत्तमशिरस्सु पर्वतोत्तमाग्रेषु सुजातया, वनमालया वनसमूहेनान्वितमित्यर्थः । अर्थान्तरं श्रीकृष्णं गोभिर्वाग्भिः प्रकटीचकारेत्यन्वयः ।

चन्द्रस्तु गोभिः स्वचन्द्रिकाभिरुक्तप्रकारं गमनं प्रकटीचकारेति भावः । [मञ्जुभाषिणी वृत्तम् । 'सजसाजगौच यदि मञ्जुभाषिणी'त्युक्तेः] ॥ ५३ ॥

**मृदुगामिविमानसम्पदोऽरमयत्सुस्मितगोपसुन्दरीः ।**
**परितापविहीनमुज्ज्वलं सुनतं सूक्ष्मतराम्बरं वरम् ॥ ५४ ॥**

**मृद्विति** ॥ स श्रीमध्वः । यत् अर्थान्तरं, मानश्चाभिमानएव सम्पत् , विगता नष्टा मानसंपद्यासां ता विमानसम्पदो नष्टलज्जा इत्यर्थः । मृदु मनोहरं यथा भवति तथा गन्तुं शीलमासामस्तीति मृदुगामिन्यस्ताश्च ता विमानसम्पदश्चेति मृदुगामिविमानसम्पदस्ताः । शोभनं स्मितं यासां ता सुस्मिताः ताश्च ता गोपसुन्दर्यश्च सुस्मितगोपसुन्दर्यस्ताः रमयत् । आकाशमपि मृदुगामीनि यानि विमानानि तेषां सम्पदो यस्मिं तात्तथोक्तास्ताः, गां स्वर्गं पान्तीति गोपा देवास्तेषां सुन्दर्योऽङ्गनास्ताः रमयत् । मृदुगामिविमानारूढाः सुस्मिता देवाङ्गना आकाशे रमयन्तिहि परितापविहीनं स्वनम्‍-स्वाक्लेशरहितम् । आकाशन्तु जडत्वात्परितापविहीनं । उज्वलं स्वच्छं निर्दोषमिति यावत् । आकाशमपि निर्मलं । सु शोभनं नतं वीणादिवाद्यं यस्य तत्सुनतं । गोपाङ्गनाभिःसह नानावीणादिवाद्यैर्विहरदिति भावः । आकाशमपि सम्यग् व्याप्तं सूक्ष्मतरमतिसूक्ष्ममम्बरं वस्त्रं यस्य तत्तथोक्तं । आकाशन्तु सूक्ष्मतरं अतीन्द्रियञ्च तदम्बरं चेति सूक्ष्मतराम्बरं, बाह्येन्द्रियागोचरमित्यर्थः । वरमुत्तमं । एवंविधं श्रीकृष्णाख्यं वस्तु सच्छास्त्रव्याख्यानेन प्रकटीचकार । चन्द्रोऽपि स्वोदयेनैवंविधमम्बराख्यमर्थान्-प्रकटीचकारेत्यन्वयः । [सुन्दरीवृत्तम् ] ॥ ५४ ॥

**गोभिस्तमांस्यपनयन् गतिदं प्रजानामर्थान्तरं स भगवान् प्रकटीचकार ।**
**सानन्दचिद्गुणगणं परिपूर्णसंविच्चन्द्रस्तु शब्दगुणमित्ययमेव भेदः ॥ ५५ ॥**

**इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के चतुर्दशः सर्गः ॥**

व्याख्यातोऽयं श्लोकः । [वसन्ततिलकावृत्तम् ] ॥ ५५ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां चतुर्दशः सर्गः ॥

भूयोबोधस्ततो भूयो व्याचख्यौ भाष्यमद्भुतम् ।
ग्रामे ग्रामीणसामान्ये वसंस्तत्रामरालये ॥ १ ॥

**भूयोबोध इति** ॥ ततः तदनन्तरं भूयान् बोधो यस्य स तथोक्तः श्रीपूर्णप्रज्ञ. तत्र ग्रामे **'पाडिकुडेल्'** इत्यपभ्रष्टनामके ग्रामे भवा ग्रामीणा ग्रामजनाः तेषां सामान्यः साधारणस्तस्मिन् अमरालये **'कूडेल्'** नामक देवालये वसन्सन् भूयः पुनरपि अद्भुतं भाष्यं श्रीमद्भाष्यं व्याचख्यौ । [अस्मिन् सर्गे प्रायः पथ्यावक्त्रंवृत्तम् । 'युजश्चतुर्थतोजेन पथ्यावक्त्रं प्रकीर्तितमि'त्युक्तेः] ॥ १ ॥

प्रतिपक्षरथारूढं खरतर्कमहायुधम् ।
त्रिविक्रमार्यं सोऽपश्यत् प्रतिवीरमिवाग्रतः ॥ २ ॥

**परेति** ॥ स श्रीमध्वाचार्यः परपक्षएव स्वसिद्धान्तस्य प्रतिपक्षभूतसिद्धान्त एव रथस्तमारूढ आरुह्यवर्तमानस्तं खरास्तीक्ष्णा ये तर्का अनुमानानि त एव महायुधानि यस्य स तथोक्तस्तं त्रिविक्रमार्यं प्रतिवीरमिव प्रतिभटमिव अग्रतोऽपश्यत । स्वसिद्धान्तं समर्थ्य परपक्ष प्रतिपक्षभूतं पक्षमवलम्ब्य वर्तमानमतिकर्कशं त्रिविक्रमार्यमपश्यत्, यथा कश्चिद्योद्धा रथारूढं निशितनानायुधधरं प्रतिवीरमग्रतः पश्येत्तद्वदिति भावः ॥

तदा तदाननाम्भोजाद्वृत्तोपन्यासभारती ।
सेना सेनाग्रहा दिव्या शिविरादिव निर्ययौ ॥ ३ ॥

**तदेति** ॥ तदा त्रिविक्रमार्ये शृण्वतिसति वृत्ता प्रवृत्ता आदिकर्मणि 'कर्तरिचे'ति कर्तरि क्तः, दिव्या अलौकिका इने सर्वस्वामिनि आग्रहः इनाग्रहस्तेन सहिता सेनाग्रहा सर्वजगत्सृष्ट्यादिकारणस्य हरेस्तत्स्वामित्वसमर्थनपरेत्यर्थः, सेनापि सेनाग्रहा इनस्य स्वनायकस्य जयादावाग्रहेन सहिता, सेनाग्रहा उपन्यासात्मिकाचसा भारती वाक् च उपन्यासभारती तदाननाम्भोजात् तस्य श्रीमध्वस्याननमेवाम्भोजं पद्मं तस्मात् दिव्या सेना शिविरादिव सेनानिवासस्थानादिव निर्ययौ ॥ ३ ॥

नात्यत्वरा नातिरया न स्खलन्ती निरन्तरा ।
अनानात्रयवेत्येव दवीयोभिः प्रतर्किता ॥ ४ ॥

पुनः कथंभूतेत्यत आह—

**नातीति** ॥ नात्यत्वरा, त्वरत्वारहिता अत्वरा अत्यन्तमत्वरा अत्यत्वरा अतिशनै-रित्यर्थः अत्यत्वरा नभवतीति नात्यत्वरा, नातिरया, अत्यन्तं रयो वेगो यस्याः सा अतिरया, अतिरया नभवतीति नातिरया अतिवेगवती नभवतीत्यर्थः । अतिशनैर्वा, अतिद्रुतं वाच्यमाना नभवतीत्यर्थः, स्खलन्ती नभवतीति नस्खलन्ती शब्दतोऽर्थतश्च स्खलनरहितेत्यर्थः, निर्गतमन्तरं विच्छेदो यस्याः सा निरन्तरा दवीयोभिः दूरवर्तिभिः दूरशब्दादीयसुनि 'स्थूलदूर' इत्यादिना यणोलोपः पूर्वस्यगुणश्च नानाविधाश्च ते अवयवाश्च नानावयवा नविद्यन्ते नानावयवा यस्याः सा अनानावयवा, इत्येव स्वरवर्ण स्वरादिरूपनानावयवरहितैवेत्यर्थः । प्रतर्किता ऊहिता सा उपन्यासभारती निर्ययाविति पूर्वेणान्वयः । सेनाच नात्यत्वरा, नातिरया, नस्खलन्ती निरन्तराच, दवीयोभिर्दूरस्थ-पुरुषैर्दृश्यमानापि अनानावयवेत्येव रथतुरगादिनानास्वपरिकरवत्यपि तद्रहितेत्येव प्रतर्किता दूरस्थपुरुषैः सेनाप्रवाहमात्रं दृश्यते नतु तद्विशेषोपीति भावः ॥ ४ ॥

सूत्रस्यन्दनवृन्दाढ्या दुर्वारश्रुतिवारणा ।
सूपपत्तिमहापत्तिर्विचित्रस्मृतिसप्तिका ॥ ५ ॥

पुनः कथंभूतोपन्यासभारतीत्यत आह—

**सूत्रेति** ॥ सूत्राणि ब्रह्मसूत्राण्येव स्यन्दना रथास्तेषां वृन्दानि समूहास्तैराढ्या सम्पन्ना, दुर्वारा निरवकाशत्वेन प्रबलत्वाद्वारयितुमशक्या या श्रुतयस्ता एव वारणा गजा यस्याः सा, सूपपत्तयएव शोभनयुक्तयएव महापत्तयो महापदातयो यस्याः सा तथोक्ता विचित्रा विविक्षितनानार्थपरत्वेन नानाविधा याः स्मृतयः पौरुषेयग्रन्थाः ता एव सप्तयो हया यस्याः सा तथोक्ता, उपन्यासभारती तदाननाम्भोजात् दिव्या सेना शिबिरादिव निर्ययाविति पूर्वेणान्वयः ॥ ५ ॥

वर्धितोर्मिहरिप्रेष्ठा सुपयोधरसुस्वना ।
सवितानप्रकाशार्था सागरी श्रीरिवापरा ।। ६ ।।

पुनः कथंभूतोपन्यासभारतीत्यत आह—

**वर्धितेति** ।। वर्धिताः खण्डिता ऊर्मयः षड्मर्यो येन स तथोक्तः सचासौ हरिश्च तस्यातिप्रेष्ठा अतिप्रिया, 'कल्पनं कर्तनं प्रोक्तं वर्धनं छेदनं तथे'ति हलः । सुपयोधरस्य शोभनमेघस्य सुस्वनइव सुस्वनो यस्याः सा तथोक्ता वितानेन विस्तारेण सहितं यथा भवति तथा सवितान, सवितानं प्रकाशार्थः प्रकाशाभिप्रायो यस्याः सा तथोक्ता, उपन्यासभारती तदाननाम्भोजात अपरा अन्या, सागरस्यापत्यं स्त्री सागरी क्षीरसागर-तनयेत्यर्थः । श्रीरिव रमेव निर्ययावित्यन्वयः । सापि वर्धितोर्मिहरिप्रेष्ठा खण्डित-षड्मिकस्य हरेरतिप्रिया सुपयोधराचसा सुस्वनाच, सुकुचा सुस्वनाचेत्यर्थः सवितान-प्रकाशार्था विस्तारयुक्ततेजोमयद्रव्यात्मिका, अत्रार्थशब्देन स्वरूपाख्यं व्योम उच्यते । यद्वा— वर्धितोर्मिहरिप्रेष्ठा सुपयोधरसुस्वना सवितानप्रकाशार्थोपन्यासभारती, अपरा अन्या सगरस्य तदाख्यराज्ञः सम्बन्धिनी सागरी श्रीरिव सेनाख्यश्रीरिव, सगरस्य दण्डयात्रायां तत्सैन्याख्यश्रीः शिविराद्यथा निर्गच्छेत्, तथा तदाननाम्भोजान्निर्यया-वित्यन्वयः, सेनाख्यश्रीश्च, वर्धितोर्मिहरिप्रेष्ठा अश्वारोहैर्वर्धितोर्म्याख्यगतिविशेषवदश्वस्य प्रेष्ठा, सुपयोधरसुस्वना जलधरवत्सुस्वना, सवितानप्रकाशार्था सवितानं सविस्तरं यथा भवति तथा प्रकाशेन प्रादुर्भावेन अर्थः प्रयोजनं शत्रुभीषणाख्यं यस्याः सा तथोक्ता, अथवा उपन्यासभारती, अपरा सागराणां षष्ठिसहस्रसङ्ख्याकसगरापत्यानां सम्बन्धिनी सागरी श्रीरिव कान्तिरिव निर्ययाविति, सा कान्तिश्च वर्धितोर्म्याख्यगतिसम्बन्धिनी सागरी श्रीरिव विशेषवन्मेध्याश्वस्य प्रेष्ठा (स्वोदयेनवर्धितकल्लोलचन्द्रप्रेष्ठेति भावप्रका-शिकायाम्) वितानं यज्ञस्तत्प्रकाशनाख्यप्रयोजनसहिता । 'वितानं संस्तरो बर्हिः सवः सत्रश्च कथ्यते' इति हलः । अथवा उपन्यासभारती सागरी श्रीरिव कान्तिरिव निर्ययावित्यन्वयः, सापि वर्धितोर्मिहरिप्रेष्ठा स्वोदयेनवर्धितनरङ्गस्य हरेश्चन्द्रस्य प्रेष्ठा 'अर्कमर्कटमण्डूक विष्णु वासव वायवः । तुरङ्ग सिंह शीतांशु यमाश्च हरयो दश' इति हलः । सवितानप्रकाशार्था सविस्तारतेजोयुक्तरत्नाख्यपदार्थवती ।। ६ ।।

पद्मेशपदपद्मश्रित्कृत्याङ्गं पद्मजन्मनः ।
लालिता शिरसेशेन गङ्गेवाशेषपावनी ॥ ७ ॥

पुनः कथंभूतोपन्यासभारतीत्यत आह—

**पद्मेशेति** ॥ पद्माया रमाया ईशः पद्मेशः तस्य पदं पादस्तदेव पद्मं तत् श्रयत इति पद्मेशपदपद्मश्रित्, गङ्गाच विष्णुपदाश्रिता, पद्मात् श्रीहरिनाभिपद्मात् जन्म यस्य स तथा तस्य विरिञ्चस्य, कृत्यस्य व्यापारस्याङ्गं साधनं कृत्याङ्गं ब्रह्मपदप्राप्त्यनन्तरं तद्व्यापारं कर्तुमङ्गभूतेत्यर्थः । एतेन एतच्छास्त्रव्याख्यानं ब्रह्मपदप्राप्तेरपि हेतुर्भवति तयोग्यस्येत्युक्तं भवति । गङ्गाच हरिचरणक्षालनात्मकव्यापाराङ्गभूता, ईशेन रुद्रेण शिरसा लालिता, भक्तिवशाच्छिरसि बद्धा अपिनाश्रुतेति भावः । गङ्गापि साक्षाच्छिवेन शिरसा धृता । एवंभूतोपन्यासभारती गङ्गेवाशेषपावनी, अशेषं सुरनरनागादिसकलं जगत्पावयितुं शीलमस्या इति तथोक्ता यद्वा, एतादृशी उपन्यासभारती अशेषपावनी गङ्गेव तदाननाम्भोजान्निर्ययावित्यन्वयः ॥ ७ ॥

नारायणोऽनन्तगुणो ब्रह्माख्यो वेदवेदितः ।
विश्वकर्तेति विश्वज्ञः श्रुत्या युक्त्याप्यसीषधत् ॥ ८ ॥

किं तदुपन्यासप्रतिपाद्यमित्यत आह—

**नारायण इत्यादिना** ॥ विश्वं सकलं जानातीति विश्वज्ञः श्रीपूर्णप्रज्ञाचार्यः, नारायणः, नविद्यन्ते अन्तः देशतः कालतो गुणतः सङ्ख्यातश्च परिच्छेद इति अनन्तास्तादृशा गुणा ज्ञानभक्तिबलैश्वर्यवीर्यतेजः प्रभृतयः शुभधर्मा यस्य सोनन्तगुणः ब्रह्मेत्याख्या नाम यस्य स तथोक्तः परिपूर्णत्वान्मुख्यतो ब्रह्माख्येति वेदैः सर्ववेदैर्वेदितो मुख्यतः प्रतिपादितो वेदवेदितः वेदैरेववेदितो नत्वनुमानादिनेति वा, विश्वस्य कर्ता विश्वकर्ता इति श्रुत्या वेदेन युक्त्या अनुमानेन च असीषधत् असाधयत् । राधसाध संसिद्धौ लुङ् । अनन्तगुणत्वञ्च - 'यः पार्थिवानि विममे रजांसि । सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिभिः, ब्रह्माख्यत्वञ्च - 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' एष पन्था', एतत्कर्मैतद्ब्रह्म, एष उ एव ब्रह्मैव उच्यते'त्यादिभिः, वेदवेदितत्वञ्च 'तावा एता

ऋचः सर्वेवेदाः सर्वे घोषा एकैव व्याहृतिः प्राणऋच इत्येवविद्यात् स एव सर्ववेदेभ्य' इत्यादिभिः, विश्वकर्तृत्वञ्च— 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा, नतं विदाथ य इमा जनान, आत्मा वा इदमेक अग्र आसीन्ना-न्यत्किञ्चनमिषत्, स ऐक्षत, लोकानसृजत इति स इमाँल्लोकानसृजत्' इत्यादिभिः, अर्सीषधत् ॥ ८ ॥

प्रधानमपराधीनं कारणं परिणामि यत् ।
पयोवदिति चेत्साध्यवैकल्यं स्यान्निदर्शने ॥ ९ ॥

अथ 'प्रधानमपराधीनमि'त्यारभ्य विष्णुर्मोक्षस्य दातेत्येतदन्तःप्रबन्धो नाराय-णोऽनन्तगुण इत्याद्यर्थस्य प्रतिपादकः । यदुक्तं नारायणस्यानन्तगुणत्वादिकं श्रुत्या युक्त्यासीषधदिति तत्र नारायणस्याखिलकर्तृत्वयुक्त्यादेः प्रत्यर्थिभूतं साङ्ख्यमतमनू-द्यदूषयति—

**प्रधानमित्यादिना** ॥ प्रधानं प्रधानाख्यतत्वं परस्य अधीनं तन्त्रं पराधीनं तन्त्रभवतीत्यपराधीनं स्वतन्त्रमित्यर्थः । कारणं, यद्यस्मात्परिणामो विकारोऽस्यास्तीति परिणामि, तस्मात् विकारित्वादित्यर्थः । प्रधानं स्वतन्त्रकारणं परिणामित्वात् यत्परिणामितत्स्वतन्त्रकारणं पयोवत् क्षीरवत् अत्र कारणत्वमात्रसाधने कुलालादौ सिद्धसाधनं तन्निवृत्यर्थं स्वतन्त्रमिति, यथा क्षीरमपराधीनमेव विकृत्य दधिभावं भजते एवं स्वतन्त्रमेव प्रधानं जगदाकारेण परिणमत इत्यभिप्रायः । चेद्यदि इति ब्रूयात्तर्हि निदर्शने दृष्टान्ते साध्यवैकल्यं साध्यराहित्यं स्यात् इति वक्तव्यमिति शेषः, स्वतन्त्र कारणत्वं हि साध्यं नतु दृष्टान्ते नविद्यते 'एतेनहवावपयोमण्डं भवति, नऋते-त्वत्क्रियते किञ्चनारे, द्रव्यं कर्मच कालश्च स्वभावो जीव एवच' इत्यादिना क्षीरदधि भावस्य विष्ण्वधीनत्वाङ्गीकारात् ॥ ९ ॥

विवादाध्यासिता सृष्टिश्चेतनेच्छानुसारिणी ।
सृष्टित्वात्पटसृष्टिर्वेत्यनुमा पक्षसाधिका ॥ १० ॥

एवं परिणामित्वानुमानस्य दृष्टान्ते साध्यवैकल्योक्तया प्रतिपक्षे दूषितेऽपि स्वपक्षे साधकोपन्यासेन विना स्वसिद्धान्तप्रतिष्ठाया असिद्धत्वादुपन्यासः कर्तव्यः तत्र सत्यप्यागमे अनुमानेन प्रत्यवतिष्ठमानं परं प्रति तदुपन्यास एव न्याय्य इत्यनुमानोप-न्यासमेव करोति

**विवादेत्यादिना** ॥ विवादं विप्रतिपत्तिविषयत्वमध्यासिता आरोपिता विवादा-ध्यासिता स्वतन्त्रजडाधीनेति चेतनाधीनेति च वादिप्रतिवादिविप्रतिपत्तिविषयीभूतेत्यर्थः। सृष्टिः जगत्सृष्टिः चेतनेच्छानुसारिणी चेतनेच्छाधीना सृष्टित्वात्घटसृष्टिवत् । 'वा विकल्पोपमानयोः' इत्यमरः । इति एवं अनुमा व्याप्त्यादिवदनुमा पक्षसाधिका अस्माकमिति शेषः ॥ १० ॥

यच्चेतनाचेतनयोरङ्गाङ्गित्वादि मन्वते ।
स्रष्टारीशानपेक्षायां तन्न शोभनतां व्रजेत् ॥ ११ ॥

निरीश्वराः सेश्वरा इति द्विविधाः साङ्ख्याः तत्र निरीश्वराः केचित्केवलादेव जडात्सृष्टिमाचक्षते, केचिच्चेतनाचेतनयोरङ्गाङ्गिभावत्वमाचक्षते, तत्र केवलाचेतनस्य स्रष्टृत्वं निराकृत्य चेतनाचेतनयोरङ्गाङ्गिभावेन स्रष्टृत्वं निराकरोति—

**यदित्यादिना** ॥ सृष्टौ जगत्सृष्टिविषये चेतनो जीवः सच अचेतनः प्रधानं तयोः, यदङ्गमुपसर्जनं अङ्गि मुख्यं, तयोर्भावावङ्गाङ्गित्वे त आदिर्यस्य तदङ्गाङ्गित्वादि मन्वते अङ्गीकुर्वन्ति । चेतनाचेतनयोरङ्गाङ्गित्वं नाम चेतनस्योपसर्जनत्वं, अचेतनस्य प्रधानत्वं यथा आम्लसंयोगात्परिणम्य दध्याख्यं कार्यमुत्पादयदपि क्षीरं आम्लसंयोगं यथा पुरुषव्यापारमपेक्षते एवं सर्वकार्यमुत्पादयदपि जडं प्रधानतत्वं चेतनानुग्रहमपेक्षत इति मन्वत इत्यर्थः । तदेवं तैरङ्गीकृतं प्रमेयं ईशानपेक्षायां सत्यां शोभनतां विवेकिभिरङ्गीकारार्हतां न व्रजेत्, तथाहि चेतनाचेतनयोरन्योन्यं संसृज्यैव ह्यङ्गाङ्गिभावेन कर्तृत्वं वक्तव्यं, तत्रान्योन्यसंसर्गाख्यमादिकार्यं चेतनापेक्षं, जडमेव नोत्पादयेत्, केवलाचेतनस्य कार्यानुत्पादकत्वाङ्गीकारात् अन्यथा कार्यान्तरेऽपि तत्प्रसङ्गात् । एवं चेतनस्याप्यचेतनानुग्रहापेक्षायामन्योन्याश्रयप्रसंगात् । तस्माच्चेतना-

चेतननियामकस्वतन्त्रेश्वराङ्गीकारे तयोरन्योन्यप्रत्यासत्तेरेवासम्भवान्निरीश्वरसाङ्ख्यमतम-शोभनं, अंगांगित्वादि इत्यत्रादिशब्देन अचेतनव्यतिरिक्तचेतनमनङ्गीकुर्वतो भूत चतुष्टयारब्धं सर्वं कार्यमभ्युपगच्छतश्चार्वाकस्य मतमप्यशोभनमित्युक्तं भवति । तेनैवादिशब्देनेश्वरमभ्युपगच्छतामपि सेश्वरसांख्यादीनामप्यशोभनमितिच वेदितव्यम्॥

सर्वविन्निर्मितं सर्वं कादाचित्कत्वहेतुतः ।
न यदेवं नो तदेवं यथात्मेतीश्वरानुमा ॥ १२ ॥

नन्वीश्वरसिद्धौ प्रमाणाभावात्कथं तदंगीकारो युक्तः वेदः प्रमाणं तत्सद्भाव इति चेन्न तदप्रामाण्यवादिनं प्रति तेन तत्साधनायोगात्, नापि प्रत्यक्षमत्र प्रमाणं तस्यातीन्द्रियत्वांगीकारात्, नचानुमानं मानं सर्वज्ञेश्वरान्तराभावेन निदर्शनाभावात्, अतएवाप्रसिद्धविशेषणत्वं तस्मादीश्वरस्याप्रामाणिकत्वात्कथमनीश्वरमतमशोभनं स्यात् इत्याशङ्क्य, नायं दोषः केवलव्यतिरेक्यनुमानेनेश्वरसिद्धेरित्याह—

**सर्वविदित्यादिना** ॥ सर्वं समस्तकार्यजातं सर्वविन्निर्मितं, सर्वज्ञेननिर्मितं, कदाचिद्विद्यमानं कादाचित्कं तस्य भावः कादाचित्कत्वं तदेव हेतुस्तस्मादिति ततः, कादाचित्कत्वात् अभूत्वाभावित्वादित्यर्थः, यद्वस्तु सर्वविन्निर्मितं नभवति तत्कादाचि-त्कमपि नभवति यथा आत्मा इत्येवमीश्वरानुमा, अस्मत्पक्ष ईश्वरसाधकानुमानमस्तीति शेषः ॥ १२ ॥

बलाय सर्वानुमानां वेदाः स्युर्यैरपान्विताः ।
कामादेताः प्रवर्तन्ते कामिन्य इव भर्तृभिः ॥ १३ ॥

यदुक्तं वेदप्रामाण्याभावान्नतेनेश्वरसिद्धिरिति तदभ्युपगम्य केवलव्यतिरेक्यनुमान-मीश्वरसिद्धौ प्रमाणमित्यभिधायेदानीं प्रामाण्यमनंगीकृत्य केवलानुमानेनाभिलषित प्रमेयसिद्ध्यंगीकारेऽतिप्रसंगः स्यादित्याह---

**बलायेत्यादिना** ॥ वेदाः सर्वानुमानां समस्तानुमानानां बलाय प्राबल्याय स्युर्भवेयुः वेदानुकूल्येसत्येवानुमानेनातीन्द्रियधर्मादितत्तदभिलषितप्रमेयसिद्धिर्भवति नान्यथेत्यर्थः,

कुत इत्यत आह— वेदैरिति । वेदैरपालिता अननुगृहीता एता अनुमा कामात् तत्तद्वादिनामिच्छानुसारात् कामिन्यस्वैरिण्यः स्वाभिलषितभर्तृभिरिव प्रवर्तन्ते । अयं भावः स्वस्वभर्तृभिरनियताः स्वैरिण्यो यथा स्वाभिलषितकामिभिः सह वर्तन्त एवं वेदैरनियता अनुमा अपि तत्तद्वादिनामिच्छानुसारेण प्रवर्तन्ते तस्माद्वेदसाहाय्यरहितानां तासां नप्रामाण्यमिति । तथाचोक्तं 'श्रुतिसाहाय्यरहितमनुमानं नकुत्रचित् । निश्चयात्साधयेदर्थं प्रमाणान्तरमेवचे'ति तस्माद्वेदप्रामाण्यमवश्यमंगीकार्यमेवेति वेदएवेश्वरसिद्धौ प्रमाणमिति ॥ १३ ॥

कारणं परिणामि स्याद्ब्रह्म नो चेतनत्वतः ।
न यदित्थं नो तदित्थं यथा क्षीरपुरस्सरम् ॥ १४ ॥

भास्करादयः केचिद्वादिनो ब्रह्मैव जगदाकारेण परिणमत इति वर्णयन्ति तन्मतमपाकरोति—

**कारणमिति** ॥ ब्रह्म परिणामो विकारोऽस्यास्तीति परिणामि कारणं नस्यात् परिणामित्वेन कारणं नभवितुमर्हतीत्यर्थः । कुत इत्यत आह— चेतनत्वत इति । चेतनत्वतश्चेतनत्वात् यद्वस्तु इत्थं परिणामिकारणं नभवतीति न तद्वस्तु इत्थं चेतनमिति नो नभवति । क्षीरं पुरस्सरं आदिर्यस्य तत्क्षीरपुरस्सरं वस्तु यथा । इत्थमत्रप्रयोगः ब्रह्म परिणामिकारणं नभवति चेतनत्वात् यत्परिणामिकारणं तदचेतनं यथा क्षीरादिकं नतथेदमचेतनं तस्मान्नपरिणामिकारणमिति । अत्र ब्रह्म कारणं नभवतीत्युक्ते ब्रह्मणः सर्वकारणत्वाभ्युपगमविरोधः स्यात्तस्मात्परिणामिकारणं नभवतीति साध्यनिर्देशः कृतः ॥ १४ ॥

न विश्वकृत्पशुपतिः श्रूयमाणगुणत्वतः ।
चैत्रवत्कि पुनर्विघ्नब्रह्माद्या बाल्शङ्किताः ॥ १५ ॥

यदुक्तं ब्रह्माख्यो नारायणो विश्वकर्तेति तदयुक्तं पशुपतिगणपतिस्कन्दसूर्यादीनामेव विश्वकर्तृत्वप्रतिपादक तत्तदागमनिरुद्धत्वादित्याशङ्क्य परिहरति—

**न विश्वकृदित्यादिना** ॥ पशूनां प्रजानां पतिः पशुपती रुद्रः विश्वकृन् सर्वकर्ता नभवति, कुत इत्यत आह श्रूयमाणागुणत्वतः, श्रूयमाणाः 'सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं य कामये तंतमुग्रं कृणोमि' इत्यादि वेदवाक्येषु प्रतिपाद्यमाना अगुणा दुःखित्व पारतन्त्र्यादिदोषास्तद्वत्त्वेन, क इवं चैत्रवत् विश्वकर्तृत्वं दुर्घटं, किं वक्तव्यम् विघ्नेशादीनामिति भावेनाह किं पुनरिति । बालैरविवेकिभिः शंकिता जगत्कर्तृत्वेन शङ्किता विवेकं विना बाहुल्येनापाततः प्रतीत्यनुसारेण श्रुत्यर्थं निश्चयं कुर्वद्भिस्तत्तद्वादिभिः सर्वकर्तृत्वादिगुणवत्वेनानिश्चिता इत्यर्थः । विघ्नो विनायकः ब्रध्नः सूर्यस्ताद्यौ येषां स्कन्दादीनां ते तथोक्ता देवाः किं पुनर्विश्वकर्तृत्वादिगुणवन्तो न भवन्तीति वक्तव्यम् । अनेन यदुक्तं नारायणस्य सर्वकर्तृत्वं पाशुपताद्यागमविरुद्धमिति तदयुक्तं, श्रुतिप्रसिद्धदुःखित्वपारतन्त्र्यादिदोषयुक्तपशुपत्यादीनामेव स्वातन्त्र्येण विश्वकर्तृत्वप्रतिपादकपाशुपताद्यागमानां दोषशङ्काकलङ्करहितश्रुतिविरोधेनाप्रामाण्यमित्युक्तं भवति ॥ १५ ॥

ननु सौख्यादिमान्नेशो दुःखादिरहितत्वतः ।
यो नैवं स्यात्स नैवं स्याद्यथा संसृतिमानिति ॥ १६ ॥

यदुक्तं नारायणोऽनन्तगुण इति, नारायणस्य सुखाद्यनन्तगुणत्वं तदसहमाना वैशेषिकाः प्रत्यवतिष्ठन्त इति भावेन तावत्तन्मतमनुवदति—

**नन्वित्यादिना** ॥ नन्वित्याक्षेपे ईशो भवद्भिः सौख्याद्यनन्तगुणत्वेनाङ्गीकृतो नारायणाख्य ईशः, सुखमेव सौख्यं तदादिर्येषां ते सौख्यादयस्त अस्य सन्तीति सौख्यादिमान् सुखादिविशिष्ट इत्यर्थः, न नभवति, दुःखादिरहितत्वतः दुःखमादिर्येषां ते दुःखादयस्तैरहितस्तस्य भावस्तत्वं तस्मादिति ततः, दुःखादिरहितत्वादित्यर्थः । य एवं नस्यात्सौख्यादिरहितो नस्यात् स एवं नस्यात् दुःखादिरहितो नस्यात्, संसृतिमान् संसारवान् यथा तथेत्यर्थः । विमत ईश्वरः सुखादिरहितः दुःखादिरहितत्वात् यः सुखादिरहितो नभवति स दुःखादिरहितो नभवति यथा संसारी, नचायं दुःखादिमान् तस्मान्नसुखादिमान् इत्यापादनं वा, सौख्यादीत्यत्रादिशब्देन क्रियादयो

गृह्यन्ते, दुःखादीत्यत्रचादिशब्देनाज्ञानादयो गृह्यन्ते इत्यनुमानविरुद्धत्वान्नारायणस्य सौख्याद्यनन्तगुणवत्वं नयुज्यत इति भावः ॥ १६ ॥

**एवं चेद्विमतो ज्ञानी न भ्रान्तिरहितत्वतः ।**
**य एवं नो स एवं नो भवीवेत्यनुमीयते ॥ १७ ॥**

इति परोक्तानुमानं प्रत्यनुमानेन दूषयति—

आ/२८/
आ/८/

**एवञ्चेदित्यादिना ॥** एवं चेत् दुःखादिरहितत्वानुमानस्य पक्षधर्मता बलादनेनानुमानेनेश्वरस्य श्रुत्यादिसिद्धमपि सुखादिमत्त्वं निवार्यतेचेत्, वयमपि पक्षधर्मादिमता केवलानुमानेन तत्तद्वादिभिः सर्वज्ञत्याङ्गीकृतस्येश्वरस्य ज्ञानित्वमात्रमपि दुर्घटमिति साधयामः इति भावः । विमतः वादिप्रतिवादिनोः सर्वज्ञत्वा सर्वज्ञत्वाभ्यां विप्रतिपत्ति विषय ईश्वरः ज्ञानमस्यास्तीति ज्ञानी नभवति, भ्रान्तिरहितत्वतः भ्रान्त्या भ्रमज्ञानेन रहितस्तस्य भावस्तत्त्वं तस्मात् भ्रान्तिज्ञानशून्यत्वादिति भावः । य एवं नस्यात् ज्ञानरहितो नस्यात् सएवं नस्यात् भ्रान्तिज्ञानशून्योऽपि नस्यात्, भवः संसारोऽस्यास्तीति भवी स इव संसारी यथेत्यर्थः । इत्यनुमीयते अस्माभिरिति शेषः । श्रुतिसिद्धमपीश्वरस्य सुखादिमत्त्वं केवलानुमानेन निवार्यते चेत् तादृशानुमानेनेश्वरस्य ज्ञानमात्रशून्यत्वमपि साधयितुं शक्यत इत्यभिप्रायः ॥ १७ ॥

**सर्वज्ञस्याज्ञतां वेदः श्रद्धेयो निरुणद्धि चेत् ।**
**तस्यैवामन्दमानन्दं वदन्नाश्राव्यसौ कथम् ॥ १८ ॥**

नन्वेवं केवलानुमानेनेश्वराज्ञत्वसाधनमयुक्तं । 'यः सर्वज्ञः सर्ववित्' इतीश्वरस्य सर्वज्ञत्वप्रतिपादकवेदविरुद्धत्वात्, वेदस्य प्रमाणत्वमस्माकं भवद्भिरप्यङ्गीकृतमेव, नचात्र भ्रान्तिरहितत्वहेतुः कालात्ययापदिष्ट इत्याशङ्क्यैवञ्चेद्दुःखादिरहितत्वहेतुरपि कालात्ययापदिष्टः स्यादिति भावेन परानुमानमपि प्रतिबन्द्या प्रतिक्षिपति—

**सर्वज्ञस्येत्यादिना ॥** श्रद्धेयः प्रमाणत्वेनादरणीयो वेद ईश्वरस्य सार्वज्ञ्यप्रतिपादकः । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इत्यादिवेदः, सर्वज्ञस्य वेदेन

सर्वज्ञत्वेनावधारितेश्वरस्य अज्ञतां चेद्वदि, विरुणद्धि निवारयति तर्हि तस्यैव यः सर्वज्ञ इति श्रुतिविषयस्यैवेश्वरस्य अमन्दं परिपूर्णं आनन्दं वदन् असौ 'आनन्दं ब्रह्मणो विद्वान्, नबिभेति कुतश्चन, आनन्दो ब्रह्मेति व्यजानात्, कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो नस्यात्' इति वेदः कथं केन प्रकारेण नाश्रावि त्वया नश्रुतः। यदि यः सर्वज्ञ इत्यादिश्रुतिबलेन त्वयेश्वरस्याज्ञत्वं निवार्यते तह्यानन्दं ब्रह्मणो विद्वानित्यादेरपि श्रुतित्वाविशेषात्तथैव श्रुत्याप्रतिनमीश्वरस्य सुखित्वमपि ननिराकर्तुमुचितमिति भावः ॥ १८ ॥

**दुःखं परिजिहीर्षन्यः सुखं नोरी चिकीर्षति ।**
**स हन्तापतितं दुःखमीशस्य व्यस्मरज्जडः ॥ १९ ॥**

ननु कथमीश्वरस्य सुखमङ्गीकाराहं सुखित्वे दुःखित्वापातात् तथाहि विमतश्चैत्रो दुःखी सुखित्वात् यथा मैत्र इति व्याप्तेः प्रमितत्वात् 'आनन्दं ब्रह्मण' इत्यादिश्रुतेश्च दुःखाभाव एवार्थः। एवञ्च ब्रह्मणो दुःखाभावातिरिक्तभावरूपसुखसद्भावे प्रमाणाभावात् कथमीश्वरः सुखादिरहितः दुःखादिरहितत्वादित्यनुमानस्य कथं कालात्ययापदिष्टतेत्याशङ्क्य परिहरति—

**दुःखमित्यादिना ॥** दुःखं परिजिहीर्षन् परिहर्तुमिच्छन् यो वादी तार्किकः सुखं दुःखाभावातिरिक्तं भावरूपं सुखं नोरी चिकीर्षति नांगीकर्तुमिच्छति, जडोऽविवेकी स अंगीकर्तुमनिच्छताप्यंगीकार्यतयाप्राप्तमीशस्य दुःखं व्यस्मरत् विस्मृतवान् हन्त! आश्चर्यम्। अस्य मौढ्यमितियावत्, अयमत्राभिप्रायः ईश्वरस्य चेतनत्वेन काचिद्विप्रतिपत्तिः, चेतनस्य च सुखदुःखयोरन्यतरान्यतराविनाभावे नियमो दृष्टो देवदत्तादौ, विमतो देवदत्तः सुखदुःखयोरन्यतराविनाभूतश्चेतनत्वात य सुखदुःखयोरन्यतराविनाभूतो नभवति नासौ चेतनो भवति यथा घट इत्यनुमानात् 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखमि'त्यागमात्, सर्वेषामनुभवाच्चेश्वरस्य चेतनत्व सुखदुःखयोरन्यतराविनाभूतत्वमभ्युपगन्तव्यम्, तत्रच सुखित्वानभ्युपगमे दुःखित्वं बलादापतति, तदभ्युपगमाद्वरमीश्वरस्य निर्दुःखानन्दाभ्युपगम इति, तथाच यदुक्तं सुखित्वे

दुःखित्वापातान्नेश्वरः सुखी तस्य परमानन्दत्वश्रुतिस्तु दुःखाभावविषयेति दुःखादिरहितानुमानस्य कथं कालात्ययापदिष्टतेति तदसत् ॥ १९ ॥

यो दुःख समवायोऽयं चैत्रे तेन ह्यभेदवान् ।
समवायः कश्चिदीशे तदनेकत्वमन्यथा ॥ २० ॥

एवमीश्वरः सुखादिरहितः दुःखरहितत्वादित्यनुमानस्य कालात्ययापदिष्टतां व्युत्पाद्य परीत्या सिद्धिमपि व्युत्पादयति—

यो दुःख समवाय इत्यादिना ॥ चैत्रे वर्तमानो योऽयं दुःखसमवायस्तेन चैत्रवर्तिना दुःखसमवायेन, अभेदोऽस्यास्तीत्यभेदवान्, कश्चित्समवायः ज्ञानादिसमवायः ईशेऽपि वर्तते हि यस्मात् तस्मादीशोऽपि दुःखसमवायवान् स्यादितिशेषः, ततश्च दुःखी स्यात्। नहि दुःखसमवायसत्वातिरिक्तं चैत्रेऽपि विद्यते। अयं भावः चैत्र इति संसार्युपलक्षणं, संसारिणि तावद्विप्रतिपन्नो दुःखसमवायो वर्तते; ईश्वरे च ज्ञानेच्छादिसमवायः, तयोश्च समवाययोरभेद इति वैशेषिकादिसिद्धान्तः, तथाचोक्तं- 'समवायस्तु सम्बन्धो नित्यः स्यादेक एव स' इति, ततश्च दुःखसमवायवान् संसारी यथा न दुःखरहितः, तथा दुःखसमवायादभिन्नसमवायवत्वादीशोऽपि न दुःखरहितः. तस्माद्दुःखादिरहितत्वानुमानस्यासिद्धत्वान्नेश्वरसौख्यादिराहित्यं साधयितुं शक्यत इति; ननु भवेदेतदेवं, यदि संसारिणिवर्तमानदुःखादिसमवायस्येश्वरे वर्तमानज्ञानेच्छादिसमवायस्याचाभेदः स्यात् स एव नाङ्गीक्रियत इत्यत आह— तदित्यादि। अन्यथा, तयोः समवाययोर्भेदाङ्गीकारे तदनेकत्वं तस्य समवायस्यानेकत्वं स्यादिति शेषः, ततश्च सर्वगतस्य नानाप्रतियोगिकस्यापि समवायस्यैकत्वमभ्युपगच्छतां तेषां तदनेकत्वाङ्गीकारेऽपसिद्धान्तस्यादिति भावः ॥ २० ॥

औपाधिकोऽस्य भेदश्चेत्तयोऽसत्यः स्विदुच्यताम् ।
तद्द्वयं चोक्तदोषं हि पार्थिवन्मा वदेत्परम् ॥ २१ ॥

नन्वनेकवृत्तिसमवायस्यैकत्वेऽपि चैत्रमैत्रादीनामुपाधिसम्बन्धादौपाधिकभेदोऽङ्गीक्रियत एव। तस्माद्यद्यप्येक एव समवायस्तथापि यश्चैत्रदुःखसमवायो नासावीश्वरेऽस्ति,

यथा खलु सर्वगतस्याकाशस्यैकत्वेऽपि तस्य घटाद्यनेकोपाध्यवच्छेदेन घटाकाशो मठाकाश इति भेदव्यवहारः, तत्राकाशभेदाभावेऽपि यथा पूर्वोक्तव्यवहारः, एवं समवायस्यैकत्वेऽपि चैत्रमैत्राद्युपाधीनां भिन्नत्वाच्चैत्रगतो दुःखसमवायो नेश्वरेऽस्ति, ईश्वरगतो नित्यज्ञानादिसमवायो न चैत्र इति समवायस्यौपाधिकभेदाङ्गीकारात्कथमीश्वरस्य दुःखसमवायः स्यात्कथञ्च दुःखरहितत्वानुमानस्यासिद्धिरित्याशङ्क्य परिहरति—

**औपाधिक इत्यादिना** ॥ अस्य समवायस्य उपाधिना प्राप्त औपाधिकः, भेदश्चेत् यद्यङ्गीक्रियते तर्हीदं पृच्छामीति शेषः । किमित्यत आह— सत्य इति । स औपाधिकभेदः सत्यः स्वित्? परमार्थतः किं? असत्यः स्वित् अपरमार्थिको वा? मिथ्यावेत्यर्थः उच्यतां, एवमस्माभिः पृष्टेन त्वया त्वदभिलषितार्थोऽभिधीयतां, कस्मिन् सति किं स्यादित्यत आह– तदिति । तद्द्वयं तत्पक्षद्वयं उक्तौ दोषौ यस्य पक्षद्वयस्य तदुक्तदोषं, तथाहि औपाधिकस्यापि समवायभेदस्य पारमार्थिकत्वे समवायानेकत्वं वास्तवं स्यात् तथाचापसिद्धान्तः स्यादिति भावः, असत्यश्चेन्नास्तिभेद इत्युक्तं भवति, तथाच यश्चैत्रगतो दुःखसमवायः स एवेश्वरेऽपीति कथमसौ दुःखादिरहितः स्यात्, दुःखसमवायवतोऽपि दुःखराहित्ये चैत्रस्यापि किं न स्यादविशेषादित्युक्तदोषं तत्पक्षद्वयमिति भावः, ननु सत्यासत्यपक्षातिरिक्ततृतीयपक्षाङ्गीकारात्कथं पक्षद्वयोक्तदोषसञ्चारस्तत्रेत्याशङ्क्य तन्नभवतीत्याह— मायिवदिति । मायिवत् सदसद्विलक्षणं नाम पक्षान्तरं मा वद, सदसद्विलक्षणमिति स्वव्याहतभाषणं मायिनामेव भूषणं, ननु तार्किकं मन्यस्य वैशेषिकस्येति भावः, एवं तृतीयपक्षासम्भवात्पक्षद्वयेचोक्तदोषानिस्तारात्समवायभेदासम्भवेनेश्वरस्यापि दुःखसमवायित्वात्तद्दुःखादिरहितत्वमिति नतेनेश्वरस्य सौख्यादिराहित्यसाधनं सङ्गच्छत इति सर्वेश्वरस्य भगवतः सौख्याद्यनन्तगुणाकरत्वं युक्तमिति स्थितमेतत् ॥ २१ ॥

ब्रूयुरौपाधिकं भेदं ज्ञानादीनां यदात्मनः ।
नीत्यानया तन्निरासात्स्यात्तस्यानन्तधर्मता ॥ २२ ॥

एवं समवायस्यौपाधिकभेदनिरासेनान्यच्च तन्मनीषितं प्रमेयं निरस्तमित्याह—

**ब्रूयुरित्यादिना ॥** आत्मनः परमात्मनः ज्ञानमादिर्येषां ते ज्ञानादयस्तेषां ज्ञानेच्छाप्रयत्नादिगुणानामित्यर्थः, उपाधिना प्राप्तमौपाधिकं उपाधिनिमित्तकं भेदं ब्रूयुरेतियत् अनया नीत्या समवायस्यौपाधिकभेदनिरासयुक्तया तन्निरासात तस्य औपाधिकभेदस्य निरासात् अन्ततः परिशेषाद्भेदस्यैव वास्तवत्वेसति तस्य परमात्मनः अनन्ता धर्मा यस्य सोऽनन्तधर्मा तस्य भावोऽनन्तधर्मता अनन्तगुणता स्यात्, अत्र भावः अस्तितावदात्मगुणानां भेदः, तस्य चोक्तप्रकारेणौपाधिकत्वासम्भवात्स्वाभाविकत्वमनिच्छताप्यङ्गीकार्यं, तस्मादात्मनोऽनन्तगुणता स्यादिति ॥ २२ ॥

गुणादिभेदे सम्बन्धमपेक्ष्याप्यनवस्थितेः ।
विशेषमात्रेणानन्त्यं गुणानां शोभते विभोः ॥ २३ ॥

यच्चान्यदुच्यते, वैशेषिकेण, अवयवावयविनोः, क्रिया क्रियावतोः, जातिव्यक्त्योः, विशेषनित्यद्रव्ययोश्च सम्बन्धः समवाय इति, तच्च नघटत इत्याह—

**गुणादीत्यादिना ॥** गुणादिभेदे गुणादीनां गुण्यादिभ्यो भेदेऽङ्गीक्रियमाणे सम्बन्धं अपेक्ष्य भेदिनोर्गुणगुणिनोर्भेदस्य च मिथः सम्बन्धमपेक्ष्यचाप्यनवस्थितेः, गुणगुणिनोर्भेदो नयुज्यत इति भावः, तथाहि गुणगुणिनौ भिन्नावित्यत्र विशेष्यभूतयोर्गुणगुणिनोर्विशेषणभूतस्य भेदस्य च मिथो भेदोऽङ्गीकार्यः अन्यथा विशेष्य विशेषणभावा सम्भवात्, अस्य भेदस्य गुणादीनां भेदिनां च मिथो भेदोऽस्त्येव अन्यथेश्वरस्य गुणित्वासम्भवात्, गुणानामेव मिथो भेदाभावे तेषामानन्त्यासम्भवाच्च, तस्माद्गुणादिभेदाङ्गीकारेऽनवस्थाप्रसङ्गो भवतामपि सम इत्याशङ्क्य परहरति– विशेषमात्रेणेति । भवेदेवमनवस्था, यदि वयमीश्वरस्य तद्गुणानाञ्च भेदमङ्गीकुर्मः, नचैवं, किन्तर्हि, ईश्वरस्य तद्गुणानाञ्चाभेदवादिनोऽपि वयं विशेषमङ्गीकुर्मः, विशेषो नाम भेदहीने वस्तुनि भेदनिमित्तानेकव्यवहारहेतुभूतः, तथाचोक्तं— भेदहीनेत्वपर्यायशब्दान्तरनियामकः । विशेषोनामकथितः सोऽस्तिवस्तुष्वशेषत' इति, तस्माद्भेदानङ्गीकारेऽपि विशेषमात्राङ्गीकारात् विशेषमात्रेण विभोर्व्याप्तस्य नारायणस्य गुणानामानन्त्यं शोभते, मात्रशब्दो भेदानङ्गीकारद्योतकः, विशेषबलादेवानन्दादीनां

गुणत्वमीश्वरस्य च गुणित्वं, तयोर्भेदाभेदात्मकत्वमाश्रित्य, गुणानामानन्त्यादीनां विशेषबला-देवानन्त्यमपि घटत इति भावः ॥ २३ ॥

मन्यन्ते शून्यमेवान्ये तत्त्वमागमवैरिणः ।
मता माध्यमिकास्तेऽपि व्यक्ताश्छन्ना इति द्वये ॥ २४ ॥

इदानीमप्राकृत भगवद्गुणानामानन्त्यमसहमानानां शून्यवादिनां, मायावादिनाञ्च, परापरप्रमेययोर्विशेषाभावेन, मायिनामेव शून्यवादित्वमुपपादयितुं तावच्छून्यवादि-विभागमाह—

**मन्यत** इत्यादिना ॥ अन्ये वैशेषिकादिभ्योऽन्ये, आगमवैरिणः वेदादिसदा-गमद्वेषिणः माध्यमिका, बौद्धैकदेशिनः, शून्यमेव, तत्त्वं अबाधितवस्तुमन्यन्ते, तेन शून्यमेव परतत्वमिति मन्यमाना बौद्धैकदेशिनश्च व्यक्ताः स्पष्टाः, छन्नाः प्रच्छन्नाः, इति द्वये द्विविधा मताः । विज्ञानवादिनः शून्यवादिनः क्षणिकवादिनश्चेति त्रिविधा बौद्धाः, तत्र शून्यवादिनोऽपि द्विविधाः स्पष्टशून्यवादिनः, प्रच्छन्नशून्यवादिनश्चेति, तत्र प्रच्छन्नशून्यवादिनो मायावादिन इति भावः ॥ २४ ॥

शून्यं ब्रह्माद्वयेनाहुः स्वांश्च वेदान्तिनोऽभ्यधुः ।
अतत्त्वावेदकं वेदं वदन्तश्चरमे खलाः ॥ २५ ॥

ननु ब्रह्मवादिनां मायावादिनां कथं शून्यवादित्वं वेदान्तिनां तेषामागमवैरित्वञ्च कथमित्यत आह—

**शून्यमित्यादिना** ॥ मन्त्र ब्राह्मणोपनिषद्भेदेन त्रिविधोहि वेदः, तत्र च मन्त्र ब्राह्मणात्मको वेदो ब्रह्मव्यतिरिक्तकर्मप्रतिपादकत्वादतत्त्वावेदक प्रमाणमिति मायिनो वदन्ति, उपनिषद्भागञ्च तत्त्वावेदकप्रमाणमिति । एवञ्च, वेद मन्त्रब्राह्मणात्मकं वेदभागं, अतत्त्वावेदक, तत्वन्य सत्यस्य आवेदको नभवतीति तं, वदन्तः, मन्त्र ब्राह्मणात्मको वेदः प्रमाणमपि तत्त्वं पारमार्थिकं ब्रह्मस्वरूप नावेदयतीति अतत्त्वा-वेदकप्रमाणमिति वदन्त इति भावः, अतएव खलाः, मुख्यतः सकलवेदवेद्यस्य

ब्रह्मणो वेदैकदेशेनावेद्यत्वाङ्गीकारादेव खला इत्यर्थः । चरमे अन्तिमा 'व्यक्ता छन्ना इति द्वय' इत्यत्र पश्चादुद्दिष्टाः प्रच्छन्नशून्यवादिनो मायावादिन इत्यर्थः । शून्यं ब्रह्मेत्याह्वयो ब्रह्माह्वयस्तेन ब्रह्मेतिनाम्नेत्यर्थः, आहुर्वदन्ति । शून्यवादिनो निराकारं निर्विशेषं यच्छून्यं तत्परतत्त्वमाहुः, तस्माच्छून्यादिशेषरहितं परतत्त्वं ब्रह्मेत्याहुरित्यर्थः अनेन नामभेदमात्रेणैव भेदो न वस्तुभेद इत्युक्तं भवति । स्वान् आत्मनश्च वेदान्तिनस्तन्नामकानभ्ययुः प्रोचुः, शून्यवादिनां शून्यस्य, मायिनां ब्रह्मणश्च न कश्चन विशेष इत्युभयेऽपि शून्यवादिन इत्यर्थः ॥ २५ ॥

परतत्त्वविवर्तत्वादपरस्याखिलस्य च ।
अविशेषत्वतश्चास्य नान्तरन्तरमेतयोः ॥ २६ ॥

एवं शून्यवादिनां मायावादिनाञ्च परतत्त्वविषये विवादाभावमुपपाद्यापरतत्त्वेऽपि विवादाभावमाह—

**परतत्त्वेऽपि** ॥ अखिलस्य समस्तस्य अपरस्य भूभूधरादिनानाप्रपञ्चात्मकस्यापरतत्त्वस्य च परतत्त्वविवर्तत्वात् परतत्त्वस्य विवर्त. अतात्त्विकोऽन्यथाभावस्तस्य भावस्तत्वं तस्मात् परतत्त्वोपादानकत्वादित्यर्थः, शून्यवादिनो यथा शून्योपादानकं जगदिति ब्रूयुः, तथा मायावादिभिर्ब्रह्मोपादानकं जगदित्यङ्गीकृतं, तस्मादपरतत्त्वे न विवाद इति भावः । ननु शून्यब्रह्मणोर्विशेषसद्भावात्कथमपरतत्त्वे न विवाद इत्याशङ्क्य भवेदयं यदि ब्रह्मण. शून्यात्कश्चनविशेषः स्यात् नचासावस्ति तथात्वे ब्रह्मणो निर्विशेषत्वभङ्गादित्याह अविशेषत्वतश्चेति । अस्य ब्रह्मणः न विद्यते विशेषो यस्य तदविशेषं तस्य भावस्तत्वं तस्मात. शून्यादिशेषरहितत्वादित्यर्थः एतयोर्मतयोरन्तरा विचार्यमाणे सति अन्तरं भेदो नास्ति एतयोर्ब्रह्मशून्ययोरिति वा ॥ २६ ॥

अखण्डखण्डनन्यायानखण्डमपि खण्डयन् ।
अखण्डयदखण्डज्ञो द्वयांश्चाखण्डलद्विपः ॥ २७ ॥

एवं मतद्वयस्य साम्यात्तन्निराकरणमपि सममेवाकारीत्याह—

**अखण्डेत्यादिना** ॥ अखण्डाः समस्ता ये खण्डनन्यायाः सत्सिद्धान्तनिराकरणन्यायास्तान् मायिशून्यवादिनोः सत्सिद्धान्तनिराकरणाङ्गीकृतकुतर्करूपन्यायाभासानितियावत् । खण्डयन् दूषयन् अखण्डमपि निर्विशेषमपि निर्विशेषत्वेनाङ्गीकृतपरतत्त्वमपीत्यर्थः, खण्डयन् प्रमाणाभावोपपादनेन निराकुर्वन् अखण्ड सर्वं जानातीति अखण्डज्ञः सर्वज्ञ इत्यर्थः श्रीमध्वः इयान् द्विविधांश्च आखण्डलद्विप इन्द्रारीन् अखण्डयत् निराचक्रे ॥ २७ ॥

> विमतं कारणं न स्यादसत्वान्न यदीदृशम् ।
> नेदृशं तद्यथा कुम्भकर्तेत्यत्रानुमीयते ॥ २८ ॥

यदुच्यते शून्यवादिना शून्यं जगत्कारणमिति तन्निराकरोति—

**विमतमित्यादिना** ॥ अङ्गो तापसेत्युत्तरश्लोकस्थमत्र सम्बध्यते । अङ्ग तापस! हे तापस! हे बौद्ध विमतं शून्य कारणं जगत्कारणं नस्यात्, कुत इत्यत आह— असत्वादिति । अत्र व्यतिरेकव्याप्तिं दर्शयति— न यदित्यादिना । यदीदृशं न अकारण न तदीदृशं न असन्न, यथा कुम्भकर्ता कुलाल इत्यत्रानुमीयते । अस्माभिरिति शेषः, विमतं शून्यं कारणं न भवति असत्वात् यत्कारणं तत्सत्, यथा कुलालः इति प्रयोगः॥

> अङ्गातापस नो शून्यं कारणं कुम्भकर्तृवत् ।
> यत्संवृत्युत्थितं विश्वं तत्कारणमितीर्यते ॥ २९ ॥

शून्यवादीप्रत्यवतिष्ठते—

**नाशून्यमित्यादिना** ॥ शून्यं कुम्भकर्तृवत् कुम्भस्य कर्ता तद्वत् कुलालवदित्यर्थः, कारणं जगत्कारणं नो नभवति, शून्यं जगत्कारणं वदन्तोऽपि वयं कुलालादिवद्बाह्योपादान सापेक्षं तत् जगत्कारणं नाङ्गीकुर्म इत्यर्थः । किं तर्हीत्यत आह— यदित्यादिना । विश्वं जगत् यत्संवृत्युत्थितं यस्य शून्यस्य संवृतिरज्ञानं तयोत्थितं उत्पन्नं दृश्यत इतियावत्, तच्छून्यं कारणमिति ईर्यत उच्यते, अयमभिप्रायः — शुक्तिकायाः शुक्तिकात्वमापरोक्षेणापश्यतो भ्रान्तस्य यथा तत्र रजतज्ञानं जायते

रजतमिदं पुरोवर्तीति एवमेव शून्यतत्वं सम्यगापरोक्षेणापश्यतामज्ञानिनां भूभूधरादि-नानाप्रपञ्चप्रतीतिर्जायते एवञ्चसति शुक्तिकायाथात्म्यज्ञानात्प्रतीयमानस्य रजतस्य शुक्तिका यथा कारणमित्युच्यते, एवं शून्यतत्वापरिज्ञानात्प्रतीयमानस्य प्रपञ्चस्य शून्यं कारणमित्युच्यते, नतु शून्यं कुलालादिवज्जगत्कारणमिति ॥ २९ ॥

**एवं चेत्कारणं मा स्म ब्रवीः शून्यं कथञ्चन ।**
**आयुष्मंस्तदधिष्ठानं व्युत्पित्सस्व गुरोर्गृहे ॥ ३० ॥**

तदेतत्सामान्यतोऽनूद्यदूषयति—

**एवञ्चेत्यादिना** ॥ चेत् यदि एवं सम्यक् शून्यतत्वापरिज्ञानेन निमित्तेन प्रतीयमानस्य प्रपञ्चस्य शून्यं कारणमित्यभ्युपगमस्तर्हि शून्यं कथञ्चन सर्वात्मना कारणं जगत्कारणं मास्मब्रवीः, स्वाज्ञानेन प्रतीयमानस्य प्रपञ्चस्य शून्यं स्वयं कारण-मिति मा वद तर्हि किं ब्रूयामित्यपेक्षायामाह—आयुष्मान्निति । शून्यं जगत्कारणमिति वदता त्वया कारणत्वं नाम, इत्थमिति तदभिप्रायः सम्यगुक्तमिति, हास्यादायुष्मान्नित्युक्तं. हे आयुष्मन्! तत् एवं त्वयाङ्गीकृतं शून्यं गुरोर्गृहे अधिष्ठान व्युत्पित्सस्व व्युत्पत्ति-मिच्छ । पदगतौ सन्नन्ताल्लोट् । त्वदभ्युपगमप्रकारेण विचार्यमाणेसति अधिष्ठानं सच्छून्यं कारणमिति वदन् , अतएव कारणाधिष्ठानयोः स्वरूपं सम्यगजानन् त्वं. अथापि कञ्चित्कालं गुरुर्गृहे तिष्ठन् कारणाधिष्ठानयोः स्वरूपं विविच्य ज्ञात्वा पश्चात्कारणलक्षणयुक्तं 'कारण'मिति व्यवहर , अधिष्ठानलक्षणयुक्तमधिष्ठानमिति व्यवहर । एवमधिष्ठानव्युत्पत्त्यनन्तरमेवास्माभिर्व्यवहर इति भावः ॥ ३० ॥

**विवादस्य पदं न स्यादधिष्ठानमसत्त्वतः ।**
**वैधर्म्येणैष दृष्टान्तः शुक्त्यादिर्विदितार्यते ॥ ३१ ॥**

ननु तर्हि माभूच्छून्यं कारणमिति अधिष्ठानमेवास्तु तथापि यथा भ्रान्तिदशायां प्रतीयमानं शुक्तिका व्यतिरिक्तं रजतं नतात्त्विकमेवं शून्यव्यतिरिक्तं जगन्नतात्त्विकमिति वदतो मम न किञ्चिदवशिष्टमित्याशङ्क्य शून्यस्याधिष्ठानत्वमपि न घटत अनुमान-विरोधादिति भावेनाह—

**विवादस्येत्यादिना** ॥ विवादस्य विप्रतिपत्तेः पदं विषयभूतं शून्यं अधिष्ठानं न स्यात् कुतः असतो भावोऽसत्वं तस्मादिति ननु अत्र सपक्षाभावात्कथं व्याप्तिरिति चेत्तत्राह वैधर्म्येणेति । वैधर्म्येण तत्राप्यभावेन साधनाभावेनेव सम्प्रतिपन्न एव दृष्टान्त ईर्यते, कथं शुक्त्यादिवदिति, अत्रेत्थमनुमानप्रयोगः, विमतं शून्यं जगदारोपाधिष्ठानं नभवति असत्वात् यदारोपाधिष्ठानं तत्सत्, यथा रजताद्यारोपाधिष्ठान शुक्त्यादीति ॥ ३१ ॥

अतत्वावेदकं मानमिति स्वव्याहतं यतः ।
यद्वादी तेन वेदस्य सोऽभिप्रैत्यप्रमाणताम् ॥ ३२ ॥

ननु 'परतत्वविवर्तत्वादपरस्याखिलस्य च । अविशेषत्वतश्चास्य नान्तरान्तरमेतयोः' रिति मायावादि शून्यवादिमनयोर्विशेषो नास्तीति यदुक्तं तदसत् शून्यवादिनां वेदाप्रामाण्यवादित्वान्मायावादिनां तत्प्रामाण्याभ्युपगमात् ; इत्थं हि मायावादिनो वदन्ति— मन्त्रब्राह्मणात्मक एको वेदभागः, उपनिषदात्मकोऽपरः, तत्राद्योमिथ्याभूतभेदादिप्रपञ्चविषयत्वादतत्वावेदकप्रमाणं, द्वितीयस्तु परमार्थभूतब्रह्मविषयत्वात्तत्त्वावेदकप्रमाणमिति, एवमुभयथा वेदप्रामाण्यवादिनां तेषां मतस्य कथमवैदिकशून्यवादिमताद्विशेषाभाव इत्याशङ्क्य भवेदयं विशेषो मायिमते यद्युक्तप्रकारेण प्रामाण्यं सम्भवेत् न चैतदस्ति, अतत्वावेदकञ्च प्रमाणञ्चेत्युक्तेर्व्याहतत्वादित्याह—

**अतत्वावेदकमित्यादि** ॥ तत्वस्यावेदकं ज्ञापकं तत्वावेदकं तन्नभवतीत्यतत्वावेदकं मानं प्रमाणमिति वचो माता वन्ध्येतिवत्स्वव्याहतं, यतस्तस्मात्, तद्वादी वेदस्यातत्वावेदकत्ववादी स मायावादी तेन वेदस्यातत्वावेदकत्ववचनेन वेदस्याप्रामाण्यमाभिप्रैति । तथाहि– वेदस्यातत्वावेदकत्वं नाम अतत्वस्यायथार्थाकारस्य आवेदकत्वमभिप्रेतं एतदेवह्यप्रामाण्यं नाम तस्मादतत्वावेदकत्वमित्युक्त्वा पुनस्तस्य प्रमाणवचनं स्वव्याहतं, तस्मादेवं स्वव्याहतभाषिणस्तस्य वेदप्रामाण्यवचनं वैदिकप्रकारकमात्रमेव एवं मायिशून्यवादिनोर्वेदाप्रामाण्याभ्युपगमस्तु समान एव मायिनः स्वव्याहतभाषणमधिकं, तस्माच्छून्यवादिमतान्नमायिमतस्य वैलक्षण्यमिति भावः ॥ ३२ ॥

यं तत्त्वावेदकं वेद वेदांशं वेददूषकः ।
तत्तस्यावर्णनीयत्वात्स तत्त्वावेदकः कथम् ॥ ३३ ॥

यदप्युक्तमुपनिषदात्मको वेदभागः परमार्थभूतब्रह्मविषयत्वात्तत्त्वावेदकं प्रमाणमिति तदप्यशोभनमित्याह—

यमित्यादिना ॥ वेददूषक उक्तप्रकारेण वेदप्रामाण्याभ्युपगमाद्वेदनिन्दको मायावादी यं वेदांशं तत्त्वावेदकं वेद अभ्युपगच्छति स वेदांशः कथं तत्त्वावेदकः नकथमपि कुतः? तत्तस्य परमार्थभूतस्य ब्रह्मणोऽवर्णनीयत्वादवाच्यत्वात्, तथाच ब्रह्म अवाच्यमित्यभ्युपगमाद्ब्रह्मविषयतयाभ्युपगतस्य वेदभागस्य ब्रह्मवाचकतया न ब्रह्मसम्बन्धः सम्भवति प्रमेयसम्बन्धरहितस्य प्रामाण्यञ्च दुर्घटमिति भावः, एवमतत्त्वावेदकस्य मिथ्याविषयत्वादप्रामाण्यमङ्गीकृतं स्यात् तत्त्वावेदकस्य पुनः निर्विषयत्वेनाप्रामाण्यमभ्युपगतमित्युभयथापि वेदाप्रामाण्यवादित्वाद्वेदस्य दूषकोऽयमित्यभिप्रायः ॥

लक्षणाभिः प्रवर्तन्ते वाक्यानि तिसृभिर्यदि ।
विषयत्वं लक्षणानां तस्यैवानिष्टमागतम् ॥ ३४ ॥

ननु यदुक्तं तत्त्वावेदकप्रमाणस्य ब्रह्मणि वचनवृत्त्या प्रवृत्त्यभावान्निर्विषयत्वेनाप्रामाण्यमिति तदसत्, यद्यपि, 'यतो वाचो निवर्तन्त' इत्यादिवाक्यैर्ब्रह्मणो वाच्यत्वाभावाद्वचनवृत्त्या ब्रह्मणि न प्रवर्तते वेदस्तथापि लक्षणावृत्त्या प्रवर्तते, लक्षणा त्रिविधा जहल्लक्षणा, अजहल्लक्षणा जहदजहल्लक्षणा चेति, तत्र 'यतो वा इमानि भूतानि जायन्त' इत्यादीनि जहल्लक्षणया 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादीन्यजहल्लक्षणया 'तत्त्वमसी'त्यादीनि जहदजहल्लक्षणया ब्रह्मपराणि, तदेवं लक्षणया ब्रह्मविषयत्वात्कथं निर्विषयत्वं तत्त्वावेदकप्रमाणस्येत्याशङ्कयानिष्टापादनमुखेन परिहरति—

लक्षणाभिरिति ॥ वाक्यानि तत्त्वावेदकप्रमाणत्वेनाङ्गीकृतानि यदितिसृभिर्लक्षणाभिर्ब्रह्मणि प्रवर्तन्ते, तर्हि तस्यैव अवाच्यत्व प्रमेयत्वादिसकलविशेषनिर्मुक्ततयाङ्गीकृतस्य ब्रह्मणः लक्षणानां लक्षणावृत्तीनां विषयत्वं नाम विशेषणमागतं, अनिच्छता-

प्यङ्गीकार्यतया प्राप्तं, तच्च अनिष्टं अपसिद्धान्तप्रसङ्गादङ्गीकर्तुमनुचितं, तस्माद्ब्रह्मणो लक्षणाविषयत्वासम्भवात्तत्त्वावेदकप्रमाणस्य निर्विषयत्वेनाप्रामाण्यं तदवस्थमेवेति भावः॥

किञ्चाखण्डेऽत्र वाक्यानि किञ्चिद्विदधते नहि ।
तान्यभ्यधुरभावं चेज्जाड्यादेस्तन्न शोभते ॥ ३५ ॥

नैतावदेव दूषणं ब्रह्मणो निर्विशेषत्वाङ्गीकारे, किन्त्वधिकञ्चास्तीति प्रतिजानीते—

**किञ्चेति** ॥ अखण्डे नविद्यते खण्डो भेदो यस्य तदखण्डं तस्मिन् 'खडिभेद' इति धातुः, निर्विशेषे अत्र ब्रह्मणि वाक्यानि 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादीनि किञ्चित् सत्यत्वादिरूपं किमपि विशेषणं न विदधते हि यस्मात्, ननु सत्यज्ञानादिपदानामसत्यत्वादिव्यावृत्तिरेवार्थः, तस्मान्निर्विशेषस्य ब्रह्मणः सत्यत्वादिभावरूपविशेषाभावेऽपि, असत्यव्यावृत्तत्वात्सत्यं ब्रह्म, अज्ञानव्यावृत्तत्वाज्ज्ञानं ब्रह्म अन्तव्यावृत्तत्वादनन्तं ब्रह्म, इति सत्यादि पदानामतद्व्यावृत्त्या ब्रह्मविषयतयाङ्गीकारात् कथं निर्विषयता इत्यत आह— तानीति । तानि सत्यज्ञानादिवाक्यानि जाड्यादेः अभावं जडत्वाद्यभावं अभ्यधुः, इत्यङ्गीकृतञ्चेदपि तन्नशोभते ॥ ३५ ॥

अभावभावस्याभावाद्भावरूपस्य तस्य तु ।
भावाभावविशेषाणामभावादविशेषिणः ॥ ३६ ॥

कुत इति चेद्विकल्पासहत्वात्तथाहि 'सत्यज्ञानादि' पदाभिधेयानामसत्यत्वाद्यभावानां किं ब्रह्मात्मकत्वमङ्गीक्रियते, आहोस्विद्ब्रह्मविशेषत्वं, आद्येऽसत्यत्वाभावानां ब्रह्मात्मकत्वाङ्गीकारे ब्रह्मणोऽप्यभावात्मकं स्यात् तच्चनाङ्गीकारार्हं कुत इत्यपेक्षायामाह—

**अभावेति** ॥ भावो रूपं यस्य तद्भावरूपं तस्य ब्रह्मणः अभावभावोऽभावत्वं तस्य अभावादसम्भवादित्यर्थः द्वितीयोऽपि पक्षो नघटते कुत इत्यत आह— भावाभावेति । विशेषोऽस्यास्तीति विशेषि तन्नभवतीत्यविशेषि तस्य अविशेषिणः सर्वविशेषरहितत्वेनाङ्गीकृतस्य ब्रह्मणः भावश्चाभावश्च भावाभावास्तेचते विशेषाश्च तेषां भावाभावात्मक सर्वधर्माणामित्यर्थः अभावादसम्भवात्, निर्विशेषत्वेनाङ्गीकृतस्य ब्रह्मणो भावाभावरूप-

विशेषाङ्गीकारेऽपसिद्धान्तप्रसङ्गादिति भावः । तस्मादसत्यत्वाद्यभावानां ब्रह्मात्मकतया ब्रह्मविशेषतया वा ब्रह्मसम्बन्धाभावात्तत्प्रतिपादनपराणां सत्यज्ञानादिवाक्यानां ब्रह्म-विषयत्वाभावान्नतत्त्वावेदकत्वं सम्भवतीत्यर्थः ॥ ३६ ॥

यो वेद वेदितार्थानां नित्यसन्त्यागसंश्रवी ।
वेदबाह्यो विपश्चिद्भिरेष निर्धार्यतां ततः ॥ ३७ ॥

'मन्यन्ते शून्यमेवान्ये' इत्यत्र प्रच्छन्नबौद्धत्वमायिन उक्तम्, तच्च 'परतत्त्ववि-वर्तत्वा'दित्यादिनोपपादितम्, इदानीं युक्त्यन्तरेणापि बौद्धमतमुपपाद्योपसंहरति—

**य इति** ॥ यो मायी वेदवेदितार्थानां वेदैर्वेदिता ज्ञापिता ये अर्थास्तेषां प्रपञ्च-सत्यत्वादीनां हरेरनन्तगुणपूर्णत्व, निर्दोषत्वादीनामर्थानां वेत्यर्थः, नित्यं संत्यागः परित्यागः नित्यसंत्यागः नित्यसंत्यागरूपः संश्रवः सोऽस्यास्तीति तथोक्तः, सर्वदा परित्यागरूपप्रतिज्ञावानित्यर्थः, अत्र वेदार्थसंत्यागो नाम तेषां मिथ्यात्वाङ्गीकारः. ततः वेदोक्तार्थमिथ्यात्वाङ्गीकारात्, एष मायी विपश्चिद्भिर्ज्ञानिभिः वेदबाह्य इति निश्चीयतां । नहि वेदोक्तार्थमिथ्यात्वाङ्गीकारातिरिक्तं वेदबाह्यत्वं बौद्धानामपीति भावः ॥ ३७ ॥

ज्यायसो दूषणेनैव धूर्तम्मन्योऽपि दूषितः ।
पक्षयोरविशेषत्वादेतयोः सद्विपक्षयोः ॥ ३८ ॥

तस्मान्मायिशून्यवादिनोर्वेदबाह्यत्वसाम्यात्परापरतत्त्वेच विशेषाभावाच्छून्यवादिमते यद्दूषणं तेनैव दूषणेन मायिमतमपि दूषितं वेदितव्यमित्याह—

**ज्यायस इति** ॥ 'मता माध्यमिकास्तेऽपि व्यक्ताश्छन्ना इति द्वये' इत्यत्र शून्यवादिनः प्रथममुद्दिष्टत्वाच्छून्यवादी मायावादिनो ज्यायान्, तस्य ज्यायसः श्रेष्ठस्य शून्यवादिनो दूषणेनैव धूर्तंमन्यः आत्मानं धूर्तं मन्यमानो मायावाद्यपि दूषितो वेदितव्य इत्यर्थः धूर्तंमन्य इत्यत्र 'आत्ममाने खश्' इति खश्, 'खित्यनव्ययस्ये'ति मुमागमः । ननु शून्यवादिनिराकरणयुक्तिभिर्मायिनिराकरण कथं स्यात्तयोर्मतयोः

परस्परविरुद्धत्वादित्यत आह– पक्षयोरिति । सद्विपक्षयोः सिद्धान्तयोः अविशेषत्वात् नविद्यते विशेषो वैलक्षण्यं ययोस्तौ तथोक्तौ, तयोभावस्तत्वं तस्मात् मिथोविशेषरहितत्वादित्यर्थः ॥ ३८ ॥

असत्त्वादित्यसौ हेतुरसिद्धो ब्रह्मवादिनः ।
मेति भाण्यविशेषत्वादेतयोर्ब्रह्मशून्ययोः ॥ ३९ ॥

ननु 'विमतं कारण न स्या'दित्यत्र 'विवादस्य पदं न स्या'दित्यत्र च, शून्यस्य कारणत्वमधिष्ठानत्वञ्च निराकर्तुं योऽयमसत्त्वहेतुः प्रयुक्तः सतु ब्रह्मवादिनो ममासिद्धः। मया 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिना जगज्जन्मादिकारणस्य ब्रह्मणः सत्यत्वाङ्गीकारादित्यत आह—

असत्त्वादिति ॥ ब्रह्मवादिनो मम असत्त्वादिति हेतुरसिद्धः, इति माभाणि, मायिना त्वया नोच्येत, कुतः? ब्रह्मशून्ययोर्मायिशून्यवादिभ्यां परतत्त्वमित्यङ्गीकृतयोर्ब्रह्मशून्ययोरविशेषत्वात् सर्वविशेषरहितत्वात्, तस्मादसदात्मकाच्छून्याद्ब्रह्मणो विशेषाभावादसत्त्वं ब्रह्मणो दुर्वारमिति नासत्त्वहेतुरसिद्धो मायावादिन इति भावः ॥

सोऽङ्गीकरोति चेत्सत्त्वं ब्रह्मणः स्याद्विशेषिता ।
नचेत्प्राप्तं पारिशेष्यादसत्त्वं न निरस्य तु ॥ ४० ॥

ननु भवेदयं दोषो यद्यस्माभिरसत्त्वं ब्रह्मणोऽङ्गीक्रियेत, नचैवं, ब्रह्मणः सत्त्वाङ्गीकारादित्यत आह—

स इति ॥ स मायी ब्रह्मणः सत्वमंगीकरोति चेत् ब्रह्मणो विशेषिता विशेषोऽस्यास्तीति विशेषि, तस्य भावस्तत्ता, स विशेषत्वमित्यर्थः, स्यात् नचेत् ब्रह्मणः सत्वं नांगीकरोति चेत् परिशेषस्य भावः पारिशेष्यं तस्मात्, परिशेषप्रमाणत इत्यर्थः प्राप्तमसत्वं न निरस्यतु न निराकरोतु परस्परविरुद्धयोर्नैकतरनिषेधस्यान्यतरविधिनान्तरीयकत्वनियमात् सत्वासत्वयोश्च परस्परविरुद्धत्वात्, अयमभिप्रायः ब्रह्मणः शून्याद्वैलक्षण्यसिध्यर्थं सत्वाख्यविशेषांगीकारे निर्विशेषत्वभङ्गः स्यात्, तद्भयादसत्वानभ्युपगमे

परिशेषतः प्राप्तमसत्वं न निराकर्तुमुचितम् असत्वांगीकारेच असत्वहेतुरसिद्ध इत्युक्तमयुक्तमित्युभयतः पाशारज्जुरेति ॥ ४० ॥

विगीतं न विचार्यं स्यान्न भाव्यं न फलप्रदम् ।
शून्यं ब्रह्माद्यमद्वैतं विधिर्धीगोचरो न यत् ॥ ४१ ॥

अस्तु तर्हि शून्याद्विलक्षण्याभावादसत्व ब्रह्मणः किमनिष्टमित्यतः फलितार्थमाह—

**विगीतमित्यादिना** ॥ विविधतया गीतं विगीतं विप्रतिपन्नमित्यर्थः नविद्यते भेदप्रपञ्चो यस्य तदद्वैत, विगलिताखिलभेदादिप्रपञ्चत्वेनांगीकृतमितियावत् शून्यं शून्यात्मकं सत् सत्यं ब्रह्म आद्य यस्य तद्ब्रह्माद्यं मायावादिप्रभृतिभिर्वादिभिः परतत्वमित्यंगीक्रियमाण वस्तु विचार्यं नस्यात् मुमुक्षूणां श्रवणमननादिरूपविचारास्पदं नस्यात भावयितुं ध्यातुं योग्यं भाव्यं ध्येयं च नस्यात्, फलप्रदं धर्मादिमोक्षान्ततत्तदभीष्टफलप्रदञ्च नस्यात्, ब्रह्माद्यमित्यत्र, आद्यशब्देन शून्यवादिनां शून्यं, विज्ञानवादिनां विज्ञान, स्फोटवादिनां वैयाकरणानां स्फोटः (कालश्च) गृह्यते, विचार्यत्वादिकं कुतो न स्यादित्यत आह— विधीति । यदेतत्परतत्वमंगीकृतं ब्रह्माद्यं विधिधीगोचरः, विधिरूपा धीस्तस्या गोचरो विषयः, गोचरः प्रथमप्रतिपत्तौ विधिप्रत्ययविषयो नभवति यतस्तस्मादित्यर्थः ॥ ४१ ॥

खपुष्पवदखण्डत्वाद्व्यतिरिक्तं निदर्शनम् ।
प्रमाणादिवदित्येवमूहनीयं यथेप्सितम् ॥ ४२ ॥

किमिवेत्यत आह—

**खपुष्पवदिति** ॥ खपुष्पवत् गगनकुसुमवत्, खपुष्पशब्दात् खपुष्पप्रतीतावपि तद्यथा विधिप्रत्ययविषयो नभवति, तथा तत्पक्षे ब्रह्माद्यमपीति भावः, विधिप्रत्ययविषयत्वाभावः कुत इत्यत आह अखण्डत्वादिति, अखण्डत्वान्निर्विशेषत्वात्, सत्वादिधर्मरहितत्वेन विधिप्रत्ययगोचरत्वासम्भवादित्यर्थः, अयमत्र प्रयोगः— विमतं ब्रह्माद्यं विवेकिना श्रुतिमीमांसादिभिर्विचार्यं नभवति श्रुत्याद्यविषयत्वात् खपुष्पवत्, विमतं ध्येयं

नभवति निराकारत्वात् खपुष्पवत् विमता ब्रह्मादिविषयभावना मोचिका नभवति असद्विषयत्वात् शशविषाणादिभावनावत्, विमतं ब्रह्माद्यं पुरुषार्थप्रदं न भवति अनत्वात् अश्वशृङ्गवत्, यद्यद्विचार्यं भाव्यं फलप्रदं वा तत्तत्सदेव दृष्टं प्रमाणादिवत्, प्रमाणं प्रमेयं वा साधुत्वासाधुत्वादिविचारविषयो भवति । इतिशब्दो दूषणोक्तसमाप्तौ, 'इतिहेतुप्रकारणप्रकारादिसमाप्तिषु' इत्यमरः, एवं व्यतिरिक्तं साध्यसाधनाभ्यां रहितं निदर्शनं दृष्टान्तः यथेप्सितं यथेष्टं प्रमाणप्रमेयादिकं ऊहनीयं, व्यतिरेकदृष्टान्तोऽप्यूहनीय इत्यर्थः ॥ ४२ ॥

आम्नायानाममानत्वे धर्मादेरप्रमाणता ।
धर्माद्यभावे नो मानं प्रत्यक्षैकप्रमाणिनः ॥ ४३ ॥

'नारायणोऽनन्तगुण' इत्यत्र वेदवेदित इत्यनेन नारायणस्यानन्तगुणादित्वे वेदएव प्रमाणमित्युक्तं, तत्र वेदप्रामाण्यविषये ये विप्रतिपद्यन्ते तान् प्रत्याह—

**आम्नायानामिति** ॥ शाखाभेदाद्बहुवचनं आम्नायानां वेदानां अमानत्वे, अंगीकृते सतीति शेषः धर्म आदिर्यस्य स धर्मादिस्तस्य धर्माधर्माद्यतीन्द्रियप्रपञ्चस्येत्यर्थः अप्रमाणता प्रमाणशून्यता न विद्यते प्रमाणं यस्मिन् तदप्रमाणं तस्य भावोऽप्रमाणता अयंभावः सर्वसमयिभिरपि स्वस्वसमयप्रयोजनतया धर्मादिकं तावदवश्यमभ्युपगन्तव्यम् तच्च प्रमाणेन विना नसिध्यति, न च प्रत्यक्षं तत्र, धर्मादेरतीन्द्रियत्वात्, नापि केवलानुमानं तदभावेऽपि प्रमाणयितुं शक्यत्वात्, तस्मादन्तत आगम एवेष्टव्यः, तत्रापि न पौरुषेयागमः, धर्मादिविषयागमस्य प्रणेतॄणां पुरुषाणामाप्तत्वे विप्रतिपत्तेः, तस्मादपौरुषेयागम एव तत्र प्रमाणं, तस्य च प्रामाण्यानगीकारे प्रमाणाभावाद्धर्माद्यसिद्धिः स्यात्, प्रमेयसिद्धेः प्रमाणाधीनत्वादिति, ननु भवेदिदं धर्मादिकमभ्युपगच्छतां पक्षे वेदप्रामाण्याभावे धर्माद्यसिद्धिः स्यादिति तेषामनिष्टापादनं यन्मते धर्माद्यभावः प्रमाणञ्च प्रत्यक्षमेव तस्य चार्वाकस्य धर्माद्यसिद्धिर्नानिष्टेत्यत आह— धर्मादीति । प्रत्यक्षैकप्रमाणिनः एकश्चतत्प्रमाणञ्चैकप्रमाणं प्रत्यक्षमेवैकप्रमाणं, तदस्यास्तीति तथोक्तस्तस्य प्रत्यक्षमेकमेव प्रमाणमित्यंगीकुर्वतश्चार्वाकस्य धर्माद्यसिद्धौ मानं प्रमाणं नो नास्ति, धर्माद्यभावस्य, रूपाद्यभाववत् प्रत्यक्षेण गोचरयितुमशक्यत्वादिति भावः ॥ ४३ ॥

न पौरुषेयं वचनं प्रामाण्येन विनिश्चितम् ।
पौरुषेयत्वतो यद्वद्वाक्यमुन्मत्तभाषितम् ।। ४४ ।।

ननु यदुक्तं वेदप्रामाण्याभावे धर्माद्यसिद्धिः स्यादिति तदसत् वेदेन विनापि सर्वज्ञपुरुषप्रणीतागमेनैव तत्सिद्धेः, तदागमप्रामाण्यञ्चाप्तोक्तत्वगुणयोगादेव सिध्यति तथाच वेदप्रामाण्यानभ्युपगमेऽपि धर्मादिसिद्धिरित्यत आह—

**नपौरुषेयमिति** ।। पुरुषेण प्रणीतं पौरुषेयं वचनं वाक्यं प्रामाण्येन विनिश्चितं नभवति कुतः पौरुषेयत्वतः पुरुषप्रणीतत्वात् किमिव उन्मत्तभाषितं वाक्यं यद्वत् । विमतं बुद्धादिप्रणीतवाक्यं धर्मादौ मानं नभवति पौरुषेयत्वात् यद्यत्पौरुषेयं वाक्यं तत्तन्न धर्मादौ मानं यथोन्मत्तवचनमिति प्रयोगः ।। ४४ ।।

विमतः पुरुषोऽज्ञः स्यात्स्याच्चासौ विप्रलम्भकः ।
पुंस्त्वाच्चैत्रवदित्यस्ता सर्वज्ञे केवलानुमा ।। ४५ ।।

ननु बुद्धादीनां सर्वज्ञत्वात्कथं तद्वचनं न मानमित्यत आह—

**विमत इति** ।। विमतः सर्वज्ञत्वासर्वज्ञत्वाभ्यां वादिप्रतिवादिविषयः, वेदाप्रामाण्यवादिभिर्बौद्धादिभिः सर्वज्ञत्वेनांगीकृतः पुरुषो बुद्धादिरज्ञः स्यात् विवक्षितार्थतत्त्वज्ञानरहितो भवितुमर्हति पुरुषत्वात् उन्मत्तचैत्रवत्, असौ विमतः पुरुषो विप्रलम्भकः स्यात् पुरुषत्वादेव विप्रलम्भकत्वेन सम्मतपुरुषान्तरवत्, इति एवं सर्वज्ञे सर्वज्ञविषये सर्वज्ञत्वसाधकत्वेन परैः प्रयुज्यमाना केवला च सा अनुमा च केवलानुमा श्रुत्यादिसाहाय्यरहितानुमेत्यर्थः, धर्मादयः कस्यचित्प्रत्यक्षा वस्तुत्वाद्घटवदित्यादिरूपानुमेत्यर्थः अस्ता निरस्ता वेदितव्या ।। ४५ ।।

दुःखाकरोति यद्वैवं दुःशास्त्रेष्वप्य आग्रहः ।
दुःखाकरोति घोरः स्याल्लोकोऽतस्तद्गतां ध्रुवः ।। ४६ ।।

एवमवैदिकशास्त्राणां दुःशास्त्रत्वमर्थादुक्त्वा तेषु दुःशास्त्रेष्वाग्रहवतां फलमाह—

**दुःखाकरोतीति** ॥ दुष्टानिच तानि शास्त्राणिच दुःशास्त्राणि तेषु उग्रः अनिवर्त्यः आग्रहः दुःशास्त्रेषु प्रामाण्यविस्रम्भरूपाग्रहः दैवं वेदादिसदागमप्रतिपाद्यं परमदैवं भगवन्तं दुःखाकरोति, यत् यस्मात् वेदादिसदागमोक्तप्रकारादन्यथा भवति अतः वैपरीत्यकरणात् विपरीतोपासनादित्यर्थः तद्वतां दैवविपरीतोपासनकारणदुःशास्त्राग्रहवतां पुरुषाणां दुःखाकरः दुःखानामाकरः अतएवातिघोरः दुःसहः ध्रुवः अविनाशी लोकः स्यात । दुःशास्त्रेष्वाग्रहेण दैवमन्यथोपास्य निरतिशयदुःखमतिदुःसहं लोकमाप्नुवन्तीति भावः । दुःखाकरोतीत्यत्र 'दुःखात्प्रतिलोमे डाच्' इति डाच् प्रत्ययः प्रतिलोम्ये वैपरीत्येऽर्थेगम्यमाने डाच्प्रत्ययान्तो दुःखशब्दो वैपरीत्यवाचकः ॥ ४६ ॥

> आस्माकेऽवेक्षिते पक्षे मोक्षं दद्यादधोक्षजः ।
> यत्र स्वानन्दिनः सन्तः सेवन्ते विषयान् बहून् ॥ ४७ ॥

एवं दुःशास्त्रेष्वाग्रहवतां फलमभिधायेदानीं सच्छास्त्रनिरतानां फलमाह—

**आस्माक इति** ॥ अस्माकं सम्बन्धी आस्माकस्तस्मिन् पक्षे सिद्धान्ते अवेक्षिते सति प्रमाणत्वेनांगीकृतेसति तदुक्तप्रकारेण भगवदुपासनेकृतेसतीति शेषः, अधोक्षजः अधःकृतं, अक्षजं इन्द्रियजन्यज्ञानं येन सतथोक्तः प्रत्यक्षागोचरः, केवलागमसमधिगम्यः श्रीनारायणः यत्र यस्मिन्मोक्षे सन्तो मुक्तिगा सज्जना स्वः स्वरूपभूतः सचासावानन्दश्च स्वानन्दः स एषामस्तीति स्वानन्दिनःसन्तः, बहून् विषयान् शब्दादीन् सेवन्ते. अनुभवन्ति, तादृशं मोक्षं दद्यात् ॥ ४७ ॥

> स्वव्याहत्यादिनोपेक्ष्या मुक्तियां निर्विशेषिता ।
> कदेत्याद्यनुयोगेऽस्य विशेषः स्यादनन्तरं ॥ ४८ ॥

ननु निर्विशेषब्रह्मभाव एवहि मोक्षो नाम तस्मात्तत्र कथमानन्दानुभवः सम्भवति तथात्वे निर्विशेष भङ्गादित्यत आह—

**स्वव्याहत्यादिनेति** ॥ विशेषोऽस्यास्तीति विशेषि, तस्य भावो विशेषिता निर्गताच सा विशेषिताच, निर्विशेषिता निर्विशेषिब्रह्मतादात्म्यमात्मस्यमुक्तस्य सर्वविशेषरहितता

नाम या मुक्तिः सा स्वव्याहत्यादिनोपेक्ष्या स्वव्याहतिदोषेण दूषितत्वात् विवेकिभि-न्ताहशमुक्त्यर्थं साधनानुष्ठानं न कर्तव्यमिति भावः, अत्रादिशब्देनानुक्तिर्गृह्यते. निर्विशेषब्रह्मभावो मुक्तिरिति पक्षे कथं स्वव्याहत्यादि? कथञ्च नापेक्ष्यत इत्यत आह- कदेत्यादीति । मुक्तिः कदा कथं वा इत्याद्यनुयोगे प्रश्नेऽस्माभिः कृतेसतीति शेषः उत्तरे प्रत्युत्तरे दत्तेसति तस्या मुक्तेः विशेषः स्यान्ननु । अयंभावः कदामुक्तिरिति प्रश्नस्य ऐक्यज्ञानपरिपाकसमनन्तरं निर्विशेषब्रह्मभावो मुक्तिरित्यादि प्रत्युत्तरं मायिना दत्तञ्चेदैक्यज्ञानोत्तरकालसम्बन्धादिविशेषवत्वं स्यान्मुक्तेः, ततश्च निर्विशेषिता मुक्ति-रित्युक्तेः स्वव्याहतिः स्यात्, कदेत्यादिप्रश्नस्य प्रत्युत्तरं न दत्तञ्चेत्तूष्णीं भावेनानु-त्तयाख्यनिग्रहस्थानं स्यादिति ॥ ४८ ॥

अपि बुद्ध्यादिरहितः पुरुषार्थो न सर्वथा ।
निखिलानुभवाभावात् पुत्तलीकापुरोगवत् ॥ ४९ ॥

निर्विशेषिता मोक्ष इति पक्षे दोषान्तरं वदन्नेव वैशेषिकादिभिरङ्गीकृतं मुक्तस्य बुद्ध्यादिराहित्यं निराकरोति—

अपीत्यादिना ॥ निर्विशेषभावो मोक्ष इति पक्षे दोषान्तरसमुच्चयार्थोऽपिशब्दः, बुद्ध्यादिरहितः, अन्तःकरण, चक्षुरादीन्द्रियरहित, अतएव तत्तद्विषयभोगरहितश्च मुक्तः सर्वथा पुरुषार्थोऽस्यास्तीति पुरुषार्थी नभवति कुत इत्यत आह- निखिलेति. निखिलाः समस्ता ये अनुभवास्तेषामभावस्तस्मात्, बाह्यान्तरज्ञानमात्रशून्यत्वादित्यर्थः. किमिवेत्यत आह- पुत्तलीकेति, पुत्तलीकाः प्रतिमाः पुरोगा आदयो यस्य तद्वत् । एवमेव वैशेषिकपक्षेऽपि मुक्तस्य बुद्ध्यादिराहित्यात्समुक्तोऽपि पुरुषार्थी नभवति ॥

ज्ञानप्रयत्नवाञ्छावानीशो नह्यशुभं भजेत् ।
स्वसामर्थ्येन तेनैव तं च कुर्यात्स तादृशम् ॥ ५० ॥

मुक्तस्य बुद्ध्यादिराहित्याङ्गीकारे मुक्तेरपुरुषार्थतारूपदोष उक्तः, इदानीमीश्वर-सारूप्यमाप्तस्य मुक्तस्य बुद्ध्यादिराहित्यं युक्तिविरुद्धञ्चेति वक्तुं तदुपयुक्तमीश्वरस्य स्वरूपं तावदाह—

**ज्ञानेत्यादिना** ॥ ईश्वरो हि ज्ञानप्रयत्नेच्छादिगुणयुक्तोऽङ्गीक्रियते, स ज्ञानप्रयत्नवान्च्छावान्, ज्ञानञ्च, प्रयत्नश्च, वाञ्छाच, ता अस्य सन्तीति तथोक्ता ईशः अशुभं अनिष्टं न भजेत हि, हि शब्दः प्रसिद्धिद्योतकः ईशस्तावन्नभुक्त इति प्रसिद्धं अन्यथेशत्वव्याघातादित्यर्थः ईश्वरस्य दुःखाभावः किं समर्थोपायेनाग्युपायेन नेत्याह-स्वसामर्थ्येति, ईश्वरस्य दुःखाभोक्तृत्वं स्वसामर्थ्येनैव न रूपान्तरेणेत्यर्थः, नाप्युपायान्तरेणेत्यर्थः, अस्तु नाम ईश्वर ईदृशः मुक्तस्य बुद्ध्यादि साहित्ये किमायातमित्यत आह– तेनैवेति, तेनैव स्वसामर्थ्येनैव स ईश्वरः तञ्च स्वोपासकञ्च तादृशं ज्ञानादिमन्त अशुभभोगवर्जितञ्च कुर्यात् अन्यथा मुक्तस्येश्वरसारूप्यायुक्तेरित्यर्थः तस्मान्मुक्तस्य बुद्ध्यादिराहित्यं युक्तिविरुद्धमिति भाव. ॥ ५० ॥

दुःखव्याप्तं सुखं बद्धे दृष्ट्वा मुक्तेर्निरस्यता ।
स्वरूपं च निरस्येत शून्यवादी तदा भवेत् ॥ ५१ ॥

ननु 'यत्रस्थानन्दिनः सन्तः' इत्यत्र मुक्तस्य यः सुखभोग उक्तः स न घटते, मुक्तस्य सुखित्वे दुःखित्वापातात्, सुखदुःखयोरविनाभूतत्वात्, तथाचात्रप्रयोगः विमतो मुक्तः सुखी नभवति दुःखरहितत्वात्, यः सुखी स दुःखरहितो न भवति यथा संसारी, नचासौ मुक्तो दुःखरहितो नभवति तस्मान्नसुखी इत्यत आह—

**दुःखव्याप्तमिति** ॥ बद्धे संसारिणि सुखं वर्तमानसुखं दुःखव्याप्तं दुःखाविनाभूतं दृष्ट्वा संसारान्मुक्तेः निरस्यता सुखित्वे दुःखत्वापातभयात्सुखं निराकुर्वता वादिना स्वरूपञ्च निरस्येत मुक्ताविति शेषः, संसारिणि सुखदुःखयोः साहचर्यदर्शनमात्रेण मुक्तावपि तयोरविनाभावं पश्यता स्वरूपस्यापि ताभ्यां साहचर्यदर्शनात् मुक्तौ सुखदुःखानङ्गीकारवत् स्वस्वरूपञ्च नाङ्गीक्रियेत इति भावः, बाढमिति चेत्तत्राह–शून्येति, तदा मुक्तस्वरूपस्य निरासेऽङ्गीकृते शून्यवादी भवेत्, अयमत्र प्रयोगः- विमतो मुक्तः स्वरूपशून्यः चेतनत्वेसति दुःखरहितत्वात्, यः स्वरूपशून्यो नभवति स चेतनत्वेसति दुःखरहितोऽपि नभवति, यथा संसारीति, तस्मान्मुक्तस्य बुद्ध्यादिराहित्यसाधिकाया युक्तेराभासत्वान्मुक्तस्य बुद्ध्यादिमत्वं स्वानन्दित्वं च स्थितमेतत् ॥

**ननु विप्रतिपन्नः स्यादूर्मिमान् देहवत्त्वतः ।**
**चैत्रो यथेत्युपाधिः स्यात्तत्र चाशुद्धदेहिता ॥ ५२ ॥**

एवं मुक्तस्य बुद्ध्यादिमत्वे सिद्धे, अर्थात्सिद्धं देहवत्वं, तत्र शङ्कते—

**नन्वित्यादिना** ॥ विप्रतिपन्नो मुक्तजीव ऊर्मिमान् स्यात् षडूर्मिमान् भवितुमर्हति देहवत्वतः देहवत्वात् चैत्रो यथा, चैत्रवत् अत्रेतिशब्दः शङ्काग्रन्थसमाप्तौ, अयमत्राभिप्रायः मुक्तस्य यदि बुद्ध्यादिकं स्यात्तर्हि तदाश्रयो देहोऽपि स्यात् देहवत्वे ऊर्मिमत्वमपरिहार्यं, देहिनः संसारिणस्तद्दर्शनात्, तद्वत्वेच मुक्तत्वव्याघात इति मुक्तस्योर्मिमत्वपरिहारायादेहोऽङ्गीकार्यः, देहाभावेच बुद्ध्यादिमत्वं दुर्घटमितिवैशेषिकादयो मन्यन्त इति, एवं परोपन्यस्तस्य देहवत्वानुमानस्योपाधिमाह— उपाधिरिति तत्र ऊर्मिमत्वे, अशुद्धदेहिता, अशुद्धश्चासौ देहश्च सोऽस्यास्तीत्यशुद्धदेही, तस्य भावस्तत्ता, प्राकृतदेहित्वमित्यर्थः उपाधिः स्यात् ऊर्मिमत्वस्य शुद्धदेहित्वमुपाधिः प्रयोजकः, तस्य च पक्षाद्व्यावृत्तिः स्वव्यावृत्याच साध्यस्योर्मिमत्वस्य व्यावर्तकत्वादस्य चौपाधिकत्वं, यत्राशुद्धदेहित्वाभावस्तत्रोर्मिमत्वाभाव यथेश्वर इति व्याप्तिसम्भवात् एवञ्चोपाध्यभावः साध्याभावसाधने हेतुर्भवति, तथाच प्रयोगः—विमतो मुक्त ऊर्मिमन्नभवति अशुद्धदेहरहितत्वादीश्वरवदिति, एवञ्च देहवत्वानुमानस्य सोपाधिकत्वं तेन साध्यसिद्धिरिति ॥ ५२ ॥

**अनैकान्तिकता हेतोर्देहवत्त्वादधीशितुः ।**
**सोऽदेहश्चेदनिच्छादिर्भवेच्छशविपाणवत् ॥ ५३ ॥**

एवं देहवत्त्वानुमानस्योपाधिग्रस्तत्वमुक्त्वेदानीमनैकान्तिकतामाह—

**अनैकान्तिकतेति** ॥ हेतोः देहवत्वहेतोः, अनैकान्तिकतास्यात् कुतः अधीशितुरीश्वरस्य देहवत्वात् । अयमभिप्रायः पक्षत्रयवृत्तिर्हेतुरनैकान्तीत्युच्यते, देहवत्वहेतुश्च पक्षीकृते मुक्ते वर्तते, मुक्तस्य ज्ञानानन्दात्मकदेहवत्वाङ्गीकारात्, ऊर्मिमत्वेन सम्प्रतिपन्ने सपक्षे संसारिणि च वर्तते, साध्याभावाधिकरणे विपक्षे ईश्वरे च वर्तते, तस्मादनैकान्तिक इति, ननु भवेद्देहवत्वहेतोरनैकान्तिकता, यदीश्वरस्य देहवत्वं स्यान

तदेव नाभ्युपगच्छामः, तस्माद्विपक्षवृत्तित्वाभावात्कथमनैकान्तिकता इत्यत आह-- स इति । स ईश्वरः अदेहश्चेत् देहरहितश्चेत् अनिच्छादिः इच्छादिगुणरहितोऽपि भवेत्, किमिव? शशविषाणवत्, विमत ईश्वरः इच्छादिरहितः देहरहितत्वाच्छशविषाणवत, इति साधनानुमानं वा, यद्यदेहः स्यात्तर्हीच्छादिरहितोऽपि स्याच्छशविषाणवदित्यापादनं वात्राभिप्रेतम् ॥ ५३ ॥

**ज्ञात्रादिरूपस्य स्याद्वैलक्षण्याय चेत्ततः ।**
**तदेव देहशब्दोक्तं न ह्यसौ प्राकृताकृतिः ॥ ५४ ॥**

नन्वीश्वरस्य ज्ञात्रादिरूपसद्भावात्कथं शशविषाणसाम्यमित्यत आह—

**ज्ञात्रादीति** ॥ ईश्वरस्य ततः शशविशाणादेर्वैलक्षण्याय विलक्षणत्वसिद्धये ज्ञात्रदिरूपं स्यात्– अङ्गीक्रियते चेत् तर्हि अस्येश्वरस्य देहवत्त्वं त्वयाप्यङ्गीकृतमेव. कुत इति चेत्तत्राह– तदेवेति । तदेव ज्ञात्रादिरूपमेव देहशब्दोक्तं, अस्माभिरिति शेषः, असावीश्वरः प्राकृताकृतिः प्राकृतदेहवान् नहि, अस्माभिरीश्वरस्य प्राकृतदेहवत्त्वं नाङ्गीक्रियते, तथाच वस्तुनि विपक्षाभावस्याप्रयोजकत्वान्निरुक्तमीश्वरस्य देहवत्त्वमिति देहवत्त्वहेतोरनैकान्तिकता नादवस्थ्यमिति ॥ ५४ ॥

**एवं स्वरूपदेहत्वं मुक्तस्याप्युररीकृतम् ।**
**नानिष्टभोगरतेन स्यात्प्राकृतक्षेत्रसम्भवः ॥ ५५ ॥**

अस्तु तर्हीश्वरस्याप्राकृतज्ञानानन्दात्मकस्वरूपभूतदेहवत्त्वं, तथापि प्रकृते मुक्तस्य देहवत्त्वे किमायतमित्यतः प्रकृते योजयति—

**एवमिति** ॥ मुक्तस्याप्येवमीश्वरवत्स्वरूपदेहवत्त्वं, स्वरूपभूतज्ञानानन्दात्मकत्व मुररीकृत अङ्गीकृतं, अस्माभिरिति शेषः, तच्चेश्वरस्वरूपवदेव सिद्ध्यति, अतएवे श्वरवद्धर्मित्वा भावो बुद्ध्यादिमत्वं सिद्धम्, मुक्तस्यतुखभोग एवास्ति नदुःखभोग इत्येतद् णादयति नानिष्टेति । अत्राप्येवमिति सम्बध्यते ऐमीश्वरवन्मुक्तस्याप्यनिष्टभोगो न स्यात्, कथंभूत इत्यत आह– प्राकृतेति, प्राकृतक्षेत्रे प्राकृतशरीरं तस्मात

सम्भव उत्पत्तिर्यस्य स तथोक्तः, प्राकृतशरीरसम्बन्धज इत्यर्थः, अनेनैतदुक्तं भवति-यदुक्तं परेण मुक्तस्य सुखित्वे दुःखित्वापात इति तदसत्, दुःखस्य प्राकृतशरीर-निमित्तकत्वान्मुक्तस्य च तदभावान्नदुःखभोगः किन्तु केवलपरमानन्दभोग एवेति ॥

विमतो नावयववान्विनाशित्वप्रसङ्गतः ।
घटवच्चेदवयवा निरस्यन्तेऽत्र कीदृशाः ॥ ५६ ॥

नन्वेवं 'स्वरूपदेहमित्यत्र यदुक्तं मुक्तस्य देहात्मकत्वं तदयुक्तं, देहस्य सावयवत्वात्, तदात्मकस्य च मुक्तस्य सावयवत्वापातात्, सावयवत्वे विनाशित्वं स्यादिति शङ्कते —

विमत इत्यादिना ॥ विमतः सावयवत्व, निरवयवत्वाभ्यां विमतिविषयो मुक्तः अवयववान्नभवति कुतः विनाशित्वप्रसङ्गतः विनाशोऽस्यास्तीति, तस्य भावस्तत्त्वं, तस्य प्रसङ्गः प्रसक्ति तस्मादिति ततः, सावयवत्वे विनाशित्वापातान्नसावयव इत्यर्थः, अयमत्र प्रयोगः विमतो मुक्तो निरवयवः अविनाशित्वात् परमाणुवत्, यद्यवयवी स्यात्तर्हि विनाशीस्यात् यथा घट इति विपक्षे बाधकतर्कश्च, तस्मान्निरवयवत्वान्नमुक्तस्य सावयवदेहात्मकत्वमिति, तदेतत्सामान्यतोऽनूद्य निराकरोति— अत्र मुक्ते अवयवा निरस्यन्ते चेत्, कीदृशाः? कीदृशा इत्यनेनावयवानामनेकविधत्वं सूचितम् तेनैव, भिन्नावयवनिरासोऽभिन्नावयवनिरासोवेति विकल्पोऽपि सूचितः ॥ ५६ ॥

सिद्धसाधनता हेतोस्ते भिन्नश्चेदचिन्मयाः ।
आत्मनो भेदरहिता एष्टव्या एव वादिभिः ॥ ५७ ॥

भिन्नावयवनिरासपक्षं दूषयति—

सिद्धसाधनतेति ॥ त अवयवा भिन्ना अचिन्मया निरस्यन्ते चेत्तर्हि निरवयवसाधकविनाशित्वहेतोः सिद्धसाधनता स्यात्, मुक्तस्य भिन्नावयवराहित्यं सिद्धमस्माकम्. अभिन्नावयवनिरासपक्षं दूषयति— आत्मन इति । आत्मनो जीवस्य भेदरहिताः अवयवा वादिभिः एष्टव्या अङ्गीकर्तव्या एव अभिन्नावयवानामङ्गीकार्यत्वान्नतन्निराकरणं युक्तमिति भावः ॥ ५७ ॥

परमाण्वादिदेशेषु व्याप्त्यै व्यामादिकेष्वपि ।
यथात्मनः प्रदेशाः स्युस्तेषां नोऽवयवास्तथा ॥ ५८ ॥

ननु वैशेषिकैः कुत आत्माभिन्ना अवयवा अङ्गीकर्तव्या इत्यत आह—

**परमाण्विति** ॥ तेषां वैशेषिकाणां पक्षे आत्मनः परमात्मनो जीवात्मनो वा व्याप्त्यै व्याप्तिसिद्ध्यर्थं, परमाणुरादिर्येषां ते परमाण्वादयस्तेषां देशास्तेषु परमाणुद्व्यणुक, त्र्यणुकाद्यवस्थानयोग्येषु स्थानेषु व्यामादिकेष्वपि व्यायतं हस्तद्वयं, व्याम इत्युच्यते, स आदिर्येषां तेष्वपि, आत्मनः प्रदेशा अवयवा यथा स्युः, अस्मत्पक्षेऽवयवा अभिन्नास्तथा स्युः । आत्मनो व्याप्तिमङ्गीकुर्वतां वैशेषिकाणां पक्षे परमाण्वाद्यल्पस्थले व्यामादिबहुस्थलेषु च आत्मनः प्रदेशा अङ्गीकर्तव्या अन्यथा व्याप्त्यसम्भवात्, तेचात्मप्रदेशा आत्माभिन्ना एवाङ्गीकर्तव्याः अन्यथैकस्यात्मनः सर्वव्याप्त्यसम्भवात्, एवंसति तेषां पक्षे यथा आत्माभिन्ना आत्मप्रदेशास्तथास्मत्पक्षेऽप्यात्मनो मुक्तजीवस्य त अवयवास्तदभिन्नाः, सुखज्ञानादिगुणा एव करचरणाद्यात्मकाः सम्भवेयुरिति भावः॥

मुक्तो रूपादिवित्सत्त्वाज्जडान्यत्वे सतीशवत् ।
दृष्टान्तोऽसाध्यविकलस्तस्य सर्वज्ञताग्रहात् ॥ ५९ ॥

मुक्तस्यावयवत्वं प्रसाध्येदानीमिन्द्रियवत्त्वं प्रसाध्यते—

**मुक्त इत्यादिना** ॥ मुक्तो रूपादिवित् रूपादिविषयकज्ञानवान्, तादृशविषयश्च, जडान्यत्वे सति सत्त्वादीशवत्, नन्वीश्वरस्य रूपादिविषयकज्ञानाभावाद्दृष्टान्तः साध्यविकल इत्यत आह– दृष्टान्त इति । दृष्टान्तः ईशवदित्ययं दृष्टान्तः साध्येन साध्यधर्मेण विकलो रहितः स नभवतीत्यसाध्यविकलः, कुत इत्यत आह– तस्येति । तस्य ईश्वरवादिभिरङ्गीकृतेश्वरस्य सर्वज्ञताग्रहात् सर्वज्ञताङ्गीकारात्, रूपादेरपि सर्वान्तःपातित्वात्तद्विज्ञानाभावे सर्वज्ञतासम्भवादिति भावः ॥ ५९ ॥

ईश्वरो न सुखी तेन रूपाद्यनुभवन्नपि ।
दुःखप्रसङ्गादिति मा वादि तद्व्याप्तिदूषणात् ॥ ६० ॥

ननु सर्वज्ञत्वाद्रूपादिज्ञानवानपीशो नरूपाद्यनुभवजन्यसुखवान्, सुखित्वे दुःखित्वापातात्, 'मुक्तौ रूपादिविज्ञानत्वात्' इत्यत्रच मुक्तस्य रूपादिज्ञानजन्यसुखानुभवो भवद्विवक्षितः, तस्माद्दृष्टान्तोऽसाध्यविकलो न भवतीत्याशङ्क्य परिहरति—

**ईश्वर इत्यादिना ॥** ईश्वरो रूपाद्यनुभवन्नपि जानन्नपि तेन रूपादिज्ञानेन सुखी नस्यात दुःखप्रसङ्गात्, सुखित्वे दुःखित्वापातात्, इति मा वादि नब्रूयात्, कुतः तद्व्याप्तिदूषणात्, यः सुखी स दुःखी यथा चैत्र इति तदुक्तव्याप्तेर्दूषितत्वात्, 'ननु सौख्यादिमानेशो दुःखादिरहितत्वतः' इत्याशङ्क्य एवं 'विमतो ज्ञानी न भ्रान्तिरहितत्वतः' इति सत्प्रतिपक्षत्वेन च, तस्यैवामन्दमानन्द वदन् 'नाश्नात्यसौ कथमिति' कालात्ययापदिष्टत्वेन च दुःखादिरहितत्वानुमानस्य प्रागेवास्माभिर्दूषितत्वादिति भावः तस्मादीश्वरस्य सुखाद्यनुभव सद्भावान्नदृष्टान्तोऽसाध्यविकल इति फलितार्थः ॥

दृष्टान्तो यस्य नेष्टोऽयं तस्य स्याद्व्यतिरेकवान् ।
शिलावदित्यतः शुद्धचिद्देहेन्द्रियभोग्यसौ ॥ ६१ ॥

ननु भवेदिदं मुक्तो रूपादिज्ञानवान् जडान्यत्वेसति सत्वादीशवदिति सर्वज्ञेश्वरदृष्टान्तेन मुक्तस्य रूपादिज्ञानसमर्थं, सर्वज्ञमीश्वरमभ्युपगच्छतः प्रति, येतु निरीश्वरभाट्टाद्यास्तेषामयं दृष्टान्तो न सम्मत इति न तान्प्रतीदं समर्थनं युक्तमित्यत आह-

**दृष्टान्त इति ॥** यस्य वादिनोऽयं दृष्टान्तो नेष्टः सर्वज्ञेश्वरदृष्टान्तो न सम्मतः तस्य व्यतिरेकः साध्यसाधनाभावः सोऽस्यास्तीति व्यतिरेकवान् स्यात, साध्यसाधनाभावविशिष्टोऽन्यः कश्चन दृष्टान्तो भवति, यथा मुक्तो रूपादिविज्ञानवान् जडान्यत्वेसति सत्वात् यो रूपादिज्ञानवान् नभवति, स जडान्यत्वेसति सन्नभवति यथा शिलेत्यादि व्यतिरेकदृष्टान्तो भवतीत्यर्थः, निरीश्वरोऽपि यो भाट्टादिर्वेदप्रामाण्यमभ्युपगच्छति तं प्रति 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि' 'सतत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वायानैर्वाज्ञातिभिर्वा' इत्यादिवाक्यं मुक्तस्य रूपज्ञानादिसद्भावे प्रमाणत्वेनोदाहर्तव्यं, एवं मुक्तस्य देहेन्द्रियादिमत्वमानन्दभोगवत्त्वञ्च प्रसाध्येदानीमुपसंहरति— अत इति । अत मुक्तोदेहेन्द्रि-

यादिमत्त्वे साधनप्रमाणसद्भावाद्बाधकाभावाच्च. असौ मुक्तः शुद्धचिद्देहेन्द्रियभोगी देहश्चेन्द्रियाणि च भोगाश्च, शुद्धाच सा चिच्च, तदात्मकाश्च ते देहेन्द्रियभोगाश्च, तेऽस्य सन्तीति तादृशः ॥ ६१ ॥

स्वानन्दविषये मोक्षे वेदोक्ते युक्तिसाधिते ।
द्वेषोऽयं वादिनां कस्मात्तद्विरुद्धेऽथवाग्रहः ॥ ६२ ॥

एवमस्मदुक्तप्रकारेण मुक्तस्याप्राकृतदेहेन्द्रियज्ञानवत्त्वे प्रमाणसिद्धेऽपि वादिनामेवंविधमोक्षानभ्युपगमो न प्रमाणमूलोऽपितु द्वेषमूल एव । तथापि तद्विरुद्धमोक्षाभ्युपगमश्च दुराग्रहमूलएवेत्याह—

स्वेति ॥ स्वानन्दविषये स्वरूपभूत आनन्दः स्वानन्दः स एव विषयो भोग्यो यस्मिन्, तस्मिन्, वेदोक्ते 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते' 'कामस्य यत्राप्ताः कामास्तत्र मामृतं कृधीन्द्रायेन्दो परिस्रव' 'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यादिवेदवचनैरुक्ते, निर्दुःखानन्दरूपतया प्रतिपादिते, युक्तिसाधिते, 'ज्ञानप्रयत्नवाञ्छावानीशो नह्यशुभं भजेत् । स्वसामर्थ्येन तेनैव तच्च कुर्यात्स तादृशम् । सोऽदेहश्चेदनिच्छादिर्भवेच्छशविषाणवत् । मुक्तौ रूप दिविसत्वाज्जडान्यत्वे सतीशवत्' इत्यादियुक्तिभिश्च साधिते मोक्षे वादिनामयं द्वेषः कस्मात्, किं मूलः? अथ तद्विरुद्धे अस्मदुक्तमोक्षविरुद्धे निर्विशेषब्रह्मस्वादिरूपमोक्षे आग्रहो वा कस्मात्, तत्तच स्वस्वसमयपक्षपातमन्तरेण न किञ्चिदपि कारणं पश्याम इत्यर्थः ॥

ततः स्वतः प्रमाणेन देवो देवेन बोधितः ।
विष्णुर्मोक्षस्य दातेति विश्वं भवति शोभनम् ॥ ६३ ॥

'आमाकेऽपेक्षिते पक्षे' इत्युक्तमुपसंहरति—

तत इति ॥ ततोऽस्मन्मतविरुद्धानामप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च तानि मतान्यनादृत्य स्वतः प्रमाणेन अन्यानपेक्षप्रमाणेन स्वप्रामाण्यग्रहणे स्वव्यतिरिक्तप्रमाणान्तर-

निरपेक्षेणेत्यर्थः. वेदेन वेदितः स्वातन्त्र्याद्यशेषगुणपूर्णतया निर्दोषतयाच प्रतिपादितः. देवः क्रीडादिगुणविशिष्टः विष्णुः श्रीनारायणो मोक्षस्य दातेति विश्वं तत्तदपेक्षितं मोक्षाद्यखिलं शोभनं मङ्गलं भवति ॥ ६३ ॥

इत्यादीन् दर्शयन्त्यर्थान् व्याख्योपन्याससंयुता ।
त्रिविक्रमार्येण तदा विश्वाभिज्ञस्य शुश्रुवे ॥ ६४ ॥

'तदा तदाननाम्भोजादि'त्याद्युक्तमुपसंहरन्नेव 'त्रिविक्रमार्यं सोऽपश्यत्' इति प्रकृतमनुसरति—

इत्यादीनिति ॥ इत्यादीन् 'प्रधानमपराधीनं' इत्यादीनर्थान् स्वपक्षसाधनपरपक्षनिराकरणरूपान् प्रमेयान् दर्शयन्ती, विश्वं अखिलमभिजानातीति विश्वाभिज्ञः पूर्णप्रज्ञस्तस्य उपन्याससंयुता व्याख्या त्रिविक्रमार्येण तदा शुश्रुवे ॥ ६४ ॥

अथ प्रायुङ्क्त विविधान् बोधचापगुणेरितान् ।
विपक्षयुक्तान् वीर्येण तीक्ष्णांस्तर्कशरानसौ ॥ ६५ ॥

अथेति ॥ अथ श्रीमध्वोपन्याससमाप्त्यनन्तरं असौ त्रिविक्रमार्यः विविधान् नानाविधान् बोधएव चापो धनुस्तस्य यो गुणस्तेन ईरितान् प्रेरितान् विपक्षयुक्तान् मध्वमतविरुद्धसिद्धान्तयुक्तान् तीक्ष्णान् प्रतिपक्षप्रतिक्षेपदक्षान् तर्का एव शरास्तान् अनुमानाख्यशरानित्यर्थः वीर्येण सामर्थ्येन प्रायुङ्क्त प्रयुयोज, कश्चिद्योद्धा प्रतिवीरनिरासाय चापगुणेरितान् विपक्षयुक्तान् वेः पक्षिणः पक्षाः पतत्राणि तैर्युक्तान् . विः पक्षिपरमात्मनोः' इत्यभिधानम् , तीक्ष्णान् विविधान् सायकान् वीर्येण बलाद्यथा विसृजेत्तद्वदिति श्लेषार्थः ॥ ६५ ॥

चिच्छेदातुच्छधिषणस्तांस्तदा तर्कसायकैः ।
प्रयुक्तमात्रान्प्रहसँल्लीलयातिशयालुभिः ॥ ६६ ॥

चिच्छेदेति ॥ प्रहसन् अतुच्छधिषणः श्रीपूर्णप्रज्ञाचार्यः लीलया अनायासेन तान् त्रिविक्रमार्यप्रयुक्तानुमानशरान् तदा प्रयोगसमनन्तरमेव तर्कसायकैः प्रत्यनुमान-

बाणैः, अतिशयालुभिः अतितीक्ष्णैः, चिच्छेद निराकरोत्, यथा कश्चिद्योद्धा अतिशयालुभिः सायकैः प्रयुक्तमात्रान् सायकान् छिनत्ति तद्वदिति श्लेषार्थः ॥ ६६ ॥

अथार्याणीतरजनैरनिवर्त्यानिपूरुषैः ।
विजिगीषुर्द्विजश्रेष्ठो वेदास्त्राणि प्रयुक्तवान् ॥ ६७ ॥

अथार्याणीति ॥ विजिगीषुः जेतुमिच्छन् द्विजश्रेष्ठः इतरे च ते जनाश्च तैरितरजनैस्त्रिवर्णेतरजनैरित्यर्थः, अथार्याणि त्रिवर्णेतरेषां वेदानधिकारित्वाद्धर्तुमशक्यानि वेदास्त्राणि वैदिकान्यस्त्राणि ब्रह्मपाशुपतादीनि च, पूरुषैरनिवार्याणि अनिवर्त्यानि प्रयुक्तवान् । तर्केण पराजितःसन् वेदवाक्यानि स्वाभिमतार्थे प्रयुक्तवानित्यर्थः । विजिगीषुर्योद्धा शस्त्रयुद्धे पराजितोऽस्त्रयुद्धं यथा कुर्यात्तद्वदिति श्लेषार्थः ॥

वाक्यैरतिबलीयोभिः प्रत्यस्त्रैरिव वैदिकैः ।
अर्थान्तरं प्रकटयंस्तान्यसौ सन्न्यवर्तयत् ॥ ६८ ॥

वाक्यैरिति ॥ असौ श्रीमध्वः तानि परप्रयुक्तानि वेदवाक्यानि अतिबलीयोभिः निरवकाशत्वेनोपजीव्यत्वेनचातिबलिष्ठैः, वैदिकैर्वाक्यैः स्वप्रयुक्तैरित्यर्थः, अर्थान्तरं–प्रतिवादिप्रयुक्तस्य तदभिप्रेतार्थादर्थान्तरं प्रकटयन् प्रकाशयन् प्रत्यस्त्रैरिव सन्न्यवर्तयत् निवर्तितवान् , निवर्तनं नाम पराभिमतार्थप्रच्यावनमेव, यथा कश्चिद्योद्धा परप्रयुक्तान्प्रत्यस्त्रैर्निवर्तयेदिति भावः ॥ ६८ ॥

सप्ताष्टानि दिनान्येवं वादं कृत्वा सहामुना ।
निरुत्तरं तं निश्चोद्यं चक्रे चक्रायुधप्रियः ॥ ६९ ॥

सप्तेति ॥ चक्रमायुधं यस्य तस्य श्रीहरेः प्रियः श्रीमध्वः अमुना त्रिविक्रमार्येण सह एवमुक्तप्रकारेण सप्तचाष्टौ च सप्ताष्टौ, सप्ताष्टानां पूरणानि सप्ताष्टानि 'तस्य पूरणे डट्' इति डट् , दिनानि वादमुपक्रम्य पञ्चदशदिनपर्यन्तमित्यर्थः, 'कालाध्वनोरिति' द्वितीया, वादं कृत्वा तं त्रिविक्रमार्यं निर्गतमुत्तरं यस्मात्स निरुत्तरस्तं, प्रत्युत्तररहितमित्यर्थः, निर्गतं चोद्यं प्रश्नो यस्मात्स निश्चोद्यस्तं, प्रश्नरहितश्चेत्यर्थः चक्रे ॥

प्रणम्याचष्ट शिष्टोऽसौ क्षम्यतां नाथ चापलम् ।
पदपद्मरजोदास्यं ध्रुवं मे दीयतामिति ॥ ७० ॥

**प्रणम्येति** ॥ शिष्ट उत्तमः असौ त्रिविक्रमार्यः प्रणम्य हे नाथ! श्रीमध्व! चपलस्य भावो चापलं क्षम्यतां, ध्रुवं शाश्वतं पदे पद्म इव पदपद्मे तयोः रजांसि, तेषां दास्यं दासत्वं मे मह्यं दीयतां इत्याचष्ट ॥ ७० ॥

व्याख्यां भाष्यस्य भूयोधीः श्रवणं सूरिनन्दनः ।
सन्तः प्रीतिमसन्तोऽन्यां सममारेऽभिरे ततः ॥ ७१ ॥

**व्याख्यामिति** ॥ भूयसी पूर्णा धीर्यस्य स श्रीमध्वः भाष्यस्य ब्रह्मसूत्रभाष्यस्य व्याख्यां उपन्यासमारेभे, सूरिनन्दनः सुब्रह्मण्यार्यनन्दनः श्रवण भाष्यश्रवण, आरेभे सन्तः सज्जनाः प्रीतिमारेभिरे, असन्तो दुष्टा अन्यामप्रीतिमारेभिरे इति त एते मध्वाद्या एतानि व्याख्या प्रभृतीनि समं युगपत् आरेभिर उपचक्रमिरे ॥ ७१ ॥

गुर्वाज्ञगौरवाट्टीकां कुर्वन् भाष्यस्य दुष्कराम् ।
षडर्धविक्रमार्योऽसौ महाचार्यमवोचत ॥ ७२ ॥

**गुर्वाज्ञेति** ॥ गुर्वाज्ञा गौरवात्, श्रीमध्वाज्ञा गौरवेण दुष्करां तदाज्ञामृते कर्तुमशक्यां भाष्यस्य श्रीमद्भाष्यस्य टीकां कुर्वन् असौ षडर्धविक्रमार्यः त्रिविक्रमार्य इत्यर्थः, महाचार्यं श्रीमध्वाचार्यं अभाषत ॥ ७२ ॥

कवीन्द्रैर्न समाप्यन्ते संग्रह्यापि यतोऽनिशम् ।
न्यायरत्नानि भाष्याब्धेरस्य गाम्भीर्यमद्भुतम् ॥ ७३ ॥

**कवीन्द्रैरिति** ॥ कवीन्द्रैर्ज्ञानिश्रेष्ठैः यतो यस्मात् भाष्याब्धेः श्रीमद्भाष्यसमुद्रात् न्याया एव रत्नानि शास्त्रन्यायाख्यरत्नानि अनिशं निरन्तरं संगृह्यापि उद्धृत्यापि न समाप्यन्ते । समुद्राद्रत्नान्यनिशं संगृह्यापि यथा न समाप्यन्ते एवमेव भाष्यादपि न्याया उद्धृत्य न समाप्यन्त इति भावः । न्यायाः श्रुत्यर्थविचाराङ्गभूताः 'उपक्रमो-

पसंहाराभ्यासापूर्वफलार्थवादाः, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानि । तथा प्रमाणानां प्राबल्यदौर्बल्यविचाराङ्गभूतानि, निरवकाशत्वसावकाशत्वोपजीव्यत्वोपजीवकत्व बहुत्वाल्पत्वानिचोच्यन्ते' ते च न्याया अस्मिन् भाष्ये तत्रतत्र व्युत्पादिता इत्यर्थः । तस्मादस्य भाष्यस्य गाम्भीर्यं अद्भुतम् ॥ ७३ ॥

**दशोपनिषदो देव्योदेवा इव समीप्सिताः ।**
**युक्ताः प्रसादयन्त्यर्था एषु भाष्यालयेष्वलम् ॥ ७४ ॥**

**दशेति** ॥ एषु भाष्याण्येव आलया मन्दिराणि तेषु भाष्याख्यमन्दिरेषु उपनिषद्भाष्याख्यमन्दिरेष्वित्यर्थः युक्ता उपपन्ना अर्थास्तयोक्ता उपनिषदर्थाः देव्यः श्रोतमानार्थाः दश च ता उपनिषदश्च दशोपनिषदः दशवेदान्तान् समीप्सिता अभीष्टादेवा भर्तृभूतादेवा इत्यर्थः आलयेषु स्वमन्दिरेषु युक्ताः सङ्गता देव्य इव अलं सम्यग् प्रसादयन्ति विवृण्वन्ति, सुखेन विज्ञातान् कुर्वन्तीत्यर्थः, देवा यथा स्वभार्याः प्रसादयन्ति तद्वदिति भावः । अत्रोपमालङ्कारः ॥ ७४ ॥

**गीततात्पर्यभाष्याभ्यामाभ्यां विश्वं प्रकाश्यते ।**
**गोगणैरप्रतीकारैरर्केन्दुभ्यामिवाधिकम् ॥ ७५ ॥**

**गीतेति** ॥ आभ्यां, तात्पर्यञ्च, भाष्यञ्च, तात्पर्यभाष्ये गीतायास्तात्पर्यभाष्ये, ताभ्यां नविद्यते प्रतीकारः प्रतिषेधो येषां तैः, परैर्निराकर्तुमशक्यैरितियावत्, गोगणैर्वचनसमूहैर्विश्वं विवक्षितं सर्वं प्रमेयजातं, अर्केन्दुभ्यां गोगणैः किरणसमूहैः विश्वं जगदिव अधिकं यथा भवति तथा प्रकाश्यते ॥ ७५ ॥

**इतिहासपुराणाब्धेर्भवच्चित्ताद्रिलोडितात् ।**
**जातां भारततात्पर्यसुधां कः सन्न सेवते ॥ ७६ ॥**

**इतिहासेति** ॥ भवतश्चित्तं तदेवाद्रिर्मन्दरगिरिस्तेनालोडितान्मथितात् इतिहासाश्च पुराणानि च तान्येवाब्धिस्तस्मात् जातामुत्पन्नां भारतस्य तात्पर्यं तदेव सुधा तां सन् सत्पुरुषः को न सेवते, स्पष्टः श्लेषार्थः ॥ ७६ ॥

पुराणस्थानपान्थानामभाषात्रयवेदिनाम् ।
भवता सुसखा चक्रे श्रीभागवतनिर्णयः ॥ ७७ ॥

पुराणेति ॥ भाषाणां गुह्य, दर्शन, समाधिलक्षण भाषाणां त्रयं तद्विदन्तीति भाषात्रयवेदिनः, ते नभवन्तीत्यभाषात्रयवेदिनस्तेषां, पुराणस्थानपान्थानां एकार्थान्विच्छिन्नं वाक्यजातं प्रकरणं, प्रकरणजातं स्थानमित्युच्यते, पुराणानां स्थानानि प्रकरणजातानि तेषु पान्थास्तेषां, पुराणकथाप्रकरणजातेषु वर्तमानानामित्यर्थः, सुसखा श्रीभागवतनिर्णयः श्रीभागवतस्य निर्णयोऽर्थनिश्चयो यस्मिन् स तथोक्तः, श्रीभागवततात्पर्यनिर्णयाख्यो ग्रन्थ इत्यर्थः, भवता चक्रे कृतः । तत्तद्देशभाषामजानतां पथिकानां तत्तद्भाषां जानन् कश्चिद्यथा सुसखा स्यात् तद्वदेव भाषात्रयमजानतां पुराणकथासङ्कथने प्रवर्तमानानां पुरुषाणां सुसखेत्यर्थः ॥ ७७ ॥

कस्तन्त्रसारं सम्प्राप्य न स्यात्पर्याप्तवाञ्छितः ।
अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ॥ ७८ ॥

क इति ॥ उत्तमं ग्रन्थोत्तमं, अमरैर्भगवन्मूर्तिभिः वर्णाभिमानिभिर्ब्रह्मादिदेवैर्वा आश्रिता छाया वर्णपंक्तिर्यस्य स तथा तं 'छाया पंक्तौ प्रतिमायामर्के योषित्यनातपे । उत्कोचे पावने कान्तौ शोभायां च तमस्यपी'ति हेमचन्द्रः, यद्वा आश्रिता छाया सिद्धान्तो यस्य स तथा तमिति, तन्त्रेषु तन्त्रग्रन्थेषु सारं श्रेष्ठं तन्त्रसाराख्यग्रन्थमित्यर्थः, अमरैराश्रितच्छायं कल्पद्रुममिव कल्पवृक्षमिव प्राप्य कः पुमान् पर्याप्तं सम्पूर्णं वाञ्छितं यस्य स तथा, न स्यात्, कल्पद्रुमच्छाया यथाऽमरैराश्रितैवं तन्त्रसारस्य सिद्धान्तोऽमरैराश्रितः एवं भूतं तन्त्रसारं प्राप्य कः पुमान् पर्याप्तवाञ्छितो न स्यादित्यर्थ ॥ ७८ ॥

लोकानामवलोकाय मार्गस्यास्य व्यधाद्भवान् ।
करुणाकरनेत्राभे वादसन्मानलक्षणे ॥ ७९ ॥

लोकानामिति ॥ हे करुणाकर! श्रीमध्व! भवान् लोकानां जनानां अस्य मार्गस्य वादजल्पवितण्डाख्यकथात्रयमार्गस्य तथा प्रत्याक्षानुमानागमाख्यप्रमाणत्रयमार्गस्य च

अवलोकाय दर्शनाय, नेत्रस्याभेवाभा ययोस्ते नेत्राभे मार्गावलोकने नेत्रं यथा कारणं तद्वदेव वादादिकथात्रयमार्गावलोकनाय, कथालक्षणाख्यं प्रकरणं नेत्राभं, प्रत्यक्षादि-प्रमाणत्रयस्योद्देशविभागलक्षणाद्यवलोकनाय प्रमाणलक्षणाख्यं प्रकरणं नेत्राभमित्यर्थः, एवं वादसन्मानलक्षणे वादश्च सन्मानं सत्प्रमाणं तच्च तयोर्लक्षणे ययोस्ते कथालक्षण प्रमाणलक्षणाख्य प्रकरण इत्यर्थः व्यधात् चक्रे ॥ ७९ ॥

एकाकी किलयश्चक्रे पदं मौलिषु विद्विषाम् ।
तत्त्वनिर्णयपार्थोऽयं केन नाम न पूज्यते ॥ ८० ॥

एकाकीति ॥ यस्तत्त्वनिर्णयपार्थ एकाकी असहायवान् विद्विषां वादिनां मौलिषु मस्तकेषु पदं पादं चक्रे तान् निराकरोतीत्यर्थः, अयं तत्त्वनिर्णयपार्थस्तत्त्वानां परावर-वस्तूनां निर्णयो यस्मिन् स विष्णुतत्त्वनिर्णयाख्यो ग्रन्थः स पार्थ इव अर्जुन इव केन नाम न पूज्यते? सर्वैरपि पूज्यत इति भावः ॥ ८० ॥

वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ ८१ ॥

वादादय इति ॥ मारुतेन वायुना त्वया ईरिताः प्रोक्ताः, वादः, वादाख्यं तत्त्वोद्योतं, प्रकरणमादिर्येषां ते वादादयः प्रकरणान्येव स्फुलिङ्गा अलं तनवोऽपि अणवोऽपि विपक्षाः प्रतिवादिन एव कक्षं वनं क्षिण्वन्ति नाशयन्ति, वायुनोद्बोधिता अग्निकणा यथा वनं नाशयन्ति तद्वद्वायुना त्वया प्रोक्तानि तत्त्वोद्योतादिप्रकरणानि प्रतिवादिनो निराकुर्वन्तीत्यर्थः, अत्र रूपकालङ्कारः ॥ ८१ ॥

अनन्तोऽर्थः प्रकटितस्त्वयाणौ भाष्यसंग्रहे ।
अहो आत्मपरिज्ञप्त्यै कृष्णेनेवाननान्तरे ॥ ८२ ॥

अनन्त इति ॥ त्वया, आत्मनः स्वस्य परिज्ञप्तिः परिज्ञानं तस्मै स्वसामर्थ्य-ज्ञापनायेत्यर्थः, अणौ, भाष्यस्य संग्रहो यस्मिन् स भाष्यसंग्रहस्तस्मिन्, अणुवेदान्त-भाष्य इत्यर्थः अनन्तोऽपरिमितोऽर्थः कृष्णेन यशोदाकृष्णेन आननान्तरे विवृतवद-

नान्तरे आत्मपरिज्ञप्त्यै यशोदां स्वसामर्थ्यज्ञापनार्थं अनन्तोऽपरिमितः अर्थः प्रपञ्चः मङ्‌व प्रकटित अहो एतदाश्चर्यम् ॥ ८२ ॥

भगवंश्चित्रकवितां लौकिकीं दर्शयन् किल ।
गोप्यं भारतसंक्षेपमकृथा विश्वविस्मयम् ॥ ८३ ॥

**भगवन्निति** ॥ हे भगवन् श्रीमध्व! लौकिकीं लोकविषयां चित्रकवितां विचित्रकवित्वं दर्शयन् त्वं गोप्यं गोपनीयं विश्वस्य विस्मयो यस्मात्, भारतस्य सङ्क्षेपं यमकभारतं भारतसङ्क्षेपात्मककाव्यरूपग्रन्थमित्यर्थः, अकृथाः कृतवानसि ॥ ८३ ॥

नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः ।
त्वयि रत्नाकरे रत्नश्रेणीर्वा गणयन्ति के ॥ ८४ ॥

**नानेति** ॥ त्वयि विद्यमानास्त्वयाकृता इत्यर्थः, स्तोत्राणिच गाथाश्च ता आदयो येषां ते, नानाविधानि सुभाषितानि येषु ते, ते च ते स्तोत्रग्रन्थादयश्च, तेषां कृतिर्निर्माणं, तदात्मिकाश्चताः सत्कृतयः, शोभनकरणानि ताः, नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः, रत्नाकरे समुद्रे रत्नश्रेणीर्वा रत्नसमूहानिव के गणयन्ति? त्वत्कृतीनां साकल्येन गणनेऽपि न कोऽपि समर्थः किमु वर्णन इति भावः ॥८४

एषु दभ्रमतीन् दभ्रान् हसत्युच्चैः सतां सभा ।
चिन्तामणींश्चिन्तयन्ती मितानप्यमितार्थदान् ॥ ८५ ॥

**एष्विति** ॥ मितानपि शब्दतः परिमितानपि अमितार्थान् अपरिमितार्थान् ददतीति तान्, अमितार्थवाचकानित्यर्थः, एतान् ग्रन्थान् चिन्तामणीन् तत्सदृशान् चिन्तयन्ती सतां सज्जनानां सभा एषु भवत्प्रणीतेषु श्रीमद्भाष्यादिग्रन्थेषु दभ्र इति स्वल्प इति मतिर्येषां तान्, एते ग्रन्था अल्पा इति मन्यमानानित्यर्थः दभ्रान् योग्यतया अल्पान् पुरुषान् उच्चैः सम्यक् हसति । चिन्तामणयः परिमाणतो मिता अपि यथा अमितार्भीष्टप्रदास्तथा एते भवत्प्रणीता ग्रन्थाः शब्दतो मिता अपि अमितार्थवाचकास्तानेतान्, दभ्रान्मन्यमानानल्पमतीन् पुरुषान् सतां सभोच्चैर्हसतीति भावः ॥

अपरोऽपीष्यतेऽस्माभिर्ग्रन्थेष्वेतेषु सत्स्वपि ।
सत्स्वर्पान्द्रादिषु पुरा तारकारिरिवामरैः ॥ ८६ ॥

अपर इति ॥ एतेषु ग्रन्थेषु सत्स्वपि अस्माभिरपरोऽपि ग्रन्थः, पुरा इन्द्रादिषु सत्स्वपि अमरैरपरस्तारकारिरिव स्कन्द इवेष्यते ॥ ८६ ॥

ग्रन्थेभ्य एभ्योऽगाधेभ्यो युक्तयो नो दुरुद्धराः ।
मनोमान्द्यात्ततो ग्रन्थं व्यक्ततर्कततिं कुरु ॥ ८७ ॥

अपरो ग्रन्थः कुत इष्यत इत्यत आह—

ग्रन्थेभ्य इति ॥ एभ्योऽगाधेभ्यो ग्रन्थेभ्यो युक्तयो भवदभिमतयुक्तयो मनोमान्द्याद्स्मद्बुद्धेरल्पविषयत्वाद्धेतो दुरुद्धरा उद्धर्तुमशक्याः, ततो नोऽस्माकं व्यक्ताः स्पष्टास्तर्कततयो युक्तिसमूहा यस्मिन् स तथा तमपरं ग्रन्थं कुरु ॥ ८७ ॥

इत्यर्थितो व्यधान्मध्वः सोऽनुव्याख्यां सतां सुधाम् ।
दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युतिम् ॥ ८८ ॥

इतीति ॥ त्रिविक्रमार्येणेतीत्थमर्थितः स मध्वः सतां सुधां अमृतवत्परितोषिणीं दुर्वादिनां यो गर्वः स एवाद्रिः पर्वतस्तस्य पविरिव वज्रमिव दुर्वादिनां गर्वपर्वतस्य वज्रायितामित्यर्थः, मायिन एव ध्वान्तोऽन्धकारस्तस्य निरासे रविद्युतिरिव द्युतिर्यस्यास्ता अनुव्याख्यां चक्रे ॥ ८८ ॥

युगपद्रचयन्नेनां कदाचित्स निरन्तरम् ।
चतुरश्चतुरः शिष्याँल्लीलयाऽलेखयत्खलु ॥ ८९ ॥

युगपदिति ॥ कदाचित् एनां श्रीमदनुव्याख्यां युगपद्रचयन् चतुरः कुशलः श्रीमध्वो निर्गतमन्तरं व्यवधानं यथा भवति तथा निरन्तरं चतुरः शिष्यान् लीलया अलेखयत्खलु । स्वयं रचयन्नेवाध्यायचतुष्टयं चतुर्भिः शिष्यैर्निरन्तरमलेखयदित्यर्थः तच्च लीलयैव ॥ ८९ ॥

युक्ताया युक्तिमालायाः प्रोक्तायास्तत्रचात्मना ।
व्यक्तं चक्रे विवरणं कवीन्द्रैरप दुष्करम् ॥ ९० ॥

युक्ताया इति ॥ एप श्रीमध्वस्तल श्रीमदनुव्याख्याने आत्मना प्रोक्ताया युक्ताया उपपन्नायाः युक्तिमालायाः कवीन्द्रैः दुष्करं कर्तुमशक्यं विवरणं व्यक्तं यथा भवति तथा चक्रे । श्रीमदनुव्याख्यानोक्तपूर्वपक्षसिद्धान्तयुक्तिप्रकाशानुरूपं श्रीमन्न्यायविवरणाख्यमपरं ग्रन्थं चक्र इत्यर्थः ॥ ९० ॥

तथाच श्रीमदाचार्यकृता ग्रन्थाः—

| | |
|---|---|
| १. तत्वसङ्ख्यानम् | २०. जयन्तीकल्पः |
| २. तत्वविवेकः | २१. नखस्तुतिः |
| ३. उपाधिखण्डनम् | २२. यमकभारतम् |
| ४. मायावादखण्डनम् | २३. कृष्णामृतमहार्णवः |
| ५. मिथ्यात्वानुमानखण्डनम् | २४. सदाचारस्मृतिः |
| ६. तत्वोद्योतः | २५. भागवततात्पर्यम् |
| ७. तत्वनिर्णयः | २६. प्रमाणलक्षणम् |
| ८. कर्मनिर्णयः | २७. श्रीमद्भारततात्पर्यनिर्णयः |
| ९. कथालक्षणम् | २८. ऐतरेयभाष्यम् |
| १०. गीताभाष्यम् | २९. तैत्तिरीयभाष्यम् |
| ११. गीतातात्पर्यम् | ३०. बृहदारण्यकभाष्यम् |
| १२. ऋग्भाष्यम् | ३१. ईशावास्यभाष्यम् |
| १३. ब्रह्मसूत्रभाष्यम् | ३२. काठकभाष्यम् |
| १४. अणुवेदान्तः | ३३. छान्दोग्यभाष्यम् |
| १५. अनुव्याख्यानम् | ३४. आथर्वणभाष्यम् |
| १६. न्यायविवरणम् | ३५. माण्डूकभाष्यम् |
| १७. तन्त्रसारः | ३६. षट्प्रश्नभाष्यम् |
| १८. द्वादशस्तोत्रम् | ३७. तलवकारभाष्यम् |
| १९. प्रणवकल्पः | |

मध्वेन्द्रोर्नित्यसम्बन्धान्निरस्तमस्तापचेतसोः ।
वैकुण्ठं यातयोः पित्रोर्गृहेऽस्यावरजोऽवसत् ॥ ९१ ॥

श्रीविष्णुतीर्थार्थवर्णनमुपक्रमते—

मध्वेन्द्रोरित्यादिना ॥ मध्वेन्दोर्नित्यसम्बन्धात् दर्शनश्रवणादिरूपात् निर्गतौ तमस्तापौ ययोस्ते निरस्तमस्तापे तादृशे चेतसी ययोस्तौ तयोर्निरस्तमस्तापचेतसोः माताच पिताच पितरौ तयोः पित्रोर्वैकुण्ठं यातयोः सतोः अस्य श्रीमध्वस्य अवरजो गृहेऽवसत् ॥ ९१ ॥

विधिभ्रूविभ्रमभ्रश्यद्धनगोधान्यसम्पदा ।
निर्वेदिना वेदविदा तेनापे वेदवादिराट् ॥ ९२ ॥

विधीति ॥ विधेर्दैवस्य या भ्रूस्तस्या यो विभ्रमो विलासः परिपाक इति यावत् तेन भ्रश्यन्ती, धनानि च, गावश्च, धान्यानि च, सम्पदश्च, धनगोधान्यसम्पदो यस्य स तथा तेन, अतएव निर्वेदोऽस्यास्तीति निर्वेदी तेन विरक्तिमतेत्यर्थः वेदविदा तेन अवरजेन वेदवादिराट् वेदवादिश्रेष्ठः श्रीमध्व आपे प्राप्तः । विधिवशाद्धनादिनाशे सति विरक्तो मध्वानुजो मध्वमगमदित्यर्थः ॥ ९२ ॥

पारिव्राज्यं प्रार्थयन्तं पादानम्रमिमं मुहुः ।
समयापेक्षयोर्वीक्षो गमयामास धाम तम् ॥ ९३ ॥

परिव्राज्यमिति ॥ उर्वी ईक्षा यस्य स उर्वीक्षः श्रीपूर्णप्रज्ञः परिव्राजो भावः पारिव्राज्यं, यत्याश्रममित्यर्थः प्रार्थयन्तं मुहुः पादानम्रं तमिमं स्वानुजं समयापेक्षया कालापेक्षया धाम मन्दिरं गमयामास । नायं कालः सन्यासस्य कालान्तरे भविष्य-तीत्युक्त्वा तावद्गृहं गमयामासेत्यर्थः ॥ ९३ ॥

न जघास न सुष्वाप न जहास न धीरधीः ।
समयार्थी स्मरञ्ज्येष्ठं रामं रामानुजो यथा ॥ ९४ ॥

नेति ॥ ज्येष्ठं स्मरन् धीरा धीर्यस्य स धीरधीः सन्यासे स्थिरबुद्धिरित्यर्थः, न मध्वानुजो समयार्थी सन्न्यासकालं प्रतीक्षमाणःसन्, चतुर्दशवत्सरान्ते समेष्यामीति श्रीरामोक्तसमयं प्रतीक्षमाणो ज्येष्ठं रामं स्मरन् रामानुजो भरतो यथा, तथा न जघास नादत्, अदभक्षणे लिट् । न सुष्वाप, न जहास, न हासं चकार ॥ ९४ ॥

राज्ये कथश्चिन्निक्षिप्य राजानं विरहार्दितम् ।
अवतारभुवं प्रायाद्भगवाञ्छरदत्यये ॥ ९५ ॥

राज्य इति ॥ भगवान् श्रीमध्वः शरदत्यये शरदवसाने विरहार्दितं भविष्य-द्विरहादुःखितं राजान जयसिंहं कथञ्चिद्राज्ये संस्थाप्य अवतारभुवं स्वावतारस्य भुवं पाजकक्षेत्रं प्रायात् ॥ ९५ ॥

विशुद्धद्विकुलं श्रौतं शुचिं कृतपितृक्रियम् ।
विरक्तं विषयान् भुक्त्वा व्यधान्मध्वोऽनुजं यतिम् ॥ ९६ ॥

विशुद्धेति ॥ विशुद्धे द्वे कुले यस्य स तथा तं निर्दुष्टमातापितृवंशजमित्यर्थः, श्रुतिसम्बन्धी श्रौतस्तं श्रुतिपाठतदर्थावधारणयुक्तमित्यर्थः, शुचिं मनोवाक्कायशुद्धिमन्तं कृतानुष्ठिता पितृक्रिया नित्यनैमित्तिकपितृकार्यं येन तं तत्कालानुष्ठितजीवच्छ्राद्धात्मक-पितृकार्यमित्यर्थः, विषयान् भुक्त्वा विरक्तं अनुजं यतिं चकार, अत्र विशुद्ध-द्विकुलत्वादयो धर्माः यत्याश्रमदाने हेतव इत्यर्था एभिर्विशेषणैर्दर्शिताः ॥ ९६ ॥

रहस्यतिरहस्यं तद्ब्रह्म ब्रह्मसमो ददौ ।
अमुष्मै पञ्चतपसो न विदुर्यत्तपस्विनः ॥ ९७ ॥

रहस्येति ॥ ब्रह्मणा समो ब्रह्मसमश्चतुर्मुखसदृशः श्रीमध्वः पञ्चाग्निमध्ये तपो येषां ते पञ्चतपसः पञ्चाग्निमध्ये तपश्चरन्तः इत्यर्थः, तपस्विनो यद्ब्रह्म न विदुः अतिरहस्यं तद्ब्रह्मरहसि अमुष्मा अनुजाय ददावुपदिदेश ॥ ९७ ॥

प्रेमामृतप्रसन्नास्यस्मिताङ्गापाङ्गपूर्वकम् ।
श्रीविष्णुतीर्थनामास्मै प्रीतितीर्थः प्रदत्तवान् ॥ ९८ ॥

प्रेमेति ॥ प्रीतितीर्थं आनन्दतीर्थ प्रेमैवामृतं प्रेमामृतं तेन प्रसन्नं तच्च तदास्यञ्च प्रेमामृतप्रसन्नास्यं तच्च, स्मितमेवाङ्गं सहकारि यस्य सचासावपाङ्गश्च सच प्रेमामृतप्रसन्नास्यस्मिताङ्गापाङ्गौ तौ पूर्वकौ यथा भवति तथा, अस्मै यतये म्यावरजाय श्रीविष्णुतीर्थनाम प्रदत्तवान् ॥ ९८ ॥

श्रवणेनानुवादेन मननेनाव्यथाकरोत् ।
कालं वेदान्तशास्त्रस्य वेदान्तगुरुसोदरः ॥ ९९ ॥

श्रवणेति ॥ वेदान्तगुरुसोदरः श्रीमध्वानुजः श्रीविष्णुतीर्थाचार्यः वेदान्तशास्त्रस्य श्रवणेन अनुवादेन प्रमेयानुवादेन मननेन चिन्तनेन च कालं समयं अव्यथा अवन्ध्यमकरोत् ॥ ९९ ॥

स दान्तिभक्तिमाधुर्यपरिचर्यादिमेदुरैः ।
महाविटपिनं चक्रे गुरोः स्वस्थं कृपांकुरम् ॥ १०० ॥

सइति ॥ स श्रीविष्णुतीर्थाचार्यः स्वस्थं स्वस्मिन स्थितं गुरोः आनन्दाचार्यस्य कृपांकुरं, दान्तिरिन्द्रियनिग्रहः सा च, भक्तिश्च, माधुर्यं वाङ्मनसोरवाहल्यं तच्च, परिचर्या शुश्रूषा सा च, ता आदयो येषां गुणानां त एव मेदुराणि तैः, अंकुराभिवृद्धिसाधनानि 'सान्द्रस्निग्धस्तु मेदुर' इत्यमरः, दान्तिभक्तिमाधुर्यपरिचर्यादिमेदुरैः महाविटपिनं महावृक्षं चक्रे स्वगुरुकृपांकुरं स्वीयदान्त्यादिभिरवर्धयदिति भावः ॥

अनन्तमतिकारुण्यकल्पद्रुमवरो जनैः ।
अवर्ण्यो महिमा तस्य लौल्यात्संवर्ण्यते मनाक् ॥ १०१ ॥

अनन्तेति ॥ अनन्तमतेः श्रीपूर्णप्रज्ञस्य कारुण्यं दया तदेवकल्पद्रुमः सोऽस्यास्तीति तादृशस्य तस्य श्रीविष्णुतीर्थस्य महिमा जनैरवर्ण्योऽपि वर्णयितुमशक्योऽपि लोलस्य भावो लौल्यं तस्मात् तन्महिमानमनुक्त्वास्थातुं धैर्याभावादित्यर्थः मनाक् ईषत् संवर्ण्यते ॥ १०१ ॥

चतुरोऽसौ प्रवचने मनुसंसिद्धिमान्मनः ।
संख्या मा पूर्णा मागान्मध्वदासमिति व्यधात् ॥ १०२ ॥

चतुर इति ॥ प्रवचने श्रीमध्वशास्त्रव्याख्याने चतुरः, मनोर्मन्त्रस्य संसिद्धिरस्यास्तीति मनुसंसिद्धिमान् असौ श्रीविष्णुतीर्थार्यो मध्वदासं मां पूरणी अस्मादयं द्वितीय इत्यादि, सङ्ख्या पूरणीसङ्ख्या सा मागात् न प्राप्नोत् इति मनो व्यधात्, मत्सेवकमन्यन्तेत्यर्थः । मध्वशिष्यसङ्ख्यानावसरे जनो मां अस्मादयं द्वितीयस्तृतीय इति नवदेत्, किन्तु यथा मध्वशिष्याग्रगण्यं वदेत्तथा यतिष्य इत्यमन्यत इति भावः ॥

दिशं प्रयान्तं शशिनश्चरन्तं भुव्यशोधयत् ।
तीर्थकं विष्णुतीर्थं च विष्णुतीर्थश्च तीर्थकम् ॥ १०३ ॥

दिशमिति ॥ शशिनश्चन्द्रस्य दिशमुत्तरदिशमित्यर्थः, प्रयान्तं भुविचरन्तं विष्णुतीर्थं तीर्थरूपं कं जलञ्च, तीर्थकं पर्यशोधयत, सम्यगशोधयत् शुध शौचे लङ् । विष्णुतीर्थश्च तीर्थकं तीर्थजलं पर्यशोधयत् । गङ्गादितीर्थस्नानेन श्रीविष्णुतीर्थार्थे शुद्धकायोऽभूत् । भागवतश्रेष्ठस्य मज्जनेन तीर्थसलिलानि च पावनान्यभूवन्नित्यर्थः ॥ १०३ ॥

अकामानामनेकेषां सिद्धिभूमिं तपस्विनाम् ।
तिरोहितात्मा प्रापासौ हरिश्चन्द्रमहीधरम् ॥ १०४ ॥

आकामानामिति ॥ असौ श्रीविष्णुतीर्थार्यः नविद्यते काम इच्छा येषां तेषामकामानां अनेकेषां, तप एषामस्तीति तपस्विनस्तेषां सिद्धेः तपःसिद्धेः भूमिः स्थानं सिद्धिभूमिस्तां, हरिश्चन्द्रमहीधरं तन्नामकं पर्वतं तिरोहितोऽन्तर्हितः आत्मा स्वरूपं यस्य स तथा सन् योगसामर्थ्यात्सर्वप्राणिभिरदृश्यः सन्नित्यर्थः प्राप ॥ १०४ ॥

द्वन्द्वदुःखानले वीरो मात्सर्येण विमत्सरः ।
तन्त्याज मत्वा तस्यासावशनादीन्धनायितम् ॥ १०५ ॥

द्वन्द्वेति ॥ वीरः अध्यवसायान्नगामी असौ विगतो मत्सरो यस्मात्स विमत्सरः सन्नपि द्वन्द्वमेव शीतोष्णादिद्वन्द्वमेव दुःखानलो दुःखाग्निः मात्सर्येण अशनमादिर्यस्य तदशनादि, तस्य द्वन्द्वदुःखाग्नेः, इन्धनवदाचरतीतीन्धनायितं मत्वा तत्याज ॥

भक्तैरनुगिरं नीतं प्रार्थितो यतिशेखरः ।
पञ्चगव्यं पपौ किञ्चित्पञ्चमेपञ्चमे दिने ॥ १०६ ॥

भक्तैरिति ॥ यतिशेखरो यतिश्रेष्ठो भक्तैः अनुगिरं गिरेः समीपं 'गिरेश्च सेनकस्य' इत्यव्ययीभावान्ताट्टच्, नीतं पञ्चगव्यं प्रार्थितःसन् पञ्चमे पञ्चमेदिने किञ्चित्पपौ ॥ १०६ ॥

स त्यजन् साहसी तच्च तपस्तेऽपेततापसम् ।
बिल्वपर्णैः क्षितौ पन्नैस्तृप्तिमान् सलिलैरपि ॥ १०७ ॥

स इति ॥ साहसमस्यास्तीति साहसी, तच्च पञ्चगव्यञ्च त्यजन् स विष्णुतीर्थ-स्तापसानतिक्रम्य वर्तमानमतितापसं तपः, क्षितौ पन्नैः पतितैर्बिल्वपर्णैः सलिलैरपि तृप्तिमानसन् तेपे ॥ १०७ ॥

यथेष्टमध्यास्त शिलां यमी सुनियमी सताम् ।
नाध्यासते यामेकाहं दैवभग्नास्तपस्विनः ॥ १०८ ॥

यथेष्टमिति ॥ यमो मनः संयमोऽस्यास्तीति यमी सुनियमः शोभनव्रतनियमोऽ-स्यास्तीति सुनियमी, दैवभग्ना ईश्वरप्रतिहताः तदनुग्रहरहिता इत्यर्थः, तपस्विनो यां शिलां एकश्चतदहश्चैकाहं 'राजाहः सखिभ्य' इति टच्, नाध्यासते, 'अधि शीङ् स्थासां कर्म' इति कर्मत्वं तां शिलां यथेष्टं बहुकालपर्यन्तमित्यर्थः अध्यास्त । दैवानुग्रहरहितास्तपस्विनो यस्यां शिलायामेकाहमपि स्थातुमसमर्थास्तस्यां शिलायामयं बहुकालं वसन् तपश्चकारेति भावः ॥ १०८ ॥

पवनांशानुजो जित्वा पवनं रेचकादिभिः ।
विषयेभ्यो हृषीकाश्वान्मनोयन्त्रा समाहरत् ॥ १०९ ॥

**पवनेति** ॥ पवनांशानुजो मध्वानुजः रेचकमादिर्येषां तानि तथा तैः, रेचकपूरक-कुम्भकैरित्यर्थः, पवनं शारीरं वायुं जित्वा हृषीकाण्येवाश्वास्तान् इन्द्रियरूपाश्वा-नित्यर्थः, विषयेभ्यः शब्दादिभ्यः मनोयन्त्रा मनोनामकसारथिना समाहरत् ॥

**स्मरन्मुरारेराकारं दध्यावध्यात्मकोविदः ।**
**समाधिमाधिशमनं योगिलभ्यं सलब्धवान् ॥ ११० ॥**

**स्मरन्निति** ॥ अधिकश्चासावात्मा चाध्यात्मा श्रीहरिः, तद्विचारे कोविदोऽध्यात्म-कोविदः, मुरारेः श्रीकृष्णस्य आकारं स्मरन्, गुरूक्तमार्गेण स्मरन्सन् दध्यौ, एवं कुर्वन्सन्, योगो मनो योग एषामस्तीति योगिनस्तैर्लभ्यं प्राप्यं, आधेर्मनःक्लेशस्य शमनं शान्तिर्यस्मात्तमाधिशमनं, समाधिं निरन्तरं भगवति मनोयोगं, तथाचोक्तं 'परे हि योगो मनसः समाधि'रिति लब्धवान् ॥ ११० ॥

**मौकुन्दे सुन्दरे रूपे स्वानन्दादिगुणार्णवे ।**
**स्वाश्चर्यरत्ने मग्नात्मा नान्यत्किञ्चिद्विवेद सः ॥ १११ ॥**

**मौकुन्द इति** ॥ सुन्दरे, स्वानन्दादिगुणार्णवे शोभनानन्दादिगुणसिन्धौ स्वाश्चर्येषु शोभनाश्चर्येषु रत्नमुत्तमं तस्मिन्, स्वाश्चर्यरत्ने मौकुन्दे मुकुन्दसम्बन्धिनि रूपे मग्नात्मा मग्नचित्तः स अन्यत् ध्यानविषयभगवद्रूपादन्यत् किञ्चिद्वस्तु नविवेद, असंप्रज्ञातसमा-धिस्थोभूदित्यर्थः ॥ १११ ॥

**कामत्रासविहीनस्य तस्य सुज्ञानचक्षुषः ।**
**विना कैवल्यसाम्राज्यं नार्घो योगमणेरभूत् ॥ ११२ ॥**

**कामेति** ॥ तस्य श्रीविष्णुतीर्थस्य कामः फलकामना स एव त्रासो मणिदोषस्तेन विहीनस्तस्य मणिर्यथा दोषहीनः स्यादेवमस्य फलाख्यदोषरहित इत्यर्थः, सुज्ञानमेव शोभनापरोक्षज्ञानमेव चक्षुर्यस्य तस्य, मणिप्रकाशश्चक्षुरित्युच्यते मणिर्यथा शोभन-प्रकाशवान् स्यात्तथा तद्योगोऽपि सम्यगपरोक्षवानित्यर्थः योग एव मणिर्योगमणिस्तस्य कैवल्यमेव मोक्ष एव साम्राज्यं तद्विना अस्य अर्घो मौल्यं नाभूत् यथा कस्यचिद्रत्न-

विशेषस्य साम्राज्यं विना मौल्यं नस्यात्तथा तद्योगस्यापि कैवल्यं विनायत्फलं तन्नाभूदिति भावः ॥ ११२ ॥

मध्वानुजे मध्वनाथो यं प्रसादं व्यधात्तदा ।
स चित्ताविषयत्वाद्वा गोप्यत्वाद्वा न वर्ण्यते ॥ ११३ ॥

मध्वानुज इति ॥ मध्वनाथः श्रीहरिः तदा मध्वानुजे यं प्रसादं अनुग्रहं व्यधात् स अनुग्रहः चित्ताविषयत्वाद्वा गोप्यत्वाद्वा न वर्ण्यते ॥ ११३ ॥

अहो महाबोधसेवामहिमास्मिन् युगे यतः ।
धन्योऽसौ सिद्धिमापेमां सोऽमरैरित्यलाल्यत ॥ ११४ ॥

अहो इति ॥ यतः धन्योऽसौ विष्णुतीर्थः, अस्मिन् युगे कलियुगे इमां सिद्धिं तपःसिद्धिं आप तस्मात् महाबोधसेवामहिमा श्रीमध्वाचार्यशुश्रूषामहिमा अहो आश्चर्यम् इति स महिमा अमरैर्देवैरलाल्यत, आदृतोऽभूत् ॥ ११४ ॥

तीव्रव्रतोऽतीन्द्रियविद्विद्याब्धिस्तर्कपण्डितः ।
अनिरुद्धपदाधारः प्रेष्ठः शिष्यस्तमाययौ ॥ ११५ ॥

तीव्रेति ॥ तीव्रं व्रतं यस्य स तथोक्तः अन्यदुष्करव्रतविशेषयुक्त इत्यर्थः । इन्द्रियमतीतमतीन्द्रियं तद्वेत्तीत्यतीन्द्रियवित् तपोमहिम्नातीतानागतज्ञानीत्यर्थः विद्या-भिरब्धिरिव विद्याब्धिस्तर्कपण्डितः तर्कशास्त्रकुशलः अनिरुद्ध इति पदं नाम तस्याधारः अनिरुद्धतीर्थाचार्य इत्यर्थः प्रेष्ठोऽतिप्रियः शिष्यः तं विष्णुतीर्थाचार्यं स्वगुरुं आययौ. हरिश्चन्द्रगिरौ ददर्शेत्यर्थः ॥ ११५ ॥

तेन सम्प्रार्थितं प्राप्तं रूप्यपीठमिमं पुनः ।
कृत्स्नज्ञं कृपया स्वेषु सम्प्राप्तं मेनिरे प्रजाः ॥ ११६ ॥

तेनेति ॥ अनिरुद्धतीर्थाचार्येण सम्प्रार्थितं रूप्यपीठगमनायेति शेषः अतएव रूप्यपीठं यातं इमं विष्णुतीर्थार्यं दृष्ट्वा प्रजाः शिष्यजना स्वेषु कृपया पुनः सम्प्राप्तं

कृतज्ञं श्रीपूर्णप्रज्ञाचार्यं मेनिरे, श्रीमध्व तदनुजयोः सादृश्यात्प्रजाः श्रीमध्वानुजं दृष्ट्वा स्वेषु कृपया श्रीमध्वमेव पुनः सम्प्राप्तं मेनिर इत्यर्थः ॥ ११६ ॥

कवीन्द्रतिलको विद्वच्छेखरस्तापसाग्रणीः ।
मध्वकेलीशुकोऽस्याभूच्छिष्यो व्यासपदाश्रयः ॥ ११७ ॥

कवीन्द्रेति ॥ अस्य श्रीविष्णुतीर्थस्य कवीन्द्रतिलक कविश्रेष्ठानां तिलक इव तिलकः विद्वच्छेखरो विद्वच्छ्रेष्ठः तापसेष्वग्रणीः मध्वकेलीशुकः श्रीमध्वस्य क्रीडायाः शुकः व्यासपदाश्रयः व्यासस्य पदं नाम बादरायणनामेत्यर्थस्तस्याश्रयो व्यासपदाश्रयः बादरायणतीर्थ इत्यर्थः एवं भूतः शिष्योऽभूत् ॥ ११७ ॥

असौ दास्यं ध्रुवं यातं महान्तं महतामपि ।
व्यधादनुग्रहं कुर्वन् सामर्थ्यैः कौतुकं नृणाम् ॥ ११८ ॥

असाविति ॥ सामर्थ्यैः नृणां कौतुकं आश्चर्यं कुर्वन् असौ श्रीविष्णुतीर्थाचार्यः ध्रुवं निश्चयं यथा भवति तथा दास्यं यातं बादारायणतीर्थाख्यं अनुग्रहं कुर्वन्सन् इत्यर्थः महतामपि ज्ञानिनामपि महान्तं ज्ञानादिगुणैर्महान्तं व्यधाच्चकार ॥ ११८ ॥

आरुरोह दुरारोहं स परैः प्रीतिकृद्धरेः ।
महान्तं महिमानं च महीध्रं च गुहप्रियम् ॥ ११९ ॥

आरुरोहेति ॥ हरेः प्रीतिकृत् यः श्रीविष्णुतीर्थाचार्यः परैरन्यैर्दुरारोहं अप्राप्यं महान्तं महिमानं आरुरोह प्रापेत्यर्थः, गुहप्रियं षण्मुखप्रियं महीध्रञ्चारुरोह, नरागम्यं कुमारपर्वतनाख्यमद्रिशिखरमारुरोहेत्यर्थः ॥ ११९ ॥

आकृष्टोऽस्य गुणैर्व्याप्तैर्यो गोदाया उपाययौ ।
स पद्मनाभतीर्थाख्यः शिष्योऽन्योऽभूत्सुचेतसः ॥ १२० ॥

आकृष्ट इति ॥ व्याप्तैः अस्य श्रीमध्वस्य गुणैः आकृष्टो यो गोदाया गोदावरी तीरात् उपाययौ स सुचेतसः श्रीपूर्णप्रज्ञाचार्यस्य अन्यः शिष्यः पद्मनाभतीर्थाख्योऽभूत्॥

श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया ।
तस्मै प्रसन्नः प्राज्येक्षः सद्यो विद्यां ददौ शुभाम् ॥ १२१ ॥

श्रुत्येति ॥ श्रुत्या वेदान्तशास्त्रश्रवणेन मत्या मननेन सदा भक्त्या सनातनभक्त्या विरक्त्या नित्यसेवया प्रसन्नः प्राज्या भूयसी ईक्षा ज्ञानं यस्य स प्राज्येक्षः श्रीपूर्णप्रज्ञाचार्यस्तस्मै पद्मनाभतीर्थार्याय सद्यः द्राक् 'सद्यो द्राङ्मंक्षु च द्रुतं' इत्यमरः शुभां विद्यां परमात्मतत्त्वविद्यां ददौ ॥ १२१ ॥

वेदान्ताब्धिं न यो जातु जहौ विद्वत्तिमिङ्गिलः ।
युक्तिप्रवाहसंरम्भात्परशास्त्रनदीचरः ॥ १२२ ॥

वेदान्तेति ॥ युक्तिप्रवाहा वैशेषिकादीनां युक्तिसमूहास्तेषु संरम्भात् कोपात् परशास्त्राण्येव वैशेषिकादिपरशास्त्राण्येव नद्यस्तासु चरतीति तथोक्तः तन्न्यायेन तद्युक्तिनिराकरणार्थं वैशेषिकादिपरशास्त्राख्यनदीषु प्रवर्तमान इत्यर्थः यो विद्वत्तिमिङ्गिलो जातु कदाचिदपि वेदान्ताब्धिं वेदान्तशास्त्राख्यसमुद्रं न जहौ, तिमिङ्गिलो नाम मत्स्यविशेषः 'तिमिर्नाममहामत्स्यस्तन्निगिलस्तु तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्तिराघव' इत्युक्तेः, स यथा जात्वपि समुद्रं न जहात्येवमसौ वेदान्तशास्त्रं न जात्वपि जहावित्यर्थः ॥ १२२ ॥

व्याख्याप्रणादमात्रेण वीरम्मन्यान्स्वमण्डले ।
मायाविग्रामसिंहान्यो वादिसिंहो निराकरोत् ॥ १२३ ॥

व्याख्येति ॥ यो वादिसिंहः स्वमण्डले स्वयूथे वीरंमन्यमानाः वीरंमन्यान्तान् वयमेव वीरा इति मन्यमानानित्यर्थः, माया एषामस्तीति मायाविनस्त एव ग्रामसिंहास्तान् मायावादिसारमेयानित्यर्थः व्याख्याप्रणादमात्रेण व्याख्यारूपध्वनिमात्रेण निराकरोत्, व्याख्याप्रणादश्रवणमात्रेण मायिनो विम्यतिस्मेति भावः ॥ १२३ ॥

मत्तदुर्वादिमातङ्गतर्कमस्तकदारणे ।
पञ्चास्यो योऽभवद्व्यक्तं चतुरास्योऽपि केवलम् ॥ १२४ ॥

**मत्तेति** ॥ यश्चतुरमास्यं मुखं यस्य स चतुरास्यस्तथापि मत्ता विद्यागर्विना ये दुर्वादिनस्त एव मातङ्गास्तेषां यानि तर्कमस्तकानि कुयुक्त्याख्यकुम्भस्थलानि तेषां दारणे विदलने व्यक्तं स्पष्टं यथा भवति तथा पञ्चास्यः सिंहोऽभवत्, अत्र चतुरास्योऽपि पञ्चास्योऽभवदिति विरोधः, तस्याभासाद्विरोधाभासालङ्कारः ॥१२४॥

**सन्न्यायरत्नावलिरप्युदपादि यतः शुभा ।**
**टीका परानुव्याख्याया अनर्घा बोधसागरात् ॥ १२५ ॥**

**सन्न्यायेति** ॥ बोधेन सागर इव बोधसागरस्तस्मात् यतः श्रीपद्मनाभतीर्थान् परा उत्तमा च सानुव्याख्या च तस्याष्टीका न विद्यतेऽर्घं मौल्यं यस्याः सा अनर्घा सन्न्यायरत्नावलिरपि तन्नामकः ग्रन्थोऽपि उदपादि जज्ञे, समुद्रादनर्घरत्नावलिरिवेति श्लेषार्थः ॥ १२५ ॥

**वेदप्रवचनाचार्यशिष्योऽसावियति पूजितः ।**
**सभ्यः सभायां यो वेदं व्याचख्यौ वेदसारवित् ॥ १२६ ॥**

**वेदेति** ॥ सभ्यः सभाया उचित यः श्रीपद्मनाभतीर्थाख्यः वेदसारवित् वेदार्थतात्पर्यवित् सन् सभायां वेदं व्याचख्यौ असौ, वेदप्रवचने वेदव्याख्याने आचार्यः श्रीमध्वस्तस्य शिष्य इति पूजितः ॥ १२६ ॥

**अनयोः प्रथमे शिष्याश्चरमे चाभवन्निह ।**
**अनन्तबोधस्यानेके यतीन्द्रा बहुदेशजाः ॥ १२७ ॥**

**अनयोरिति** ॥ अनन्तबोधस्य श्रीपूर्णप्रज्ञस्य अनयोः सकाशात् श्रीविष्णुतीर्थ, पद्मनाभतीर्थयोः सकाशात् प्रथमे, चरमेच पश्चात्तनाश्च अनेके बहवः बहुदेशजा नानादेशजा नानादेशसम्भवा यतीन्द्राः शिष्या अभवन् ॥ १२७ ॥

**वशीकृतहृषीकाश्च जनन्मृत्युपमर्दिनः ।**
**नरसिंहपदाधारा अभ्यस्तोपेन्द्रनामकाः ॥ १२८ ॥**

तत्रापि महत्तमानां केषाञ्चिन्नामधेयान्याह—

**वशीकृतेत्यादिना** ॥ वशीकृतानि हृषीकाणि इन्द्रियाणि यैस्ते वशीकृतहृषीकाः 'हृषीकं विषयेन्द्रियम्' इत्यमरः, अनएव हृषीकाणामीशाः हृषीकेशतीर्थाख्या इत्यर्थः, जननमादिर्येषां तानि जननादीन्युपमर्दयितुं शीलमेषामस्तीति जननादुपमर्दिन जन्म-मरणादिदोषनिराकरणशीला इत्यर्थः, अनएव जनार्दनतीर्थाख्या इति भावः, नरसिंहस्य पद पादस्तदेवाधारो येषां ते तथोक्ता नरसिंहतीर्थाख्या इति भावः अभ्यस्तं लोकैः परिचितं उपेन्द्रनाम येषां ते तथोक्ता उपेन्द्रतीर्था इत्यर्थः अक्रूरुच्चरित भगवन्नाम इति ध्वनितोऽर्थः ॥ १२८ ॥

**अदीर्घान्याभिधाना ये श्रीमद्रामपदाश्रयाः ।**
**अप्रत्यक्षगुणोद्रिक्ता भक्तिवैराग्यसागराः ॥ १२९ ॥**

**अदीर्घेति** ॥ अन्यत् उक्तेभ्योऽन्यत् तच्च तदभिधानञ्च, दीर्घो न भवतीत्यदीर्घः वामन इति यावत्, अदीर्घ इत्यन्याभिधानं येषां तेऽदीर्घान्याभिधानाः, वामनतीर्थाख्या इतियावत्, अल्पीकृत लौकिकव्यवहाराश्चेति ध्वनितोऽर्थः, श्रीमद्राम इति पदं तदाश्रयाः श्रीमद्रामतीर्थाख्या इत्यर्थः प्रत्यक्षागोचरा अप्रत्यक्षास्तादृशा ये गुणास्तैरुद्रिक्ता अभिवृद्धाः अधःकृतमक्षजं प्रत्यक्षं येन स अधोक्षज इति व्युत्पत्तिः, अक्षजाधःकरणञ्च तदगोचर-गुणवत्वं, तस्मादधोक्षजतीर्था इत्यर्थः । 'वशीकृतहृषीकाश्चे'त्यादिनोक्ताः सर्वेऽपि यतीनां मध्ये भक्तिवैराग्यसागराः, भक्तिवैराग्याभ्यां सागरा इव सागराः परिपूर्णा इत्यर्थः, भक्तिवैराग्यादिगुणसागरत्वमेव वशीकृतहृषीकत्वादिगुणैः सूचितम्, भक्तयादि सागरत्वोक्त्यैव हृषीकेशादिनाम्नां तीर्थशिरस्कत्वं सूचितं सागरस्यापिविशिष्टतीर्थत्वा-देतेषामेतानि नामानि तत्तद्गुणयोगैरेव वर्तन्त इति सूचयितुं तत्तद्गुणकथनमुखेनैव सूचितानि, यथायोग्यं सर्वेषाञ्च सर्वगुणत्वज्ञापनाय सर्वत्र बहुवचनम् ॥ १२९ ॥

**पादैः पुनन्तः पृथिवीं दर्शयन्तो हरेः पदम् ।**
**धूतदुस्समयध्वान्ता आदित्या इव गां गताः ॥ १३० ॥**

पुनः कथंभूता इत्यत आह—

पादैरिति ॥ पादैः स्वचरणैः पृथिवीं पुनन्तः सूर्यकिरणसम्बन्धाद्भुवो यथा शुद्धिः स्यादेवमेतच्चरणसम्बन्धादपीति भावः; हरेः पदं पद्यत इति पदं स्वरूपं तद्दर्शयन्तः सच्छास्त्रव्याख्यानेन प्रकाशयन्तः भास्कराश्च हरेः पदमाकाशं, धूतः दुस्तमयस्त्वान्तः दुःशास्त्रान्धकारो यैस्ते तथोक्ताः शास्त्रव्याख्यानेनैव निरस्तदुःशास्त्रतिमिरा इत्यर्थः, सूर्याश्च निरस्तान्धकाराः, गां भुवं गता आदित्या इव पृथ्वीमलञ्चक्रुरित्युत्तरत्र सम्बन्धः ॥ १३० ॥

मोक्षशास्त्रामृताम्भोधिसेवया नित्यनिर्वृताः ।
चक्रिचारुतरार्चासु चक्रिणश्चरणार्चकाः ॥ १३१ ॥

मोक्षेति ॥ मोक्षसाधनं शास्त्रं मोक्षशास्त्रं श्रीमध्वप्रणीतवेदान्तशास्त्रं तदेवामृताम्भोधिरिव अमृतसमुद्र इव तस्य सेवा श्रवणमननादिसेवा तया नित्यं सदा निर्वृताः सुखं प्राप्ताः चक्रिणः श्रीहरेश्चारुतरार्चासु सुन्दरतमप्रतिमासु, चक्रमस्यास्तीति चक्री श्रीहरिस्तस्य चरणयोरर्चकाः पूजकाः पृथ्वीमलञ्चक्रुरित्युत्तरत्रसम्बन्धः ॥ १३१ ॥

मध्वप्रशिष्या बहवः शिष्या येषां मुहुस्तथा ।
अलञ्चक्रुरलं पृथ्वीं सर्वे सद्गुणभूषणाः ॥ १३२ ॥

मध्वेति ॥ सद्गुणास्तपोज्ञानभक्तिवैराग्यादिसद्गुणा एव भूषणानि एषां ते तथोक्ता बहवो मध्वप्रशिष्याः मध्वशिष्यशिष्यास्तथा येषां प्रशिष्याणां शिष्याश्च ते सर्वे पृथ्वीं भूमिं अलं सम्यगलञ्चक्रुरलंकृतवन्तः ॥ १३२ ॥

सदा सकलसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः ।
सर्वे दुर्वादिदुर्वादकाण्डखण्डनमण्डनाः ॥ १३३ ॥

सर्वेति ॥ सर्वेऽपि सदा सकलानि यानि सच्छास्त्राणि तेषां या व्याख्या तया यत्सौख्यं तदेवामृताब्धिः सुधासमुद्रः तं गच्छन्तीति तथोक्ताः, दुर्वादिनां ये दुर्वादा दुष्टवचनानि त एव काण्डमिव तस्य यत्खण्डनं तदेव मण्डनमलङ्कारो येषां ते तथोक्ताः, काण्डं नाम वृक्षवेण्वादीनां पर्वनामकं कठिनस्थलम् ॥ १३३ ॥

भूरिभक्तिभराः केचिद्प्यल्पश्रुतसम्पदः ।
अप्यल्पबोधा अपरे बहुश्रुतमहागुणाः ॥ १३४ ॥

भूरीति ॥ एषु श्रीमध्वप्रशिष्यादिषु अल्पा श्रुतिसम्पत् येषां ते तथोक्ता अपि भूरि भूयसीं भक्तिमितां बिभ्रतीति तथोक्ताः, अपरे अल्पो बोधो येषां ते तथोक्ता अपि बहु यच्छ्रुतं श्रवण तेन महागुणा येषां ते तथोक्ताः ॥ १३४ ॥

बहवो गृहिणोऽप्यस्मात्समग्रानुग्रहं ययुः ।
दीप्ता यत्राग्नय इव त्रयो लिकुचशेखराः ॥ १३५ ॥

बहव इति ॥ अस्माच्छ्रीमध्वात् बहवो गृहिणोऽपि समग्रानुग्रहं सम्पूर्णानुग्रहं ययुः, यत्र शिष्यभूतगृहिणां मध्ये त्रयो लिकुचशेखराः, त्रिविक्रमार्य एकः शङ्करार्यनामानौ द्वाविति त्रयो लिकुचवंशजश्रेष्ठाः अग्नय इव दीप्ताः प्रकाशनशीलाः ॥ १३५ ॥

माध्वं नियोगं ये प्रायो नात्यजन् विदुषां वराः ।
शिष्यक्षेत्रेषु सद्विद्याबीजावापैकदीक्षिताः ॥ १३६ ॥

माध्वमिति ॥ शिष्या एव क्षेत्राणि तेषु सद्विद्या एव बीजानि तेषामावापस्तस्मिन् एकदीक्षिता मुख्यनिरता विदुषां वरा ये लिकुचश्रेष्ठाः प्रायः मध्वस्य सम्बन्धी माध्वस्तं नियोगमाज्ञां नात्यजन् ॥ १३६ ॥

ग्रामण्यो ब्राह्मणाग्रण्यः प्रापुः पूर्णंक्षशिष्यताम् ।
येषां सद्गुप्तिमात्रेण भवेत्किल परं पदम् ॥ १३७ ॥

ग्रामण्य इति ॥ येषां ब्राह्मणादिवर्णानां सतां गुप्तिमात्रेण रक्षामात्रेण परं उत्तमं पदं स्थानं मोक्ष इत्यर्थः भवेत्किल, उपलक्षणमेतत्, असतां निग्रहाच्चेति ज्ञातव्यं, पूर्वं भगवता भार्गवेण रामेण तौलवमण्डलस्थानां सतां रक्षायै दुष्टानां निग्रहार्थञ्च नियुक्तत्वात्तदुभयञ्च तेषां विहितं कर्म, विहितकर्मणाच परं पदं भवत्येवेति भावः,

तेषां ग्रामण्यः ब्राह्मणानां श्रेष्ठा ब्राह्मणाग्रण्यः, पूर्णा ईक्षा ज्ञानं यस्य स पूर्णेक्षः श्रीमध्वस्तस्य शिष्यतां प्रापुः ॥ १३७ ॥

शुश्रूषापक्षपाताद्यैः केभ्यश्चित्केवलं ददौ ।
रामप्रियो राम इव स्वां गतिं योगिदुर्लभाम् ॥ १३८ ॥

**शुश्रूषेति ॥** रामप्रियः श्रीमध्वः केभ्यश्चिदधिकारिभ्यः केवलं शुश्रूषा च पक्षपातश्च तावाद्यौ येषां तानि तथोक्तानि तैः योगिदुर्लभां गतिं राम इव ददौ, रामो यथा स्वां गतिं ददौ, एवं श्रीमध्वोऽपि केषाञ्चिच्छुश्रूषादिना प्रसन्नःसन् स्वेन गम्यं ब्रह्म गमयामासेत्यर्थः, वायुर्हि ब्रह्मगमयितुं समर्थो नान्यः, 'स एनान् ब्रह्मगमयति' 'विद्युत्पतिर्वायुरेव नयद्ब्रह्म नचापरः' इत्यादि श्रुतिस्मृतिभ्यः ॥ १३८ ॥

शिष्यप्रशिष्यातिशया ईदृशा यद्दयोदयात् ।
को नेच्छेत्सुलभं भक्त्या तत्पादसुरपादपम् ॥ १३९ ॥

**शिष्येति ॥** यस्य श्रीमध्वस्य दया यद्दया तस्या उदयस्तस्मात्, शिष्याश्च प्रतिशिष्याश्च तेषामतिशयाः सामर्थ्यविशेषा ईदृशा उक्तप्रकारेणप्रसिद्धा यत् यस्मात् भक्त्या सुलभं तस्य श्रीमध्वस्य यः पादः स एव सुरपादपः कल्पवृक्षस्तं, तत्पादसुरपादपं, कः पुरुषो नेच्छेत्? सर्वोऽपीच्छेदेवेत्यर्थः ॥ १३९ ॥

इत्थं सद्भिः सद्भिरर्च्यो धरायां चक्रे वासं शेषशय्ये शयाने ।
ग्रामे वातैः पाविते काण्वतीर्थैर्भक्तप्रीत्या सन्मठेऽनूनबोधः ॥ १४० ॥

**इत्थमिति ॥** धरायां भूमौ इत्थमेवं सद्भिः सज्ज्ञानैः सद्भिः सज्जनैरर्च्यः पूज्यः अनूनबोधः श्रीपूर्णप्रज्ञाचार्यः शेषः शय्या पर्यङ्को यस्य स शेषशय्यः श्रीहरिस्तस्मिन् शयनेसति शयनैकादश्यामिति शेषः, कण्वतीर्थादागताः काण्वतीर्थास्तैः वातैर्वायुभिः पाविते पवित्रीकृते ग्रामे एकवाटकनामके ग्रामे 'तान्त्य' इत्यपभ्रष्टनामके सन्मठः शोभनमठस्तस्मिन्, भक्तप्रीत्या तद्ग्रामगतभक्तजनानुग्रहेण वासं चक्रे, चातुर्मास्यमुवासेति भावः । [शालिनीवृत्तम् । मत्तौ गौचेच्छालिनी वेदलोकैः' इत्युक्तेः] ॥

स्वानन्दतीर्थभगवद्वदनेन्दुबिम्बं विद्यासुधावितकान्ति सुकान्ति कान्तम् ।
यैः प्रेक्ष्यतात्र भवतापशमाय भक्तैस्तद्दासदास्यमपि किं न ददाति पुंसः ॥१४१॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते
श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के पञ्चदशः सर्गः ॥

स्वानन्देति ॥ यैर्भक्तैर्भवस्य संसारस्य ये तापास्तेषां शमो विनाशस्तस्मै समर्थ-मिति यावत्, विद्यासुधावितनकान्ति विद्या च सा सुधामयी चेति विद्यासुधावितता व्याप्ता च सा कान्तिश्च विततकान्तिः विद्यासुधाविततकान्तिर्यस्य तत्, सर्वलोकव्याप्त-विद्यारूपसुधामयकान्तियुक्तमित्यर्थः, सुधाकान्त्या शोभनकान्त्या कान्तं भद्रं, स्वानन्द-तीर्थस्य भगवत्पूज्यं वक्त्रवदनेन्दुबिम्बं प्रेक्षित दृष्टं तद्दासदास्यमपि तेषामानन्दतीर्थ-मुखेन्दुबिम्बं दृष्टवतां भक्तानां ये दासास्तेषां दास्यं कैङ्कर्यमपि पुंसः किं न ददाति? सर्वमप्यभीष्टं ददातीति भावः । [वसन्ततिलकावृत्तम् । लक्षणं तूक्तम्] ॥ १४१ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ
पदार्थदीपिकोद्बोधिकायां पञ्चदशः सर्गः ॥



**साधुभ्यो मधुमथनांघ्रिभक्तिभाग्भ्यः श्रौतेभ्यो विततमतेर्महानुभावम् ।
वेदान्तं स्वयमिव बन्धमोक्षमूलं व्याचष्ट स्फुटमथ कोऽपि कोविदोऽत्र ॥ १ ॥**

**साधुभ्य इति ॥** अथ, अत्र श्रीमध्वशिष्येषु कोऽपि कोविदो विद्वान् स्वयं स्वयमेव श्रीमध्वभक्तानुकम्पयेत्यर्थः, मधोर्मथनः मधुमथनो मधुसूदनस्तस्य अंघ्री तयोर्भक्तिस्तां भजन्तीति तथोक्तास्तेभ्यः श्रुतीनां सम्बन्धिनः श्रौतास्तेभ्यो वैदिकेभ्य इत्यर्थः साधुभ्यः सज्जनेभ्यः, विततमतेः श्रीपूर्णप्रज्ञस्य बन्धात्संसारबन्धात् मोक्षो मोचनं तस्य मूलं कारणभूतं महान् योऽनुभवः सामर्थ्यस्तं तदनुभवप्रकटनरूपकथा-मित्यर्थः, स्फुटं सम्यग्वेदानामन्तो निर्णयो यस्मात्स वेदान्तस्तमिव व्याचष्ट जगाद । [प्रहर्षिणीवृत्तम् । 'म्नौज्रौगस्त्रिदशयति प्रहर्षणीयम्' इत्युक्तेः] ॥ १ ॥

**गोमत्यास्तटनिकटेऽच्छकीर्तिचन्द्रं विश्वज्ञं क्षितिपतिरन्त्यवर्णजन्मा ।
विद्वेष्टा श्रुतिगुणसाधकं श्रुतीनां वाचालो वचनमुवाच वाग्मिवर्यम् ॥ २ ॥**

**गोमत्या इति ॥** गोमत्यास्तन्नामकनद्याः तटस्य तीरस्य निकटं समीपस्तस्मिन् वर्तमानः श्रुतीनां विद्वेष्टा दूषकः वाचालो बहुभाषणः अन्त्यो यो वर्णः शूद्रवर्णस्तस्मिन् जन्म यस्य स तथा कश्चित् क्षितिपती राजा अच्छा या कीर्तिस्तया चन्द्र इव अच्छकीर्तिचन्द्रस्तं चन्द्रवत्प्रकाशमानमित्यर्थः, श्रुतीनां ये गुणाः प्रामाण्यादयस्तेषां साधकस्तं वाग्मिषु वर्यं विश्वज्ञं श्रीमध्वं इति वचनमुवाच ॥ २ ॥

**उन्मत्तप्रलपितवन्न तद्धि मानं यद्वाक्यं व्यभिचरति क्वचित्फलेऽत्र ।
दृष्टान्तो भवति तदप्रमाणतायां सर्वेषां श्रुतिवचसां च सर्वथेति ॥ ३ ॥**

**उन्मत्तेति ॥** स क्षितिपतिः अत्र वेदे यद्वाक्यं क्वचित्कुत्रचित् फले व्यभिचरति, तद्वाक्यं उन्मत्तप्रलपितवत् स्वोक्तफले व्यभिचारिवाक्यवदित्यर्थः, मानं प्रमाणं नहि, तत् फलव्यभिचारिवाक्यं सर्वेषां श्रुतिवचसां अप्रमाणतायां दृष्टान्तः सर्वथा भवति,

इत्युवाचेति पूर्वेण सम्बन्धः, अयमत्राभिप्रायः श्रुताचोषधिर्बीजे हस्ते गृहीत्वा 'या ओषधी पूर्वजाता देवेभ्यः' इत्यादिसूक्तजपात् सद्यएवांकुरदलपुष्पफलाद्युत्पत्तिर्भवनीत्युच्यते, इदानीं तथा कृतेऽपि फलं न दृश्यते, तस्माद्या ओषधीरित्यादि फलानुपलंभात्तद्वाक्यं फले व्यभिचरतीति सम्मतं तथाच—या ओषधीरित्यादिवाक्यं न प्रमाणं फलव्यभिचारित्वादुन्मत्तवाक्यवदिति, ततश्च तद्वाक्यदृष्टान्तेन वेदमात्रस्याप्रामाण्यं साधयितुं शक्यते, तथाहि विप्रतिपन्नं सर्वं वेदवाक्यमप्रमाणं वेदत्वाद्या ओषधीरित्यादिवेदवाक्यवदिति ॥ ३ ॥

वेदोक्तं फलमल्पमाप्यतेऽधिकारादित्युक्तोऽतनुमनसाभ्यधत्त धूर्तः ।
योग्यत्वे सति नहि दृश्यतेऽधिकारी नातः स्यात्स खरविषाणवत्सदेति ॥ ४ ॥

वेदोक्तमिति ॥ अधिकारात् वेदोक्तानुष्ठाने तदुक्तफलप्राप्तौचाधिकारेसत्येव वेदोक्तं फलं, अलं सम्यग् आप्यते, नानुष्ठानमात्रेण, अयंभावः वेदोक्तकर्मानुष्ठानेऽपि फलादर्शनमात्रेण न वेदाप्रामाण्यमनुमातुं शक्यते, फलादर्शनस्याधिकाराभावनिबन्धनत्वात्, तद्वेदोक्तकर्माधिकारिणा च कृतेच कर्मणि फलं दृश्यत एव, अनधिकारिणा कृतेऽपि तत्फलं न दृश्यते, अनधिकारिकृतमकृतमेवेति न्यायात्, इति । तनु न भवतीत्यतनु अतनु मनो यस्य स तथा तेन पूर्णप्रज्ञेन इत्युक्तो धूर्तः शूद्रभूपतिः अधिकारी वेदोक्तफलाधिकारी हि यस्मात् योग्यत्वेसति न दृश्यते, अतस्तस्मात् स भवद्विवक्षितोऽधिकारी खरविषाणवत्सदा नस्यात् नास्त्येवेति भावः । इति इत्थं अभ्यधत्त उक्तवान्, तथाचात्रप्रयोगः– भवद्विवक्षितोऽधिकारी नास्त्येव योग्यत्वेसति अनुपलभ्यमानत्वात् खरविषाणवदिति ॥ ४ ॥

आक्षेपं तमसहमान उच्चमानः सद्योऽसौ निजकरपल्लवद्वयेन ।
आदाय व्यतनुत बीजमोषधीनां सूक्तेनांकुरदलपुष्पबीजसृष्टिम् ॥ ५ ॥

आक्षेपमिति ॥ तं तत्कृतमाक्षेपं असहमानः उच्चः महान् मनो यस्य स तथोक्तः महाज्ञान इति वा, असौ श्रीमध्वाचार्यः ओषधीनां अगदाख्यानां धान्यानां बीजं निजौ

यौ कुरौ तावेव पल्लवौ तयोर्द्वयं तेन आदाय सूक्तेन 'या ओषधी'रित्यादि सूक्तेन जप्त्वा अंकुरश्च दलानिच, पुष्पाणिच, बीजानिच, तेषां सृष्टिं व्यतनुत चक्रे ॥

व्याख्याता निशि स कदाचन प्रदीपे संशान्ते पुनरपि वाचयाम्बभूव ।
शिष्यान्स्वान् पुरुकरुणाम्बुधिर्निजांघ्रेरंगुष्ठस्फुटनखरान्तरोचिंषैव ॥ ६ ॥

व्याख्यातेति ॥ कदाचन निशि व्याख्याताव्याख्यां कुर्वन् स श्रीमध्वः प्रदीपे सम्शाते नष्टेऽपि निजांघ्रेः स्वचरणस्य अंगुष्ठस्य स्फुटो व्यक्तो नखरान्तः नखाग्रं तस्य रोचिस्तेनैव पुनरपि स्वान् शिष्यान् पुरुर्भूयसी या करुणा शिष्यदया तदम्बुधिरिवाम्बुधिः पूर्ण इत्यर्थः । तथासन् वाचयाम्बभूव ॥ ६ ॥

तीर्थार्थं पृथुतरवप्रपातिवारां धाराणां रयसहनक्षमां महेक्षः ।
आनीतां दशशतपुम्भिरत्यशक्त्या प्रेक्ष्योचे विपुलशिलां क्वचित्स मुक्ताम् ॥७॥

तीर्थेति ॥ महती ईक्षा ज्ञानं यस्य स महेक्षः पूर्णप्रज्ञः क्वचित् कुत्रचिद्देशे तीर्थार्थं नदीतीरस्थापनार्थं दशच तानि शतानि च दशशतानि पुमांसश्च तैः सहस्रसङ्ख्याकैरित्यर्थः आनीतां अत्यशक्त्या मध्ये मुक्तां पृथुतरं यद्वप्रं उन्नतस्थलं तस्मात्पातीनि पतनशीलानि यानि वारि जलानि तेषां, धाराणां रयस्य वेगस्य सहनं वहनं तस्मिन् क्षमां समर्थां विपुलशिलां विशालशिलां प्रेक्ष्य इत्यूचे ॥ ७ ॥

लोकानामुपकृतये कुतः शिलेयं निन्ये नो इति जनता जगाद तत्र ।
नेतारो यतिवर मानवा नहीमां भीमश्चेदिह यतते नयेन्न वेति ॥ ८ ॥

लोकानामिति ॥ लोकानां जनानामुपकृतये क्षमेयं शिला कुतो नोनिन्ये ननीता इत्यूच इति सम्बन्धः, तदा तत्र प्रदेशे, स्थिता जनता जनसमूहः— 'हे यतिवर! श्रीमध्व! इमां शिलां नेतारो नेतुं समर्था मानवा मनुष्या नहि नविद्यन्ते भीमो भीमसेन इह शिलानयने यतते चेत् तर्हि नयेद्वा नवा' इति जगाद ॥ ८ ॥

निन्ये तां गिरिमिव वानरीकृतात्मा लीलावत्करकमलेन सोऽमलेन ।
तत्रापि न्यधित तयास्य सूच्यतेऽलं तत्तुङ्गां ननु निकषाधुनापि कर्म ॥ ९ ॥

**निन्य इति** ॥ स श्रीमध्वः अमलेन, लीला अस्यास्तीति लीलावत् तच्च तत्कर-कमलञ्च तेन, तां शिलां वानरीकृतः वानरत्वेन कृत आत्मा स्वरूपं यस्य स तथोक्तः हनूमद्रूपः सन्नित्यर्थः स्वयं गिरिमिव गन्धमादनपर्वतमिव निन्ये नीतवान, अत्र लीलावदित्युक्त्या अनायासः सूचितः, यत्र स शिलास्थापयितुमिष्टा तत्र तुङ्गा तुङ्गभद्राया निकषा समीपे 'अभितः परितः समयानिकषा' इत्यादिना द्वितीया, न्यधित निक्षिप्तवान् अस्य श्रीमध्वाचार्यस्य तत्कर्म अधुनापि तया शिलया अलं सम्यग् सूच्यते ननु, स्वण्डकलयालयतुङ्गभद्रातीरे इयं शिला कैश्चन यतिभिरानीतेति वार्ता श्रूयत इति भावः ॥ ९ ॥

**सङ्घातैरधिकघनैरलंकृताध्वा शिष्याणां यतमनसामुतेतरेषाम् ।**
**यत्रामा वसति तिथावितेन चन्द्रस्तत्रासौ सकलमतिः समागसिन्धुम् ॥ १० ॥**

**सङ्घातैरिति** ॥ असौ सकलमतिः पूर्णप्रज्ञः यत्र यस्यां तिथौ चन्द्रः इनेन सूर्येण अमा सह वसति, तत्र तस्यां तिथौ, अमावास्यायामित्यर्थः, तत्रानुपरागेचसति स्नातुं सिन्धुं यतमनसां यतीनां इतरेषां गृहिणां, उतअपि अतएवोभयेषां शिष्याणां अधिकघनैर्मार्गेऽतीवरुम्मदभाभिः सङ्घाताः समूहास्तैः अलंकृतोऽध्वा यस्य स तथासन् समार जगाम ॥ १० ॥

**आर्द्राङ्गाः सपदि निमज्जनात्सरस्यां कण्वस्य द्विजऋषभस्य वल्लभायाम् ।**
**तत्रायन् खरकिरणोपरागहेतोर्ग्रामीणा अपि सकलाः सबालवृद्धाः ॥ ११ ॥**

**आर्द्रेति** ॥ तत्र तस्मिन् काले सबालवृद्धाः सकला ग्रामीणा अपि एकवाटग्रामजना अपि खरास्तीक्ष्णाः किरणा यस्य स तथा तस्य सूर्यस्य य उपरागो ग्रहणं स एव हेतुस्तस्मात् समुद्रस्नानार्थं द्विजर्षभस्य द्विजश्रेष्ठस्य कण्वस्य कण्वाख्यमुनेर्वल्लभायां प्रियायां सरस्यां सरोवरे सपदि सद्यः निमज्जनमवगाहनं तस्मात्, आर्द्राण्यङ्गानि येषां ते तथोक्ताः सन्तस्तत्र समुद्रतीरे आयन् आगताः ॥ ११ ॥

**सर्वज्ञं सपरिजनं समीक्षमाणाः फुल्लाक्षाः स्मितवदनाः शुभा ननन्दुः ।**
**दौर्मुख्यं दधत उतापरे निनिन्दुर्नाश्चर्यद्वयमपि तत्स्वभावतन्त्रम् ॥ १२ ॥**

सर्वज्ञमिति ॥ सपरिजनं सपरिवारं सर्वज्ञं श्रीपूर्णप्रज्ञाचार्यं समीक्षमाणा अत्रत्र स्मितं मन्दहासोपेतं वदनं येषां ते तथोक्ताः, फुल्लानि विकसितानि अक्षीणि येषां ते तथोक्ताः शुभाः सज्जनाननन्दुः, दौर्मुख्य तद्दर्शनेन दुर्मुखत्वं दधतः अपरे दुर्जना निनिन्दुः, स्वभावतन्त्रं स्वभावाधीनं तद्द्वयमपि, सदसतोः सन्तोषनिन्दाद्वयमपि आश्चर्यं न, स्वभावतन्त्रमिति हेतुगर्भं विशेषणं ॥ १२ ॥

**मामेनं भुवनगुरुं विनिन्दतेत्थं निर्भत्स्यन्नभ्यपतदिवोत्तरङ्गहस्तः ।**
**संक्षोभी घनघनघोषघोरवेषः संरम्भी खलदमनाय सिन्धुराजः ॥ १३ ॥**

मामेति ॥ उन्नता ये तरङ्गा उत्तरङ्गा त एव हस्ता यस्य स तथोक्तः, संक्षोभी अत्यन्तक्षोभयुक्तः घनघनोऽतिगम्भीरो यो घोषस्तेन घोरो भयङ्करो वेषो रूपं यस्य स तथोक्तः, संरम्भी कोपवान् सिन्धुराजः समुद्रः भुवनगुरुं जगद्गुरुं एनं श्रीमध्वं मा मा विनिन्दत, इत्थं निर्भर्त्स्य खलदमनाय खलशिक्षणाय अभ्यपतदिव, श्रीमध्वं द्विषतां खलानां निग्रहाय समुद्रोऽभ्यपतदिवासीत् ॥ १३ ॥

**सम्मोदात्तरलतरो द्रुताभिगामी गम्भीरस्वननुतिमान् सुफेनहासः ।**
**वीचयङ्गैरधिकततैरिहाधिवेलं मध्वाय प्रणतिमिव व्यधात्समुद्रः ॥ १४ ॥**

सम्मोदादिति ॥ सम्मोदात्सन्तोषादिव तरलतरोऽतिचञ्चलः द्रुतमभिगन्तुं शील-मस्येति तथोक्तः, तरङ्गरूपेण द्रुतमभ्यागच्छन्नित्यर्थः, गम्भीरस्वन एव नुतिः स्तोत्रं साऽस्यास्तीति तथोक्तः सुफेन एव धवलतया शोभनफेन एव हासो यस्य तथोक्तः समुद्रः अधिकं ततैर्विस्तीर्णैर्वीच्यङ्गैः वीचिरूपावयवैः वेलायामधि अधिवेलं विभ-क्त्यर्थेऽव्ययीभावः, वेलायामित्यर्थः मध्वाय प्रणीतं नमस्कारं व्यधादिवासीत् ॥

**गोलीलास्वतिशयिनावगाधभावात्सोल्लङ्घ्यौ विविधगुणप्रकाशरत्नौ ।**
**मध्वाब्धी परममतेः प्रियं जनानां लावण्यं न तु जलधेरय विशेषः ॥ १५ ॥**

गोलीलास्विति ॥ मध्वाब्धी, गवां लीला विलासा गोलीलास्तासु, अतिशयोऽ-नयोरस्तीत्यतिशयिनौ, विविधवाग्विलासेष्वतिशयवान् मध्वः, जलविलासेष्वतिशयवान्

समुद्रः, अगाधस्य भावोऽगाधभावस्तस्मात् गम्भीरत्वादित्यर्थः नोलङ्घ्यौ विविधगुण-प्रकाशरत्नौ, मध्वस्तु विविधा गुणा भक्तिवैराग्यादयो यस्य तादृशः प्रकाशो ज्ञानं स एव यस्य स तथोक्तः, समुद्रोऽपि विविधा गुणा रक्तनील्यादयो नानावर्णा प्रकाशश्च येषां तादृशानि रत्नानि यस्मिन् स तथोक्तः, एवं साम्येऽपि परममतेः श्रीपूर्णप्रज्ञस्य लावण्यं सौन्दर्यं जनानां पश्यतां जनानां प्रियं, जलधेर्लावण्यं लवणत्वं जनानां प्रियं न भवति, एव मध्वाब्धेरयं विशेषः । अत्र व्यतिरेकालङ्कारः ॥ १५ ॥

**अम्भोधेस्त्वरिततरोर्मिपाणिमृष्टे स्वच्छेऽसौ विकटतटासने निषण्णः ।**
**व्याचख्यावतिचिरमैतरेयशाखासूक्तानि प्रभुरतिसुन्दरप्रकारम् ॥ १६ ॥**

**अम्भोधेरिति** ॥ प्रभुरसौ श्रीमध्वः अम्भोधेः अत्यन्तं त्वरिता त्वरिततरा ऊर्मयः तरङ्गास्तएव पाणयस्तैर्मृष्टे तस्मिन् स्वच्छे निर्मले विकटं श्रेष्ठं विशालं वा यत्तटं तीरं तदेवासनं, पीठं तस्मिन् 'विशङ्कटं विशाल स्यात्करालं विकटं तथा' इति हलः । निषण्णःसन् ऐतरेयशाखायाः सूक्तानि, अतिसुन्दरः अतिरमणीयः प्रकारो यथा भवति तथा, अत्यन्तं चिरं यथा भवति तथा अतिचिरं व्याचख्यौ ॥ १६ ॥

**गाम्भीर्यात्स्वनमधरीकरोति सिन्धोः श्राव्यत्वं वहति तथाप्यहो स्वनोऽस्य ।**
**पूर्णेन्दुप्रभवदनः क एष धन्यो मन्वेत्थं जनजलधिस्तमाशु पर्यैत् ॥ १७ ॥**

**गाम्भीर्यादिति** ॥ अस्य श्रीमध्वस्य स्वनः, गाम्भीर्यात् सिन्धोः समुद्रस्य स्वनं ध्वनिमधरीकरोति तिरस्करोति तथापि समुद्रस्वनादतिगम्भीरोऽपि श्राव्यं श्रोतव्यत्वं वहति, अहो आश्चर्यं, पूर्णेन्दोः प्रभेव प्रभा यस्य तत्पूर्णेन्दुप्रभं तादृशं वदनं यस्य स तथोक्तः एष धन्यः कः, इत्थं मत्वा जनजलधिः जनसमुद्रस्तं श्रीमध्वं आशु पर्यैत् आवृणोत् ॥ १७ ॥

**वेदानां समुचितभाववाददक्षं ये वेदद्विषमिममूचिरे महेर्ष्याः ।**
**धिग्धिक् तानिति जनता जगाद तत्र स्वाश्चर्यात्किल कलिताञ्जलिर्नमन्ती ॥**

**वेदानामिति** ॥ महती ईर्ष्या असूया येषां ते महेर्ष्याः ये दुर्जना वेदानां ऐतरेयशाखागतवेदवाक्यानां समुचितोऽत्युपपन्नो यो भावोऽभिप्रायस्तस्य वादे वर्णने

दक्ष समर्थं इमं श्रीमध्वं वेदद्विषं वेददूषकमूचिरे, तान् दुष्टान् धिग्धिक्, अत्र नादार्थे द्विरुक्तिः जनता मिलितजनसमूहस्तत्र स्वाश्चर्योदत्याश्चर्यात् कलितो रचितोऽञ्जलिर्यया तादृशीसती, बद्धाञ्जलिरित्यर्थः, नमन्ती नमस्कारं कुर्वन्तीसती जगाद किल ॥

**सन्नामं विपुलहृदे विधाय भक्त्या विभ्राणाश्चरणरजोस्यदेवसेव्यम् ।**
**तत्स्नानादधिकशुचौ नदाधिराजे सस्नुस्ते द्विजनिकराः प्रशस्तकाले ॥ १९ ॥**

**सन्नाममिति ॥** ते द्विजनिकरा विपुलहृदे श्रीपूर्णप्रज्ञाय भक्त्या सन्नाम सम्यग् नमस्कारं विधाय अस्य श्रीमध्वस्य देवसेव्यं देवनिषेव्यं चरणरजो बिभ्राणा सन्तः तत्स्नात् श्रीमध्वस्नानादधिकशुचावतिपवित्रे नदाधिराजे समुद्रे प्रशस्तकाले सस्नुः स्नानं चक्रुः ॥ १९ ॥

**कल्लोलैः करिनिकरैरिवानिवार्यैरुल्लोलैर्जननिकरान्निपातयद्भिः ।**
**आक्रान्ताः प्रबलतरैश्च लोठ्यमाना हास्यत्वं प्रययुरुदन्वतीह नैके ॥ २० ॥**

**कल्लोलैरिति ॥** इहोदन्वति अत्रसमुद्रे स्नानं कुर्वन्तः एके नभवन्तीत्यनेके बहवः न समासोऽयं 'नैकधे'त्यादिवत्, जना उल्लोलैरतिचञ्चलैः अनिवार्यैः जननिकरान्निपातयद्भिः प्रबलतरैस्तरङ्गैः करिनिकरैरिव गजसमूहैरिव आक्रान्ता अतएव पतिताः सन्तः लोठ्यमानाः सन्तः क्लिश्यमानास्सन्त हास्यत्वं प्रययुः । उल्लोलशब्दो महातरङ्गवाचको वा, 'भङ्गस्तरङ्गऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु । महत्सूल्लोलकल्लोला'वित्यमरः । उल्लोलैरङ्गभूतैः कल्लोलैर्महातरङ्गैरप्याक्रान्ता इति योजना ॥ २० ॥

**मज्जन्तं पृथुलहरीनिगूढमूर्तिं सम्पूर्णप्रमतिमसज्जनो जहास ।**
**यो लोकत्रयविजयी गुरुः प्रसिद्धः सोऽयं हा पतति लघूर्मिलीलयेति ॥२१॥**

**मज्जन्तमिति ॥** असज्जनो मज्जन्तं स्नानं कुर्वन्तं पृथवो महान्त्यो या लहर्यस्तरङ्गास्ताभिर्निगूढा मूर्तिः शरीरं यस्य स तथा तं 'ऊर्मिरुत्कलिकोल्लासः कल्लोलो लहरी तथा' इति हलः, सम्पूर्णप्रमतिं श्रीमध्वं, यो मध्वो लोकत्रयविजयी गुरुः प्रसिद्धः, सोऽयं श्रीमध्वो लघूर्मिलीलया पतति हा, इति जहास ॥ २१ ॥

नीचानामवचवचांस्यजीगणन्नो दभ्राणां क्षुभितकराण्यदभ्रसत्त्वः ।
क्रोष्टूनां श्वकलकलप्रदं विरावं पञ्चास्यो नहि गणयेदुदारवीर्यः ॥ २२ ॥

**नीचानामिति** ॥ अदभ्रसत्त्वः श्रीपूर्णप्रज्ञाचार्यः, दभ्राणां मल्लानां क्षुभितकराणि क्षोभकराणि नीचानां दुर्जनानां वक्तुमनुचितानि अवचानि यानि वचांसि नो अजीगणन् न गणयामास, तथाहि, शुनां कलकलः कोलाहलः श्वकलकलस्तं प्रददातीति तथोक्तस्तं क्रोष्टूनां शृगालानां विरावो ध्वनिस्तं उदारमुत्तमं वीर्यं यस्य स तथोक्तः पञ्चास्यः सिंहो न गणयेद्धि ॥ २२ ॥

जन्मस्थित्यवसितिदायिनं कटाक्षं लोकानामघटयदम्बुधौ बृहद्धीः ।
आक्रान्तोऽधिकगुरुणा स तेन तावन्मुञ्चन् सञ्चलनमभूत्तटाकदेश्यः ॥ २३ ॥

**जन्मेति** ॥ बृहद्धीः श्रीपूर्णप्रज्ञाचार्यः लोकानां जन्मस्थित्यवसितिदायिनं, उत्पत्तिस्थितिलयप्रदानशीलं कटाक्षं अम्बुधौ अघटयत्, कटाक्षेणाम्बुधिं ददर्शेति भावः, तावत्तदा अधिकगुरुणा महानुभावेन तेन कटाक्षेण आक्रान्तः सोऽम्बुधिः सञ्चलनं मुञ्चन्सन् तटाकेन सदृशस्तटाकदेश्योऽभूत् ॥ २३ ॥

इत्याद्यैरपि चरितैरनन्यसाध्यैर्नस्थेष्ठां बहुमतिमाप दुर्जनोऽस्मिन् ।
विद्वेषं व्यधित पुनर्निरस्तभाग्ये तस्मिन् दुर्मनसि तदेव शोभनं स्यात् ॥२४॥

**इतीति** ॥ दुर्जनः इति आद्यानि येषां तानि तैः अनन्यसाध्यैः चरितैः कर्मभिः उपलक्षितेऽपि अस्मिन् श्रीमध्वे स्थेष्ठां अतिस्थिरां बहुमतिं बहुमानं नाप, इत्याद्यनन्यसाध्यचरितेऽप्यस्मिन् श्रीमध्वे दुर्जनो नातिबहुमानं चकारेति भावः, न केवलमेतावत्, पुनर्विद्वेषं व्यधित चकार, निरस्तं भाग्यं यस्य स तथा तस्मिन् दुष्टं मनो यस्य दुर्मनास्तस्मिन् दुष्टचित्त इत्यर्थः, तस्मिन् दुर्जने तदेव शोभनं स्यात्, तमोयोग्यानां श्रीमध्वे विद्वेष एव युक्त इत्यर्थः ॥ २४ ॥

सम्प्राप्तं सह सहजेन गण्डवाटं स्वौजस्सम्प्रकटन आदिशद्विशङ्कम् ।
शुश्रूषामयमुचितो विधातुमापल्लोकानामिति वचसा परीक्षकाणाम् ॥ २५ ॥

**सम्प्राप्तमिति ॥** कर्तृपदमध्याहार्यं, स श्रीमध्वः सहजेन भ्रात्रा सह सम्प्राप्तं गण्डवाटं तन्नामकं द्विजं 'गण्डवाट' इत्यस्य कोडिपाडीत्यपभ्रष्टनाम, तौलवभाषया गण्डस्य कोडीति, वाटस्य पाडीति प्रसिद्धेः, अयं गण्डवाट ईषच्छुश्रूषां सेवां विधातुं कर्तुं उचित इति परीक्षकाणां श्रीमध्वसामर्थ्यपरीक्षकाणां लोकानां जनानां वचसा स्वस्य गण्डवाटस्य ओजः सामर्थ्यं तस्य सम्प्रकटनं सम्यक्प्रकाशनं तस्मिन्, विगता शङ्का यथा भवति तथा विशङ्कं आदिशत्, मयि स्वबलं प्रकाशयेत्यवददिति भावः ॥

श्रीकान्तेश्वरसद्मनेऽनयत्किलैको यस्त्रिशन्नरवरनीतकेतुयष्टिम् ।
आहत्या गुरुगदयैव नालिकेराद्यो लेभे तरलतरात्फलानि कामम् ॥ २६ ॥

**श्रीकान्तेश्वरेति ॥** यो गण्डवाटः श्रीमच्च तत् कान्तेश्वरसदनञ्च तस्मिन्, कान्तेश्वरो नाम कश्चिद्देवः, त्रिंशच्च ते नरवरा नरश्रेष्ठास्तैर्नीता या केतुरूपयष्टिः ध्वजस्तम्भस्तां, एकोऽनयत् किल, यो गण्डवाटो गुरुश्च सा गदा च तयैव आहत्या ताडनेन तरलतरादतिचञ्चलात् नालिकेरात् नालिकेरवृक्षात् फलानि कामं यथेच्छं लेभे ॥ २६ ॥

एतादृग्बलविभवः स तस्य कण्ठं तज्ज्येष्ठोऽप्यभित उभौ समं गृहीत्वा ।
निष्पेष्टुं परमबलावपतुः प्रयत्नं सङ्घर्षात्क्रमपरिवर्धमानतैक्ष्ण्यम् ॥ २७ ॥

**एतादृगिति ॥** एतादृग्बलविभवो बलैश्वर्यं यस्य स तथा स गण्डवाटः, तस्य ज्येष्ठस्तज्ज्येष्ठः सोऽपि उभौ सङ्घर्षात्, तयोः करैर्मथनात्, क्रमपरिवर्धमानं तैक्ष्ण्यं काठिन्यं यस्य स तथा तं तस्य मध्वस्य कण्ठं अभितः समं युगपत् गृहीत्वा निष्पेष्टुं परमं प्रयत्नमापतुः जग्मतुः ॥ २७ ॥

आस्विन्नावलसतरौ गुरोर्नियोगाच्छत्राग्र्यावभिलषितौ च तावुभाभ्याम् ।
मुक्त्वाऽयः कठिनतरत्वचं शिरोधिं पर्यायस्फुटवचनौ निपेततुः कौ ॥ २८ ॥

**आस्विन्नाविति ॥** आ सम्यक् स्विन्नौ कण्ठमर्दनायासेन स्वेदं प्राप्तौ, गुरोः श्रीमध्वाचार्यस्य नियोगादाज्ञायाः, उभाभ्यां शिष्याभ्यां छत्राग्र्ययोः छत्रश्रेष्ठयोः,

अनिलेन वायुना महितौ आश्वासितौ, अलसतरावतिश्रान्तौ तावुभौ, अयोवदति-कठिना अतिकठिना त्वक् यस्यास्तां, पर्यायात् क्रमेण स्फुटानि स्पष्टानि वचनानि यस्यास्तां शिरोधिं कण्ठं मुक्त्वा त्यक्त्वा कौ भूमौ निपेततुः ॥ २८ ॥

आश्वस्तौ शुचिहृदिमावनूनमानावुद्धर्तुं समगददंगुलीं धरास्थाम् ।
संगृह्य प्रसभरसादपि प्रयत्तौ सामर्थ्यं ययतुरिमौ न कम्पनेऽस्याः ॥ २९ ॥

आश्वस्ताविति ॥ शुचिहृत् पूर्णप्रज्ञः आश्वस्तौ गतश्रमौ अनूनः सम्पूर्णो मानोऽभिमानो ययोस्तौ पुनरपि समर्थाविति पूर्णाहङ्काराविर्थः, इमौ गण्डवाटौ धरास्थां भूमिष्ठां अंगुलीं उद्धर्तुं समगदत् जगाद, प्रसभरसात् अतिबलात्कारेण गृहीत्वा प्रयत्तावपि अंगुलिमुद्धर्तुं प्रयत्नवन्तावपि इमौ, अस्या अंगुल्याः कम्पने चालने सामर्थ्यं न ययतुः ॥ २९ ॥

निर्यत्नं बटुमधिरुह्य मन्दहासी स प्रायादिह परितो नृसिंहगेहम् ।
ऐश्वर्यैरिति लघिमादिकैरुपेतो मध्वोऽभूत्त्रिभुवनचित्ररत्नराजः ॥ ३० ॥

निर्यत्नमिति ॥ स श्रीमध्वः इह तौलवमण्डले निर्गतो यत्नः प्रयत्नो यस्मात्स निर्यत्नस्तं स्वतएव प्रयत्नशून्यमित्यर्थः, बटु ब्रह्मचारिणं अधिरुह्य, मन्दहासोऽस्यास्तीति मन्दहासीसन् नृसिंहगेहम् नृसिंहदेवालय परितः प्रायात्, इति उक्तप्रकारेण लघिमा आदिर्येषां तानि तैः, अणिमा, महिमा, गरिमा, लघिमा, ईशित्वं, वशित्वं, प्रकाश्यं, परकायप्रवेशः, इत्यष्टभिरैश्वर्यैरुपेतो श्रीमध्वः त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्मिन् चित्ररत्नानि आश्चर्यश्रेष्ठानि तेषां राजा श्रेष्ठः, त्रिभुवनचित्ररत्नराजोऽभूत् ॥

पश्चाशन्नरपनरोपनीतमात्रां यो वार्क्षीं गृहमधिरोहिणीं निनाय ।
स व्याख्यास्वरदमनाय पूर्ववाटो निर्देशाद्यथित गुरोर्गलप्रपेयम् ॥ ३१ ॥

पश्चाशदिति ॥ यः पूर्ववाटः पश्चाशच्च ते नरपनरा राजपुरुषास्तैरुपनीतमात्रां कथञ्चिदुपनीतां वृक्षस्य विकारो वार्क्षी तां वृक्षमयीमित्यर्थः अधिरोहिणीं निःश्रेणीं गृहं स्वगृहं निनाय, स पूर्ववाट 'मूडप्पाडित्ताय' इत्यपभ्रष्टसंज्ञा तौलवभाषायां, गुरोः

श्रीमध्वस्य निर्देशात् 'त्वं शक्तश्चेत्' ममकण्ठनिरोधं कुर्विति निर्देशात् व्याख्याया यो ध्वनो ध्वनिस्तस्य दमनाय निग्रहाय व्याख्यासमये स्वरनिग्रहं कर्तुमित्यर्थः गलप्रपेषं कण्ठनिष्पेषं व्यधित चकार ॥ ३१ ॥

**स्विन्नेऽस्मिन्नपि यतमान आग्रहाग्रे प्राच्यात्तत्प्रवचननिस्वनोऽतिरेजे ।**
**उद्धर्तुं विपुलहृदंगुलिं च नालं सोऽभूदित्यजनि कुतूहलं जनानाम् ॥ ३२ ॥**

**स्विन्नइति** ॥ आग्रहेण उग्रत्तीव्र आग्रहोग्रस्तस्मिन् व्याख्या स्वरदमनायातितीव्राग्रहयुक्त इत्यर्थः, अतएव स्विन्ने, अस्मिन् पूर्ववाटे यतमाने पुनरपि प्रयत्नं कुर्वतिसति तस्य श्रीमध्वस्य प्रवचनस्य व्याख्यानस्य निस्वनो निनादः प्राच्यात् पूर्वं विद्यमानादपि अतिरेजे अतितरां रेजे, स पूर्ववाट विपुलहृदंगुलिं श्रीपूर्णप्रज्ञाचार्यांगुलिं उद्धर्तुं अलं समर्थो नाभूत् इति जनानां कुतूहलमजनि ॥ ३२ ॥

**पर्यैक्षि प्रभुरितरैः शिवाग्निपूर्वैर्नोपैक्षि प्रबलतरैस्तथा प्रयत्नैः ।**
**नावैक्षि क्वचिदपि शक्त्यपूर्तिरस्मिन्नुत्प्रैक्षि स्वयमपि भीमइत्यवश्यम् ॥ ३३ ॥**

**परीति** ॥ प्रभुः श्रीमध्वः इतरैरन्यैः शिवाग्निपूर्वैः शिवाग्निस्तन्नामको द्विजः पूर्वो येषां तैः, बलवद्भिः पुनरपि बलविषयं पर्यैक्षि परीक्षितोऽभूत्, तथाप्रयत्नैस्तादृशप्रयत्नवद्भिः प्रबलतरैः पुरुषैर्नोपैक्षि नोपेक्षितः, अस्मिन् श्रीमध्वाचार्ये क्वचिदपि कस्मिंश्चिद्विषये शक्त्यपूर्तिः शक्तेरपूर्णता नावैक्षि न दृष्टा स्वयमपि अवश्यं भीमइति उत्प्रैक्षि, अयं सर्वथा भीमो भवितुमर्हतीति जनैरुत्प्रेक्षितः ॥ ३३ ॥

**लेखिन्यां मुहुरपिनह्य कृष्णमाणं नाप्येकं तनुरुहमस्य तूदपाटि ।**
**नासाग्रे मृदुनि कृतैश्च मुष्टिघातैर्नास्येन्दोरतिबलिभिः प्रसन्नताऽसि ॥ ३४ ॥**

**लेखिन्यामिति** ॥ अत्यन्तं बलमतिबलं तदेषामस्तीत्यतिबलिनस्तैः पुरुषैर्लेखिन्यां मुहुर्बहुवारं अपि नह्य संवेष्ट्य कृष्यमाणमपि अस्य श्रीमध्वस्य एक तनौ रोहतीति, तत् रोमापीत्यर्थः, नोदपाटि नोत्पाटितं, मृदुनि नासाग्रे कृतैर्मुष्टिघातैर्मुष्टिताडनैः

आस्येन्दोः श्रीमच्छ्रमुखचन्द्रस्य प्रसन्नता नासि न निराकृता, अमुक्षेपण इति धातोः कर्मणि लुङ् ॥ ३४ ॥

**पञ्चास्यः श्वभिरिव हीनैर्विहीनसारैरम्भोधिर्नगसरितां जलैरिवाल्पैः ।**
**खद्योतैरिव तरणिर्विडम्बयन्नॄन् प्रत्यर्थिस्वसमनरैर्व्यवाहरत्सः ॥ ३५ ॥**

**पञ्चास्यइति** ॥ नृन् नरान् विडम्बयन् स श्रीमध्वः प्रत्यर्थिनो विरोधिनस्ते च स्वाः स्वभक्तास्तेच समा उदासीनास्ते च ते नराश्च तैः, पञ्चविस्तृतमास्यं यस्य स पञ्चास्यः सिंहः प्रत्यर्थिभिर्विहीनो रहितः सारो बलं येषां ते विहीनसारास्तैः श्वभिरिव हीति व्यवहारायोग्यतोच्यते, अम्भोधिः समुद्रः स्वकीयैरल्पैः नगात्पर्वतादुत्पन्नाः सरितो नद्यस्तासां जलैरिव तरणिः सूर्यः समैः खद्योतैरिव व्यवाहरत् व्यवहृतवान् ॥

**पारन्तीसुरसदनं विशालसंविन्सम्प्राप्तः खलु सुचिरान्निवेद्यहीनम् ।**
**ग्राम्याग्र्यक्षितिपतिभिर्दिनार्धमात्रात्तद्भूत्यव्यधित सभूतबल्यनल्पाः ॥ ३६ ॥**

**पारन्तीति** ॥ विशालसंवित् श्रीपूर्णप्रज्ञाचार्यः सुचिरात् बहुकाल निवेद्येन नैवेद्यादिना हीनं रहितं पारन्त्याख्यं सुरसदनं देवतालयं सम्प्राप्तः ग्रामे भवा ग्राम्यास्तेषामग्र्याः श्रेष्ठा ग्रामण्य इत्यर्थः, तेच क्षितिपतिस्तद्देशाधिपतिर्भूपः सच तैः दिनस्यार्धमात्रं दिनार्धमात्रं तस्मात्, उदयमारभ्यास्तमयपर्यन्तमित्यर्थः, भूतबलिनासहितं यथा भवति तथा सभूतबलि, तथा अनल्पा अतिबहुलास्तस्य देवस्य भूतयो विभवास्ताः व्यधित कारयामास ॥ ३६ ॥

**भीमत्वे सह सहजैः प्रतिष्ठितः प्राक् पञ्चात्मा मुररिपुरर्चितो यदत्र ।**
**पाञ्चाल्या बलिसलिलं समं ददत्या सोऽस्मार्षीत्तमिममथ प्रपूज्यपूज्यः ॥३७॥**

**भीमत्व इति** ॥ स्वस्य पूर्वं भीमत्वेसति सहजाताः सहजा भ्रातर इत्यर्थः, तैः, युधिष्ठिरादिभिः सह अत्र पारन्तीदेवालये प्रतिष्ठितः पञ्च आत्मानः स्वरूपाणि यस्य स पञ्चात्मा मुररिपुः, बलेः पूजायाः सलिलं बलिसलिलं श्रीबलिपूजाङ्गभूतमुदकमित्यर्थः ददत्या समानीय प्रदिशन्त्या पाञ्चाल्या द्रौपद्या समं सह यद्यस्मात्पूजितः

तस्मात् प्रपूज्यैः प्रकर्षेणपूज्यैः रुद्रादिभिः पूज्यः श्रीमध्वः अथ, एतद्देवालयदर्शनानन्तरं तमिमं तत्रात्मानाप्रतिष्ठितं मुररिपु अस्मार्षीत् ॥ ३७ ॥

**आयास्यन् किल सरिदन्तराख्यदेशं ग्रीष्मे निर्जलमिह शुश्रुवांस्तटाकम् ।**
**तत्काले परमभिवर्षयन् घनौघं तत्पूर्त्यै व्यधित कुतूहलं जनानाम् ॥ ३८ ॥**

आयास्यन्निति ॥ ग्रीष्मे, सरिदन्तरमित्याख्या यस्य सचासौ देशश्च तं, 'इडेतुर्द' इत्यपभ्रष्टसंज्ञा, आयास्यन् आगमिष्यन्, इहास्मिन् ग्रामे तटाकं निर्गतं जलं यस्मात्स निर्जलस्तं शुश्रुवान् श्रुतवान्, सचासौ कालश्च तत्कालस्तस्मिन् ग्रीष्मकाल इत्यर्थः, परं केवलं तत्पूर्त्यै तद्ग्रामतटाकपूर्त्यर्थमेव घनौघं मेघसमूहं अभिवर्षयन् श्रीमध्वो जनानां कुतूहलं कौतुकं व्यधित चकारकिल ॥ ३८ ॥

**दुर्मन्त्रैः खलपटलैः प्रचोद्यमानो ग्रामेशो वृषलपतिः प्रहर्तुमेनम् ।**
**सम्प्राप्तस्तत उत यान्तमीक्षमाणः प्रोद्यन्तं रविमिव विस्मितो ननाम ॥३९॥**

दुर्मन्त्रैरिति ॥ खलपटलानि दुष्टसमूहास्तैः, 'पटलं पेटलं चक्रं' इति हलः, कर्तृभिः दुर्मन्त्रैः कुत्सितालोचनैः करणैः एनं श्रीमध्वाचार्यं प्रहर्तुं हन्तुं प्रचोद्यमानः प्रेर्यमाणो ग्रामेशः सरिदन्तरग्रामाधिपो वृषलपतिः सम्प्राप्तःसन् तत उत तस्माद्ग्रामात यान्तं गच्छन्तं तं प्रोद्यन्तं रविमिव ईक्षमाणः पश्यन् विस्मितःसन् ननाम ॥

**क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं प्रस्थाय प्रचुरतरान्तरः प्रभावी ।**
**श्रीकृष्णामृतपरमार्णवाभिधानं चक्रे सद्वचनततिं स्वभक्तभूत्यै ॥ ४० ॥**

क्षेत्राग्र्यमिति ॥ प्रभावोऽस्यास्तीति प्रभावी सामर्थ्यवानित्यर्थः, प्रचुरतरमान्तरं ज्ञानं यस्य स श्रीमध्वः त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्मिन् ये वैद्यास्तेषां नाथो धन्वन्तरिः स नाथः स्वामी यस्य तत्तथोक्तं, क्षेत्राग्र्यं ग्रामश्रेष्ठं 'कोकड' इत्यपभ्रष्टसंज्ञकं प्रस्थाय प्राप्य स्वभक्तभूत्यै स्वभक्तस्य अपभ्रष्टभाषया 'इडेपाडित्ताय' इति तद्ग्रामस्थस्य भूत्यै श्रेयसे तस्य ज्ञानोपदेशायेत्यर्थः, 'श्रीकृष्णामृत'मिति परमार्णवाभिधानं महार्णवाभिधानं यस्य ग्रन्थस्य स तथा तं सद्वचनानां निर्दुष्टश्लोकरूप-

वचनानां वाक्यानां ततिः समूहो यस्मिन् स तथा तं, अप्रामाण्यदोषरहितानां प्रमाणीकृतपुराणादिगतानां वचनसमूहात्मकं ग्रन्थसमूहमित्यर्थः, चक्रे ॥ ४० ॥

**स ग्रामं परमभियात उच्चभूति विद्वांसः क कुहरकूपदर्दुराभाः ।**
**इत्यूचे मदमतिमानिनोऽखिलज्ञम्मन्यस्य क्षपयितुमेव तज्जनस्य ॥ ४१ ॥**

**स इति ॥** उच्चा उत्कृष्टा भूतिरैश्वर्यं यस्मिन् स उच्चभूतिस्तं, तौलवभाषया 'उज्जर्य' इति नामकं, परं अन्यं ग्रामं अभियातो गतः स मध्वः अत्यन्तं मानः पाण्डित्याभिमानोऽतिमानः सोऽस्यास्तीति तथोक्तस्तस्य, अतएव आत्मानं अखिलज्ञं सर्वज्ञं मन्यस्तस्य, तस्य ग्रामस्य जनस्तज्जनस्तस्य मदं विद्यामदं क्षपयितुं नाशयितु कुहरोऽतिगम्भीरो यः कूपस्तस्य दर्दुरा मण्डूकास्तेषामाभेवाभा येषां ते तथोक्ता विद्वांसः क कुत्र वर्तन्ते? किमिति मन्निकटं नायान्तीति भावः ॥ ४१ ॥

**सर्वज्ञोऽप्ययमयमधिकं न यज्ञभङ्गीं संवित्ते यतिरिति बद्धनिश्चयोऽसौ ।**
**आभान्तं परिषदि मत्सरादपृच्छत्कर्मार्थश्रुतिगहनार्थखण्डभावम् ॥ ४२ ॥**

**सर्वज्ञ इति ॥** अयं श्रीमध्वः सर्वज्ञोऽपि यतिः सन्यासी, हेतुगर्भविशेषणं, यतित्वादित्यर्थः, अतएव यज्ञानधिकारित्वात्, यज्ञभङ्गीं यज्ञप्रकारं न संवित्ते न जानाति इति बद्धो निश्चयो येन स तथोक्तः असौ जनः परिषदि सभायां आभान्तं शोभमानं श्रीमध्वाचार्यं, कर्म अर्थः प्रतिपाद्यं यस्याः सा कर्मार्था सा च सा श्रुतिश्च तस्या यो गहनो दुर्विज्ञेयोऽर्थो यस्य सचासौ खण्डश्च तस्य भावोऽभिप्रायस्तं, कर्मार्थश्रुतिगहनार्थखण्डभावं, श्रुतिश्च 'छन्दसां वै षष्ठेनाह्नाप्तानां रसोत्यनेदत् (नोत्) स प्रजापतिरबिभेत् परङयं छन्दसां रसो लोकानभ्ये(त्ये)ष्यतीति तं पुरस्ताच्छन्दोभिः पर्यगृह्णात् । नाराशंस्या गायत्र्या रयिभ्या तृष्टुभे'त्यादीति मत्सरात् अपृच्छत् 'दुह्याच्' इत्यादिना द्विकर्मकत्वम् ॥ ४२ ॥

**छन्दोभ्यश्चतुरसंग्रहप्रवीणान् षष्ठेऽह्नि प्रतिविदितान् प्रजाधिपेन ।**
**नाराशंस्यचरमचारुमन्त्रभेदानूचेऽसौ तमभिदधद्विसंशयांशः ॥ ४३ ॥**

**छन्दोभ्य इति** ॥ विगतः संशयांशः संशयलेशो यस्य स तथोक्तः असौ श्रीमध्वस्तं तत्पृष्टस्य खण्डस्यार्थं, अभिदधत् वदन्सन् 'तत्रनीवीव निर्देत्सहिना सान्यूङ्ख' इत्यस्य च वाक्यस्य, यथा नीवी वस्त्रं सुधौतं विकासितं नर्देत् नादं करोति तथा नर्देत् स एव हि तासां न्यूङ्ख इति, अर्थं वदन्नित्यर्थः, छन्दोभ्यः छन्दसां सकाशात् च्युतस्य निर्गतस्य रसस्य संग्रहे प्रवीणान् समर्थान् प्रजाधिपेन ब्रह्मणा षष्ठे हि प्रतिविहितान् विनियुक्तान् नाराशंस्य चरमचारुमन्त्रभेदान् चरमाश्च ते चारु-मन्त्रभेदाश्च तान् नाराशंस्यादिनामकमन्त्रभेदानित्यर्थः ऊचे ॥ ४३ ॥

**पाण्डित्यं परममवेक्ष्य तस्य तादृक् सङ्घर्षात्क्षुभितमना विपक्षसङ्घः ।**
**नार्थः स्यादयमिति वर्णयन्नथ त्वं तं ब्रूहीत्युरुमतिनेरितोऽद्रवद्द्राक् ॥ ४४ ॥**

**पाण्डित्यमिति** ॥ तादृक् परमं पाण्डित्यं उक्तश्रुत्यर्थकथनरूपमुत्तमपाण्डित्यं अवेत्यापि सङ्घर्षात् विवादवादरूपमथनात् क्षुभितं मनो यस्य स तथोक्तः विपक्षसङ्घः प्रतिवादिसमूहः अयं भवदभिहितोर्थः नस्यात, इति वर्णयन् निर्हेतुकं वदन् अथ एवं तर्हि त्वं तं तत्खण्डनार्थं ब्रूहीति उरुमतिर्यस्य स तथोक्तस्तेन श्रीपूर्णप्रज्ञार्येण ईरितः सन् द्राक् शीघ्रं अद्रवत् ॥ ४४ ॥

**सोऽपृच्छत्तमथ महाह्वयोपसर्गा यत्रोक्ता मनुचरणोपसृज्यरूपाः ।**
**तस्यार्थं वचनचयस्य तं ब्रुवाणः स्थैर्यार्थं सपदि स लेखयाम्बभूव ॥ ४५ ॥**

**स इति** ॥ स विपक्षसङ्घः शत्रुसमूहः, अथ पुनरागत्य तं श्रीमध्वं तस्य खण्ड-स्यार्थमपृच्छत्, यत्र यस्मिन् खण्डे महतः सर्वोत्तमस्य विष्णोः आह्वय इन्द्रादिनाम यासां ता महाह्वया महानाम्न्य इत्यर्थः, तासामुपसर्गा अवयवा 'विदामघन्विदा गातुमनुकेशिषोदिशः शिक्षा शचीनां पते पूर्विणा पुरूवसोः' इत्यादीनामुपसर्गा अवयवा इत्यर्थः 'प्रचेतन प्रचेतय, आयाहि पिबमत्स्वक्रतु छन्दऋत बृहत् सुम्न आवेहि नोवसो' इति पञ्चावयवाः । मनुचरणोपसृज्यरूपा मनुचरणैः ऋङ्मन्त्रपादैः सह 'आधत्तान्यं जटरे प्रेमरिच्यत दाताराधास्तुवतो काम्यं वसु अस्माकं वोचि-चोदित त्वापरिष्वजामहे यातेरानिदिविर्वसु.' एतैः पञ्चभिर्मनुचरणैः सह उपसृज्यरूपाः

संयोज्यरूपा ऊक्ताः, संयोजनीया उक्ता इत्यर्थः, तत्संयोजनप्रकारश्च श्रीमदाचार्यैः खण्डार्थाख्यप्रकरणे स्वयमेवोक्तः, तथाहि– 'आधत्तान्यं जठरे प्रेमरिच्यते, प्रचेतना. दाताराघस्तुवते काम्य वसु प्रचेतय, आम्भक वोविचे.दिनायाहि पिवमस्वनन्त्वापरि- ष्वजामहे कतुच्छन्दऋतं बृहत यातिरातिर्दितिर्वसु सुम्न आधेहि नोवसो' इति यथाक्रमं पञ्चाहयोपसर्गाणां पञ्चभिर्मनुचरणैः सह संयोजनप्रकारः प्रदर्शितः एवञ्च तैः पृष्टस्य 'महानाम्नीनामुपसर्गानुपसृजति' इत्यं दे वचनचयस्य तमर्थं ब्रुवाणः तत्स्थैर्यार्थमव्युच्छेदेन लोके प्रचयार्थं सपदि लेखयामास ॥ ४५ ॥

सम्पूर्णं शशिनमिवोदितं कुशः श्वा चुक्षोभाशुभनिकरो निरीक्ष्य मध्वम् ।
प्रत्यर्थी स्वयमिति दूरतोऽभिधावन् किं तेन क्षतममृताकरस्य तस्य ॥ ४६ ॥

सम्पूर्णमिति ॥ अशुभनिकरो दुष्टसमूहः मध्वं सम्पूर्णं उदितं शशिनमिव निरीक्ष्य स्वयं प्रत्यर्थीति श्रीमध्वप्रतिभट इति दुष्टो रवो यस्य स दूरवः दुष्टध्वनिः सन्नित्यर्थः 'रोरी'ति लोपे 'ढ्लोप' इत्यादिना दीर्घः, अभिधावन्सन् अभिमुखतया गच्छन्सन् कुशश्चासौ श्वाच कुशश्वा. दुर्बलशुनक इव चुक्षोभ, क्षुभसञ्चलन इति धातुः, पराभूतःसन्नष्टधैर्योऽभूदिति भावः, अमृताकरस्य मोक्षाकरस्य सकलसज्जन- मोक्षप्रदस्येत्यर्थः, तस्य श्रीमध्वाचार्यस्य तेन अशुभजनक्षोभेण दुष्टकलकलध्वनि- नेत्यर्थः, अभिगमनेनचामृताकरस्य, अमृतमयकिरणानामाकरस्य शशिनः शुनां वाशिते- नेव किं क्षतं? किं क्लिष्टं? ॥ ४६ ॥

निस्स्वानां कतिपयभुक्तियुक्तभक्तं भक्तानां व्यधित चतुर्गुणं दयालुः ।
भुंक्ते स्म त्रिदशनरोपभोग्यमन्नं सम्प्रीत्यै स धनवतां बृहत्प्रबोधः ॥ ४७ ॥

निस्वानामिति ॥ दयालुः स बृहत्प्रबोधः पूर्णप्रज्ञः निर्गतं स्वं धनं येभ्यस्ते निःस्वास्तेषां भक्तानां कतिपयानां भुक्तिर्भोजनं तस्यां युक्तमुपयुक्तं यद्भक्तमन्नं चत्वारो गुणा गणना यस्य तच्चतुर्गुणं व्यधित चकार, धनवतां भक्तानां सम्प्रीत्यै त्रयश्च ते दशच त्रिदश ते च ते नराश्च तैरुपभोग्यं भोक्तुमर्हमन्नं भुंक्ते स्म, बुभुजे किल, 'लट् स्मे' इति स्मयोगे भूते लट् ॥ ४७ ॥

वृष्ट्यादेः स नियमनमादि चक्र एतच्चित्रं किं भुवननियामके समीरे ।
अप्येव भुवनगुरोः कृतानुवादः कृत्येषु प्रचर इतीह वर्णयामः ॥ ४८ ॥

वृष्ट्यादेरिति ॥ स श्रीमध्वः वृष्ट्यादेर्नियमनमादिर्यस्य तन्नियमनादि चक्रे, यदावृष्टिरपेक्षिता तदा वर्षयामास, यदानापेक्षिता तदा वृष्टिकालेऽपि निवारयामासेत्यर्थः, एतत् वृष्ट्यादिनियमनं त्रिभुवननियामके समीरे वायौ किं चित्रम्? किमाश्चर्यं? एवमपि भुवनगुरोः श्रीमध्वस्य कृतानुवादश्चरितानुवादः कृत्येषु तदितरव्यापारेषु प्रवर इति हेतोरिह वर्णयामः ॥ ४८ ॥

इत्यूचे धरणिसुरेण केवलं नो माध्वीयं विविधकथा कथासु मान्या ।
साक्षादप्यमरवरैरुदीर्यमाणा गन्धर्वैर्द्युसदसि तन्मुदे जगेऽसौ ॥ ४९ ॥

इतीति ॥ कथासु विविधकथासु मान्या मध्वस्य सम्बन्धिनी माध्वी इयं विविधकथा केवलं धरणिसुरेण ब्राह्मणेन इत्यूच इति नो किन्त्वमरैरपि साक्षादुदीर्यमाणासौ कथा द्युसदसि स्वर्गसभायां तेषाममराणां मुदे सन्तोषाय जगे अगीयत ॥४९॥

तां पद्मप्रणिगदितां तु मूर्छयित्वा तानानामुचिततयात्तपञ्चमाद्याः ।
गान्धारं द्युविषयमुज्ज्वलं सृजन्तो ग्रामं ते प्रजगुरकाकिकम्रकण्ठाः ॥ ५० ॥

तामिति ॥ नविद्यते काकिः काकयाख्यकण्ठदोषो यस्य सोऽकाकिः, अतएव कम्रकण्ठो रमणीयकण्ठो येषां ते तथोक्ताः 'काकिश्च तुम्बुरुश्च कण्ठदोषौ प्रकीर्तितौ' इत्यभिधानम्, तानानां उचिततया असङ्करत्वेन आत्तपञ्चमाद्याः पञ्चमः पञ्चमाख्यस्वर आद्यो येषां निषादर्षभषड्जमध्यमधैवतानां, ते तथोक्ताः, आत्ता गातुमिष्टतयाङ्गीकृताः, पञ्चमाद्याः सप्तस्वरा यैस्ते तथोक्ताः द्युविषयं स्वर्गलोकविषयं उज्वलं शोभमानं गान्धारं गान्धाराख्यश्रुतिसमुदायं उत्सृजन्त उच्चैः सृजन्तः सम्यक् प्रकटयन्त इत्यर्थः, ग्रामो-नामश्रुतिसमुदायस्तं एकधनुर्मण्डलस्यापि स्वरः श्रुतिरित्युच्यते तत्र निषादगान्धारयो-र्द्वेद्वे श्रुती, धैवतर्षभयोस्तिस्रस्तिस्रः, षड्जपञ्चममध्यमानां चतस्रश्चतस्रः श्रुतयः, तथाचोक्तं गानलक्षणे— 'द्वे द्वे निषादगान्धारौ त्रिश्रुती धैवतर्षभौ । चतुःश्रुतय उद्दिष्टाः

षड्जपञ्चममध्यमाः' इति, तत्र षड्जग्रामो, मध्यमग्रामो, गान्धारग्राम इति त्रिविधो ग्रामः, तत्र गान्धारस्तु द्युविषय एव; 'सप्तस्वरास्त्रयो ग्रामा एकविंशति मूर्च्छनाः । तानान्येकोनपञ्चाशदेतद्गानस्य लक्षणम्' इति च ते गन्धर्वाः पद्येन पद्यरूपेण खण्डेन प्रणिगदिता प्रोक्ता पद्यप्रणिगदिता तां, पद्यखण्डेन देवैर्विरचितामित्यर्थः, तां माध्वीं कथां मूर्च्छयित्वा तत्तत्स्वरविकासानामादिं कृत्वा, 'आदिस्वरविकासनं मूर्च्छने'ति । प्रजगुः प्रकर्षेण गानं चक्रुः ॥ ५० ॥

**आनम्रैः सुमकुटमौलिभिः कराग्रैराताम्रैः प्रतिकलितैः स्मितैर्मुखाब्जैः ।**
**आश्रावि स्थिरतरभक्तिभिः सुरेन्द्रैस्तद्गीता दशधिषणार्यवर्यचर्या ॥ ५१ ॥**

**आनम्रैरिति** ॥ स्थिरतरा भक्तिर्येषां ते तथोक्तास्तैः आनम्रैः सम्यक् प्रवणैः, शोभनानि मकुटानि येषां ते सुमकुटा मौलयः शिरांसि येषां ते तथोक्तास्तैः यद्वा सुमकुटाश्च ते मौलयश्च तैरुपलक्षितैरिति, प्रतिकलितैः अञ्जलित्वेन शिरसि प्रतिबद्धैः आताम्रैरतिलोहितैः कराग्रैरुपलक्षितैः, सुस्मितैर्मुखाब्जैरुपलक्षितैः सर्वत्र 'इत्थं भूतलक्षण' इति तृतीया, सुरेन्द्रैः तैर्गन्धर्वैर्गीता तद्गीता दशधिषणा ज्ञानानि यस्य स दशधिषणः श्रीपूर्णप्रज्ञः सचासावार्यवर्यः आचार्यवर्यस्तस्य चर्या चरित्रं आश्रावि श्रुता ॥ ५१ ॥

**गीर्वाणैर्विजयमहोत्सवस्य पूजां कुर्वाणैरविरलसंविदस्तदानीम् ।**
**विस्मेरैर्मुनिनिकरोपदेवयुक्तैः सुस्मेरैरथ तमवेक्षितुं प्रजग्मे ॥ ५२ ॥**

**गीर्वाणैरिति** ॥ अथ तदानीं अविरला पूर्णा संवित् यस्य स तथा तस्य श्रीमध्वस्य विजयएव नानादुर्वादिविजयएव महोत्सवस्तस्य पूजां कुर्वाणैः सुस्मेरैः सुप्रमन्दस्मितयुक्तैः विस्मेरैः विस्मयशीलैः मुनिनिकराः मुनीनां समूहाश्च उपदेवा गन्धर्वास्ते च, तैर्युक्तास्तैर्गीर्वाणैर्देवैस्तं श्रीमध्वाचार्यमवेक्षितुं प्रजग्मे गतम् ॥५२॥

**आदर्शे गुणगणदर्शने मुरारेः सच्छास्त्रं रचितमनेन वर्णयन्तः ।**
**प्रद्योतैरुडुपदवीं प्रकाशयन्तः प्रैक्षन्त प्रचुरमनोविलासमेते ॥ ५३ ॥**

आदर्शमिति ॥ मुरारेः श्रीकृष्णस्य गुणगणदर्शने गुणसमूहज्ञाने आदर्शं दर्पणायितं अनेन श्रीमध्वाचार्येण रचितं सच्छास्त्रं वर्णयन्त. प्रद्योतैः स्वप्रकाशैः उडुपद्वीं नक्षत्रमार्गं आकाशमित्यर्थः, प्रकाशयन्त एते गीर्वाणा देवा प्रचुरो मनोविलासो यस्य स तथा तं श्रीपूर्णप्रज्ञाचार्यं प्रैक्षन्त ददृशुः ॥ ५३ ॥

नाकीन्द्रास्तमवनिभागमावसन्तं सुश्लोकैरपि भुवनानि भूषयन्तम् ।
नेमुः स्वादुपनिषदं तदैतरेयीं व्याख्यान्तं विविधविशिष्टशिष्यमध्ये ॥ ५४ ॥

नाकीन्द्रा इति ॥ नाकीन्द्रा देवश्रेष्ठा अवनिभागं भूभागं आवसन्तं भूलोकप्रदेशे वसन्तमित्यर्थः, 'उपान्वध्याङ्वसः' इति कर्मत्वं, सुश्लोकैः शोभनयशोभिः 'पद्ये यशसि च श्लोकः' इत्यमरः, भुवनानि लोकान् भूषयन्तं, विविधा ब्रह्मचार्यादि नानाविधा ये विशिष्टशिष्याः ज्ञानभक्त्यादिगुणैरुत्तमशिष्यास्तेषां मध्ये ऐतरेयीमुपनिषदं व्याख्यान्तं व्याकुर्वन्त तं पूर्वोक्तगुणवत्वेन प्रसिद्धं श्रीमदाचार्यं स्वादाकाशान्नेमुर्नमश्चक्रुः ॥

श्रीमन्तं शशिवदनं कुशेशयाक्षं गम्भीरस्वनमतिदिव्यलक्षणाढ्यम् ।
पश्यन्तः स्वगुरुमथार्चिचन् कृतार्था वाण्या तं हरिरतिपूर्णकाममेते ॥ ५५ ॥

श्रीमन्तमिति ॥ श्रीमन्तं भाग्यवन्तं, कान्तिमन्तं वा, शशिवदनं चन्द्रमुखं, कुशेशयाक्षं पद्माक्षं, गम्भीरः स्वरो ध्वनिर्यस्य स तथा तं, अतिदिव्यानि अलौकिकानि यानि लक्षणानि अङ्गसम्पदस्तैराढ्यं सम्पूर्णं स्वगुरुं पश्यन्तः, अतएव कृतार्था एते देववरा हरौ रतिर्दर्शनजन्यसुखं तया पूर्णः कामोऽभीष्टं यस्य स तथा तं, सन्दर्शनादिजन्यं सुखं रतिरित्युच्यते, तं श्रीमध्वाचार्यं वाण्या वचनेन आर्चिचन् विशेषतोऽर्चयामासुः, अस्तुवन्नित्यर्थः ॥ ५५ ॥

अहरो दुरागमतमः स्वगोगणैरकरोर्मुकुन्दगुणवृन्ददर्शनम् ।
अजयश्चतुर्दश जगन्ति सद्गुणैः शरणं गुरो करुणयापि नो भवेः ॥ ५६ ॥

अहर इति ॥ स्वगोगणैः स्ववचनसमूहैः दुरागमएव दुःशास्त्रमेव तमोऽन्धकारः तत, अहरः निराकृतवानसि, मुकुन्दगुणानां वृन्दं समूहस्तस्य दर्शनं ज्ञानं अकरोः

कृतवानसि, सद्गुणैः निर्दुष्टगुणैः चतुरधिकादश चतुर्दश तानि च तानि जगन्ति च चतुर्दशलोकस्थपुरुषानित्यर्थः, अजयः, हे गुरो त्वं नोऽस्माकं करुणया दयया शरणं रक्षको भवेः भव । [श्लोकेऽस्मिन् मञ्जुभाषिणीवृत्तम् । 'सजसा जगौच यदि मञ्जुभाषिणी' इति तल्लक्षणात् ] ॥ ५६ ॥

नमस्ते प्राणेश प्रणतविभवायावनिमगा
नमः स्वामिन् रामप्रियतम हनूमन् गुरुगुण ।
नमस्तुभ्यं भीम प्रबलतम कृष्णेष्ट भगव-
न्नमः श्रीमन्मध्व प्रदिश सुदृशं नो जय जय ॥ ५७ ॥

नम इति ॥ हे प्राणेश! समस्तजीवानामीश! स्वामिन्! 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि' इति वैजयन्ती, श्रीमुख्यवायो! प्रणतविभवः प्रणतजनभूतिस्तस्मै अवनिं भूमिं अगाः भुव्यवतीर्णोऽसि तस्मै ते नमः । रामप्रियतम! श्रीरामस्यातिप्रिय! गुरुगुण! महागुण! हे हनूमन्! नमः प्रबलतम! कृष्णेष्ट! कृष्णप्रिय! भगवन्! स्वामिन् भीम! तुभ्यं नमः, हे श्रीमध्व! तुभ्यं नमः, त्वं शोभनाच सा दृक् च सुदृक् तां शोभनज्ञानं नोऽस्माकं प्रदिश देहि, त्वं जयजय दुष्टान् विजयविजय तात्पर्ये द्विरुक्तिः । [शिखरिणीवृत्तम् । 'रसैरुद्रैश्छिन्ना यमनसभलगः शिखरिणी' इत्युक्तेः] ॥ ५७ ॥

इति निगदितवन्तस्तत्र वृन्दारकेन्द्रा गुरुविजयमहं तं लालयन्तो महान्तम् ।
ववृषुरखिलहृद्यं पुष्पवारं सुगन्धं हरिदयितवरिष्ठे श्रीमदानन्दतीर्थे ॥ ५८ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनन्दाङ्के षोडशः सर्गः ॥

इतीति ॥ इति 'अहर' इत्याद्युक्तप्रकारेण निगदितवन्तः नितरां वाचमुक्तवन्तः महान्तं तं गुरुविजयमहं गुरोः श्रीमदाचार्यस्य यो विजय दुर्वादिविजयः स एव मह उत्सवस्तं, लालयन्तः वृन्दारकेन्द्रा देवश्रेष्ठाः हरिदयितवरिष्ठे श्रीहरिप्रियेषूत्तमे तत्र श्रीमदानन्दतीर्थे श्रीमध्वाचार्ये सु शोभनो गन्धः परिमलो यस्य स तथोक्तस्तं पुष्पवारं

पुष्पसमूहं अखिलैर्मनुष्यादिभिर्द्रष्टुं योग्यं यथा भवति तथा अखिलद्रव्यं ववृषुः पुष्पवृष्टिं चक्रुरित्यर्थः । [मालिनीवृत्तम् । 'ननमयययुतेऽयं मालिनी भोगिलोकैः' इत्युक्तेः] ॥ ५८ ॥

श्रीमन्मध्वमुनिप्रबर्हविलसच्चित्तारविन्दालयः ।
सान्द्रानन्दचिदादिसद्गुणतनुर्दोषातिदूरः सदा ॥
ब्रह्माहीन्द्रवरेन्द्रपूर्वविबुधैराराधितांघ्रिद्वयः ।
सुप्रीतो भवतात्सदा मम हरिर्भक्तेष्टचिन्तामणिः ॥ १ ॥

वेदाङ्गाभिधदेशिकैर्निजजनज्ञानादि संसिद्धये ।
या व्याख्याभिधदीपिकाविरचिता श्रीकृष्णपूजाविधौ ॥
तस्याबोधनमात्रमत्र हि कृतं बालावबोधाय यत् ।
तन्मात्रेण च तोषमेतु भगवान् श्रीविट्ठलो मध्वगः ॥ २ ॥

स्तनंधयानां कृतिवद्यस्येयं सुकृतेः कृतिः ।
तथा भूयात्पितृवद्बुधानां तोषकारिणी ॥ ३ ॥

इति श्रीमद्वेदाङ्गमुनिविरचितश्रीसुमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ पदार्थदीपिकोद्बोधिकायां षोडशः सर्गः ॥



॥ श्रीकृष्णार्पणमस्तु ॥

## श्रीमध्वविजयमूलश्लोकानां प्राचीन पाठक्रमः



| सर्गः | श्लोकः | |
|---|---|---|
| १ | ३८ | वृकोदराग्नेरुरुतेजसा |
| २ | ४ | महदनर्घमदत्त |
| २ | २३ | दुहिता जगतां हिताय |
| २ | ३१ | जगत्यनर्घं |
| २ | ३२ | नत्वा हरिं रजतपीठपुरालयन्तं |
| २ | ३८ | कुलत्थकुलं |
| २ | ४१ | आरोग्यशालिनि पुरेव तदाऽपि |
| ३ | ४ | नालिकेर्युगपदान्तर |
| ३ | ८ | मृगयते स्म महीसुर |
| ३ | ३४ | सुतं सुकुमारकं |
| ४ | १५ | सन्यासनिषण्णमानसं |
| ४ | २७ | पालकमेनमेतयोः |
| ५ | ५२ | मण्डनायित उत |
| ६ | ५६ | मरतकरत्न |
| ७ | ४६ | मतिमान्कोऽस्यपरो |
| ७ | ५७ | नन्दयन्मन्दहासावलो |
| ८ | १ | प्रतिभाप्रभावमुख |
| ८ | ११ | गुरुं ततस्त्रिविधामहंकृति |
| ८ | २८ | उतानयत्क्रमात् |
| ८ | ५३ | अनन्यनिरूढं |

| सर्गः | श्लोकः | |
|---|---|---|
| १० | २३ | स्वेच्छापातं |
| ११ | ३३ | प्रतिलोठिनाभिः |
| ११ | ४३ | शोभनशुकस्वरया |
| १३ | ४० | अनुकूलगुणस्वरादि |
| १३ | ५२ | भजदेवं सुतवासुदेवमेव |
| १३ | ६० | स्मृतिधर्मान्कुटमाचरन्त |
| १६ | १९ | बिभ्राणश्चरणरजस्सुरेन्द्रसेव्यं |